॥ श्रीमल्लक्ष्मीनारायणाभ्यां नमः ॥

# । सरस्वतीकण्ठाभरणे ।

श्रीमद्भोजनरेन्द्रविरचिते ।

## परिच्छेदत्रयं

पण्डितवर्यरत्नेश्वरमिश्रविरचितया रत्नदर्पणाख्यया ।

व्याख्ययानुगतं



ज्यौतिषोपाह्वभैरवशर्म्मणा ।

॥ श्रीकाश्यां ॥

जैनप्रभाकरनाम्नि मुद्रायन्त्रालये

वैशाखसुदि ८ भौमे १९४३ संवत्सरे ।

मुद्रितम् ।

॥ श्रीमद्गुरुचरणारविन्दाभ्यां नमः ॥



इह किल यद्यपि सकलकविकुलललामभूतैर्विप श्चिदपाश्चात्त्यैराद्रियमाणादृढव्युत्पत्तिसम्पादनच णा विजयन्ते संख्यातिशायिनः साहित्यग्रन्थाः, परं तेषु—

"प्रायेण सामग्र्यविधौ गुणानां
पराङ्मुखी विश्वसृजः प्रवृत्तिः"

इति न्यायेन केचन व्यष्ट्या निर्भरं रसरीतिगुण दोषशब्दार्थालङ्कारनिरूपणपराः, केचन समष्ट्या संक्षेपेणैव तद्व्युत्पादका इति, नास्तिप्रचलितो निरु क्तनिखिलविषयाणां समष्ट्या विस्तरेण च प्रति पादकः कोपि सन्दर्भ इति तदन्वेषणपरो निज गृहे एव मन्मातुलचरणपूज्यपादगुरुवरवज्रटङ्को पनामक श्रीद्पापाशास्त्रिसकाशादासाद्य कविकुल तिलकनिखिलविद्वन्मण्डलीमण्डितास्थानमण्डपेन महनीययशसा भोजनरेन्द्रेण विरचितं सरस्वती

कण्ठाभरणाभिधं ग्रन्थं, निजमनोरथसिद्धिं ततः सम्भावयन् बहुभिर्मान्यकोटिप्रविष्टैर्बुधवरैः प्रेरित एतत्प्रकाशनाय, वर्द्धितोत्साहश्च शोधनादिसाहाय्यप्रदानेन श्रीमज्ज्यौतिषोपाह्व तात्याशास्त्रिप्रमुखैर्मुद्रणव्ययादिसाहाय्यसम्पादकज्यौतिषोपाह्वभैरवशास्त्रिभिश्च समानशीलैः सुहृद्वरैर्निर्धार्य तत्प्रकाशनं स्थलविशेषेषु न व्याख्यानमन्तरा साधारणजनसाधारण्येन सुबोधोयं ग्रन्थ इति श्रीमहाराजरामसिंहनरेन्द्राज्ञाकारिणा श्रीमत्कविवरेण्येन रत्नेश्वरमिश्रेण विरचितां रत्नदर्पणाख्यां व्याख्यां तदनुगां विधाय समासाद्य च श्रीयुतविद्वद्वरजगन्नाथपाठकसकाशाच्छुद्धतमं पुस्तकान्तरं प्रावर्तिषि तन्मुद्रणे, प्रालभे च तत्तत्स्थलेषु त्रिशयोच्छेदं, चित्रप्रकरणे नानाविधेतरप्रबन्धदुर्लभं चित्राकारतत्त्वं, कामधेन्वादिचित्रेषु चाङ्क संहतिविन्यासप्रपञ्च रहस्यं, निखिलबुधजनशिरोभूषण मानवल्ल्युपाख्यश्रीमद्गुरुवरश्रीद् गङ्गाधरशास्त्रि महाशयचरणेभ्यः। येन प्रकाश्य निष्टङ्कं चित्राकारान् प्रदर्श्य चाङ्कविशेषान् संशोध्य च महता परिश्रमेण महानुभाववन्दनीयचरणश्रीमद्गुरुवरपण्डितश्रीद् यागेश्वरशर्म्मप्रसादात् समापितवानस्मि निष्प्रत्यूहं सव्याख्यं परिच्छेदत्रयम्।

एतदग्रेच भूयसा प्रयत्नेनापि व्याख्याया अद्य त्वँऽलाभादेतावदेव प्रकाश्य विरतवानस्मि । आशासे च सहजसौजन्यपात्रैर्विद्यानुरागिभिर्धीरवरैरग्रेप्येतद्व्याख्याप्रतिपादनसाहाय्यप्रदाने तत्सहितमूलग्रन्थप्रकाशनम् । प्रार्थयेच सप्रश्रयं गुणानुरागिणो यत्प्राचीनतमैतद्ग्रन्थरत्नसंशोधने प्रवृत्तस्य ममाऽनवधानजन्यानि मुद्रणाक्षरयोजकादिदोषजनितानि च स्खलितानि हंसन्यायेन समुपेक्ष्योपादाय केवलं कविसन्दर्भयोगुणान् कण्ठाभरणीकृत्य कण्ठाभरणं समवलोक्य च तत्प्रभां रत्नदर्पणे आरोहन्तु रसिकजनशिरांसि सफलयन्तु च ममापि परिश्रमं वाग्देवताकृपाकटाक्षभूताश्चतुरवरा इति शम् ॥

संवत् १९४३ वैशाखशुक्ले८भौमे } संशोधकः प्रकाशकश्च द्राविडवीरेश्वरशास्त्री



॥ श्रीगणेशायनमः ॥

# ॥ सटीकं सरस्वतीकण्ठाभरणम् ॥

ध्वनिर्वर्णाः पदं वाक्यमित्यास्पदचतुष्टयम् ।
यस्याः सूक्ष्मादिभेदेन वाग्देवीं तामुपास्महे ॥ १ ॥

---

॥ श्रीगणेशाय नमः ॥ एकेन यस्य यमिनः प्रमदेव देहमर्द्धेन राजति पुमानिव चाऽपरेण । तत्त्वक्रमादथच न प्रमदा पुमान्वा श्रेयांसि वर्द्धयतु स स्मरशासनो वः ॥ १ ॥ श्रीरामसिंहदेवेन दोर्दण्डदलितद्विषा । क्रियतेवन्तिभूपालकण्ठाभरणदर्पणः ॥ २ ॥ कण्ठाभरणमनर्घ्यं वाग्देवीरत्नदर्पणोत्सङ्गे । अस्मिन्पश्यतु निभृतं प्रकाशसर्वाङ्गलावण्यम् ॥ ३ ॥ ग्रन्थारम्भेसमुचितेष्टदेवतानमस्कारेण शिष्टाचारमनुवर्त्तते । ध्वनिरिति । वाचामधिष्ठात्रीदेवी द्योतमाना स्वप्रकाशशब्दब्रह्मरूपा भारती । कथमुपास्यते । सूक्ष्मादिभेदेन ध्वन्यादिभेदेनच विवक्षितोनमस्कारः शब्दब्रह्मणश्चतस्रो भिदा भवन्ति । सूक्ष्मा पश्यन्ती मध्यमा वैखरी चेति । तत्राऽविकारदशा सूक्ष्मा । साहि सर्वस्य प्राणापानान्तरालवर्त्तिनी विगतप्रादुर्भावतिरोभावा सम्यक्प्रयोगपरिशीलनात्मना कर्मयोगेन मननादिना ज्ञानयोगेनच सम्यगधिगम्यते । सेयमाकीर्यमाणाऽपि नित्यमागन्तुकै र्मलैः । अनन्त्या कला हि सोमस्य नात्यन्तमभिभूयते । तस्यां विज्ञातमात्रायामधिकारो निवर्त्तते । पुरुषे षोडशकले तामाहुरमृतां कलामिति । तस्य ब्रह्मणोऽनाद्यविद्यावशादाद्यः परिणामः पश्यन्तीरूपो जायते साहि वर्णविभागादक्रमः । स्व

यंप्रकाशश्च । पूर्वापरे स्वावस्थे पश्यतीति पश्यन्तीत्युच्यते । ततः परमविद्योपादानादन्तःसंकल्परूपक्रमवान् श्रोत्रग्राह्यवर्णाभिव्यक्तिरहितस्तृतीयः परिणामो मध्यमारूपो जायते । सा किलद्वयोः परिणामयोर्मध्ये सदा तिष्ठतीति मध्यमेत्युच्यते । अनन्तरं दूरप्रसृतायामविद्यायां स्थानकरणप्रयत्नव्यज्यमानश्रोत्रसंवादिवीणादुन्दुभिनादपरिचयगद्गदाव्यक्ताकारादिवर्णसमुदायात्मकस्तृतीयः परिणामो वैखरीरूपो जायते । विशिष्टं खमाकाशं राति प्रयच्छतीति विखरो देहेन्द्रियसंघातः । तथाच श्रुतिः । "नहवैसशरीरस्य प्रियाप्रिययोरपहतिरस्ति । अशरीरंवावसन्तंप्रियाप्रियेनस्पृशत इति" तत्रभवावैखरीति । तदेतासामवस्थानामाद्यास्तिस्रो नित्या अतीन्द्रियाः । तदुक्तम् । स्थानेषुविवृते वायौ कृतवर्णपरिग्रहा । वैखरी वाक् प्रयोक्तॄणां प्राणवृत्तिनिबन्धना । केवलं बुद्ध्युपादानक्रमरूपाऽनुपातिनी॥ प्राणवृत्तिमतिक्रम्य मध्यमावाक् प्रवर्त्तते । अविभागात्तु पश्यन्ती सर्वतः संहृतक्रमा । स्वरूपज्योतिरेवान्तः सूक्ष्मा सा चानपायिनीति" श्रुतिरप्याह । "चत्वारिवाक्परिमिता पदानितानिविदुर्ब्राह्मणायेमनीषिणः । गुहात्रीणिनिहितानेङ्गयन्तितुरीयंवाचोमनुष्यावदन्ति" इत्यादिकमागमसमुच्चयादेवावसेयम् । का पुनस्ता वाचो यासामियमधिष्ठात्रीत्यतउक्तम् । ध्वनिर्वर्णाः पदंवाक्यमित्यास्पदचतुष्टयम् । यस्याइति । आस्पदमधिष्ठानमवच्छेदः । ध्वन्यादिभिरवच्छिन्ना परा वाक् तद्व्यवहारहेतुः । साहित्यप्रसिद्धाभिधानध्वननलक्षणव्यवहारकारित्वमेकस्मिन्वर्णे न निरूप्यते इति बहुवचनम् । पदवाक्ययोरस्तिप्रत्येकमपि तथाभाव इति ताभ्यामेकवचनमुपात्तम् । तदयमत्रतात्पर्यसंक्षेपः । साहित्यस्वरूपनिरूपणाय किलैषग्रन्थारम्भः । साहित्यं च शब्दार्थयोः संबन्धः । तत्रशब्दएवकइत्यपेक्षायामयंविभागोध्वनिरित्यादिः । अर्थस्तुस्तम्भकुम्भादिलक्षणो लोके शास्त्रे च प्रसिद्धः । संबन्धःकश्चिदनादिः । सर्वस्वायमानस्तुसंबन्धोनान्यत्रेत्यस्मिन्नायतते । स चतुर्विधः । दोषहानं गुणोपादानमलंकारयोगो रसाभियोगश्चेति ॥१॥ प्र

निर्दोषं गुणवत्काव्यमलंकारैरलंकृतम् । रसान्वितं कविः कुर्वन्कीर्तिं प्रीतिं च विन्दति ॥ २ ॥ दोषाः

एवावत्प्रवृत्त्यङ्गसंबन्धप्रयोजने दर्शयति निर्दोषमिति । प्रीतिः संपूर्णकाव्यार्थस्वादसमुत्थ आनन्दः काव्यार्थभावनादशायां कवेरपिसामाजिकत्वाङ्गीकारात् । सहृदयश्लाघया वा प्रीतिस्तद्दृष्टंप्रयोजनम् । कीर्तिरदृष्टद्वारास्वर्गफलेत्यदृष्टम् । यदाह । कीर्तिंस्वर्गफलामाहुरिति । अङ्गिनः काव्यस्य प्रयोजनाभिधानेनाङ्गभूतस्यास्यप्रयोजनसंबन्धउक्तः । यद्यपि काव्यशब्दोदोषाभावादिविशिष्टावेवशब्दार्थौ ब्रूते तथापि लक्षणया शब्दार्थमात्रे प्रयुक्तः । लक्षणाप्रयोजनंचाभिधेयानामुद्देशः । त्रिधाहि शास्त्रशरीरम् । उद्देशो लक्षणंपरीक्षाचेति । उदाहरणव्याख्याग्रन्थः सर्वत्र परीक्षापर इत्यस्मद्गुरवः । प्रयोजनाभिसंबन्धपरादेवोद्देशो लभ्यतेइति न विरोधः । अतएव दोषाद्युद्देशक्रमेण परिच्छेदाः । निर्दोषंदोषात्यन्ताभाववत् । अवयवैकदेशवर्त्तिनाश्वित्रेणेवकामिनीशरीरस्य वर्णमात्रगतेनापि दोषेण काव्यवैरस्यनियमात् । अतएवामङ्गलप्रायाणामपि दोषाणां प्रथम मुपादानम् । अयमेवहिप्राचः कवेर्व्यापारो यद्दोषहानं नाम । गुणावदिति । भूम्निप्रशंसायांवामतुप् । अलंकृतमित्येव वक्तव्ये अलंकारैरिति प्रसिद्धालङ्कारपरिग्रहार्थम् । तथालंकारैरित्येव वाच्ये प्रसिद्धानामपिवक्ष्यमाणानामेवोपादानार्थमलंकृतपदम् । रसान्वितरसेनानित्यसंबद्धम् । नास्त्येव तत्काव्यं यत्र परंपरयापि विभावादिपर्यवसानं न भवतीति काश्मीरकाः । एतेन काव्यलक्षणमपि कटाक्षितम् । ईदृशंकाव्यं तत्कुर्वन् कविरितिकवेरपिलक्षणमिति ॥२॥ अथोद्देशक्रमेण दोषाणां सामान्यलक्षणं विभागं चाह । दोषाः पदानामिति । हेयाइत्यनेनसामान्यलक्षणम् । येहेयास्ते दोषा इत्यभिप्रायात् । अभिमतप्रतीतिव्यवधायकतयाविघ्नभूतः शश्वत्काव्यंहेयतामासादयतिसएवदोषः । अयमेवार्थो मुख्यार्थहतिर्दोषइति पदेनान्येषामभिमतः । सच पदवाक्यवाक्यार्थविषयतया पूर्वं त्रिवि

पदानां वाक्यानां वाक्यार्थानां च षोडश । हेयाः काव्येकवीन्द्रैर्यैस्तानेवादौ प्रचक्ष्महे ॥ ३ ॥ असाधु चाप्रयुक्तं च कष्टं चानर्थकं च यत् । अन्यार्थकमपुष्टार्थमसमर्थं तथैव च ॥ ४ ॥ अप्रतीतमथाक्लिष्टं गूढं नेयार्थमेव च । संदिग्धं च विरुद्धं च प्रोक्तं यच्चाप्रयोजकम् ॥ ५ ॥ देश्यं ग्राम्यमिति स्पष्टाः दोषाः स्युः पदसंश्रयाः । अथैषां लक्षणं सम्यक् सोदाहरणमुच्यते ॥ ६ ॥ शब्दशास्त्रविरुद्धं यत्तदसाधु

धः । पदपूर्वकत्वाद्वाक्यस्य तत्पूर्वकत्वाद्वाक्यार्थस्य युक्तः क्रमः । वर्णमात्रदोषो नोल्लेखीत्युपेक्षितवान् । अवान्तरविभागे तु क्रियमाणे प्रत्येकं षोडशभिरुपाधिभिः संकुलमित्याह । षोडशेति । काव्यप्रकाशकारादिभिरुक्तानामधिकानामिहान्तर्भावः । अनन्तर्भावे तु दोषत्वमेव नास्तीत्यभिप्रायो नतु देशीरागन्यायेन स्वमतप्रकाशनम् । प्रतीतिव्यवधायकानां सर्वदा तद्रूपत्वात् । उक्तमेवाभिसंधानं तानेवादाविति विभागमन्तरेण विशेषलक्षणानवतारात् पददोषान् विभजते । असाध्विति । मुख्यार्थहतौ मिधानपक्षासूचनया समासः । अत एव लाघवेऽनादरः । कथं पदप्रतीकदोषा न गण्यन्त इति शङ्कामभिप्रेत्याह । स्पष्टा इति । पदसंश्रयाः पदान्वयव्यतिरेकानुविधायिनः ॥ एवं वाक्यादावपि गुणादावपीदमेवाश्रितत्वम् । विभागप्रयोजनमाह । अथैषां लक्षणमिति । परीक्षां प्रतिजानीते । सम्यगिति । लक्षणदोषशून्यं लक्षणानुपपत्तिनिर्भञ्जनमेवाह परीक्षापदार्थः । कथमेतत्संपत्स्यत इत्यत आह । सोदाहरणमिति । शब्दस्वरूपलक्षणः प्रथमानिरस्योदोष इत्याशयेन प्रागुद्दिष्टस्यासाधोर्लक्षणमाह । शब्देति । शब्दाः शिष्यन्ते प्रकृतिप्रत्ययविभागपरिकल्पनया ज्ञाप्यन्ते येन तच्छब्दशास्त्रं त्रिमुनिव्याकरणं तेन विरुद्धं तदाम्नातप्रातिस्विकविशेषपरित्यक्तमतो न देशीयपदानामसाधुत्वम् । तथा च प्राच्यैर्नाध्यते

प्रचक्षते। यथा। भूरिभारभराक्रान्त बाधति स्कन्ध एष ते। तथा न बाधते स्कन्धो यथा बाधति बाधते ॥७॥ अत्र बाधतेरात्मनेपदित्वाद्बाधत इति स्यान्न पुनर्बाधतीति। कविभिर्न प्रयुक्तं यदप्रयुक्तं तदुच्यते। यथा। कामचीकमथाः केमी त्वामजिह्रायकीयिषन्। ससस्ति किं यचन्ती मे शम्बः कम्बं घरिष्यति। अत्रा चीकमथाअजिह्रायकीयिषन्ससस्तिवचन्तिघरिष्यति शंबःकंबमिति शब्दानुशासनसिद्धान्यपि कविभिर्न प्रयु

---

कुचयुगं पत्रावृतं मा कृथा इति अन्यकारकवैयर्थ्यमिति "सलील पाणिद्वयलीलनालमानर्त्तिताताम्रदलं दधन्तीमिति चतादृशमेवोदाहृनम्। अत्र केचिदाहुः। बाधतिधातुं संस्कारप्रच्यावनेन बाधत इति बाध तिबाध स्तस्यसंबोधनं बाधतिबाधेति ते तव वचनमिति शेषइति। तदसत्। नेयार्थत्वप्रसंगात्। अन्येतु बाधतिर्बाधतेयथेति पठन्ति। इदंतत्वम्। विद्यमानस्याप्यर्थवत्त्वस्याविवक्षायां गावित्ययमाहेत्यादाविव प्रातिपदिकसञ्ज्ञानप्रवर्त्तते। कविभिरिति। अस्तिहिकिंचित्पदं यत्राप्रयोज्यत्वेनैव हेयता। यद्येवं लोके प्रयुज्यमानस्य साधुतैव प्रसक्ता इत्यत उक्तं कविभिरिति। काव्ये यस्या प्रयोज्यत्वमेव दुष्टत्वबीजं तदित्यर्थः। तथाभूताच पदजातिरलंकारकारसमयादवसीयते। तथा चैकेन पुंदैवतशब्दोऽपरेणचीर्णशब्द उदाहृतः। एवमन्यदप्यप्रयुक्तमित्याशयवान्किंचिदुदाहरति। कामचीकमथा इति। उदाहरणत्वान्नैकोत्र श्लोको गवेष्यः। एकपद मात्रप्रयोगस्तुत्याज्यः समयविरोधान्नावादित्याराध्याः। अचीकमथा इति कमेर्णिङन्तस्य लुङि चङि द्विर्वचनसन्वद्भावदीर्घत्वह्रस्वत्वणिलोपेषु रूपम्। कांनायिकां कामितवानसीत्यर्थः। अमीचके त्वामात्मनो ह्रायकमेषितुमिष्टवन्तः। ह्रायकशब्दात्क्यच्। ततः सन्। ततो लङि अजिह्रायकीयिषन्निति रूपम्। सः कश्चित् सस्ति। स्वपिति षस सस्ति स्वप्ने इति धातो

ज्यन्ते। पदंश्रुतेरसुखदंकष्टमित्यभिशब्दितम्। यथा।
वर्वर्ष्टि जलदो यत्रयत्र दर्द्धर्ष्टि चातकः। पोफुल्लि तिनीपः
कालो यं चर्कर्ति हृदयं मम। अत्रवर्वर्ष्ट्यादीनि क्रिया
पदानि श्रुत्यसुखदानि श्रूयन्ते ॥ ३ ॥ पादपूरण

---

रूपम्। कंबः शम्बमिति। कंशंशब्दौजलवाचकौताभ्यांकंशंभ्या
वन्नयुस्तितुतयसइतिमत्वर्थीयोवप्रत्ययः। तत्राद्येनजलधरोजलाश
यं संद्यतीत्यर्थः। शम्बःकम्बमिति क्वचित्पठ्यते। तत्रकल्याणात्रान्क
पालिनंसेद्यतीत्यर्थोबोद्धव्यः। घृसेचनइत्यस्यधातोर्घरिष्यतीति
रूपम्। सहि धातुर्घृतघृणाघर्मेभ्यो नान्यत्र युज्यत इति पूर्वाचार्याः।
कविभिरित्यनेनासाधुशङ्काव्यावर्तनमाह। शब्दानुशासनसिद्धा
न्यपीति। पदमित्यादि। दुर्वचकवर्णारब्धं पदंकष्टोच्चारणीयतयाकष्टमु
च्यते। श्रुतेरसुखदमिति। दूषकताबीजोद्घाटनम्। कदर्थिताहितेन
श्रुतिशक्तिर्नतद्वाक्यप्रतीकपरामर्शात्मेति। काव्यप्रकाशकृतापदैकदेशः
कष्टउक्तः। यथा। तद्गच्छसिद्ध्यै। अपेतुतेप्रत्ययमङ्गलब्ध्यै इत्यत्रध्यै
ध्यै इति तत्राह। पदमिति। नहि समस्तवस्तुकटुत्वएवपदंकष्ट
त्वमासादयति। कार्त्तार्थ्यमित्यादौतदुदाहृते तदभावात्। एकदे
शकष्टतया पदकष्टत्वमिति चात्रापि नदण्डवारितमिति भावः।
वर्वर्ष्टि। पुनःपुनर्वर्षति। वृषेर्यङ्लुगन्तस्यरूपम्। दर्धर्ष्टिपुनःपुनर्धृ
ष्टोभवति। ञिधृषाप्रागल्भ्यइत्यस्यतत्रैवरूपम्। दर्दृष्टीतिपाठेदृशे
र्यङ्लुक्यमागमेचरूपम्। पुनःपश्यति। नीपःकदम्बः। पोफुल्लि।
फुल्लविकसनइत्यस्यतत्रैवरूपम्। एवंभूतोवर्षासमयोममविदूरकान्त
स्यहृदयंचर्कर्त्ति। पुनःपुनरतिशयेनवा छिनत्ति। कृतीछेदनइत्यस्य
रूपम्। भूयसां कष्टपदानां समभिव्याहाराद्वाक्यदोषइति भ्रान्तिः
स्यात्तत्राह। क्रियापदानीति। कथमेवंविभागोवसीयत इत्यत आह
श्रूयन्तइति। श्रोत्रप्रत्यक्षेणैव पदमात्रगामितया कष्टत्वमनुभूयत इ
त्यर्थः। पादपूरणेति। द्योतनीयमर्थमन्तरेण प्रयुक्तमव्ययमनर्थकम
भिमतमतएवप्राच्यैश्चादिपदमव्ययमितिप्रयोगबीजकथनार्थंनाहि नि

मात्रार्थमनर्थकमुदाहृतम्। यथा। बिभर्तियश्चदेहार्द्धे
प्रियामिन्दुंहिमूर्द्धनि। सवैदेवः खलुत्वांतु पुनातु मद
नान्तकः। अत्रच वैहिखलुतुइत्येतानि पदानि पादा
नेव पूरयन्ति ॥ ४ ॥ रूढिच्युतं पदं यत्तु तदन्यार्थ
मिति स्मृतम्। यथा। विभजन्ते न येभूपमालम्भन्ते न

---

मूलः प्रयोगः सम्भवति वृत्तनिर्वहणासमर्थः। प्रायेणाव्ययपदानिदि
त्त्वा तत्पूरयति तदुक्तम्। कुकविप्रबन्ध इव श्लिष्टपदप्रचारः प्रक
टतुहिनचयोजनाकीर्णश्चेति। बिभर्तीति। चः समुच्चयादिषु चतु
र्षु प्रसिद्धप्रयोगो नच तेषामन्यतमो प्यत्र सम्भवति। नाप्युच्चावचा
र्थग इति स्मापलेनार्थान्तरमपि। एवं हि प्रभृतिष्ववसेयम्। एतेनैत
दप्यपास्तम्। यदाहुरेके। पदादिविशेषानुपदानात्पदैकदेशोऽप्य
नर्थको ऽभिमतः। तथाच। आदावञ्जनपुञ्जलिप्तवपुषां श्वासानि
लोल्लासितप्रोत्सर्पद्विरहानलेन च ततः संतापितानां दृशाम्। सं
प्रत्येवनिषेकमश्रुपयसा देवस्य चेतोभुवो भल्लीनामिव पानकर्म कु
रुते कामं कुरङ्गेक्षणा। इत्यत्रदृशामितिबहुवचनमनर्थकंकुरङ्गेक्षणाया
एकस्याएवोपादानात्। नचात्र व्यापारे दृक्शब्दो वर्त्तते। अञ्ज
नपुञ्जलेपादीनामनन्वयापत्तेः। तथा कुरुतइत्यात्मनेपदमनर्थकम
कर्त्रभिप्रायक्रियाफलादिति। अपिच। बहुत्वकर्त्रभिप्रायफलाभावे
कथनंद्वयोरसाधुत्वमिति राजमार्गएव भ्रमः। नहि स्वरूपत ए
व किंचिदसाधुसाधु वा सम्भवति। रूढिच्युतमिति। शक्तिमनपे
क्ष्यप्रयुक्तं रूढिच्युतम्। अतएवयदभिसंधायप्रयुज्यतेनकथंचनय
तस्यासावर्थइति अन्वर्थमन्यार्थमितिनाम। एतदेव धातुविशेषो
वान्तरमुपसर्गविशेषयोगतो योगवानित्यादिना न्यैरुक्तम्। विभजन्त
इति। भजिः सेवार्थो विरुपसर्गस्तद्गतविशेषद्योतकस्ततश्च यथा विद्यो
ततइति। अत्र विशिष्टवात्वनुरूपप्रयोगाभिधानं तथात्रापि भवि
ष्यतीति भ्रमो बीजमत्र शब्दशक्तिस्वभावात्। क्वचिदुपसर्गोपस
दानेन धातुरर्थान्तर एव वर्त्ततेयदाहुः। उपसर्गेणधात्वर्थोबलाद

तेऽप्रियम्। आवहन्ति न ते दुःखं प्रस्मरन्ति नये प्रियाम्। अत्रविभजतेर्वण्टने आलभतेर्मारणे आवहतेः करणे प्रस्मरतेर्विस्मरणे रूढिर्नतु विशेषसेवायामभितोलाभे समन्ताद्वहने प्रकृष्टस्मरणेचेति ॥५॥ यत्तु तुच्छाभिधेयंस्यादपुष्टार्थं तदुच्यते। यथा। शतार्धपञ्चांशभुजो द्वादशार्धार्धलोचनः। विंशत्यर्धार्धमूर्द्धा वः पुनातु मदनान्तकः। अत्रदशबाहुस्त्रिलोचनःपञ्चवक्त्रइति तुच्छमेवाभिधेयमतुच्छशब्दैरुक्तमिति अपुष्टार्थम्॥६॥ असंगतं पदं यत्तदसमर्थमिति स्मृतम्। य

न्यत्रनीयते। प्रहाराहारसंहारविहारपरिहारवदिति तदाह। अत्रविभजतेरित्यादि। नन्वर्थापेक्षित्वे पदार्थदूषणमेवंविधमिति वामनः। नैतत्। पदस्यैवान्वयव्यतिरेकवत्त्वात्। नह्यत्रान्वयस्यापराधःकश्चित्। किंतुशब्द एव वृत्तिस्खलितादिभिरपराध्यति। यदिचार्थायत्ततामात्रेणार्थदोषत्वं कथमसाधुप्रभृतीनामपि शब्ददूषणता। नहि तानि स्वरूपतएवतथाऽपित्वर्थविशेषविशेषएवाश्वगोश्वादिवदिति। अर्थदोषास्तुयथा भवन्ति तथा वक्ष्यामः। यत्तुतुच्छाभिधेयमिति। स्तोकशब्दाभिलप्येऽर्थेबहुतरशब्दबहुलमित्यर्थः। नहि तथाक्रियमाणमल्पीयसीमपिप्रकर्षतां पुष्यतियत त्वाद्व्यनस्यादित्यपुष्टपदेन सूचितम्। शतस्यार्धं पञ्चाशत्तेषां पञ्चतमोंऽशोदश। समासेपूरणप्रत्ययलोपः। असंगतमिति। कथंपुनरिदमन्यार्थाद्भिद्यते। अत्राराध्याः। अन्यार्थेकेवलंयोगाद्रूढिर्बलवती। असमर्थे तु केवलयोगाद्योगरूढिः। तदपरेदूषयन्ति। तथापि रूढिच्युतिः साधारण्येनतदवान्तरंविशेषद्वयमन्यादिति। तन्न। भावानवबोधात्। किंचिद्धि पदमपवादकारणबलादवगम्यमानमपि योगमनपेक्ष्यैव क्वचिदर्थविशेषे वर्तते। यथा गौरिति। नहि गमनस्य वाक्यार्थे प्रवेशः संभवति। किंचित्पुनरसति बाधकतो बुध्यमा

था। जलं जलधरे क्षारमयं वर्षति वारिधिः। इदं बृंहि तमश्वानां ककुद्मानेषहेषते। अत्र जलधरोमेघो वारिधिःसमुद्रोबृंहितंगजानां हेषितमश्वानामितिलोकप्रसिद्धं तदिहसमुद्रमेघाश्ववृषभविषयतया प्रयुज्यमानमसंगतार्थत्वादवाचकमित्यसमर्थम् ॥ ७ ॥
अप्रतीतं तदुद्दिष्टं प्रसिद्धं शास्त्रएव यत्। यथा। किं भाषितेन बहुना रूपस्कन्धस्य सन्ति मे न गुणाः।गुणानान्तरीयकंच प्रेमेति न तेऽस्त्युपालम्भः। अत्ररूप

नस्य त्यागायोगाद्योगविशिष्टमेवोपाधिमभिधत्ते । यथापङ्कजमिति । तत्राद्ये प्रकारे रूढिरेव सर्वस्वमिति तत्परित्यागे रूढिच्युतम् । द्वितीये तु योगमात्रे प्रयुक्तमसंगतं शक्तिशून्ये प्रयुक्तं शक्त्यैकदेशे प्रयुक्तमिति त्रिन्नोर्थस्तदेतत्सर्वं व्याख्यानेन स्फुटयति । अत्रजलधरेति। जलधरादिपदानिजलधारणादिविशिष्टमेघत्वादौ रूढाभिधानशक्तीनिकथमेतदवसितमितिचेत्तत्राह । लोकप्रसिद्धमिति । लोकाधीनावधारणत्वाच्छब्दार्थसंबन्धस्येतिभावः। ततश्चय द्विशिष्टस्य योगस्य शक्तिविषयतया न तेन संकेतः । यत्रच समुद्रादौ प्रयोगो न तदुपाधिभिःसमुद्रत्वाद्यैःसंभूय शक्त्यासङ्केतः। धारादिपदोपसंदानेनच समुद्रादौ प्रयोग उन्नीयतइत्याह । तदिहेति। अतएव न तदवस्थस्य पदं वाचकमतएवचाक्षमत्वादसमर्थमितिसंज्ञयैव व्यवह्रियतइति संक्षेपः ॥७॥ अप्रतीतमिति। शास्त्रमात्रप्रसिद्धं शास्त्रव्यवहारिभिः संकेतितमित्यर्थः । प्रतीताप्रतीतसमभिव्याहाररूपंहिवाक्यमशास्त्रज्ञविषयं प्रयुक्तमभिमतार्थप्रतीतिं न जनयितुमीष्टे । तत्राप्रतीतानामेवापराधोऽतःपरिस्खलनखेददायितयाभवतिदुष्टत्वम् । अतएवाप्रयुक्ताद्भेदइतिभावः । किंभाषितेनेति । रूपस्कन्धवाचोयुक्तिःसौगतसमयप्रसिद्धा । तेषां रूपंवेदनासंज्ञासंस्कारो विज्ञानमितिपञ्च स्कन्धाः। तत्रापिरूपस्कन्धपदार्थप्रकाद

स्कन्धनान्तरीयकशब्दयोः शास्त्रप्रसिद्धत्वादन्यत्रा
प्रतीयमानयोः प्रयोगादप्रतीतम् ॥ ८ ॥ दूरेयस्या
र्थसंवित्तिः क्लिष्टं नेष्टं हि तत्सताम्। यथा। विजितात्म
भवद्वेषिगुरुपादहतोजनः। हिमापहामित्रधरैर्व्याप्तं
व्योमाभिनन्दति। अत्र विना गरुत्मता जित इन्द्र
स्तस्यात्मभवोऽर्जुनस्तस्य द्वेषीकर्णस्तस्यगुरुः सूर्यस्त
त्पादैरभिहतो लोकआकाशमभिनन्दति। कीदृशम्।
हिमापहोवह्निस्तस्यामित्रोजलं तद्धारयन्ति ये मेघा

---

थपदार्थकः। पञ्चेन्द्रियाणि पञ्च विषयाविष्ठमिरेकादशीतिप्रक्रि
या। अन्तरमितिविनार्थे गहादौ पठ्यते। तत्रभवइति छं स्वार्थिके
च कनि नञ्समासे पृषोदरादित्वान्नलोपाभाव इति भाष्यटीका।
प्रेम्णो व्यापकागुणानसन्तिमे नचव्यापकमन्तरेणव्याप्यंभवतीति व्या
पकानुपलब्धिप्रयुक्तत्वात्प्रेमाभावस्य तयोपालम्भे वाच्यता नास्ती
ति भावः। शास्त्रएवेत्यवधारणेन यद्व्यावर्त्यते तदाह। अन्यत्रे
ति। लोक इत्यर्थः ॥८॥ दूरइति। दूरंचिरंविलम्बइत्यनर्थान्तरम्।
क्लेशोद्विविधः। पदविषयोवाक्यविषयश्च। आद्यः सामान्यशब्दस्यप्र
करणादिकमनपेक्ष्य क्वचिदभिप्रेतविषये प्रयोगः। तथासति वाचक
तायामपिझटिति प्रतिपत्तिर्नभवति। किंतु परस्परान्वयपर्यालो
चनयाचिरेणेतिविरसत्वम्। यदाह। नेष्टं हि तत्प्रासितानामिति।
अयमेवार्थो व्यवधानपदेनवामनादिभिरुक्तः। द्वितीयस्तुव्याकीर्णा
दिपदेनाऽन्यथावर्त्यत। विजितेति। विशब्देनपक्षिसामान्यवचने
नतद्विशेषोगरुडात्मा विवक्षितः। तज्जितोपिविशेषएव। एवमन्य
त्रापि। नचाऽत्राऽपिकिंचिज् झटितिप्रतीत्यनुगुणं नियमकारण
मस्तीति युक्तमेव व्यवधानम्। हिमापहो वह्निरिति। हन्तेर्डप्र
त्ययेरूपम्। तथाचचन्द्रगोमी डप्रकरणे हन्तेर्डइत्येव सूत्रितवा
न्। हिमापहो वह्निरिति। क्वापि व्यभिचारं दृष्ट्वात्रलक्षणेत्यादि

स्तैर्व्याप्तमिति व्यवहितार्थप्रत्ययंक्लिष्टमेतत् ॥ ९ ॥
गूढार्थमप्रसिद्धार्थं प्रयोगंब्रुवते बुधाः। यथा। सहस्रगो
रिवानीकं भवतोदुःसहंपरैः। हरेरिव तवाभान्तिना
न्यतेजांसि तेजसि। सहस्रगुशब्देनसहस्राक्ष उक्तः। नच
गोशब्दस्याक्ष्णिभूयसीप्रसिद्धिः। हरिशब्देनचसहस्रां
शुः सोपिन तेन नाम्ना बहुभिरुच्यतइतिगूढत्वम् १०॥
स्वसंकेत प्रक्लृप्तार्थं नेयार्थमितिकथ्यते। यथा। मुखां
शवन्तमास्थाय विमुक्तपशुपङ्क्तिना। पङ्क्त्यनेक

---

सूत्रितंचन्द्रगोमिना ॥ ८ ॥ गूढार्थमिति। यस्यपदस्य द्वावर्थौ सिद्धश्चा
प्रसिद्धश्चतच्चेदप्रसिद्धे प्रयुक्तं तदा गूढार्थम्। अप्रसिद्धार्थप्रयोगमिति।
अप्रसिद्धेर्थेप्रयोगो यस्येति गमकत्वाद्बहुव्रीहिः। तव तेजसिनाऽन्य
तेजांसि भान्तीति योजना। गौःशराऽक्षिपयःस्वर्गपशुर्नेदवचःसुचे
त्याम्नातोपि तथानाऽक्षि प्रयुज्यते यथा पशुर्नेदादावित्याह।
नच गोशब्दस्येति। हरिः कपौच सिंहेच भेकाऽर्कभुजगेषु चेति
स्वसंकेतितस्यापि हरिशब्दस्य नतथा रवौप्रसिद्धिर्यथाऽन्यत्रेत्याह।
सोपिनेति ॥ १० ॥ स्वसंकेतेति। कल्पितार्थं नेयार्थमिति सूत्रयित्वा
वामनेन व्याख्यातम्। अश्रौतस्यार्थस्य कल्पनाकल्पनाऽकल्पितार्थ
म्। अस्यार्थः। यत्पदंनानार्थस्वपर्यायलक्षणयाविवक्षितप्रतीतिप
र्यन्तं नीयते तत्कल्पितार्थमितिकेचित्। तदयुक्तम्। स्वपर्यायेत्य
स्यव्यर्थत्वादव्यापकत्वाच्च। तस्मात्प्रयोजनं विना लक्षणया प्रयु
क्तमित्येवार्थः। यदाहकाव्यप्रकाशकारः। नेयार्थंवत्त्वशक्तिलहति
यस्मिन्निषिद्धं लाक्षणिकमिति। प्रयोजनं विना रूढं लक्षणापरिग्र
हे न दोषः। तथाच द्विरेफरथाङ्गनामादिपदानां रेफद्वयानुगतत्त्व
मरादिशब्दलक्षणाद्वारेणषट्पदादौ वृत्तिर्वृद्धव्यवहारपरंपरानुपा
तिनीति तेषां प्रयोगोऽयुक्त एव। अतएव तुरङ्गकान्तामुखहव्यवाह
ज्वालेव जित्वा जलमुज्ज्वलासेत्यादिकमपि नेयार्थमितिकाश्मीरकाः।

जनामधतुकाजितउलूकाजित्। अत्रपङ्क्तिशब्देनद
शसंख्या अनेकजनामेत्यनेन चक्रं तधइत्यनेनरथस्ता
भ्यां दशरथस्तस्यतुक् बालकोलक्ष्मणस्तेन जित उलूक
जिदिन्द्रजित् किंकृत्वा मुखांशवन्तमास्थायहनुमन्तं
किंभूतेन विमुक्तपशुपङ्क्तिना विमुक्तेषुपङ्क्तिना
अत्र पशुशब्देनगोशब्दोलक्ष्यते तेनेषवस्तादिदं स्वसङ्के
तकल्पितार्थं नेयार्थमुच्यते॥ ११ ॥ नयत्पदं निश्च
यकृत्संदिग्धमितितद्विदुः।यथा। नीललोहितमूर्त्तिर्यो
दहत्यन्ते जगत्त्रयम्।सएवहि महादेवस्त्रिषुलोकेषु पू
ज्यते। अत्र वह्निरर्कः शिवोवेति न निश्चीयते १२॥विप

---

तदेतत्स्वपदेन दर्शितवान्। मुखस्यांशो हनुरत्राभिमतः। पङ्क्ति
रिति दशाक्षरंछन्दः दशसंख्या लक्ष्यते। अनेकजो द्विजश्चक्रवाकस्त
स्यनामचक्रं रथैकदेशस्तद्धारयतीतिधारयतेर्मूलविभुजादित्वात्कः।
ताभ्यामिति। पङ्क्तिरनेकजनामयस्येत्यर्थात्। तुकतोकतोक्मामित्य
पत्यनामानि। उपलक्षणतयैकदेशंव्याचष्टे। अत्रपशुशब्देनगोशब्दो
लक्ष्यतइतिप्रकृतापेक्षया। तेनेषवः प्रत्याय्यन्तइतिशेषः ॥ ११ ॥
नयत्पदमिति। पदस्वरूपमेव संदिह्यमानमत्र। तथाहि। सएषहि
महादेव इत्यत्र सकिमेषहिमहादेव इति च्छेदो विधीयतां मत्वा
देवइति वाबाधकबाधकप्रमाणाभावेसंदिह्यते। न च विशेषण
नियमहेतुः। वह्न्यर्कावपि हि भगवतो नीललोहितमूर्त्तिभूतौ हि
मापहौ च न निश्चयकृदितिदूषणताबीजप्रदर्शनम्। यदैको विव
क्षितस्तदा दोषः। साधुचर इत्यत्रापि भूतपूर्वेचरडितिचरट्प्रत्यये
किं पूर्वंसाधुरथवाचरेष्टप्रत्यये साधुषुचरतीति पदमेव संदिह्यते
तेनपदावयवःसंदिग्धइति केनचिदुक्तंतदप्यपास्तम् ॥ १२ ॥
विरुद्धमिति। विपरीतं प्रकृतोपमर्द्दकमर्थकल्पनं यत्र। तथाहि।
अनुत्तमेत्यादौप्रकरणादिभिःस्तुतिपरत्वे व्यवस्थिते उत्तमत्वाभावा

रीतं विरुद्धार्थप्रकल्पनमिहोच्यते। यथा। अनुत्तमानुभावस्य परैरपिहितौजसः। अकार्यसुहृदोऽस्माकमपूर्वास्तव कीर्तयः। अत्रानुत्तमा इत्यनेन यथोत्कृष्टस्तथाऽपकृष्टोपि। अपिहितमित्यनेन यथानाच्छादितं तथाच्छादितमिति। अकार्यसुहृदित्यनेन यथाकार्यमन्तरेण सुहृदेवमकार्ये यः सुहृत्सोप्युच्यते। अपूर्वाः कीर्तय इत्यनेन यथाद्भुताः कीर्तय एवमकीर्तयोप्युच्यन्ते ॥ १३ ॥ अप्रयोजकमित्याहुरविशेषविधायकम्। यथा। तमालश्यामलं क्षारमत्यच्छमतिफेनिलम्। फालेन लङ्घ

दिना विरुद्धेनार्थेन तत्रपर्यवसाययितुं नशक्यते। संशययुगपद्विवक्षायामपि न विरोधः। इह तु स्तुतिनिन्दयोर्यौगपद्यमसंभावितमतएवैकस्य संभवेत्वपरस्य बाधएव यथा। चिरकालपरिप्राप्तलोचनानंन्ददायिनः। कान्ताकान्तस्य सहसा विदधाति गलग्रहमिति गलग्रहशब्दस्य कण्ठग्रहप्रतिहन्तृत्वद्विन्यर्थे विवक्षिते पूर्वप्रकान्तानन्ददायित्वं बाध्यते। अत्रानुत्तमइति बहुव्रीहितत्पुरुषाभ्यामपिहितमिति वष्टिभागुरिरित्यादिना विकल्पेनाकारलोपविधानात्। अपूर्वाइति। पक्षान्तरेऽकारपूर्वाः। नियामकसद्भावे तु गुण एव। यथा। अपूर्वंयद्वस्तुप्रथयतिविनाकारणकलामिति शब्दरूपान्तरमेवविरुद्धोपचायकमित्यन्वयव्यतिरेकाभ्यां शब्ददोषताव्यवस्थितिः ॥ १३ ॥ अप्रयोजकमित्याहुरिति। तदेवहिकवीनामुपादेयं यद्वाक्यार्थप्रकृष्टकाष्ठांपुष्णाति। अन्यथाऽनर्थकाभिधानेऽवाच्यवचनमेवस्यात्सार्थकत्वादनन्वयत्वाच्च। नवृत्तपूरणमात्रप्रयोजनतानातिशयमिति। सागरलङ्घनद्वाराहनूमतः प्रकर्षोवाच्यः। नचतमालश्यामलत्वादिविशेषणानिकथंचित्प्रकर्षमर्पयन्तियानिदूरत्वादीनि तथानतेषामुपादानम् ॥ १४ ॥ तद्देश्यमिति। अव्युत्पत्तिमत्। प्रकृतिप्रत्ययविज्ञानशून्यंलोकमात्रप्रयुक्तंपदमनादेयंभव

यामासहनूमानेषसागरम्। अत्रतमालश्यामलमित्या
दीनिसागरविशेषणानि तानि न हनूमतो लङ्घनेऽ
तिशयं सूचयन्ति ॥१४॥ तद्देश्यमिति निर्दिष्टं पद
व्युत्पत्तिमत्पदम्। यथा। गल्लौ लावण्यतल्लौ ते लडहौ
मडहौ भुजौ। नेत्रे वोसट्टकन्दोट्टमोहायितसखे सखि।
अत्रगल्लतल्लादयः शब्दाअव्युत्पत्तिमन्तो देश्या दृश्य
न्ते ॥१५॥ अश्लीलामङ्गलघृणावदर्थं ग्राम्यमुच्यते।
अत्राश्लीलमसभ्यार्थमसभ्यार्थान्तरं च यत्। असभ्य

---

ति। तद्द्विविधम्। अभागं भागवच्चेति। आद्यं देश्यम्। द्वितीयं
ग्राम्यमिति विभागः। व्युत्पन्नानामन्यादृशी च्छाया देश्यानां च न तादृशी
ति दश्यवत्यपदसमभिव्याहारे प्रायेणच्छायावैरूप्यं बन्धस्य भवतीति स
हृदयहृदयसाक्षिकं दोषबीजम्। तत्र मल्पसरः ललहं मनोहरं मडहं
कृशं वोसट्टं विकसितं कन्दोट्टं नीलोत्पलं मोहायितं विलासः ॥ १५ ॥
अश्लीलेति। देश्यातिरिक्तं लोकमात्रप्रयुक्तं ग्राम्यं तत्त्रिधा व्रीडाजुगु
प्सातङ्कदायित्वात्। तत्राद्यमश्लीलं श्रीयस्यास्ति तच्छ्लीलं सिध्मादेरा
कृतिगणत्वाल्लच्। कपिलकादिपाठाल्लत्वम्। नश्लीलमश्लीलं व्रीडादा
यित्वेनाक्रान्तमित्यर्थः। द्वितीयं घृणावदर्थकम्। जुगुप्सादायिप्र
त्याय्यमस्येति। तृतीयममङ्गलार्थमातङ्कदायिप्रत्याय्यमस्येति कृत्वा
ऽश्लीलपर्यायोऽसभ्यशब्दः। सभायां साधुरित्यर्थे तेनापि शास्त्रेऽय
व्यवहार इति प्रदर्शनार्थमसभ्यशब्देनाश्लीलमनूद्य व्याचष्टे। तत्रास
भ्यमिति। अर्थस्यासभ्यत्वात्पदमप्यसभ्यम्। स चार्थः क्वचित्प्रकृतो
प्रकृतोपि श्लेषोपस्थितएकदेशात्स्मृतिमात्रारूढो वा। तत्र यथाक्र
ममसभ्यादयस्त्रयः। एवममङ्गलादयोपि। सूर्यसुता यमुना। अस्त्र
सिन्धुर्गङ्गा। तयोर्मध्ये पारेमध्ये षष्ठ्या वेति अव्ययीभावः। अर्धं हरे
रर्द्धं हरस्येति शरीरैक्ये। काटशब्दस्यासभ्यार्थत्वे तद्विशेषणानामप्य
सभ्यत्वमिति तान्यादाय व्याचष्टे। अत्र चूडाकारेति ॥ १६ ॥ * ॥

स्मृतिहेतुश्चत्रिविधंपरिपठ्यते। तेष्वसभ्यार्थंयथा। छत्राकारशिरा:शिरालसरलस्थूलप्रकाण्डो महान्मध्ये भानुसुताभ्रसिन्धुविपुलाभोगो वटः पातुवः। कार्यैक्ये विकटप्रसारितमहाजङ्घंमहीसुप्रयोर्यः खण्डेन्दुकिरीटकैटभजितोःकाटश्रियंकर्षति। तदेतच्छत्राकारशिराःकाटइत्यादेरसभ्यार्थत्वादसभ्यार्थम् १६॥ असभ्यार्थान्तरंयथा। विद्यामभ्यसतो रात्रावेति याभवतः प्रिया। वनितागुह्यकेशानां कथं ते पेलवन्धनम्। तदेतद्याभवतःप्रियागुह्यकेशानांपेलवन्धनशब्दानामसभ्यार्थान्तरत्वादसभ्यार्थान्तरम्॥१७॥ असभ्यस्मृतिहेतुर्यथा। उत्कम्पयसि मांचूतपिकवाक्काटवेनकिम्। कृतः

---

विद्यामिति। यारात्रौविद्यामभ्यसतामनत्रमावर्त्तयतस्तवप्रिया सम्मायातिसायाविणी। अतः कथंतेघनंपेलवंकोमलंस्वल्पमितियावत्। किंतुयक्षिणीप्रसादाद्बहुघनंतवोचितमित्यर्थः। प्रकृतपदानित्वसभ्यार्थान्तराणितान्युद्धृत्यव्याचष्टे। तदेतद्याभवतः प्रियेति। असभ्यार्थप्रकाशनमेवषष्ठ्याआकोशइत्यर्थः। किंयाभवतः प्रियेति। एकंपदंयाभोमैथुनंतद्वतः प्रियेत्यर्थात्। योनिर्वनितायागुह्यास्तस्यकेशाः। पेलशब्दोमुष्कयोः प्रसिद्धः। तत्रबन्धनमिति॥ १७॥ उत्कम्पयसीति। हेचूतवृत्तकोकिलस्यवाचाकटुत्वेनदुःखदायित्वात् किंमां त्रापयसि। ननुतवकुकाटिकायाग्रीवायांपादंदत्वाचलितामम्प्राणास्तेनमयाजितम्। व्ययंस्तवायंपरिश्रमइतिवाक्यार्थोविवक्षितः। काटवशब्देकाटएकदेशः कृकाटिकाशब्देकाटिकेतिलोपः। काटःकाटिका॥१८॥ खेटकइति। घतृप्तःसुखस्येयत्तापरिच्छेदाज्ञानात् खेटकेग्रामेयद्भक्तंसूपश्चोत्पद्यतेतस्यपत्तनस्यनगरस्य यावलनीतस्यां सुहितार्थयोगेषष्ठीनिषेधाल्लिङ्गादनुमीयते तृप्त्यर्थयोगेषष्ठीत्रव

क्रकाटिकायां ते पादः प्राणेन यास्यता। तदिदं काट वक्रकाटिकापदयोरसभ्यस्मृतिहेतुत्वादसभ्यस्मृतिहेतुता १८॥ लोकेषु यदशस्तार्थमशस्तार्थान्तरं च यत्। अशस्तस्मृतिहेतुश्चामङ्गलार्थं त्रिधैव तत्। तेष्वशस्तार्थं यथा। खेटके भक्तसूपस्य वलभ्याः पत्तनस्य च। अतृप्तो हं मरिष्यामि हेहले भाषितस्य च। अत्र मरिष्यामीति पदमशस्तार्थम् १९॥ अशस्तार्थान्तरं यथा प्रवासयति याकान्तं वसन्ते गृहसंस्थितम्। विना शपथदानेन पिशाची सा न चाङ्गना। अत्र प्रवासयति संस्थितं विनाशपथदानेन पिशाचीपदानामशस्तार्थान्तरत्वम् २०॥ अशस्तस्मृतिहेतुर्यथा। मारीचोयं मुनिर्यस्य कृत्याकालान्तकालये। पत्न्यां सङ्क्रन्दनादीनां सुतानामाप्तये भवन्। अत्र मारीचकृत्याकालान्तकसङ्क्रन्दनपदानामशस्तार्थस्मृतिहेतुत्वम् ॥ २१ ॥

---

त। अन्ये तु व्याचक्षते। भक्तसूपपदनामादक्षिणापथे विषयस्तत्सन्निखेटके वलभीनामकस्य चिह्नरूपाद्याधिष्ठानस्य तत्रैव पत्तनस्य हेहले स्त्रीणामव्याजमन्योन्यप्रेमातिशयगर्भस्य भाषितस्येति ॥ १९ ॥

प्रवासयतीति। शपथदानेन विना प्रवासयति। अन्यत्र प्रहिणोति गृहे सम्यक् स्थितं प्रियं साङ्गना न किंतु पिशाचीवदनुचितकारिणीत्यर्थो निमतः। अन्यत्र प्रवासनमुच्चाटनं संस्थानं विनाशः विनाशस्य पन्थास्तस्य दानम्। पिशितमश्नातीति पिशाची। पृषोदरादित्वात्। तदेतद्व्याचष्टे। अत्र प्रवासयतीति ॥ २० ॥ मारीचोयमिति। मरिचेरपत्यं मारीचः काश्यपः संक्रन्दनादीनिन्द्रादीन् द्वादशपुत्रानादित्यानुत्पादितवान्। तच्च कालान्तकस्य भगवतो महादेवस्यालये याः कृत्याः क्रियाः भगवदाराधनरूपास्तासां फलमित्यर्थः। मारीचशब्दे मारकदेशः कृत्या इति सुबन्तपदे कृत्येत्येकदेशः कालान्तका

पदमर्थं घृणावन्तं यदाह । र्थान्तरं च यत् । घृणावत्स्मृ
तिहेतुर्यत्तद्घृणावदिह त्रिधा ॥ तेषु घृणावदर्थं यथा ।
पर्दते हदते स्तन्यं वमत्येष स्तनन्धयः । मुहुरुत्कौ
लि निष्ठीवत्यात्तगर्भा पुनर्वधूः । पर्दतेहदतेवमति
निष्ठीवतीतिशब्दानां घृणावदर्थत्वम् ॥ २२ ॥ घृ
णावदर्थान्तरं यथा ॥ बाष्पक्लिन्नाविमौ गण्डौ वि
पूयापाण्डरौ तव ॥ प्रियोग्रे विष्ठितः पुत्रि स्मितव
र्चोभिरर्चति ॥ अत्र क्लिन्नगण्डविपूयाविष्ठितवर्चः
पदानां घृणावदर्थान्तरम् ॥ २३ ॥ घृणावत्स्मृतिहेतुर्य
था । प्रत्यार्द्रयन्तो रूढानि मदनेषुव्रणानिलः । हृदय

---

लय इत्यत्रान्तकातिसंक्रन्दनेशब्दक्रन्दनेति ॥ २१ ॥ उत्कौति । उत्का
रं करोति । निष्ठीवति थूत्करोति । आत्तगर्भा पुनर्वधूरिति । बालस्य
स्तन्यवमनादिनिदानसूचनम् । अतएव नगर्भिण्याः पिबेत् क्षीरं पा
रगर्भिककृत्तदिति वैद्यकम् ॥ २२ ॥ बाष्पेति । विपूयो मुञ्जः वि
शेषेणास्थितो विष्ठितः । स्मितवर्चो हास्यतेजः । तव कपोलो दृष्ट्वा पुरः
स्थितस्तव प्रियईषद्धास्यं कुर्वन् कपोलयोर्हास्य ज्योत्स्नया पूजां करोती
त्यर्थः । अन्यत्र बाष्पो वमनात् क्लिन्नो कृदूनूतः । गण्डो व्रणः । विशिष्टः
पूयो विपूयस्तेन पाण्डरः विष्ठितो विष्ठासञ्जातास्य । वर्चः पुरीषम् ।
यत्स्मरणात् बाष्प दीनां घृणावतिवृतिस्तदेव पृथक्कृत्याह । अत्र
क्लिन्नेति ॥ २३ ॥ प्रत्यार्द्रयन्त इति । अन्योन्यलग्नो वृक्षसमूहः षण्डः ।
रूढानीत्यनेन मदनेषुव्रणानामविशेषितत्वात् । मदनेषुभागमपहाय त्र
णभागमात्रेण रूढव्रणस्मृति मेवन्तीपदादेर्वातीविवर्णितवान् । पुरीष
वृण्डवदेपुरीषेत्यकदेशः ॥ २४ ॥ तदेवं पददोषाँल्लक्षयित्वा क्रमप्राप्त
वाक्यदोषाल्लक्षणीया इति तान्विवजते । शब्दहीनमिति । वक्तेनैवप्र
योजनेनासमासद्वन्द्वगर्भबहुव्रीहिसमासौ । एवं गुणादिविभागवा
क्येष्वपि प्रयोजनमवसेयम् । भिन्नलिङ्गवचनेत्यादौ तु द्वन्द्वलक्षणस्यस

क्लेदयन्त्येते पुरीषगण्डमहद्रुमाः ॥ अत्र रूढव्रणक्लेदपुरीषगण्डपदानाङ्घृणावत्स्मृ।तहेतुत्वम् ॥ २१ ॥ शब्दहीनं क्रमभ्रष्टं विसन्धि पुनरुक्तिमत्। व्याकीर्णं वाक्यसंकीर्णमपदं वाक्यगर्भितम्। द्वे भिन्नलिङ्गवचने द्वे चन्यूनाधिकोपमे। भग्नच्छन्दोयती च द्वे अशरीरमरीतिमत् । वाक्यस्यैते महादोषाः षोडशैव प्रकीर्तिताः। अथैषां लक्ष्म संक्षेपात्सनिदर्शनमुच्यते। उच्यते शब्दहीनन्तद्वाक्यं यदपशब्दवत्। यथा। नीरन्ध्रङ्गलितबतिक्षयंपृषत्कैर्भूतानामधिपतिना शिलावितानं। गाण्डीवीकनकशिलानिभंभुजाभ्यामाजघ्ने

---

मासस्यपूर्ववर्त्तिनांभिन्नादिपदानांप्रत्येकमन्वयः । यमनंयतिरिति भग्नच्छन्दोभग्नयतिरितिकेचित् । तथाचव्यतिकीर्णोयंः स्यात् । अरीतिमदिति । रीतिरस्यास्तीतिनित्ययोगेमतुप् । नित्ययोगप्रतिपादनंहिदूषकताबीजोद्घाटनायोपपद्यते। अतएववहुव्रीहीलाघवंतत्रनादरः । असाधुदवसाधुमत्वस्यप्राथम्याल्लक्षणमाह । उच्यतइति। अपशब्दत्वंपदएवानियतंवाक्येसंस्कारप्रसक्तेरभावादपशब्दत्वंनवाक्यदूषणम् । तथाहि। कर्त्तरिक्तादितिनियमात्कर्मणिक्तवतुरसाधुः । अकर्मकाच्चेत्यनुवृत्ता आङोयमहनइत्यात्मनेपदमकर्मकएव प्राप्तंस्वाङ्गकर्मकाच्चेतिवाक्यैकवाक्यतापर्यालोचनयाऽस्वाङ्गकर्मण्यसाधुः कथंवाक्यदूषणता। नहि वाक्यान्तःपातितामात्रेण साधुत्वतेऽतिप्रसङ्गादित्याशङ्क्योक्तम् । तीयति। नहि यथा बाधृधातुः परस्मैपदान्त इत्येवासाधुत्वं तथात्र पदान्तरसन्निधानापेक्षत्वेऽध्यवसीयते । भूतानामधिपतिनाशिलावितानइति यावन्नानुसंधीयते तावद्गर्भितवतीति किंकर्त्तरिकर्मणिवेतिसंदेहानिवृत्तेः। तथा गाण्डीवीविषमविलोचनस्यवक्षइत्येतावत्प्रतीत्य कथमाजघ्नइत्यस्वाङ्गकर्म

विषमविलोचनस्य वक्षः । अत्र गमितवतीति क्त
वतोः कर्मणि , आजघ्नइति आत्मनेपदस्यास्वाङ्ग
कर्मणि प्रयोगादपशब्दौ तौ शिलावितानत्र्यक्षवक्षः
सम्बन्धाद्वाक्यदोषौ जायमानौ असाधुनाम्नः पद
दोषाद्भिद्येते ॥ १ ॥ क्रमभ्रष्टंभवेदार्थः शब्दो वा
यत्र तत्क्रमः । यथा । तुरङ्गमथमातङ्गंप्रयच्छास्मै
मदालसम् । कान्तिप्रतापौ भवतः सूर्याचन्द्रमसोः
समौ । अत्र मातङ्गमथतुरङ्गमिति वक्तव्ये तुरङ्गम
थमातङ्गमित्यर्थः । कान्ति प्रतापौचोक्ता सूर्याच
न्द्रमसोःसमाविति शाब्दः क्रमभ्रंशो लक्ष्यते ॥ २ ॥

---

त्वि आत्मनेपदमव्यवधानयोग्यमियमेवाहिवाक्यदोषतायदनेकपदनि
रूप्यतानामबाधतीत्यत्रापिकिंवाचशब्दात्क्विबन्तात्तिप् । उतबाधृ
धातुरिति संदेहइति कुदेश्यम् । स्कन्धादिपदसन्निधानेपि तस्यानि
वृत्तेः । तेन त्वामनुनाथलेकुचयुगमित्यादिकमत्रत्यमुदाहरणंप्रमादात्
काव्यप्रकाशकृता पददोषेषु लिखितम् । यथाच । वदपूतितः को
न हीयतइति रुद्रटेन । तत्र ह्यपादानेचाहीयरुहोरितितसिप्रत्यय
निषेधः । सचपदान्तरसंनिधानेनैवेति स्वयमालोचनीयम् । शिला
वितानत्र्यक्षवक्षइत्युपलक्षणम् । अधिपतिगाण्डीविशब्दावपि वो
द्धव्याविति ॥ १ ॥ क्रमभ्रष्टमिति । अर्थादागतः क्रम आर्थः । शब्दा
दागतः शाब्दः । अर्थक्रमभ्रंशः कथंशब्ददूषणमतआह । इति
वक्तव्यइति । मातङ्गोदीयतामथ तद्दानसामर्थ्यं नास्ति तदा तुरङ्ग
इति वक्तव्ये रचनावैपरीत्यमात्रमत्रापराध्यति । नार्थइतियुक्ताश
ब्ददोषता ॥ २ ॥ विसंहितमिति । विशब्दोविगमंवैपरीत्यंचद्योत
यति । तेनार्थद्वयंसंपद्यते । परः सन्निकर्षः संहिता । तयातत्का
र्यंलक्ष्यते । संधानंसंधिः । अर्द्धमात्राकालव्यवधानंतया चसंहिता

विसंहितोविरूपोवा यस्य सन्धिर्विसन्धि तत् । यथा । मेघानिलेन अमुना एतस्मिन्नद्रिकानने । मञ्जर्य्युद्गमगर्भासौ तर्वाल्युर्वी विधूयते । अत्र मेघानिलेन अमुना एतस्मिन्नसंहितयाविवक्षामी त्यभिसन्धानंविसन्धिः। मञ्जर्य्युद्गमगर्भासौइत्यादौतु विरूपसन्धानंविसन्धिः ॥ ३ ॥ पदम्पदार्थश्चाभिन्नौ यत्र तत्पुनरुक्तिमत् । यथा । उक्ता

---

कार्यशून्यंसंधानंयत्रेत्यर्थः । संहितैकपदेनित्येतिसनयादन्यत्रविकल्पः । ततोनासाधावत्तद्भावः । वैरूप्यं द्विविधम् । दुर्वचकत्वमश्लीलत्वंच । तत्राद्यमुपलक्षणतयोदाहृतम् । द्वितीयंयथा उड्डीय गगने दूरं चलन्डामरचेष्टितः । अयमुत्पतते पत्री ततोत्रैव रुचि कुरु । ननु यदिसंधिकार्यं वैकल्पिकं कथमत्रदोष इत्यतआह । नसंहितामिति । यदि संहिताप्रतिषेधःस्यात्तदा सकृद्विसंधिकरणेन तथावैरूप्यं भवतीति कवेरपराधो नसंभाव्यते यदितु प्रतिषेधो नास्ति असकृद्वोपादानं तदा व्यक्तवैरूप्यप्रतिभासात्कथं नदोषइत्यर्थः । नविवक्षामीत्युपलक्षणम् । विवक्षायामप्यसकृत्प्रयोगो विरसएव । यथा । ततउदितउदारहारहारीति । विशेषं वैशेषिके वक्ष्यामः ॥ ३ ॥ पदंपदार्थश्चाभिन्न इति । पदमभिन्नमभिन्नतात्पर्याभिधेयमितिविशेषः । तेन तात्पर्यभेदे लाटानुप्रासोऽभिधेयभेदे यमकंच न दोषः । पदार्थोऽभिन्नपर्यायशब्दोपात्तइतिशेषः । तेन पूर्वस्माद्विशेषः स्वाभिधेयतात्पर्यकपदावृत्तिः पर्यायोपादानं च द्वयमपि शब्दपुनरुक्तमिष्यते तथा च परमार्षं सूत्रं “ शब्दयोः पुनर्वचनंपुनरुक्तमन्यत्रानुवादादिति„ ॥ युक्तंचैतत् । एकस्याभिधेयस्य द्विरभिधानं दोषः । तच्चाभिधानं तेनैवपदेन पर्यायेण वासंभवतीति शब्दमादायैव तस्य व्यवस्था पुनरुक्तिरत्रैव पदे भवति तत्कोत्र मत्वर्थइत्यतउक्तम् ।

नुन्मनयन्त्येते गम्भीराः स्तनयित्नवः। अम्भोधरास्त
डित्वन्तो गम्भीराः स्तनयित्नवः। अत्र उत्कानुन्म
नयन्तीत्यर्थपुनरुक्तम्। गम्भीराः स्तनयित्नवइति
शब्दपुनरुक्तम् ॥ ४ ॥ व्याकीर्णन्तन्मिथोयस्मिन्वि
भक्तीनामसङ्गतिः। यथा। दण्डे चुम्बति पद्मिन्या
हंसः कर्कशकण्टके। मुखंवल्गुरवङ्कुर्वंस्तुण्डेनाङ्गानि

---

यत्रतदिति। यत्र समुदायेऽवयवः पुनरुक्तरूपः समतुबर्थः। अ
तएव नानापदनिरूपणीयतया वाक्यदूषणमिति स्फुटार्थः। वि
कल्पितंचेदं लक्षणमेकस्यैवदूषणधुरारोहणक्षमत्वात्। संक्षेपार्थं
त्वेकमुदाहरणम्। अर्थमादायैव पुनरभिधानं पुनरुक्तमिति विभा
वयितुं लक्षणक्रमवैपरीत्येन प्रथममर्थपुनरुक्तमुदाहृतमित्याशयवान्
व्याख्यानेपि तमेव क्रममाद्रियमाणआह। अत्रोत्कानिति। उत्कउ
न्मनाः। उन्मनयन्तीति। उन्मनसंकुर्वन्तीतिणिचिइष्टवद्भावेटिलो
पे च रूपम्। अम्भोधराइतिविशेष्यपदम्। शेषाणिविशेषणानि।
गम्भीरामांसलाः स्तनयित्नवः शब्दायमानाः। तडित्वन्तःप्रकृष्टत
ड्युक्ताः ॥४॥ व्याकीर्णंतदिति। पदानामक्लेशेप्यर्थप्रतीतिहेतुभूताका
ङ्क्षावद्विभक्तिव्यवधानादनाकाङ्क्षितविभक्तिसन्निधानाच्च। नाहत्यप
दानि विशिष्टार्थज्ञानजननसमर्थानि भवन्ति विलक्षणलक्षणक्लेशप
दानिभ्रमकराणीति वदतामाराध्यानामयमेवाभिप्रायो बोद्धव्यः।
विभक्तिव्यवधानमात्रकृतस्तुक्लेशः प्रायेण पदैकवाक्यतायामुत्पद्यते।
दण्डइति। आधारविभक्तिराधेयविभक्तिमपेक्षते नतु चुम्बतीति
क्रिया विभक्तिम्। सापि कारकविभक्तिमाकाङ्क्षति। पद्मिन्याइति
सम्बन्धविभक्तिकमेवतत्रबोद्धव्यम्। क्लेशेनयोत्रावगम्यतेतमभिमतम
र्थमावेदयति। अत्रकर्कशेति। अतएव नापार्थकत्वेन संकरः समुदा
यार्थस्यप्रतीयमानत्वात्। अस्ति कश्चिदुच्चारणयोर्विशेषोयेनवाक्या
र्थप्रतीतिः क्वचिदाहत्य भवति। क्वचित्तुनेति स एव विशेषः। सनि

घट्टयन् । अत्र कर्कशकराटके दगडे ह्यानिघट्टयन् हंसःपाद्मिन्यामुखंचुम्बतीतिवक्तव्येयथानिर्दिष्टरूपे विघाट्टितविभक्तिकयुक्तित्वाद्व्याकीर्णम् ॥५॥ वाक्यान्तरपदैर्मिश्रंसंकीर्णमितितद्विदुः। यथा। काअंखाअइखुहिओकूरम्पेल्लेइणिभ्भरंरुठ्ठो। सुणअङ्गेगहइकराठेहक्केइअणच्छिअराठेरो। अत्रकाकंक्षिपतिकूरंखादतिकराठेनप्राह्ङ्गृह्णातिश्वानम्भीषयतइत्यादौ वक्तव्येयथोक्तपदविन्यासः संकीर्यते ॥६॥ विच्छिन्नप्रक्र

धानं व्यवधानमिति व्याख्यायते । कार्यदर्शनादर्शनाभ्यां चोन्नीयत इत्याशयवानाह । यथोक्तरूपेणेति ॥५॥ वाक्यान्तरपदैर्मिश्रमिति । वाक्यासंवलितानिपदानिवाक्यान्तरमनुप्रविश्यतथाप्रतीतिं विघ्नन्ति यथा समुदायएव दूषितोभवति । कूरंभक्तं क्षुधितः खादति ॥ काकंच निर्भरं रुष्टः सन्क्षिपति श्वानंच निवारयति नहारं च कण्ठेगृह्णाति स्थविरजातिः। आकांक्षाक्रमेण किंचित्पदंकस्यचिद्वाक्यस्य संबद्धमिति ज्ञायतएव तदाह ॥ अत्रकाकंक्षिपतीति । शब्ददोषत्वं प्रकाशयति । इतिवक्तव्यइति । यथोक्तपदविन्यासइत्यनेन संकीर्यतइत्यस्यार्थोविवक्षितः । एवंप्रकारः संकरइत्यर्थः॥ विजातीयसंवलने लोके संकरव्यवहारः ॥६॥ विच्छिन्नेति । षोढा पदं भवति । प्रकृतिस्थं कोमलं कठोरं ग्राम्यं नागरमुपनागरंच तत्रानेकदीर्घस्वरकृतगौरवमेकसंयोगकृतगौरवंपदं प्रकृतिस्थम् । यथानीहारतारानीकाशसारसीत्यादि। हस्तपल्लवकङ्कणकर्पूरादिच । यथाच । पाढिवआमाणंसिणिवे आलगोलेत्यादिस्यजम्भतुभ्भउत्तविलविहत्यात्तिअक्षेत्यादि च । एकस्वरकृतगौरवं गुरुशून्यंवाकोमलम् । करेणुतारकसरोजनिकरादि । मधुरमसृणसरससरलेत्यादि च । यथा नीहारवाणइवाषवेणीत्यादि । परकुञ्जलडहतलिणेत्यादि च सानुस्वारविसर्गदीर्घस्वरकृतगौरवंसंयोगबहुलंवाऽकठोरम् ॥ यथाशुद्धंपयः पाचयां

तिस्थादिपदयुक्त्यपदं विदुः। यथा। आउज्झिअपिठ्ठि
अएजहकुक्कुलिणाममज्झभत्ताले। पेक्खन्तहलाउलक
लणिआहहाकस्सकन्देमि। तदेतत्प्रकृतिस्थकोमलक
ठोराणांनागरोपनागराणांग्राम्याणांवापदानामयुक्ते

---

बभ्रूवताः पिब। आह्विपातामित्यत्र। अच्छाच्छतत्रस्यव्यूढोरस्कप्रछन्ने
त्यादिच। यथाच। आईहुएइत्यादिउप्पिच्छउप्पुपुअएक्कमेक्कमित्यादिच
प्रसिद्धमादाय ग्राम्यादित्रयंभवति। प्रसिद्धिस्त्रिधा। सार्वलौकिकीपण्
डितजनगामिनी। तदुपजीविविचतुरलौकिकगामिनीचेति। तत्रसर्व
लोकप्रसिद्धंग्राम्यम्। देशीपदानिसर्वाण्यवसंस्कृतेषुहस्तविवाहभगि
नीहारकङ्कणादिकं तुंभग्नंजहलिद्दासाहज्जादिकंच। एतदपभ्रंशस
मानप्रसिद्धिकमतिप्रसिद्धंचेति गीयते। ग्राम्यवैपरीत्येन नातिप्रसिद्धं
नागरंनगरेणोपमितमितिकृत्वातिप्रसिद्धाभावेनोपमा। इदमेवना
त्यप्रसिद्धमुपनागरमित्युच्यते। यथा। आद्या। शकिंशारुखुरलीलात
ङ्केत्यादि। सुंदेवअच्छेवगुप्पन्तीविवलाआइत्यादिच। शृङ्गारप्र
काशेतु भाषाणामपिभेदो पदमित्युक्तम्। इहतुशब्दजात्यौचित्या
विवेचनेनगतमितिग्रन्थकर्त्तुराशयः। तदेवास्थिते प्रतिपदं कवीनां
कोपि क्रमोनिर्वाह्योनत्वकस्मादेवालूनविशीर्णभावोविधेयः। तदि
दमाह विभिन्नेत्यादि। युक्तिरुचितायोजना सा प्रकृतिस्थादी
नां विभिन्नाऽन्यथानीता ऽत्युक्तिरिति यावत्। एतद्वत्त्यत्य-
युक्तेरिति। आउज्झअइति। आवर्ज्य केशेषुनमयित्वा। आवज्झ
इतिपाठे निर्भत्स्य। पिट्टिअए ताड्यते। जहकुक्कुलि।
यथाकुक्कुरीनामशब्दः प्राकाश्ये प्रकाशमेव ताडितमित्यर्थः। मज्झ
भत्ताले ममभर्तापेक्खन्तहलाउलकणिआह। अनादरेषष्ठी। रा-
जकुलनियुक्तान्प्रेक्षमाणाननादृत्येत्यर्थः। हाशब्दः खेदे। क-
स्यक्रन्दामिकस्यफूत्करोमीत्यर्थः। अत्रप्रथमेपादे आवज्झएइत्यु
पनागरंप्रकृतिस्थंच। आउज्झीतिपाठेग्राम्यंप्रकृतिस्थंच। भ-

रपदम् ॥ ७ ॥ वाक्यान्तरसगर्भं यत्तदाहुर्वाक्यगर्भि
तम्। यथा। योग्योयस्तेपुत्रः सोयंदशवदन लक्ष्मणेन
मया। रक्षैनंयदि शक्तिर्मृत्युवशं नीयते विवशः ॥ अ
त्रयोग्योयस्ते पुत्रोलक्ष्मणेन मया मृत्युवशं नीय
तइति वाक्यस्य रक्षैनं यदि शक्तिरिति वाक्यान्तरेण

---

न्तालइत्यपितथा । तृतीयपादेपेक्खलंहलिकठोरमुपनागरंच । राउ
लकलणिआहेतिग्राम्यंप्रकृतिस्थंचहलि ग्राम्यंकोमलंच। करसेतिप्रकृ
तिस्थमुपनागरंच । कन्देमीतिग्राम्य प्रकृतिस्थंच लदिहेकरूपपवक
मेकरवधूलक्खणेग्राम्येवक्कारि यकरूपपवक्खवाक्य। यैसर्वदोपतिरोधाय-
करसदीस्यभावेचयथा ज्ञापाणां व्यतिकरोदूषणं तथा ग्राम्यादीना
मिति । सहृदयमात्रवेद्यश्चायंपन्था इत्यवहितैर्भवितव्यम् । एतेषां
चस्वरूपं स्वयमेवगुणीभावप्रस्तावे लेशतः प्रकाशयिष्यतितेनेह सं-
क्षिप्तवान् । नैवंविधः कदापिव्यतिकरो महाकविगिरामाजानिकः
प्रवर्तते। तथाहि । त्यजतोमङ्गलक्षौमे दधानस्यचवल्कले । ददृशु-
र्विस्मितास्तस्यमुखरागं समंजनाः ॥ अत्र प्रथमादिषुपादेषु क्षौम
चीरविस्मितरागपदानिउपनागराणिशेषाणिग्राम्याणि । प्रतिपा-
दंच प्रकृतिस्थकोमलाभ्यामेव निर्वाहः। एवमन्यत्रापिप्रत्येकं द्वन्द्वस
मुदायैः प्रतिपादमुपक्रमोपसंहारनिर्वाहक्रमःस्वयमुपलक्षणीय-
इत्यास्तांतावत् ॥ ७ ॥ वाक्यान्तरेति । मध्यप्रविष्टंवाक्य पूर्वोक्त
रत्नागाम्यामेकीभूतस्यगर्भायमाणमेकस्वरसप्रसूतांप्रतीतिं विघ्नय-
दात्मनासहैवसमुदायविरसकक्षामारोहयति । वाक्यान्तरंवाक्य
स्याविशेषाविवक्षितः प्रतीतिव्यवधायकइतियावत् । योग्यइति ।
मयेति । कारकविभक्तेः क्रियाकाङ्क्षाशीलायास्तामसंगमय्यमध्ये
रक्षैनंशक्तिरित्येतावतागर्भस्यानीयेनविरसीकरणमित्याह । अ
त्रयोग्योयइति । एवंवाक्यरूपतामङ्गहन्दोषानभिधायतत्रैव-
काव्यभावप्रत्यूहहेतवोभिधातव्यास्तेच गुणाङ्गद्वारकाश्चालंकारभ

सगर्भत्वाद्गर्भितम् ॥ ८ ॥ यत्रोपमाभिन्नलिङ्गा भि
न्नलिङ्गन्तदुच्यते । भवेन्नद्भिन्नवचनं यद्भिन्नवचनो
पमम् । यथा । अविगाह्योसि नारीणामनन्यमन
सामपि । विषमोपलभिन्नोर्मिरापगेवोन्नितीर्षतः ।
अत्रापगेव त्वमविगाह्योसीतिलिङ्गभेदः । नारीणा
मुन्नितीर्षतइतिलिङ्गभेदोवचनभेदश्च तदिदंद्वयोरेक
मेवोदाहरणम् ॥ ९ ॥ अथभिन्नलिङ्गस्यैव यथा ।
वापीवविमलं व्योम हंसीव धवलः शशी । शशि
लेखेव हंसोऽयं हंसालिरिव ते यशः ॥ १० ॥ भिन्न
वचनस्यैव यथा । सरांसीवामलं व्योम काशाइव

---

ङ्गद्वारकाश्छन्दोभङ्गद्वारकायतिभङ्गद्वारकाश्चेतिचतुर्धाविप्रथन्ते । ततश्च
यद्यपिप्रथमंगुणभङ्गद्वारकावक्तुमुचितास्तथापि तेषां बहुत्वाद्दुरूह
त्वाच्चसूचीकटाहन्यायेनपश्चात्करणमलंकारभेदादिषुच सध्येप्रतियो
गिद्वाराऽलङ्कारभङ्गस्यप्राधान्यमिति तद्वारा दोषाँल्लक्षयति । यत्रो
पमेति । उपमाग्रहणमुपलक्षणमित्यग्रे वक्ष्यामः । उपमाउपमितिः
सादृश्यभिन्नोपमानवाचिनउपमेयवाचिनश्च लिङ्गं स्त्रीपुन्नपुंसकंय
स्यसा तथोक्ता । एवंभिन्नवचनोपममित्यत्रापि व्याख्येयम् । अवि
गाह्योसीति । अविगाह्यतामात्रमत्रसादृश्यंविवक्षितमेतदुपयुक्तमे
व विशेषणमुपमानोपमेययोरुपादानयोग्यमित्यकस्मादेव विकृतव
चनभेदनिबन्धनःप्रयोजनमाकाङ्क्षति । तथातदनुसंधानप्रवणस्यप्रकृ
तप्रतीतिराच्छाद्यतइतिदूषणसिद्धिः । एतेन दूषणता व्याख्याता ।
विभागवाक्येसहितावस्थयोरुद्देशादिहच मिलितयोरुदाहरणात्त-
थाभावोदोषत्वमिति भ्रान्तिंनिरस्यति । तदिदमिति । एकमु
दाहरणंनत्वेकः संभिन्नउपाधिः प्रत्येकमेवत्वस्तिसमर्थत्वादित्य-
र्थः । एतदेवानुसंधायविभागवाक्येद्वैपदम् ॥ ९ ॥ तत्किमुदाहर
णस्यसंकीर्णत्वमेवनेत्याह । अथभिन्नलिङ्गस्यैवेति । द्वयमपिनिगद

सितः शशी । शशीव धवला हंसी हंसीव धवला दिशः ॥ ११ ॥ न्यूनोपमामिहन्यूनमुपमानविशेषणैः। यथा । संहअचक्कवाअजुआविअसिअकमलामुणालसंछण्णा । वावीबहुव्वरोअणविलित्तथणआसुहावेइ । अत्र नेत्रबाहूपमापदानांवधूविशेषणत्वे नानुक्तत्वादिदंन्यूनोपमम् ॥ १२ ॥ अधिकंयत्पुनस्तैः स्यात्तदाहुरधिकोपमम् । यथा । अहिणवमणहरविरइअवलअविहूसाविहाइणवबहुआ । कुन्दलएव्वसमुप्फुल्लगुच्छपरिणितभमरगणा । इदम्भ्रमरगणस्यो

व्याख्यातम् ॥ ११ ॥ जातिप्रमाणधर्मतोन्यूनता उपमानस्यन्यूनोपमत्वम् । तत्रजातिप्रमाणन्यूनतार्थदोषः । धर्मन्यूनतातुधर्माभिधायकपदन्यूनतालक्षणाशब्ददोषएव । एतेनाधिकत्वं व्याख्यातमित्याशयवानाह । न्यूनोपममिहेति । इहशब्दोयेपुमध्येपूपमानस्यस्तोकविशेषणतयोपमेयन्यूनेत्युक्तन्तथाधिकोपममितिवक्ष्यति । संहतचक्रवाकयुगाविकसितकमला मृणालसंछन्ना । वापीवधूरिव रोचनाविलिप्तस्तनी सुखयति । अत्र चक्रवाकयुगोपमानमपदमेवपरमुपात्तम् । रोचनाविलिप्तस्तनीत्यनेन कमलस्योपमानंनेत्रपदंमृणालस्योपमानं बाहुपदंचनोपात्तं तदपिच सविशेषणमुपादेयं भवति । येनविकासादिसमभिव्याहारसामञ्जस्यमपि स्यादिति । पदानामितिबहुवचनाभिप्रायः । अतएव धर्माणामेकनिर्देशेऽन्यसंवित्साहचर्यादितिनावतरतिव्यभिचारात् । किमर्थं तस्योपमानमनुसन्धेयमित्यपिनवाच्यम् । साऽत्रापिनानर्थिका कविनोपादेयेति साहित्यविदाम्नायव्यवस्थितावुपमेयविशेषणस्योपमानविशेषणतयाप्रयोजनचिन्तायांपूर्ववदेव प्रतीतिप्रत्यूहस्य सुलभत्वादनुक्तत्वादितिशब्दप्रधानकतामाचष्टे । एवमुत्तरत्र ॥ १२ ॥ अभिनवमनोहरविरचितवलयविभूषा विभाति नववधूः । कुन्दलतेवस

पमानविशेषणस्याधिक्यादधिकोपमानम् ॥ १३ ॥
भग्नच्छन्दइति प्राहुर्यच्छन्दोभङ्गवद्वचः । यथा ।
यस्मिन्पञ्चपञ्चजनाआकाशश्चप्रतिष्ठितः । तमेव
धीरोविज्ञाय प्रज्ञाङ्कुर्वीत ब्राह्मणः । अत्र पञ्च
मवर्णस्यलघोः स्थाने गुरोः करणाच्छन्दोभङ्गः॥१४॥
अस्थानेविरतिर्यस्य तत्तु भग्नयतीष्यते । यथा ।
ब्रह्मेन्द्रोपेन्द्रादिगीर्वाणवन्द्योभक्तानां भूयाच्छ्रिये
चन्द्रचूडः । स्त्रीणां सङ्गीतं समाकर्णयन्केतूद स्ता
म्भोदंसदध्यास्तईशः । चतुर्थस्थाने यतौ कर्त्तव्या

---

मुत्फुल्लगुच्छपरिनिर्यद्भ्रमरगणा ॥ यद्यप्येकस्य विशेषणाधिक्ये वि
शेषणन्यूनत्वे वाऽन्यविशेषणस्य न्यूनाधिकभावोनियतस्तथाप्यु
पमानगतमेवद्वयं निरूप्यते । तत्रहि दृष्टमुपमेये प्रतिबिम्बक
ल्पमुपस्थाप्यतेतेनान्तोनोपमेयेतयोर्निरूपणमिति ॥ १३ ॥ भग्न
च्छन्दइति । वाचां श्रव्योवच्छेदश्छन्दस्तस्यैवोपमानयुक्तादयस्तेनै
वगुरुलघुनिवेशक्रमेण श्रव्यताभवतीत्याशयात् । तस्य विपर्यास
श्छन्दोभङ्गोव्यक्तएववैरस्यहेतुः । आहुरिति । यच्चोदाहरणत्वावच्छे
दविपर्यासत्वेचभग्नवृत्तव्यवहारादिदमेव निमित्तमस्यावधार्यतइ-
त्यर्थः । पञ्चेति । पञ्चजनाःपुरुषास्ते देवपितृगन्धर्वराक्षसासुर
भेदात्पञ्च । अथवा निषादपञ्चमब्राह्मणादिचतुष्टयभेदात् । त
मेवात्मानंब्रह्मापरपर्यायंविज्ञाय श्रवणमनननिदिध्यासनैरुपास्यप्रज्ञां
प्रकृष्टंज्ञानं साक्षात्कुर्वीत । अत्रपञ्चमवर्ण इति । "पञ्चमंलघुस
र्वत्र सप्तमं द्विचतुर्थयोः । षष्ठं गुरुं विजानीयाच्छेषास्त्वनियतामता,,
इत्यनुष्टुप्छन्दसोलक्षणम् ॥ १४ ॥ अस्थानइति । श्रव्यः पठितिवि
च्छेदोयतिर्विच्छिद्यविच्छिद्यपठ्यमानाभारतीस्वदते । श्रव्यतोपलक्ष
णार्थञ्च द्विमुनिवेदादिसञ्ज्ञया तत्रतत्र विविच्यते । तथाचास्ति
कश्चिद्विशेषोयेनक्रियमाणापिविरतिर्नसौभाग्यपदं पुष्यतिसचविशेषो
नाम भागभेदोऽस्वरसन्धिकृतश्चप्रायेणएतेषां स्वभावविशेषादेवस्या

यां तदन्यत्रकरणाद्भग्नयतीदम् ॥ १५ ॥ क्रियापद विहीनं यदशरीरन्तदुच्यते। यथा। सेलसुआरुद्धद्धमु द्धाणाबद्धमुद्धसलिलेहम्। सीसपरिठ्ठिअगङ्गसंज्झा पणअप्पमहणाहम्। क्रियापदाभावादशरीरमिदम् ॥१६॥ गुणानान्दृश्यते यत्र श्लेषादीनांविपर्ययः। अरीतिमदिति प्राहुस्तत् त्रिधैव प्रचक्षते। शब्दार्थो भययोगस्य प्राधान्यात्प्रथमं त्रिधा । भूत्वाश्लेषा दियोगेन पुनस्त्रेधोपजायते। अत्र यः श्लेषसमता सौकुमार्यविपर्ययः । शब्दप्रधानमाहुस्तमरीतिम तिदूषणम्। तत्र। विपर्ययेण श्लेषस्य सन्दर्भः शि

---

नेक्रियमाणापि विरतिरन्यत्रैवपरं प्रकाशते। न तत्र कथञ्चन सौभाग्य मुन्मीलयति । स्थानपरिभाषयाव्यावर्तितत्वात् । तदिदमुक्तम- स्थानइति। वामनोप्याह ॥ विरसविरामंकष्टमिति । सदोगृहरू पासभाकेतूदस्ताम्भोदंध्वजदण्डोत्क्षिप्तजलधरमित्युच्चैस्त्वम्। वेदच्छे दाशालिनीसोथतौगौइत्युपलक्षणंअव्यविरतेः । अत्रद्वितीयपादेधातु भागभेदःशेषपादत्रये नामभागभेदाः। नचात्र स्वरसंधानमस्तीति॥१५॥ क्रियापदेति। क्रियेत्युपलक्षणम्। प्रधानपदहीनमितिबोद्धव्यम्। प्रधानाविमर्शेहिवाक्यशरीरमेवननिष्पन्नंस्यात्। शैलेति। वाक्येक्रिया प्रधानमितिदर्शनेतत्पदानुपादानादत्रप्रधानाविमर्शः शैलसुतयाऽव रुद्धमर्द्धंयस्य मुद्धाणोमूर्द्धातत्रावद्धानुग्नाशशिलेखायेनशीर्षप्रतिष्ठाग ङ्गायेनयश्चसन्ध्यायैप्रणतस्तंप्रमथनाथं प्रमथागणास्तेषांनाथम्। कर्म विभक्तेःक्रियामन्तरेणाचरितार्थत्वात्क्रियायानमस्काररूपायाअभिचा रेणार्थापत्तिविषयतानुपपत्तेरिति। अस्यांच गाथायां स्त्रीमयव्यापा ररूपताभगवतः प्रतीयतेइतिरहस्यमाराध्यामन्यन्ते॥१६॥ गुणसङ्ग द्वारकदोषनिरूपणावसरोयमित्याशयवानाह। गुणानामिति। समा ध्यादिभङ्गोपितर्हिदोषस्स्यादित्यतआह। श्लेषादीनामिति। श्लेषप्र सादसमतासौकुमार्यार्थव्यक्तिमाधुर्यकान्त्युदारतौजसाम् । एतद्यो

थिलोभवेत्। यथा। आलीयम्मालतीमाला लोला लिकलिला मनः। विमूलयति मेमूलान्नमालमलिने वने। अत्र भिन्नानामपिपदानामेकपदता प्रतिभासहेतुरनतिकोमलोबन्धविशेषः श्लेषः। तद्विप

---

गाद्वाक्यंवक्ररूपतामासाद्य काव्यव्यपदेशं लभतेतेषांगुणानां भङ्गः काव्याभासत्वपर्यवसायीदोषः। तेच श्लेषादयो नवैव। तेषामन्यतमाभावे काव्यस्याभासत्वात्। तेषांहिविपर्ययेरीतिरवश्यंभज्यते। तस्यागुणवत्पदरचनारूपत्वादतएव पानकरसन्यायेन सम्भूय चित्रास्वादपर्यवसानक्षमंगुणसंवलनमेवरीतिरितिलोचनकारः॥ रीतिःसाररूपतया काव्यस्यात्मेत्युच्यते। यथाचित्रस्यलेखाउत्तुङ्गप्रत्यङ्गलावण्योन्मीलनक्षमा तथा रीतिरितिद्वितीयेविस्तरः। तत्त्रिधेति। तदितिकाकाक्षिगोलकवत्पूर्वापराभ्यामभिसंबध्यते। यत्रगुणानांविपर्ययस्तद्रीतिमत्। तत्त्रिधेत्यर्थः। त्रिधाभूतंभूयस्त्रिधाप्रपञ्चते तेनन्वभेदास्तदेतद्विवृणोति। शब्दार्थेति। योगशब्दः प्रत्येकमन्वीयते। शब्दप्रधानत्वमर्थानपेक्षशब्दनिरूप्यत्वम्। वाक्यगुणस्यश्लेषादित्रयस्य। एवशब्दानपेक्षार्थनिरूपणीयत्वंतादृशस्यकान्त्यादित्रयस्य। एतेनौजःप्रभृतित्रिकस्यउभयप्रधानताव्याख्याता। तेनायमर्थः शब्दार्थोभयप्रधानतया सामान्यतस्त्रिधाभूत्वाश्लेषादित्रिकविवक्षयाप्रत्येकंत्रिधाभवतीति। तेषुशब्दस्यप्राथम्यात्तत्प्रधानकगुणभङ्गः प्रथमं विवेक्तव्य इत्याह। तत्रेति। अरीतिमतीति। निर्द्धारणेसप्तमी। जात्यभिप्रायमेकवचनम्। विपर्ययेणेति। श्लेषःसंधानंघटनमित्यनर्थान्तरम्॥ नचैतावतैवगुणत्वंवाक्यमात्रसाधारणत्वात्। तेनबहूनामपि पदानामेकताप्रतिभासहेतुत्वमनतिकोमलत्वंच विशेषणमिच्छन्ति। विश्लेषमर्थगुणकाण्डेवक्ष्यामः। एवंभूतविशेषणविपर्यासे शिथिलो बन्धोतिको[illegible]मलोविकीर्णप्रायश्चेत्यर्थः। आलीयमित्यादौ दन्त्यवर्णप्रायतयाऽतिकोमलत्वं विकीर्णताचव्यक्तैव। नास्य निरूपणे क्वचिदप्यर्थापे[illegible]स्फुटयन्नाह। अत्र

र्ययेण शब्दप्रधानोऽयं श्लेषविपर्ययः ॥ १७ ॥ भवेत्स एव विषमः समताया विपर्ययात् । यथा । कोकिलालापवाचालो मामेति मलयानिलः । उच्छलच्छीकराच्छाच्छनिर्झराम्भःकणोक्षितः । अत्र पूर्वार्द्धस्य मृदुबन्धत्वादुत्तरार्धस्य च गाढबन्धत्वात्समबन्धेषु विषममितिविषमोनामशब्दप्रधानः समताविपर्ययो दोषः ॥ १८ ॥ सौकुमार्यविपर्यासात्कठोरउपजायते । यथा । असितर्तितुगाद्रिभित्स्वःक्षिताम्पतिरद्विदृक् । अमिद्भिःशुभ्रदृग्दृष्टैर्द्विषोजेघ्नीयिषीष्ट वः । अत्राति

---

भिन्नानामिति । श्लेषस्यशब्दप्रधानतयातद्विपर्ययोऽपि शब्दप्रधानो भवतीत्याह । शब्दप्रधानोऽयमिति । अन्यतरविशेषणहानावपि श्लेषाभावो भवत्येव । तेन पूर्वार्द्धस्य लेशत ऐक्यप्रतिभानसंभवेऽपि अतिकोमलतया दुष्टत्वम् ॥ १७ ॥ भवेदिति । सएवसंदर्भो मृदुमध्यकठोरवर्णनिर्व्यूढास्तिस्रोबन्धजातयस्तन्नैकरूपे वाक्यार्थे एकैवजातिरुपादेयेतितद्विपर्यासोवैराग्यहेतुरेव । उच्छलन्तः सीकरायस्मात्तथाऽच्छाच्छमत्यच्छंद्वयमपिनिर्झराम्भोविशेषणम् । मलयमारुतस्योद्दीपनविभावभूतस्यवर्णमात्रवैरूप्यमस्येत्याशयवानाह । एतत्पूर्वार्द्धस्येति । शब्दप्रधानतामस्यविवृणोति । समबन्धेष्विति ॥ १८ ॥ सौकुमार्यविपर्यासादिति । अकठोराक्षरप्रायताबन्धस्यसुकुमारत्वन्तद्विपर्ययेकठोरता श्रुतिकटुत्वंभवति । असिततीति । ऋगताविति धात्वनुसाराद्दृतिर्वर्त्म । असिताकृष्णाऋतिर्वर्त्मयस्यकृष्णवर्त्मावह्निस्तस्यतुगपत्यम् । अद्रिभिदिति । क्रौञ्चदारणत्वात् । स्वर्गंक्षियन्तिनिवसन्तियेदेवास्तेषांपतिस्सेनानीत्वात् । अद्विदृग्द्वादशलोचनत्वात् । सएवंभूतो भगवान् कुमारोऽमिद्भिरस्निग्धैरूक्षैः शुभ्रदृग्दृष्टैर्धवलाक्षिविलोकितैस्सक्रोधनिभालनेतारकाभागस्योर्द्ध्वतयानयनात्तथाभावोजातिर्वोयुष्माकंद्विषःशत्रून्जेघ्नीयिषीष्ट अत्यर्थम्पुनःपुनर्वा वध्यादित्यर्थः । हन्तेर्यङिघ्नीभावेआशीर्लिङ्रूपम् । स्वतन्त्रस्य

कठोरत्वादसौकुमार्यं सुप्रतीतमेव॥१९॥ या तु कान्ति
प्रसादार्थ व्यक्तीनामन्यथास्थितिः। अर्थप्रधानः प्रो
क्तस्स वाक्ये गुणविपर्ययः। अप्रसन्नम्भवेद्वाक्यं प्र
सादस्य विपर्ययात्। यथा। अनङ्गकमलञ्चक्रे मय
माना मरालिका। यस्यानत्यर्जुनाब्जजन्मसदृक्षाङ्कोव
लक्षगुः। अत्र शब्दानामनतिप्रसिद्धत्वादनतिप्रसन्न
त्वमिति सोयमर्थप्रधानः प्रसादविपर्ययोदोषः॥२०॥

---

पदस्य श्रुतिकटुता पद दोषः। इह तु पदानामतथाभावेऽर्तिद्रिच्छित्या
दीनां वर्णानां परस्परसंनिधाने घटनैव कठोरेत्याह। अत्रातिकठोरत्वा
दिति॥१९॥ या तु कान्तीति॥ कान्तिप्रसादार्थव्यक्तीनामिति प्रमादा
त्पाठः। विवरणक्रमानुरोधेन प्रसादार्थव्यक्तिकान्तीनामिति पठनी
यम्। अप्रसन्नमिति। श्रुतमात्रस्यैव यस्यार्थश्चित्ते प्रतिफलति स
प्रसन्नः शब्दः। तथा चाऽर्थस्य प्राकट्यं झटिति प्रतिबन्धयोग्यत्वम्।
पश्चादिव गतिर्वाचः पुरस्तादिव वस्तुन इति सहृदयव्यवहारार्थविषय
त्वं प्रसादोऽर्थनिरूपणीय इति भवत्यर्थप्रधानः। न चासौ पदमात्र
मुल्लिखतीति वाक्यांशो भवति। तेन तद्विपर्ययोपि वाक्यगामी। अर्थ
स्य यन्न झटिति प्रतीतिरुपजायते। तत्र तत्र महाराज शब्द एवाप
राध्यतीति वाक्यदोषेषु परिगणनमन्यच्छतया च शब्दानां प्रतीतिः
स्खलन्ती दूषणतामस्य स्थापयति। अनङ्गकमिति। न विद्यतेऽङ्गं य
स्येत्यनङ्गकमाकाशम्मयमाना गच्छन्ती। अयमयतिदण्डकेषु पठिता
न्मयधातोः शानच्। मरालिका हंसी। अलंचक्रे शोभितवती। ननु
हंस्या गमनपथालङ्करणकालोरात्रिस्तस्यां चतुर्थाकिरण एव तदलङ्का
रकारी किमनया वराक्येत्यत आह। यस्येति। यदत्यर्जुनं न भवति
अब्जजन्म तोयभवं नीलोत्पलमितियावत्। तत्सदृशलाञ्छनोवलक्ष
गुर्वलक्षोगौः किरणो यस्य शुभ्रांशुश्चन्द्रस्तेनासौ सकलङ्कतया न तथा
लङ्कारायपर्ययमित्यर्थः। पश्येति वाक्यार्थकर्मकमेके पठन्ति। तन्नयुक्त
म्। पक्ष इति परोक्षता स्वरसभङ्गापत्तेः। उक्तयुक्त्या वाक्यदोषत्वमा

वाक्यम्भवति नेयार्थमर्थव्यक्तेर्विपर्ययात्। यथा । म
ही महावराहेणलोहितादुद्धृतोदधेः। इतीयत्येव नि
र्दिष्टे नेयालौहित्यहेतवः। तदिदन्निगदेनैवव्याख्या
तमित्यर्थप्रधानो ऽयमर्थव्यक्तिविपर्ययः॥२१॥कान्ते
र्विपर्ययाद्वाक्यङ्ग्राम्यमित्यपदिश्यते। यथा। विरहे
तेविषीदन्तन्निषीदन्तन्तवान्तिके।कन्येकामयमान
म्मान्त्वन्नकामयसेकथम्।इदमुक्तेर्ग्राम्यन्तयाकान्ति
हीनमित्यर्थप्रधानोयङ्कान्तिविपर्ययोदोषः॥२२॥

ह। अत्रशब्दानामिति। नचस्यमानादीनांश्लिष्टता। तल्लक्षणविर
हात्। नापिगूढार्थत्वंततएव॥२०॥ वाक्यमिति। संपूर्णं वाक्य
त्वमर्थव्यक्तिंकरोतीति वक्ष्यति। सर्वस्य वाक्यस्य विशेषणविशेष्य
भावबोधकत्वनियमे यावतां विशेषणविशेष्यभावोभिमतस्तावत्प्र
तिपादकपदोपादानंसंपूर्णता। साच विशेषणविशेष्यभावानुरूपार्थ
निरूपणीयतयार्थप्रधानेतितद्विपर्ययोपितत्प्रधानइतिपूर्ववन्नेयम्। अ
तएवविवक्षितवाक्यान्यथानुपपत्यानेयः कल्पनीयोर्थोयस्येति नेया
र्थमित्यर्थो ऽपि घटते। महीति। पूर्वार्द्धं एवकाव्यंनिर्वर्तितम्।
नचतावता विवक्षितार्थलाभः। तथाहि। समुद्रमध्यात्पृथिव्यामु
द्धियमाणायां महासुरविमर्द्दे तेषां दंष्ट्रयापाटनेन रुधिरशवलतया
लोहितत्वमुदधेरितिवाक्यार्थो ऽभिप्रेतः। लक्षणाया अभावान्नेया
र्थत्वंपददूषणमत्रसम्भावनमारोहति। दूषणताबीजंचात्रस्फुटमे
व। अशरीरंतुक्रियापदशून्यमित्युक्तंतदेतत्सर्वमभिप्रेत्याह। तदि
दंनिगदेनैवेति॥२१॥ कान्तेरिति। रसस्य दीप्तिः कान्तिरग्रेविवरिष्य
ते तेनार्थप्रधानताव्यक्ता। तस्यामस्तिवाक्यवाच्ययोर्व्यापारः। वा
क्यंविदग्धोक्तिकंठ्यामियते। अतथाभूतस्वरसाव्यञ्जकत्वनियमात्।
तथाहि।कन्येति संबोधनेन रसविरोधिनीविलसिताक्षमताप्रतीयते।
कामयमानमित्यनेनानावरणमुच्यमानोर्थः कथंनवैरस्यमावहतीत्या
दिकमुन्नेयम्। तदिदमाह। इदमुक्तेर्ग्राम्यन्तयेति॥२२॥

ओजोमाधुर्यमौदार्यन्तत्प्रकर्षाय जायते । यस्मिंस्त
माहुरुभयप्रधानंतद्विपर्ययात् । वाक्येयत्खण्डयन्
रीतिम्भवत्योजोविपर्ययः । असमस्तमिति प्राहु
र्दोषन्तमिह तद्विदः ॥ यथा । स्मरःखरःखलःका
न्तःकायःकोपश्चनःकृशः । च्युतोमानोधिकोरागो
मोहोजातोसवोगताः । अत्रसत्यसमस्तपदाभिधा
ने सत्यपिचार्थसौकुमार्ये श्लेषादिगुणसामग्र्यभा
वान्न वैदर्भीरीतिः । नापि यथोक्तलक्षणाभावा
द्गौडी यादयइति खण्डितरीतिरयादयमोजोवि

---

वाक्येयमिति । ननु समासभूयस्त्वमोजोभिधास्यते तत्कथमस्याभावो
र्थप्रधानोपि कथन्नदोष इत्यत आह । खण्डयन्रीतिमिति । रीति
भङ्गपर्यवसायी तस्याभावोदूषणन्तु तन्मात्रमित्यर्थः । एतदुक्तम्भ
वति । शब्दार्थयोरुचिता प्रौढिरोजः । यदाह“रौद्रादयो रसा दी
प्त्या लक्ष्यन्ते काव्यवर्त्तिनः । तद्व्यक्तिहेतुशब्दार्थावाश्रित्यौजोव्यव
स्थितमिति । तत्रार्थव्यक्तिमर्थगुणेषुविवेचयिष्यामः । शब्दस्यतु पा
रुष्यशैथिल्यव्यतिकरलक्षणा साच क्वचित्समासदीर्घतया व्यज्यते ।
यथा । चञ्चद्भुजभ्रमितचण्डगदाभिघातसञ्चूर्णितोरुयुगलस्य सुयो
धनस्येति । क्वचिदन्यथापि प्रकाशते । यथा । योयःशस्त्रम्बिभर्त्तीत्यादि ।
तदेवन्तत्त्वव्यवस्थितौ पूर्वाचार्यव्यवस्थित्या गुणकाण्डेसमासभूयस्त्व
मोजोलक्षणंव्य भिचरितगुणमध्ये समासरचनाशैथिल्यकृतलयागुण
इत्यभिप्रायाद्विशेषन्तत्रवक्ष्यामः । तदिदमिति । रीतिंखण्डयतीति । नहि
प्रौढेरभावे गुणसम्बन्धात्मिका रीतिर्नामेति विपर्ययपदेन साधारण
नपारुष्यशैथिल्येदर्शयति । अत्रेति । एतदेवाचार्यमतेन द्रढयति ।
यदाहेति । यद्यप्यत्रानुप्रासोस्ति तथापि रीतिमन्तरेण मृतशरीरइ
व काव्येनालङ्करणतामध्यास्ते । ततश्च न प्रकृतः कोपि चमत्कारा
विर्भाव इति नास्त्यैव काव्यताऽप्रयोजयतीत्यर्थः । दाक्षिणात्यावैद
र्भीमाहुः । पारावरीणास्तेहि विशिष्टरीतिस्वरूपमवधारयितुं क्षमाः

पर्य्ययः । शब्दार्थप्रधानोगुणाविपर्य्ययदोषोभवति ।
यदाह । दुस्थादिरन्ध्रपारुष्यं शैथिल्यञ्च निरस्यन्ति । अतोनैनमनुप्रासन्दाक्षिणात्याः प्रयुञ्जते ॥ २३ ॥
माधुर्यव्यत्ययोयस्तु जायते रीतिखण्डनात् । तदनिर्व्यूढमित्युक्तङ्काव्यसर्वस्ववेदिभिः ॥ यथा ॥
नखिनाञ्च नदीनां च शृङ्गिणां शस्त्रपाणिनाम् । विश्वासोनैव कर्तव्यः स्त्रीषु राजकुलेषु च । अत्र नखिनांच नदीनाञ्चेति षष्ठ्यन्ताच्चकारेणरीतेरुप

---

ति ॥२३॥ माधुर्यव्यत्ययइति । शब्दार्थयोर्विगलद्रुतिविधायित्वम्माधुर्यम् । निर्भुलितत्वमिवार्द्रतापदाभिधेया चेतसोवस्था तत्कारितामाधुर्यम् । साच शृङ्गारकरुणान्यतरप्रकाशानुगुणव्यापारावेशेन भवति । यदाह । शृङ्गार एव मधुरः परः प्रह्लादनोरसः । तन्मयंकाव्यमाश्रित्यमाधुर्यंप्रतितिष्ठति । शृङ्गारे विप्रलम्भाख्ये करुणे च प्रकर्षवत् । माधुर्यमार्द्रतां याति यतस्तत्राधिकम्मन इति । तत्र शब्दस्य माधुर्यंपृथक्पदतया व्यज्यते । दीर्घसमासस्य यत्नान्तरसाध्यतया सुकुमाररसप्रकाशनबहिर्भावात् । ततश्च शब्ददूषणप्रस्तावे पृथक्पदताया व्यत्ययो यद्युच्यते गौडीयादुष्टा स्यादिति रीतिखण्डनपर्यवसायितयाऽभिधानम् । भवतिहि कदाचित्कवेः शक्तिवशात्सोऽङ्केपि समासे रसव्यक्तिः । यथा । यातेद्वारवतीन्तदा मधुरिपौ तद्दत्तसङ्क्रान्ताङ्कालिन्दीतटरूढवञ्जुललतामालिङ्ग्यसोत्कण्ठया । तद्गीतङ्गुरुबाष्पगद्गदगलत्तारस्वरं राधया येनान्तर्जलवारिभिर्जलचरैरप्युत्कमुत्कूजितम् । एवञ्चास्खलितप्रतीतिविषयस्यैव सन्दर्भस्य रसत्वम्पदघटनारूपस्य च सन्दर्भस्यानिर्वाहादेव प्रतीतिः स्खलतीत्याह । तदनिर्व्यूढमिति । काव्यसर्वस्वरसप्रकाशतत्त्ववेदिभिस्तदुपायमूलघटनास्वरूपवेदिभिः । एतदेवव्याख्यानेन स्फुटयति । अत्रेति । नखिनान्नदीनाञ्चेति चकारश्चोत्तरत्र तत्परित्यागेऽनुपपत्तिर्नास्ति तदेवप्रतितेः स्खलनमेवमुत्तरत्रापि । अस्तु तर्हिवक्तव्यस

क्रमे शृङ्गिणां शङ्खपाणिनामिति चकारानिर्वाहात्त्वी
घुराजकुलेषु चेति षष्ठीपरित्यागादमधुरार्थत्वान्मा
धुर्यविपर्ययनामायं शब्दार्थप्रधानो गुणविपर्ययो दो
षः । यदाहुः । मधुरं रसवद्वाचि वस्तुन्यपि रस
स्थितिः । येन माद्यन्ति धीमन्तो मधुनेव मधुव्र
ताः । यया कयाचिच्छ्रुत्या यत्समानमनुभूयते । तद्रू
पादिपदासत्तिः सानुप्रासा रसावहा ॥ २४ ॥ य
स्तु रीतेरनिर्वाहादौदार्यस्य विपर्ययः । वाक्यन्तद
नलङ्कारमलङ्कारविदो विदुः । यथा । दीर्घपुच्छश्चतु
ष्पादः ककुद्मान् लम्बकम्बलः । गोरपत्यं बलीवर्द
स्तृणमत्ति मुखेन सः । तदिदमपुष्टार्थत्वादनुत्कृष्ट

---

त्वप्यकादिङ्माधुर्यसंपत्तौ काव्यताप्रतिलम्भ इत्यत आह । असमधुरा
र्थत्वाच्चेति । स्पष्टमेतच्छब्दार्थप्रधानतां माधुर्यस्य पूर्वाचार्यसंम
त्या द्रढयति । यदाहेति । माद्यन्ति आर्द्रचित्ता भवन्ति । मधुरसाद्
वयादयं व्यवहार इत्यत आह । मधुनेति । इदञ्च घटनायां माधुर्यं
परमं रहस्यमित्याह । यय कयाचिदिति । ओष्ठ्यकण्ठ्यादिकं वा तद्रू
पसमानश्रुतिकमादौ यस्य तथाभूतस्य पदस्य प्रत्यासत्तिस्तद्रूपादीति
पाठे व्यक्त एवार्थः । अतएव सानुप्रासा ततश्च रसावहेत्यर्थः । यदाह
कङ्कणादिविमुक्तापि कान्ता किमपि शोभते । कुङ्कुमेनाङ्गरागश्चे
त्सर्वाङ्गीणः प्रवर्तत इति । विकटतामात्रभावस्यादोषत्वाद्विशेषयन्ना
ह ॥२४॥ यस्तु रीतेरिति । काव्यरूपताप्रयोजकं शब्दार्थयोर्वक्रतावदार
तान्नहि वक्रतामन्तरेण काव्यपदवीप्राप्तिस्तदाह । यत्तु वक्रं वचः
शास्त्रे लोके च वच एव तत् । वक्रं यदनुरागादौ तत्र काव्यमिति श्रुति
रिति । तदेतदलङ्कारसामान्यमस्याभावे निरलङ्कारता भवतीत्या
ह । अनलङ्कारमिति । दीर्घपुच्छ इत्यादौ प्रकृतोदाहरणे द्वयोरव
क्रत्वं स्फुटयति । यथेति । विविच्य गुणप्रस्तावे कथयिष्यामः । अ
र्थपोषमाह । उत्कर्षवानिति । उभयप्रधानतामुपसंहरति । काव्ये

विशेषणमनुदारं निरलङ्कारमाचक्षते। सोयमौदार्यवि
पर्ययोनाम शब्दार्थप्रधानोगुणविपर्ययोदोषः। यदा
ह। श्लाघ्यैर्विशेषणैर्युक्तमुदारंवाक्यमिष्यते। यथा
लीलाम्बुजक्रीडासरोहेमाङ्गदादयः। उत्कर्षवान्गु
णःकश्चिदुक्तेर्यस्मिन्प्रतीयते। तदुदाराह्वयं तेन सना
था काव्यपद्धतिः॥२५॥ अपार्थं व्यर्थमेकार्थं ससंशय
मपक्रमम्। खिन्नञ्चैवातिमात्रञ्च परुषं विरसन्त
था। हीनोपमम्भवेच्चान्यदधिकोपममेव च। अ
सदृक्षोपमञ्चान्यदप्रसिद्धोपमन्तथा। निरलङ्कारम
श्लीलं विरुद्धमिति षोडश। उक्तावाक्यार्थजा दो
षास्तेषां वक्ष्यामि लक्षणम्। समुदायार्थशून्यंयत्तद

---

ति॥२५॥ तदेवंवाक्यदोषाँल्लक्षयित्वा क्रमप्राप्ता वाक्यार्थदोषा
लक्षणीयाइति तान्विभजते। अपार्थमिति। उद्देशे दोषाणां व्यासे
नोक्तिः। पूर्वोक्तप्रयोजनानुरोधेनेति। समुदायिपदानांविशेषणवि
शेष्यभावःसमुदायार्थः। तेनशून्यं पदजातमपार्थकंपदार्थानामसंसर्गे
चपदानामसंसर्गोभिधीयते। तेनार्थदोषत्वम्। जरद्गवइति। कम्बलपा
दुकाभ्यामिति लक्षणे तृतीया। नच ताभ्यां वृद्धोक्षस्यसम्बन्धः। कथ
ञ्च तस्य मंगलानाम्बलादीनाम्। मद्रकाणामितिपाठे गीतकविशे
षाणां वा सङ्गतिःकथं वा पुत्रकामायास्तत्प्रश्नसंसर्गः कथञ्च राज
न्निति सम्बोधनंघटते पुत्रकामायाश्च रुमालवणार्थप्रश्नः। रुमाल
वणाकरः। तथाचप्रयोगः। रुमाघासकान्तादिलवणात्मवदिति॥१॥
व्यर्थमिति। विगतो वाविगतोवाऽर्थोभिधेयम्प्रयोजनं यस्य तद्व्यर्थं
स्वतन्त्रञ्च दूषणमिति वैशेषिके वक्तव्यम्।तथाहि। आहिषातामिति।
अंहेर्गतिकर्मणोलुङिरूपम्। सच प्राचुर्यप्रयोगः प्राप्त्यवच्छिन्नं व्यापार
प्रचयमभिधत्ते।तथाचार्थ सिद्धायाम्प्राप्तौ शब्देनोपादानमनुचितं लो
कानुसारेण काव्ये दृश्विप्रानुपएव स्थाने प्रयुज्यते। यथा। मया तावद्दृ
ष्टो न खलु कलिकन्दर्पनृपतेर्गुणैस्तुल्यः कोपि क्वचिदपि किमश्राव्वि

पार्थं वचः स्मृतम् । यथा । जरद्गवः कम्बलपादु
काभ्यां द्वारि स्थितो गायति मङ्गलानि । तं ब्राह्म
णी पृच्छति पुत्रकामा राजन्नुमायां लशुनस्य कोऽर्घः ।
अत्र समुदायार्थः कोऽपि नास्तीत्यपार्थमिदम् ॥ १ ॥
व्यर्थमाहुर्गतार्थं यद्यच्च स्यान्निष्प्रयोजकम् ॥ यथा ।
आह्विषातां रघुव्याघ्रौ शरभङ्गाश्रमं स च । स्वाम
हौषीत्तनुं वह्नौ दृष्ट्वा तौ रामलक्ष्मणौ । अत्राह्विषा
तान्दृष्ट्वेत्येताभ्यामेवाप्ताविति रघुव्याघ्रावित्यनेनै

---

भवता । इति प्रश्नं श्रुत्वा क्वणितमिव कर्णान्तिकमगान्मृगाक्षीणाञ्च
क्षुब्धटुलभवता चान्ततरलम् । यथावानैवादर्शि नचाश्रावि । फलञ्च
लयजूरुहः । चक्षुश्चप्राप्तमेव गृह्णातीत्यर्थलब्धायामप्राप्तौ कथं शब्देनो
पादानम् । तदिदमुक्तमेताभ्यामेवेति । रघुव्याघ्रादिप्रकरणादिकमा
साद्य विशेषपर्यवसायि यौगिकत्वान्नतु विशेषे एव शक्तम् । "उपगम्य
रघुव्याघ्रः कच्छनूभागचारिणीम् । लुलुभे मुनिधेनुन्तां वेलामिव म
हार्णव „इति महर्षिप्रयोगात् । एतेन पुष्पवदादिपदवद्वचनभेदो
व्यपास्तः । एवञ्च प्रकरणादिना रघुव्याघ्रपदं रामलक्ष्मणपरमेवे
ति पूर्वार्द्धे तयोरेव प्रक्रान्तत्वादुत्तरार्द्धे सर्वनाम्ना परामर्शो युज्यते
नतु स्वशब्देन । तनुप्रभृतिशब्दानां सम्बन्धिशब्दत्वात्समभिव्याहृतश
ब्दार्थसंबन्धकत्वं लोके व्युत्पन्नम् । यथा "करौ धुनाना नवपल्ल
वाकृतीवृथा कृथा मानिनि मा परिश्रममिति । शब्दान्तरसन्निधाने
तु क्वचित्तद्रूप्यावगमो भवति । यथा । उमास्तनोद्भेदमनु प्रवृद्धो मनो
रथो यः प्रथमम्बभूव । तमेव मेना दुहितुः कथञ्चिद्विवाहदीक्षातिलक
ञ्चकार । तदिहान्यस्यानुपादानाच्छरभङ्गसम्बन्धिन्येव तनुः प्रतीय
ते जुहोतिश्च वह्न्याधारकमेव हविर्द्रव्यत्यागमभिधत्ते तेन वह्नावित्य
पि न वाच्यम् । गतार्थशब्दं व्याचष्टे । गम्यत इति । अस्मिन्नेवोदाह
रणे निष्प्रयोजनत्वमाह । नचेति । शरभङ्गाश्रमगमनन्तनुहोमश्चा
त्र वाक्यार्थद्वयन्नप्रयोजनवत् । अस्य वाक्यस्य चरितार्थत्वात् । कि

व रामलक्ष्मणाविति तनुमित्यनेनैवस्वामितिग्रहौ पीदित्यनेनैव बद्धाविति गम्यतइति गतार्थत्वम्। नच शरभङ्गाश्रमगमनन्तनुहोमोवा ऽथ्रतः कथाश‍रीरोपयोगीति निष्प्रयोजकत्वमतोयंव्यर्थनामा वाक्यस्य महावाक्यस्यच दोषोभवति। आर्थ्याच वृत्या लब्धस्य शास्त्रेतिहासादौ शब्दवृत्त्या भणनम पौनरुक्त्यायेत्यर्थपुनरुक्तेर्भिद्यते ॥ २ ॥ उक्ताभिन्नार्थमेकार्थम्। यथा। प्रसाधितस्याथ मुरद्विषोभूदन्यैव लक्ष्मीरिति युक्तमेतत्। वपुष्यशेषेखिललोककान्तासानन्यकान्ताह्युरसीतरातुइत्युक्तेकार्थमेवाह। कपाटविस्तीर्णमनोरमोरःस्थलस्थित श्रीलल

---

प्रयोजनान्तरगवेषणयत्यत आह। अतइति। बद्धा क्यपोषण्ड्रहौ पथिकपदस्य प्रयोजकवपसाप्रागुक्तन्तयाच प्रवन्याद्यर्थपोषपर्यवसायि वाक्यमेव। वृहाप्यवाच्यवचनस्य स्फुटत्वात्। नचाश्रमगमनत नुहोमौ करिष्यमाणवीररसोचितकथाशरीरे कामपि शोभामावहतीति यतइति वाक्यस्य महावाक्यस्यचेति यथासङ्ख्यमन्वयः। कथम्पुनर्गतार्थप्रसाधितस्येत्यादेरर्थपुनरुक्ताद्भिद्यतइत्यतआह। आर्थ्याचेति। शब्दवृत्त्यैवावगतस्यशब्दवृत्त्यापुनरुक्तम्। अर्थतोलब्धस्यशब्दवृत्त्या भणनमित्येकः प्रकारः। अर्थतोलाभंव्युत्पादयति। शास्त्रेति। अस्य रघुकुलजुवः शरभङ्गाश्रमगमनमितिहासानुपः प्राप्तस्यैव ज्ञानजनकत्वं शास्त्रात्। शरभङ्गसम्बन्धिन्येव तनुर्लोकःयुत्पत्तेस्तेन नियमेन ह्यर्थतः प्राप्तिर्भवतीत्यभिप्रायः ॥२॥ उक्ताभिन्नेति। वाक्यान्तरोक्ताभिन्नतात्पर्यार्थोयस्य तत्तथोक्तम्। तथाहि। प्रसाधितस्येत्यादिश्लोके श्लेषोपहितेन व्यतिरेकेण काप्यपूर्वाकृष्णस्य लक्ष्मीस्तत्काले बभूवेति तात्पर्यार्थः। तेनैव प्रकारेण कपाटेत्यग्रिमश्लोके सएवास्ति तुल्यार्थत्व उपादानम्भिन्नार्थत्वेपि तदिदमाह। अनयोःश्लोकयोरिति। महावाक्ये श्लोकद्वयरूपे एकमन्यतरद्दुष्यति हेयम्भवती

नस्य तस्य। आलिङ्गिताशेषजनाबभूवसर्वाङ्गसङ्गिन्यपरैवलक्ष्मीः। अनयोः श्लोकयोरभिन्नार्थमेकं वाक्यंमहावाक्येदुष्यति ॥ ३ ॥ सन्दिग्धार्थं ससंशयम्। यथा। मनोरथप्रियालोकरसलोलेक्षणेसखि। आराद्वृत्तिरियम्माता नक्षमाद्रष्टुमीदृशम्। अत्रारात्प्रभृतिशब्दानामुभयार्थत्वान्माता द्रक्ष्यतिनवेति संदिग्धम् ॥ ४ ॥ वाक्यंयत्तु क्रमभ्रष्टन्तदपक्रममुच्यते। यथा। काराविऊण खउरङ्गामउलोमज्जिओअजिमिओअ। णक्खतन्तिहिवारेजोइसिअम्पुच्छिउञ्चलिओ। अत्रक्षुरकर्मणोनन्तरन्नक्षत्रप्रश्नादिद

---

न्वयः ॥ ३ ॥ सन्दिग्धार्थमिति। शब्दस्वरूपनिश्चयेपि वाक्यार्थोदोलायितइति अर्थदोषत्वम्। तथाहि। मनोरथेत्यादौ मनोरथे यः प्रियावल्लभस्तदालोकरसेन लोलेक्षणे चपललोचने तव मातेयमाराद्वृत्तिर्दूरवर्त्तिनी। अतोनैतादृशं सानुरागाङ्गनाजनयोग्यन्द्रष्टुं क्षमाइति व्यवस्थापनान्नावलोकयितुंशक्ता ततोनिःशङ्कमालोकस्वेति वाक्यार्थः एतेयमाराद्वृत्तिःसमीपदेशवर्त्तिनीः। आराद्दूरसमीपयोः। तथाचेदृशङ्कुलाङ्गनानुचितञ्चारित्रमुपदर्शयन्ती द्रष्टुन्नक्षमा। नसहिष्णुरलोमालय नयापलंकार्षीरिति। मान्यार्थपदप्रक्षेपात्साधकबाधकप्रमाणाभावाच्च सन्दिग्धत्वमित्याह। अत्रारात्प्रभृतिशब्दानामिति। नच मिथोविरोधिनोरेकत्र विवक्षा सम्भवति। नचास्ति प्रकरणादिकमेकनियामकमत्रचानुःश्रवोपशङ्कया प्रियविलोकनरसोत्काया मनोरथभङ्गोन भवतीत्यर्थः ॥४॥ वाक्यंयत्त्विति। कारयित्वा क्षौरङ्ग्रामठलोग्रामप्रधानपुरुषइति देशीयाः। ग्रामेपि वा यः कुटोऽप्युत्पन्नः। मज्जिओसु स्नातश्च जिमिओअ भुक्तवांश्च ततोनक्षत्रतिथिवारौ च ज्योतिषिकम्पृष्टुञ्चलितः। तिथिवारज्ञानानन्तरं क्षुरकर्म ततःस्नानभोजने इति लौकिकः क्रमस्तस्यविपर्यासोव्यक्त एव क्षौरश्रुतिवचनात्। कि

मपक्रमम् ॥ ५ ॥ जात्याद्युक्तावनिर्व्यूढाद्धि न्नमाहु
र्महाधियः । यथा । वेवाहिऊण बहुआ सासुरअ
न्दोलि आइणिज्जन्ती ॥ रोअइ दिअरो तं सण्ठ
वेइ पाः सेण वञ्चत्ते । अत्र प्रक्रान्तस्य नवपरिणय
यती स्वरूपभणनस्यानिर्व्यूढत्वात्खिन्नत्वम् ॥ ६ ॥
यत्सर्वलोकातीतार्थमतिमात्रन्तदुच्यते । यथा ।
भृङ्गेण कलिका कोषस्तथा भृशमपीड्यत । ववर्ष
विपिनोत्सङ्गे गोष्पदप्रं यथा मधु । अत्र कलिकाको
षगोष्पदप्रमधुवर्षस्यासम्भवादतिमात्रत्वम् ॥ ७ ॥

---

यत्नाद्धपि रचनावैपरीत्ये न क्रमभ्रंशः समाधीयत इति नासौ शब्ददो
षः । अत्र पूर्वार्द्धोपात्तानां क्रमेण विपर्यस्तः किन्तु चौरोत्तरार्द्धोक्त
योरित्याह । अत्रचतुरकर्मण इति ॥५॥ जात्यादिवाक्यार्थो द्विविधः ।
स्वतःसम्भवी कविप्रौढोक्तिनिर्मितश्च । तत्रासति विशेषहेतौ यज्जा
तीयमर्थं बुद्ध्या व्यवस्थाप्य वचनोपक्रमस्तज्जातीयस्यैव समस्तवा
क्यनिर्वाहो युक्तो नत्वन्तरेण परित्यागेन भेदः । उपक्रान्तनिर्वाहा
शक्तो लोके खिन्न इत्युच्यते । तदिदमुक्तञ्जात्यादीति । आदिपदे
न स्वतः सम्भविविशेषाणामुपमादीनाङ्कविप्रौढिनिर्मितानाञ्च रू
पकादीनाम्परिग्रहः । विवाह्य नववधूः सा सुरञ्च श्वशुरगृहन्दोलि
कयानीयमाना रोदितीति । स्वतःसम्भवी नवपरिणीता स्वभावलक्षणा
र्थस्तावदुपक्रान्तस्तथासति योजन्मान्यस्तपितृगृहवियोगवेदनादून
मानसाया अत्यन्तापरिशीलितेन देवरेण संस्थापनप्रकारः स न जातौ
निविशते । परिशीलितभर्तृकुलायाकुलायां वा । तस्यौचित्यात्तस्याए
व हि किञ्च न वक्तव्यम्भवतीत्याह । अत्र प्रक्रान्तस्येति ॥६॥ यत्सर्वलो
केति । गोष्पदप्रमिति पूरेर्णिजन्ताद्धर्षप्रमाणजलोपश्चास्या न्यतरस्या
मिति णमुल् । ऊलोपश्च । कलिकामकरन्दपरिणामस्यैतावतो लोके
न प्रसिद्धिः । नचैतत्खिन्नमेव । कलिकाकुसुमस्यानुपक्रमात् किन्तु स्व
रूपत्वमात्लोकमर्यादातिरिक्तवृत्तमुपात्तमिति पृथगेव दोषः ॥ ७ ॥

यत्तु क्रूरार्थमत्यर्थं परुषन्तु तदुच्यते । यथा । खाहि विस ङ्पिव अमुत्तं णिज्जसु मारी अपडउ दे वज्जम् । इअ खाइ अध ण आखिविऊण सुअं सवङ्गमाआ । अत्र खादविषमित्यादीनामभिधानात्पारुष्यम् ॥८॥ अप्रस्तुतरसं यत्स्याद्विरसन्तन्निगद्यते । यथा । तव वनवासोऽनुचितः पितृमरणशुचं जहीहि किन्तपसा । सफलय यौवनमेतत्सममनुरक्तेन सुतनु मया । अत्र पितृमरणसन्तप्तायाः सम्भोगप्रवर्तनमप्रकृतरसत्वाद्विरसम् ॥९॥

---

यत्त्विति । खाद विषम्पिब मूत्रं म्रियस्व मार्यां पततु ते वज्रम् । इत्थं माता पुत्रमाक्रोशति किं कृत्वा क्षिप्त्वा भूमौ निरस्य । कुतोऽन्त खण्डितस्तनी यतो बालो दन्तैर्मातुस्तनन्दशतीति जातिस्तस्याः पुनरेवं विषपरुषाभिधायित्वमनुचितम् । अतिपारुष्यमेव चात्र विरसताहेतुः । तेनातिमात्राद्भेदः ॥ ८ ॥ अप्रस्तुतेति । अप्रस्तुतः प्रस्तावमन्तरेण सूचितो रसो यत्र तत्तथा । एकरसप्रक्रमे हि विरोधिरसान्तरप्रस्ताव एव क्रियमाणोऽनौचित्यवान् । नह्यौचित्यमन्तरेण रसस्य पदसम्बन्धः सम्भवति । यदाह । अनौचित्यादृते नास्ति रसभङ्गस्य कारणम् । प्रसिद्धौचित्यबन्धस्तु रसस्योपनिषत्परेति । तव वनवास इत्यादौ पितृमरणानुभवप्राप्तशोकप्रकर्षायाः शृङ्गारप्रस्तावना विरसायते । सा हि स्वभावत एव करुणेन सहैकवाक्यसमावेशविरोधिनी । न चैकस्य बाध्यत्वमङ्गभावो वावगम्यते । नाप्युभयोरङ्गाङ्गिभावोऽवगम्यते । येनायं विरोधः समाधीयताम् । युक्तिरत्रविदग्धैव । अर्थस्तु रसात्माविरोधेन पदम्बध्नाति ततः कान्तिविपर्ययाद्भेदः । न च करुणोक्तिरूपकान्ता यतस्तदनिर्वाहे खेदसम्भावना स्यात् । किन्तु पितृमरणशुचञ्जहीहीत्यनेन शोकाविष्टायां शृङ्गारप्रस्तावना । तथा च भिन्नमेव दृष्टा बीजन्देतत्सर्वमपि सन्धाय व्याचष्टे । अत्रेति ॥ ९ ॥ इदानीमनौचित्यरूपदूषणप्रस्तावः । अर्थालङ्काररूपमप्रधानमिति प्रसिद्ध्या तस्या

हीनं यत्रोपमानं स्यात्तत्तु हीनोपमं स्मृतम् । यथा ।
क्वचिदग्रे प्रसरता क्वचिदापत्य निघ्नता ॥ शुनेव सा
रङ्गकुलं त्वया भिन्नं द्विषत्कुलम् । अत्र शौर्यशालिनः
शुनोपमितत्वाद्धीनोपममिदम् ॥ १० ॥ तदेवय
स्मिन्नधिकन्तद्भवेदधिकोपमम् । यथा । ऽयम्प
द्मासनासीनश्चक्रवाको विराजते । युगादौ भगवान्ब्र
ह्मा विनिर्मित्सुरिव प्रजाः । अत्र चक्रवाकस्य जगत्स्र
ष्टा ब्रह्मणोपमितत्वादधिकोपममिदम् ॥ ११ ॥ यदतु
ल्योपमानन्तद्भवेदसदृशोपमम् । यथा । गमहरंरा

---

मेवोपलक्षणतयाऽनौचित्यम्प्रपञ्चयति । हीनमित्यादि । हीनमप
कृष्टसजातीयमुपमानमित्युपमानप्रसिद्धा विशेषा उपमेयेऽप्रतिबि
म्बकत्वान्न प्रतीयन्त इत्युक्तम् । उत्कृष्टजातीयस्योपमेयस्य हीनजा
तीयेन साम्यमभिधीयमानं शाब्दन्यायेन वा यदनुचितमेव भवति ।
यथा । रणाश्वमेधे पशुतामुपागता इति । नन्वत्र रूपकबलेन यजनी
यस्य पशुतावगम्यत इति युक्तमनौचित्यम् । क्वचिदग्र इत्यादौ प्र
कृतोदाहरणे तु कथम् । नन्वत्र प्रस्तुतोपश्लोक्यस्य सारमेयतावगम्य
ते । अग्रे प्रसरणापत्यनिघ्ननञ्च सादृश्यमुपात्तमुचितमेवेति चे
न्न । तत्प्रतिबिम्बे सादृश्यप्रतीतिरपि शब्देन क्रियमाणा लोके कान्
तिम्प्रति पुष्णाति नहि कदापि हीनेन सादृश्योक्तौ वर्णना सजीवा
प्रतीयते । प्रतीतिमात्रपरमार्थञ्च काव्यदर्शनमिति ॥१०॥ तदेवेति ।
हीनेनोत्कृष्टं यथा नोपमीयत इति लोकमर्यादा तथोत्कृष्टेन हीनम् ।
तथाहि । चक्रवाकोपमितिमनुसन्दधतां विशेषावगतिविधुराणा
ञ्च सहृदयानाम्प्रतीतिः स्खलन्ती जनयत्येव वैरस्यमिति सूक्तोऽति
कथा दूषणम् ॥११॥ इदमपरमायातमनौचित्यं यत्सादृश्यबुद्ध्या निब
न्धेऽप्यसादृश्यपर्यवसानमित्याह । यदतुल्येति । यद्यपि बलवत्त्वादि
ना प्रतीयमानं हिमवद्भगवतोरस्ति सादृश्यन्तथापि काव्योपमाक्रमे
णायन्निबन्धः सा च न सम्यगानान्हि रोषेण विदग्धमन्मथशरीरदाहो हि

साणलणिदठ्ठमुट्ठवम्महसरीरम्। णिस्यअणिग्गअंवणि
गाअङ्गासोत्तंवहिमवन्तम्। अत्रकोपानलनिर्दग्धम
न्मथशरीरस्यहरस्यानितम्बनिर्गतस्रोतसा हिमवद्गि
रिणासहासादृश्यादिदमसदृशोपमम्॥१२॥ अप्रसि
द्धोपमानंयदप्रसिद्धोपमाहितत्। यथा ।कुमुदमिवमु
खन्तस्यागौरिव माहिषः शशीवकाव्यमिदम्। शर
दिवविभातितरुणीविकसितपुलकोत्करासेयम्।अ
त्रकुमुदमुखयोर्गोमाहिषयोः काव्यशशिनोश्च प्रती
यमाने शरत्तरुण्योश्च विधीयमानेसादृश्ये उपमानो
पमेयस्याप्रसिद्धत्वादप्रसिद्धोपममिदम्॥ १३ ॥ य

---

स्तृतनितम्बनिर्गतगङ्गास्रोतःप्रतिबिम्बभूतः। धातुरङ्गरञ्जितोगङ्गा
प्रवाहाभिमतस्य भवति ललाटनेत्राग्निज्वालाप्रतिबिम्बमित्यपि न
वाच्यम्। येनान्यत्वप्रसङ्गात्। नितम्बसम्बन्धोक्तिश्च न सङ्गतास्यात्।
कथन्तन्मन्मथशरीरदाहः प्रतिबिम्बायत इत्याशयेन व्याचष्टे। अत्रेति।
विशेषणयोर्बिम्बप्रतिबिम्बभावाभावे विशिष्टयोरुपमानसम्भवतीति
मत्वाविशेषणद्वयसदोषायैवेति व्याख्यातवान्॥१२॥ इदानीङ्कविस
मयबहिर्भूतत्वेनोपमानौचितीमाह। अप्रसिद्धेति। कमलमुखयोरि
व कुमुदमुखयोर्गोगवययोरिव गोमहिषयोः काव्यशब्दयोरिव काव्य
शशिनोरस्तिसादृश्यं सौरभादिकमेवानुपात्तमपि प्रसिद्धतया प्रतीय
मानम्। शरत्तरुण्योस्तु न तथा प्रसिद्धमिति विकसितपुलकाङ्कुराभा
तीत्येतावन्मात्रमुपात्तम्। पुलका इवाङ्कुराइति तदाशयात्। विशिष्ट
भानस्य च द्वयानुगतत्वेनैव प्रतीयमानत्वात्तथापि पद इवालङ्कारैरपि
कविभिरप्रयुज्यमानत्वमेव दोष इति व्याचष्टे। अत्रेति। प्रतीयमान
इति। इवशब्दस्य द्योतकमात्रत्वात्। अभिधीयमानं व्याख्यातम्॥१३॥
वक्रताविशेषविशिष्टस्यैवार्थस्य काव्यकोटिनिवेशाद्वक्रोहेय इत्याह।
यदिति। वक्रताव्यतिरेकेऽलङ्कारसामान्यमेव न स्यादिति निरल
ङ्कारमित्युक्तम्। कोलाः खनन्ति मुस्तां गृध्राः खादन्ति मृतकमांसानि।

दलङ्कारहीनन्तन्निरलङ्कारमुच्यते । यथा । कोलाख
णन्ति मोत्थं गिद्धा खाअन्तिमड्डअमंसाइं । उलुआह
णन्तिकाएकाआउलुएविवाआन्ति। अत्रकोलादेः स्व
रूपाद्यनभिधानाज्जात्याद्यलङ्कारासम्भवे निरलङ्का
रनामायंवाक्यार्थदोषः सविशेषणाद्घोरपत्यमित्या
देर्वाक्याद्भिद्यते ॥ १४ ॥ अश्लीलमितिनिर्दिष्टमश्ली
लार्थप्रतीतिकृत् । यथा । उद्यतस्य परंहन्तुंस्तब्ध
स्याविवरैषिणः । पतनञ्जायतेवश्यंकृच्छ्रेणपुनरुन्न
तिः । अत्रोद्यतस्य परंहन्तुमितिसम्भोगारम्भविष
यास्तब्धस्याविवरैषिणइतिवराङ्गविषयापतनञ्जाय
तेवश्यमितिरेतोविसर्गविषया कृच्छ्रेणपुनरुन्नतिरि
ति नष्टरागप्रत्यानयनविषया अश्लीलवाक्यार्थवि

---

उलूका घ्नन्ति काकान् काका उलूकानपि । वाअन्ति क्षिपन्ति खा
दन्ति । वीगतिव्याप्तिप्रजनकान्त्यसनखादनेष्विति धात्वनुसारात् ।
नन्वस्ति कोलादिस्वरूपमत्र । ततो जात्यलङ्कारेण वक्तव्यमाक्षिप्यते ।
विशेषस्य च सामान्यनान्तरीयकत्वात्कथमुच्यते निरलङ्कारमित्यत
आह । अत्रेति । स्वं रूपञ्चमत्कारकारि कविप्रतिभामात्रप्रकाशनीयं
रूपन्तदेवालङ्कारकतयाभिमते । न चात्र तथा किञ्चिदभिहितमतो न
जात्यलङ्कारः । एवमन्योप्यलङ्कारो नास्ति । कथन्तर्हि वक्रताऽभाव
रूप दीर्घपुच्छ इत्यादेः शब्ददोषाद्भिद्यते तदाह । सविशेषणादिति ।
तत्र विशेषणप्रयोगे शब्दानामेव वक्रता व्यतिरेकेणापवाद इतिश
ब्ददूषणमिह तु न तथा । किन्तूक्तमेवस्वरूपन्न वक्रमिति वाक्यार्थ
एव दुष्टः ॥१४॥ अश्लीलमिति । उद्यतस्येति । परमन्यं हन्तुमुद्यतस्य
विवरैषिण इति प्रमादकृतावधानस्य स्तब्धस्यात्मन्युत्कर्षाभिधानेना
न्यानवधीरयतः पतनमावश्यकमुद्गमः कष्टादिति संसर्गोभिमतः ।
एषामेव पदार्थानां संसर्गान्तरमश्लीलमेवेत्याह । अत्रोद्यतस्येति ।
एतेन पददोषाद्भेद उक्तः ॥१५॥ देशकालादेः काव्याङ्गत्वात्तद्विरोधेन ।

षयाप्रतीतिर्भवति ॥ १५ ॥ विरुद्धन्नाम तद्यत्र विरो
धस्त्रिविधोभवेत् । प्रत्यक्षेणानुमानेनतद्वदागमव
र्त्मना । यो देशकाललोकादिप्रतीपःकोपिदृश्यते ।
तमामनन्तिप्रत्यक्षविरोधंशुद्धबुद्धयः । तत्रदेशवि
रोधोयथा । सुराष्ट्रेष्वस्तिनगरी मथुरानामविश्रु
ता । अक्षोटनारिकेराढ्या यदुपान्ताद्रिभूमयः ।
अत्रसुराष्ट्रेषुमथुरानास्ति । तत्पर्यन्ताद्रिभूमिषु चा
क्षोटनारिकेराणामभावात् । देशोद्रिवनराष्ट्रादिरि
त्ययन्देशकृतःप्रत्यक्षविरोधः ॥ १६ ॥ कालविरोधो
यथा । पद्मिनीनक्तमुन्निद्रास्फुटत्यह्निकुमुद्वती ।
मधुरुत्फुल्लनिचुलोनिदाघोमेघदुर्दिनः । अत्रपद्मि
न्यानक्तङ्कुमुद्वत्या अह्निमधौनिचुलानामुन्निद्रत्वा
द्यभावान्निदाघस्यचामेघदुर्दिनत्वात् । कालोनक्त
न्दिनर्तवइति कालकृतोयम्प्रत्यक्षविरोधः ॥ १७ ॥

---

र्थौदुष्टः । विरोधश्चबाधः । सप्रमाणेनैव ततो लोक दिविरोधस्यालङ्का
रसमयसिद्धस्य प्रमाणविरोधपर्यवसायित्वं विवक्षन्नाह । विरुद्धमि
ति । तत्रदेशकालादौ प्रत्यक्षत एव वस्तुन स्वाभ वोनिश्चीयत
इति देशादिविरोधः प्रत्यक्षविरोधः । शूरसेनेषु मथुरा न सुराष्ट्रेषु ।
तत्पर्यन्तभूमीष्वक्षोटा न लिकेरा वा न सम्भवन्ति । अद्रीणां कथ
न्देशत्वमित्यत आह । देशोद्रिवनराष्ट्रादिरिति ॥१६॥ पद्मिनीति ।
नक्तंरात्रौ मधुर्वसन्तः निचुला इज्जलः । ते वर्षासु पुष्प्यन्ति न
वसन्ते । यद्यपि कालस्वरूपमप्रत्यक्षं तथापि तदुपाधीनां व्यवहा
राङ्गतेव प्रत्यक्षताचेत्याह कालोनक्तन्दिमर्तवइति ॥ १७ ॥ अन्ते
प्रत्यक्षविरोधशब्दार्थं व्याचष्टे । प्रत्यक्षेणानुपलम्भादिति । कथमयं
लौकिकविरोध इत्यत आह । जङ्गमेति । जङ्गमस्थावरंजीवच्छरीरं
लोकः । तत्र जङ्गमङ्गवाश्वादि स्थावरं लतावृक्षादि राष्ट्रादावेव

लोकविरोधो यथा । आधूतकेसरो हस्ती तीक्ष्णशृङ्ग
स्तुरङ्गमः । गुरुसारोयमेरण्डो निःसारः खदिरद्रुमः ।
अत्र हस्तिहयैरण्डखदिराणां केसरादिसद्भावस्य प्र
त्यक्षेणानुपलम्भात् । जङ्गमस्थावरो लोक इति लोक
कृतोऽयम्प्रत्यक्षविरोधः ॥ १८ ॥ युक्त्यौचित्यप्रति
ज्ञादिकृतो यस्त्विह कश्चन । अनुमानविरोधः स कवि
मुख्यैर्निगद्यते । अत्र युक्तिविरुद्धं यथा । सुरभिमधुपा
नलम्पटभ्रमरगणाबद्धमण्डलीबद्धाम् । कस्य मनो ना
नन्दयति कूर्मीपृष्ठोद्गतं कमलम् । अत्र कूर्मीपृष्ठे कमलो
द्गतेरयुक्तियुक्तत्वाद्युक्तिविरुद्धमिदम् ॥ १९ ॥ औचित्य
विरुद्धं यथा । पट्टंसुउत्तरिज्जेण पामरो पामरिए परि

---

देशपरिभाषा । इदम्प्रकारान्तरेण दशशब्देनाभिधीय ॥ १८ । युक्तीति ।
सामान्यतस्त्वदनुमानविरोधो यत्प्रमाणाभावः नहि प्रमेयानावे
प्रसिद्धम् । तद्यमर्थो युक्तिः प्रमाणम् । सुरभिमधुपानलम्पटभ्रमर
गणाबद्धमण्डलीबन्धः । कस्य मनो नानन्दयति कूर्मपृष्ठोद्गतकमलम् ।
आधूतकेसरेत्यादौ उदाहरणे क्वचिदेव व्यक्तिविशेष केसरादिसम्ब
न्धप्रतिपादनक्षमस्यथा तेषामेरण्डादिष्विति । अतोऽभवति प्रत्य
क्षेणैव विरोध इहतु न तथा । नहि विशेषतः कापि कूर्मपृष्ठव्य
क्तिरस्तीति सामान्याकारेण विवक्षितम् । ततश्च कमलजातेः पङ्क
जप्रभवायाः एव निश्चयात्कूर्मपृष्ठादुद्गमे न कश्चित्प्रमाणाङ्कुदपि
कस्याप्यवतरतीत्याशयवान् व्याचष्टे । अत्रेति । अयुक्तियुक्तत्वादि
ति । युक्तिः प्रमाणत्वेनासम्बद्धत्वादित्यर्थः ॥ १९ ॥ औचित्यविरुद्धमि
ति । औचित्यं योग्यता तस्यपरामृश्यमानस्य विवक्षितविपरीतप
र्यवसानमन्योनुमानविरोधः । तथा हि । पट्टांशुकोत्तरीयेण पामरः
पामर्याप्रोञ्छति । अतिगुरुकक्रूरकुम्भीभरेण स्वेदार्द्रितं वदनमित्य
त्रपूर्ववत्सम्बन्धग्राहकप्रमाणाभावः । कदाचिद्राजप्रसादादिना तथा
सम्भवात् । किन्तु पामरोचित्यप्रतिसन्धाने पट्टांशुकावगुण्ठनमनुचि

पुनइ । अइगरुअकूरकुम्भीभरेणसे उल्लिअं त्थण
म् । अत्र पामरस्य पट्टांशुकोत्तरीयाभरणानौचित्या
दौचित्यविरुद्धमिदम् ॥ २० ॥ प्रतिज्ञाविरुद्धं यथा ।
यावज्जीवमहम्मौनी ब्रह्मचारी च मे पिता । माता च
मम वन्ध्यासीत्स्मराभोनुपमोभवान् । अत्र स्वयं व
क्तुरेव यावज्जीवमहम्मौनीत्यादिपदानामुक्त्या प्रति
ज्ञाविरोधात्प्रतिज्ञाविरुद्धमिदम् ॥ २१ ॥ धर्मार्थ
कामशास्त्रादिविरोधः कोपि यो भवेत् । तमागमविरो
धाख्यं दोषमाचक्षते बुधाः । तेषु धर्मशास्त्रविरोधो य

---

तम् । विदग्धवनेपथ्यपरिग्रहदिनचर्यापरिचय एव पामरत्व
म् । ततश्चायमर्थो । भवति पट्टांशुकसम्बन्धायोग्यं यस्मात्पामरत्वादि
ति । कूरमन्नम् । कुम्भीः कलशीः ॥२०॥ प्रतिज्ञाविरुद्धमिति । अभ्युप
गमवाक्यम्प्रतिज्ञा । यथा । यद्यदादिशति स्वामी तत्करोम्यविचार
यन्निति । साध्यनिर्देशश्च । अयं सरसलोचनी पीनस्तनविमर्दनः ।
नाग्रपूरजघनस्पर्शो नीवीविस्रंसनः कर इति । द्वयमपि प्रतिज्ञापदे
नाभिमतम् । तत्राद्ये यावज्जीवमहम्मौनी इत्युदाहरणम् । आव्या
हारो मौनम् । तदभ्युपगमवाक्येनैव बोध्यते । तथाहि । नायं मौनी वच
नवत्त्वादित्यभ्युपगम्य मौनाभावपर्यवसन्नमिति तृतीयोयमनुमानविरो
धः । द्वितीयपङ्क्तीकरणेन चतुर्थोदाहरणे ब्रह्मचारी च मे पिता मा
ता च मम वन्ध्येति वक्ता यस्यौरसः सुतः स पितृपदेनाभिमतो न च
ब्रह्मचारित्वं सम्भवति । माता जनन्येवाभिधीयते न च तस्या वन्ध्या
त्वं संभवति । परस्परव्याघातो विरोधः । अयञ्च पञ्चमप्रकारोय
द्व्यापकद्वारा विरोधः । यथा । स्मराभोनुपम इति । नहि स्मराभत्व
लोके प्रसिद्धं किन्तु स्मरतुल्यतां वदन्सोपमानत्वमभ्युपगच्छति । त
दनुपमत्वेन विरुद्धम् । ततो व्यापकविरोधोयम् । यथावह्निरनुष्ण इ
ति । आदिग्रहणाद्दृष्टान्तद्वारकोनुमानविरोधः सङ्गृहीतः ॥२१॥ वेदा
ध्ययनानधिकारादिति । अकृतव्रतबन्धे तु गुरावुपरते सति । नापि

था । असावनुपनीतोऽपि वेदानधिजगे गुरोः । स्वभावशुद्धः स्फटिको न संस्कारमपेक्षते । अत्रानुपनीतस्य वेदाध्ययनानधिकाराद्धर्मशास्त्रविरोधः ॥ २२ ॥ अर्थशास्त्रविरोधो यथा । कामोपभोगसाकल्यफलो राज्ञां महीजयः । अहङ्कारेण जीयन्ते द्विषन्तः किं नयश्रिया । अत्र महीजयस्य फलत्वेन कामोपभोगानामर्थशास्त्रकारैरननुमतत्वात् शत्रुविजये चाहङ्कारस्याहेतुत्वादर्थशास्त्रविरोधः ॥ २३ ॥ कामशास्त्रविरोधो यथा । तवोत्तरोष्ठे बिम्बोष्ठि दशनाङ्को विराजते । पूर्णः सप्तस्वरः सोऽयम्भिन्नग्रामः प्रवर्तते । अत्रोत्तरोष्ठे दशनाङ्कस्य कामशास्त्रकारैरननुज्ञा

---

व्याहारयेद्ब्रह्मस्वधानिनयनादृत इति धर्मशास्त्रम् ॥२२॥ अत्र महीजयस्येति । महीजयस्य धर्मः फलमिति नीतिशास्त्रे स्थितम् । अहङ्कारो मानः स नः शत्रुविजये साधनम् । अरिषड्वर्गत्यागे हीन्द्रियजयः । तया विजिगीषुता । तया च शत्रुपरिभव इति । यदाह । तरघुराग्रो विललास इत्युपक्रम्य कौटिल्याचार्यैः मानाद्रावणः परदारानप्रयच्छन् दुर्योधनो राज्यांशञ्चेति ॥२३॥ अत्रोत्तरोष्ठ इति । उपरितनस्योष्ठ उत्तरोष्ठमन्तर्मुखनयनान्तञ्च मुक्त्वा चुम्बनवद्दशनच्छेद्यस्थानानीति कामसूत्रम् । भिन्नग्रामरागाणामिति । भिन्नमार्गेषु सप्तस्वराणां समवायो नोपनिबद्धस्तथा सुधांशुस्तु धैवतन्यासः पञ्चमर्षभवर्जितः षड्जो दीप्तताज्जातो भिन्नषड्ज उदाहृतः । मतङ्गोऽप्याह । षाडवौडविके जातौ भिन्नग्राम उदाहृतः । ततश्च षड्वा पञ्च वा स्वरा भवन्ति भिन्नग्रामे न तु सप्त । कामशास्त्रविरोधप्रस्तावे कथं कलाविरोध उदाह्रियत इत्यत आह । तदंशत्वादिति । गीतादिकलाश्चतुःषष्टिः कामाङ्गतया कामसूत्रकारैरुपदेशाद्भवति तद्विरोधे कामशास्त्रविरोध इत्यर्थः । आदिग्रहणाद्देवताभक्तितो मुक्तिर्नतत्त्व

नात्कामशास्त्रविरोधः । भिन्नग्रामाणाञ्च पूर्णसप्त स्वरानुपपत्तेः । कलाविरोधेपि तदंशत्वात्कामशास्त्र विरोधएव ॥ २४ ॥ एवम्पदानां वाक्यानां वाक्यार्थानाञ्चयःकविः । दोषान्हेयतया वेत्ति सकाव्यङ्कर्तुमर्हति । अलंकृतमपि श्रव्यन्नकाव्यंगुणवर्जितम् । गुणयोगस्तयोर्मुख्योगुणालङ्कारयोगयोः । त्रिविधा

ज्ञानसम्पदेत्यादिकम्भोजादिशास्त्रविरुद्धमुदाहरणीयम् ॥ २४ ॥ दोषाणाम्प्रयत्नमुद्देशोयमभिसन्धायकलत्वंविशेषसंहारव्याजेन स्फुटयति । एवमिति । तदेवन्दोषलक्षणे वृत्ते क्रमप्राप्ता गुणा लक्षयितव्याः । तदेवसोनः प्रसादादयो गुणाः । यमकादयस्त्वलंकारा इति पूर्वम्प्रसिद्धौ सत्यां विचार्यते । किमेषाम्मिथोभेदनिबन्धनं कथञ्चाल ङ्कारेभ्यो गुणानाम्पूर्वनिपातः । रसस्य हि दोषाभावादित्रयसंस्कृत एव पदलाभ इत्यस्ति पश्चाद्भावे निबन्धनमिति तत्राह । अलङ्कृत मपीति । रसावलम्बिनोगुणाः, शब्दार्थाऽवलम्बिनस्त्वलङ्कारा इति काश्मीरकाः । तदगमकम् । तथाहि । यदि काव्यस्य रसप्रधाना त्मकतामाश्रित्यायं विभागः । अलङ्कारा अपि तर्हि तत्प्रवणा एव । अथ नायन्नियमोयत्सर्वत्ररसःप्रधानमिति तदात्र गुणेष्वपि कथन्तदालम्बनानियमः । किञ्चात्र प्रसादादिवच्छ्लेषादयोपि शब्दार्थ गता एव प्रत्यभिज्ञायन्ते तत्कथमयं विभागः । यद्यपिशब्दार्थौ ज्ञायन्ते तथापि रसप्रवणा इतिचेत् । किमिदं रसप्रवणत्वं रसाश्रित त्वन्तावन्न संभवत्येव । रसप्रतीतिपर्यवसानञ्च यथाकथञ्चिदलङ्का रेष्वपि तुल्यमित्यऽविचारितरमणीयोयम्मार्गः । लोकशास्त्रवचनाति गामी कश्चिद्विशेषः शोभापदाभिलप्योभवन्नास्मिऽस्तूभ्य शब्दः शब्दार्थौ विषयीकरोति । ततश्च तथाभूतशोभानिष्पत्तिहेतवो गुणास्तदुत्कर्ष हेतवस्त्वलङ्काराः । यदाह । काव्यशोभायाः कर्त्तारोधर्मा गुणास्त दतिशयहेतवस्त्वलङ्कारा इत्यन्ये । तदपिन । अस्य रसादिवदव्याप्तेः । नहि तेषां रीतिशरीरान्तर्निवेशः कैश्चिदभ्युपगम्यते तस्मादालङ्का

श्चगुणाः काव्येभवन्तिकविसम्मताः । बाह्याश्चाभ्य
न्तराश्चैवयेचवैशेषिकाइति ॥ बाह्याःशब्दगुणास्ते
षुचान्तरास्त्वर्थसंश्रयाः । वैशेषिकास्तुतेनूनन्दो
षत्वेपिहियेगुणाः । चतुर्विंशतिराख्यातास्तेषु येश
ब्दसंश्रयाः । तेतावदभिधीयन्ते नामलक्षणयोगतः ।
श्लेषःप्रसादःसमतामाधुर्यंसुकुमारता । अर्थव्यक्तिस्त
थाकान्तिरुदारत्वमुदात्तता । ओजस्तथान्यदौर्जित्य
म्प्रेयानथसुशब्दता ॥ तद्वत्समाधिसौक्ष्म्यञ्चगाम्भीर्य
मथविस्तरः । संक्षेपसम्मितत्वञ्चभाविकत्वंतथा ग
तिः । रीतिरुक्तिस्तथाप्रौढिरथैषांलक्ष्यलक्षणे । तत्र ।

---

रिकसमयानुपाती श्लेषाद्यन्यतमोगुणः । जात्याद्यन्यतमश्चालङ्कार
इति विभागः । तत एव च शोभाकारित्वेन गुणानामप्यलङ्कारप
क्षनिक्षेपङ्करिष्यति । उद्भूतगुणन्तु स्फुटालङ्कारहीनमपि चमत्का
रमावहत्येव । यथा । का त्वं शुभे, कस्य परिग्रहो वा ,किं वा मद
भ्यागमकारणन्ते । आचक्ष्व मत्वा वशिनां रघूणाम्मनः परस्त्रीवि
मुखप्रवृत्ति । यतो गुणयोगोमुख्यस्ततः प्रथममुद्दिष्टोलक्षितश्लेषःसा
साम्यगुणास्थितौ गुणान्विभजते । त्रिविधाश्चेति । शब्दः शरीरस्था
नीयोधिष्ठेयतया प्रथमप्रतिसन्धेयतया च बाह्यः । ततस्तदाश्रिता
गुणा अपि बाह्याः । अर्थस्त्वात्मतुल्योधिष्ठायकतया पश्चाद्ग्राह्य
तयाचाऽऽन्तरस्तेन तदाश्रिता गुणाअप्यान्तराः । अथेदानीं येषामग्रे
दोषत्वंततो गुणभावः । केचिद्विशेषमासाद्यते वैशेषिकाः । पूर्वन्दो
षा अपिविशेषयोगेन गुणीभवन्तीत्यभिप्रायात् । माधुर्यौजः प्रसा
दाख्य एव गुणा इति ध्वनिकारस्य मतन्निरस्यति । चतुर्विंशतिरि
ति । परस्परसङ्कीर्णत्वादुपाधीनामितिभावः । नचैतदस्माकम्मनीषा
मात्रेण कल्पनमित्याह । आख्याताइति । निष्ठाप्रत्ययेनेदम्प्रथमता
द्योत्यते । उक्तविशेषादेव शब्दगुणानाम्पूर्वभाव इत्याह ॥ तेष्विति ।

गुणः सुश्लिष्टपदताश्लेषइत्यभिधीयते। यथा। उभौ यदि व्योम्नि पृथक्प्रवाहावाकाशगङ्गापयसः पतेताम्। तदोपमीयेत तमालनीलमामुक्तमुक्तालतमस्यवक्षः। अत्रभिन्नानामपिपदानामेकपदताप्रतिभासहेतुत्वेनसन्दर्भस्यसुश्लिष्टत्वादयंश्लेषोनामशब्दगुणः॥ १॥ प्रसिद्धार्थपदत्वंयत्सप्रसादोनिगद्यते। यथा। गाहन्तांमहिषा निपानसलिलंशृङ्गैर्मुहुस्ताडितंछायाबद्धकदम्बकम्मृगकुलंरोमन्थमभ्यस्यतु। विस्रब्धंक्रियतां व

अभिधानं द्विविधं विभागतोलक्षणतश्चेत्याह। नामलक्षणयोगतइति। पदघटनव्यवस्थितौ गुणान्तरगवेषणमतः प्रथमं श्लेषलक्षणमाह। तत्रेति। श्लिष्टानि घटितानि पदानि यत्र तस्य भावस्तत्ता। नच घटनामात्रस्य गुणभावइत्याशङ्क्यम्। सुपदं शोभना घटनेत्यर्थः। शोभनत्वञ्च घटनाया मसृणत्वमेकताप्रतिभानसामर्थ्यं यद्बलात्सूत्रमुरः स्थलइति। बीजञ्चात्र श्रुत्यनुप्रासवत्त्वमलक्षितसन्धिता च। तथाहि प्रकृतोदाहरणे उभावित्युकारभकारावोष्ठ्यौ। यदिव्यइत्याद्यन्तौ यकारौ तालव्यौ। नचायं वर्णानुप्रासः। ईषत्स्पृष्टत्वादिभेदात्। म[illegible]रौ दन्त्योष्ठ्यौ। स्रीत्यत्र मकारोभकारेण नकारोदकारेण समानश्रुतिक इत्यादिबोद्धव्यम्। तथा पृथक्प्रवाहाविति ककारस्य पवर्गगमनैकता प्रतिभासते। प्रवाहावाकाशेत्यौकारस्यावादेशेन वर्णान्तरनिष्पत्त्या॥ एवम्पयसः पतेतामित्यादावुन्नेयम्। पृथगिति पार्श्वद्वये। तेनवक्षःस्थलदक्षिणवामभागयोर्लम्बमानोद्विसरोहारइति लभ्यते। अस्यवक्षइति। अत्रास्येति पदेन नान्यस्य हारइत्यनुपमो नचान्यस्य वक्षः स्थलमाकाशवदुन्नतविस्तीर्णमिति भगवतः सकलजगद्विलक्षणत्वध्वनिरित्याराध्याः॥१॥ प्रसिद्धार्थेति। अस्यार्थः प्रागेव विवृतः। प्रसादोद्विधा वाच्यविषयः, प्रतीयमानविषयश्च,। तत्र प्रतीयमानविषयोयथा। एवंवादिनि देवर्षौ पार्श्वे पितुरधोमुखी। लीलाकमलपत्राणि गणयामास पार्वती। अत्र श्रुतावगतादेव वाक्याल्लज्जा

राहपतिभिर्मुस्ताक्षतिः पल्वले विश्रामं लभतामिदञ्च
शिथिलज्याबन्धमस्मद्धनुः । गाहन्तां महिषा निपान
सलिलमित्यादिप्रसिद्धार्थपदोपादानात्प्रसादः ॥ २॥
यन्मृदुप्रस्फुटोन्मिश्रवर्णबन्धविधिम्प्रति । अवैष

---

द्योरुक्तदन्ताइव प्रकाशन्ते । वाक्यविषयो द्विधा भवति । ग्राम्यैरेव ग्रा
म्य उपनागरैर्वा पदैः सन्दर्भनिर्वाहे । अद्योयथा । चन्द्रे कलङ्कः सुजने
दरिद्रता विकाशलक्ष्मीः कमलेषु चञ्चला ॥ सुखाप्रसादः सधनेषु स
र्वदा यशोविधातुः कथयन्ति खण्डितम् । द्वितीयमुदाहरति । गाह
न्तामिति । अत्र प्रथमपादे गाहन्तां महिषा इति ग्राम्यम् । नि
पानसलिलमित्युपनागरम् । शृङ्गैरिति ग्राम्यम् । मुहुरित्युपनागर
म् । ताडितमितिग्राम्यम् । द्वितीयपादे कदम्बकरोमन्थशब्दावुप
नागरौ शेषाणि ग्राम्याणि । एवञ्च चरमयोरपि स्वतोविवेचनीयम् ।
गाहनं विलोडनन्तन्निःशङ्कमेव भवतीति विश्रम्भध्वनिः । अतएव
आसाऽभावात्प्रकृतिप्रत्यापत्तौ । शृङ्गाभ्याम्पर्यायेण जलताडनम्महि
षजातिः । छायाश्रयणं यूथबन्धश्च मृगजातिः । चिरपरस्परवार्त्तानभि
ज्ञानान्द्विधानिष्पलायनेन रोमन्थोऽपरिचित इवासीत्तस्येदानीं शि
क्षाक्रमेण यदिपरिचयः स्यादित्यन्यस्यापि ध्वनिः । वराहपतिभि
रिति । न यादृशतादृशानामस्मन्मृगयासंभा[illegible]नेति प्रकाश्य
ते । ननु चात्र कर्तृप्रक्रमभेदो दूषणं कस्मान्न भवति । नैतत् । आपातशौ
र्येषु परिणतिभीरुषु च महिषेषु स्वभावभीतेषु मृगेषु न तथायं सं
रम्भते यथा पुनरावृत्तिचतुरेषु प्रकारकोविदेषु च वराहेषु । ततश्च
तेषामुचितक्रियासु कर्तृतामात्रमेव न सोढवानिति साम्प्रतं कर्तृताप्य
नुष्ठानेन व्यज्यते । ततस्तृतीयायामौचित्यनिवेशिन्या प्रक्रमभेदोप्यु
चित एवेति व्यक्तिविवेककारादीनामपि सम्मतः पन्थाः । इदञ्चेति च
कारेणाधेदस्मद्धनुरारूढमवलीर्णं वा तदैवसंरम्भगोचराणामभयविलम्भा
चितिकोपप्रकर्षः । अतएवास्मदिति बहुवचनं सजीवम् ॥२॥ यदिति । प्र
तीयन्तेनमार्गौ व्याख्यातः । अवैषम्येण भणनमित्यनेन वाग्भेदः स्वरे

म्येण भणनं समता साऽभिधीयते। यथा। यच्चन्द्रकोटि
करकोरकभारभाजि बभ्राम बभ्रुणि जटापटले हरस्य।
तद्वः पुनातु हिमशैलशिलानिकुञ्जझाङ्कारडम्बरविरा
वि सुरापगाम्भः। अत्रोपक्रमादासमाप्तिस्फुटबन्ध
स्यानिर्वाहात्समत्वम्॥ ३॥ या पृथक्पदता वाक्ये त

---

सुह्रस्वान्त्याः व्यञ्जनेषु वर्गान्त्यादन्त्याश्च मृदवः कोमला वर्णाः। दीर्घाः
स्वराः व्यञ्जनेषु णकारवर्जटवर्गरेफशषहा अदन्त्यसंयोगाश्च प्रस्फुटाः।
शेषाणि व्यञ्जनानि दन्त्यसंयोगाश्चोन्मिश्रमध्यमा वर्णाः एषामन्यतमैर्व
र्णैर्यो बन्धनविधिस्तस्मिन् यद्वैषम्येण उपक्रमनिर्वाहादिना करणेन
भणनमुक्तिः सिद्धिः सा समता। नचेयं दोषाभावमात्रमेकजातीयव
र्णपरिचयप्रबन्धप्रवेशनिर्वाहाणां शक्तिव्युत्पत्तिरूपतया प्रधानोत्कर्ष
पर्यवसानात्। नच दोषाभावस्यैवंरूपता केनचित्प्रतिषिद्धा॥ अत एव
श्लेषप्रसादयोरपि गुणभावः सिद्धः। ननु रक्ताशोककृशोदरीकानुगतास्य
क्त्वानुरक्तजनको दृष्टेति मुधैव चालयसि किं वाताभिभूतं शिरः।
उत्कण्ठाघटमानषट्पदघटासंघट्टदष्टच्छदस्तत्पादाहतिमन्तरेण भव
तः पुष्पोद्गमोऽयं कुतः। इत्यत्र वैषम्यं दोष एव स्यात्। नह्यत्र
मुक्तस्थाने स्फुटता। तस्माद्यत्किञ्चिदेतत्। तदेवं निर्वाह्यत्रैविध्या
त्समता त्रिरूपा [illegible]ति। ग्राम्या परुषा उपनागरिका च। तत्रोन्मिश्र
प्रायसन्दर्भनिर्वाहे ग्राम्या। यथा। पुरः पाण्डुच्छायं तदनु कपि
लिम्ना कृतपदं ततः पाकोद्रेकादरुणगुणसंवर्द्धितवपुः। शनैः कोशार
म्भे स्फुटनिजविष्कम्भविषमे वने पीतामोदं बदरमरसत्वं कलयति।
परुषा यथा। यच्चन्द्रेति। बालेन्दुमयूखमुकुलजालनिचुलितासु परमे
श्वरजटावल्लरीषु भ्रमणाऽऽद्ध्यासादिवाद्यापि हिमाद्रिकुञ्जेषु झाङ्का
रि गङ्गाम्भ इति प्रतीयमानोत्प्रेक्षा। उपनागरिका यथा। वसने प
रिधूसरे वसाना नियमक्षाममुखी धृतैकवेणिः। अतिनिष्करुणस्य शुद्ध
शीला मम दीर्घां विरहव्यथां व्यनक्ति। अत्रास्मत्सहाध्यायिनः
पूर्वार्द्धमेवोपनागरिकोदाहरणं मन्यन्ते। उत्तरार्द्धे हि निष्करुणेत्यादिवर्णा

न्माधुर्यमिति स्मृतम्। यथा। स्थिताः क्षणम्पक्ष्मसु ताडिताधराः पयोधरोत्सेधनिपातचूर्णिताः। वलीषु तस्याः स्खलिताः प्रपेदिरे चिरेण नाभिम्प्रथमोदबिन्दवः। अत्र पदेषु संहिताभावात्पृथक्पदत्वेन माधुर्यम् ॥ ४॥

निवेशनादुन्मिश्रत्वमेव। इयमपरोन्मिश्रा सन्दर्भजातिर्यत्कोमलकठोरवर्णतुल्यतयानिर्वहणमिति ॥ ३॥ पृथगिव पदानि यत्र भासन्ते स पृथक्पदः सन्दर्भ इत्युपमागर्भो बहुव्रीहिश्च। तस्य भावस्तत्ता। माधुर्यमुक्तस्वरूपन्तच्छब्दगतम्पृथक्पदतया विच्छिद्यत इति। तदेव माधुर्यमुक्तमौचित्येन हि समासव्यतिरेक आकृष्यते कदाचिद नुद्धतो वा समासः ॥ अनुद्धतिरनुल्लेखः। तदुक्तम् ॥ अवृत्तिर्मध्यवृत्तिर्वा माधुर्ये घटना तथेति। अतएव समासनिवृत्तिपरमेतदिति वामनः। कश्चित्समासो रसौचित्येनाकृष्टः परिभाव्यमानो मनीषिभिश्चमत्कारकारणम्भवति। यथा। तेषाङ्गोपवधूविलाससुहृदां राधारहःसाक्षिणां क्षेमन्तत्र कलिन्दशैलतनयातीरे लतावेश्मनाम्। विच्छिन्ने स्मरतल्पकल्पनमृदुच्छेदोपयोगेऽधुना ते नूनञ्जरठीभवन्ति विगलन्नीलत्विषः पल्लवाः। अत्र तच्छब्दो येषां विलाससम्पत्तिस्वभावलब्धप्रकर्षाणामनुभव एव साक्षीति विशेषप्राधान्यविवक्षया न समासेनानिगमनात्। न या कापि वधूरपि तु गोपसंबन्धिनी कृतगोपाचारचा... ...दीना नान्यत्र नीरसः यत्रेक्षचन सौहार्द्दं किन्तु विलासएव। सोपि न यःकश्चिदपि तु गोपवधूसम्बन्धीत्येवम्बहूनाम्पिण्डीभावविवक्षया समास एवोचितः। एतावतैवच्छेदोप्युचित एव सर्वस्वायमानत्वात्। तत्सम्बन्धजनितस्य विशेषस्य पृथगेवोक्तिरुचिता। राधारहःसाक्षिणामित्यत्रापि समासः पूर्ववत्। यद्यपि राधासम्बन्धस्य वैवक्षिकम्प्राधान्यमिति न समासस्तथापि प्रतिभासते तथापि यदन्यस्य राधारहसि निवेशः क्षम इति भावयन्सुहृदामित्यपहाय साक्षिणामित्युक्तवान्। साक्षीहि तटस्थ एव व्याप्रियते। तेनावश्यकर्त्तव्यसाक्षिताप्राधान्यविवक्षया समभवति विरोधादित्यवसेयम्। स्थिताइति। पक्ष्मावस्थाने

अनिष्ठुराक्षरप्रायं सुकुमारमिति स्मृतम् । यथा । म
ण्डलीकृत्य बर्हाणि कण्ठैर्मधुरगीतिभिः । कलापिनः
प्रनृत्यन्ति काले जीमूतमालिनि । अत्र सर्वकोमलत्वे
ऽसतिश्लेषविपर्ययदोषशैथिल्याभावाद्बाहुल्याद्वर्णाना
मनैष्ठुर्यात्सौकुमार्यम् ॥५॥ यत्र सम्पूर्णवाक्यत्वमर्थ

---

ऽधरताडने स्तनतटनिपाते वलिभङ्गस्खलने नाभिनिम्नप्राप्तौ जलबि
न्दूनाङ्कृतेता निर्दिष्टास्वाञ्चन्द्यसुन्मीलितम् । तथाच गौर्या बाह्यसंवे
दनाभावस्तेन भगवद्गतो ऽनुरागप्रकर्षः प्रथमपादेन । निदाघता
पच्छिदा रजोहरणेन वसुन्धरा सौरभोन्मीलनेन मयूरकेकायितादि
ना त्रिभुवनस्यापि ये चमत्कारास्पदमिति ध्वनितम् । तथाभूताना
मथ संवेदने पूर्व एवाभिप्रायः । ताडितेत्याकारेण च्छेदोन्मेषः पयो
धरेत्यादावोकारः । धकारतकारौ ॥ ४ ॥ अनिष्ठुरेति । समस्त एव गुम्फो
द्वित्राणि त्रिचतुराणि प्रस्फुटान्यक्षराणि निवेशयन्ते स किलान्तरान्त
रोपदंशन्यायेन चित्रास्वादपर्यवसायी सुकुमार इति प्राचाम्मतम् ॥
अतएव समताया भेदः । मृद्वीकापाकः पुनरन्या दृशोवक्ष्यते । अनि
ष्ठुरे सुकुमारव्यवहारोलोके दृष्टः [illegible] यादौ प्रथमपादे मण्डे
ति, कृत्येति, बर्हेति [illegible] संयोगत्रयम् । द्वितीय [illegible] पादे ण्ठेति, र्मेति,
[illegible] न्यस्य गीतिदीर्घस्वरनिवेशोरूपा [illegible] मा [illegible] रमादाय विशेष
च संयोग [illegible] प्रतिनृत्य [illegible] व्यक्तीतिचदीर्घविस
शोभाहेतुः । तृतीयपादे काले न [illegible] एव [illegible] दीर्घ [illegible] नन्तरान्तरेलि सैव वा
र्गसंयोगा इति व्यक्तम् । चतुर्थपादे [illegible] मारतेति वक्तव्ये प्रायशब्दः केन
सना । ननु अनिष्ठुराक्षरमयत्वं सुकु [illegible] चायमर्थगुणः स हि वाक्यार्थे
प्रयोजनेनेत्यत आह । अत्रेति । न [illegible] इति युक्तं शब्दगुणेषु परिग
धर्मिणि निरूप्यते अयन्तु पदसमुदाय [illegible] ॥ वागर्थाविवेति । अत्र वन्दे
णानम् । सम्मितत्वमन्यथाभविष्यति ॥५ [illegible] पुत्तम इत्यत्र स्थानिनीत्य
इत्युत्तमपुरुषवचनेनैवाहमिति प्राप्तमस्य [illegible] रमेश्वराविति । तावपि कि
भिधानात् । किमिति कर्मापेक्षायाम्पार्वतीप [illegible] नारायणादिवैधर्म्येण न
म्भूताविस्यतोजगतः पितराविति । तेन लक्ष्मी [illegible]

व्यक्तिं वदन्ति ताम् । यथा । वागर्थाविव सम्पृक्तौ वागर्थप्रतिपत्तये । जगतः पितरौ वन्दे पार्वतीपरमेश्वरौ ॥ अत्र वाक्यपरिपूर्णतयाऽर्थसमर्पकत्वादर्थव्यक्तिः ॥ ६ ॥ यदुज्ज्वलत्वम्बन्धस्य काव्ये सा कान्तिरुच्यते । यथा । निरानन्दः कौन्दे मधुनि विधुरे बालबकुले न साले सालम्बो लवमपि लवङ्गे न रमते । प्रियङ्गौ नासङ्गं रचयति न चूते विचरति स्मरल्लक्ष्मीलीलाकमलम

सत्कार्यत्वम् । एकशेषशब्देनैव मातृशब्दार्थः । स्त्रीपुंसयोरित्यौचित्या द्वागर्थाविवेति । किमर्थं नमस्कुरुत इत्यत्र वागर्थप्रतिपत्तय इति । तदेवं यादृशो यावांश्च विशेषणविशेष्यप्रकारोभिमतः स सर्व एव वागित्याद्युपात्तशब्दसमुदायमात्रेण निष्प्रत्यूहमवगम्यत इत्यर्थव्यक्तिशब्दार्थव्याख्यानेन स्फुटयति । अत्रेति । अर्थसमर्पकत्वमित्यनेन शब्दगुणता व्यक्तीकृता ॥ ६ ॥ यदुज्ज्वलत्वमिति । किम्पुनरिदमुज्ज्वलत्वन्नाम । केचिदाहुरनुप्रासबहुत्वमिति । तदसत् । तस्याः सुस्नाय नेत्राभ्यां वारि प्रणयकोपजम् ॥ कुशेशयपलाशाभ्यामवश्यायजलं यथेत्यादावनुप्रासबहुलता [illegible] हि पुराणच्छायनामनन्ति । कान्तिविपर्ययः प [illegible] लक्ष्या दलेन सहोपमामिति । [illegible] इति । तस्मादप्रह [illegible] त्यस्य कीर्तिः । तद्यथा । कुसुमस्य धनुरिति प्रहत [illegible] त्यप्रहतम् । जलनिधाविति प्रहतम् । अधिजलधीत्यप्रहतम् । गुरुत्वमिति प्रहतम् । गौरवमित्यप्रहतमित्यादि । अत एव प्रहतभङ्गा । चमत्कारित्वन्तु सहृदा ह्लादकत्वमस्ति हि तुल्येपि वाचकत्वे पदानाङ्कश्चिदवान्तरो विशेषो यमधिकृत्य किञ्चिदेव प्रयुञ्जते महाकवयो न तु सर्वं यथा पद्मवक्तव्ये किसलयमिति । स्त्रीति वक्तव्ये कान्तेति कमलमिति वक्तव्ये राजीवमित्यादि । एतदेव महाकविभिरुपेयते । [illegible] समं समग्गेसु । सीमठेउण मुस्सितम्मि सच्चणवच्छेत्र । क

[illegible] न्यविव सम्भवोत [illegible] पसंवमिराणीछाया । यथा । व्रजति गगनम्भ [illegible] सौहार्दं अत एवाह । पराणचि [illegible] गीत्येवतपदैरा [illegible]

घुपानम्मधुकराः। अत्र बन्धस्यच्छायाबत्वेनौज्ज्वल्य
न्तदेवकान्तिरुच्यते ॥७॥ विकटाक्षरबन्धत्वमार्यैरौ
दार्य्यमुच्यते ॥ यथा ॥ आरोहत्यवनीरुहम्प्रविशति
श्वभ्रन्नगैःस्पर्धते खं व्यालेढि विचेष्टतेक्षितितले कु

---

न्तवर्णानुप्रासोपि कान्त एव भवतीतिमत्वा ऽनुप्रासोत्कटमुदाहर
ति । निरानन्दइति । अस्ति कुन्दे मधुपरन्न कमलसजातीयमित्या
सक्तोनानन्दमलभत । कुन्दस्येति प्रकृतङ्कौन्दमित्यप्रकृतम् । बाल
त्वे बकुलकुसुमानान्न मधुप्रादुर्भाव इति एतत्काले रतिन्नप्राप्तवा
निति विधुर इत्यनेन व्यज्यते । कालान्तरेपि शाले मधुनोऽसम्भवा
दालम्बः प्रत्याशामात्रबन्धोपि न तस्यासीत् । आमोदप्रकर्षाद
न्तः क्षणान्निपत्य रसमनासादयल्ँ लवङ्गमनुसरतीति लवमित्यनेन
ध्वन्यते । एवमुत्तरार्द्धेपि पदस्वरसोगवेषणीयः । उक्तमेव विशेषम
भिसन्धायव्याचष्टे । अत्रेति । छायौज्ज्वल्यङ्कान्तिरित्येकार्थतया लो
के प्रसिद्धन्तदिह यथा शब्देषु सङ्गच्छते तथा पूर्वाचार्यप्रसिद्ध्याविवे
चनीयमित्यभिप्रायः ॥७॥ विकटेति । विकटैरक्षरैर्बन्धो यस्य तस्यभाव
स्तत्त्वम् । अस्ति तावन्नृत्यन्तीवपदानीति सहृदयानाङ्कश्चिदर्थे व्यवहा
रः । सच न निर्विषयोनाप्यस्य विशेषइति तत्प्रमाणकमेव गुणान्तर
मवस्थितमिति कश्चिद्व्याचष्टे । तथातु न कथञ्चित्स्वरूपमुद्भिद्यदर्शित
म्भवति । अन्येतु विसर्गानुप्रासादिग्रन्थिलत्वमत्राभिमतमित्याहुः॥
तदपिन । और्जित्याऽबहिर्भावप्रसङ्गात् । तस्मादिदमत्र वाच्यम्
विकटानिविशालानि प्रभूतानीतियावत् । तथाभूतान्यक्षराणि दीर्घा
नुस्वारादिरूपाणि सहृदयसंवेदनीयानि । अतएव नृत्यतुल्यता । य
थाहि नृत्येङ्गानामङ्गुल्यादीनामाकुञ्चनप्रसारणक्रमेण रञ्जकत्वन्तथा
त्रापि । तथाहि आरोहतीत्यादौ प्रथमपादे आकारोकाराभ्याम्प्रसारः।
हत्येवेति सङ्कोचः । नीरुहइतीकारविसर्गाभ्याम्प्रसारणम् । नगैः स्पर्द्ध
त इति विसर्गसंयुक्ताक्षरैर्विकाशः । द्वितीयपादेपि प्रसारणोपक्रमस्य
तइति नैवनिर्वहणमन्तरान्तरवरोहक्रमोभवति । नचात्र यतीनां

ञ्जोदरे लीयते। अन्तर्भ्राम्यतिकोटरस्यविलसत्याल
म्बते वीरुधः किन्तद्यन्न करोतिमारुतवशंयातःकृशा
नुर्वने। अत्र विकटाक्षरबन्धत्वे नृत्यद्भिरिवपदैर्यद्वाक्य
रचना साउदारता॥८॥श्लाघ्यैर्विशेषणैर्योगोयस्तुसा
स्या दुदात्तता। यथा। श्रुत्वायंसहसागतान्निजपुरात्
त्रासेन निर्गच्छतांशत्रूणामवरोधनैर्जललवप्रस्यन्द
तिम्यत्पुटाः। शुभ्रेसद्मनिपल्लविन्युपवने वाप्यान्तवा
म्भोरुहिक्रीडाद्रौच सशाद्वलेविवलितग्रीवैर्विमुक्ताद्

सन्निवेशोभिमतः। मारुतवशं यात इत्यनेनोन्मादरोगगृहीत इति
शब्दमूलानुस्वानबलेनावगम्यते। उन्मादगृहीतोपि वृक्षारोहणादिक
मसमञ्जसमव्यवस्थितञ्च करोति। नवइत्यनेन यत्र सर्वथैव प्रतीका
रासम्भवइति निरङ्कुशोन्मादचेष्टितमेवोपबृंहयति। नगैः स्पर्द्धते पर्व
तोच्छ्रायमनुकरोतीति दूरप्रसृतउन्मादः। खंव्यालेढीत्यत्रापि तथैवाभि
प्रायः। किन्तद्यदिति न शक्यते गणयितुमुन्मादचेष्टितानीति प्रकाश
न्ते त्येतिग्रन्थिलाविच्छेदात्। प्रसारणस्य पर्यवसानं श्वेत्यनेन प्रविश
तीति सङ्कोचः। अतएव परस्मैपदयोर्निरन्तरमावापः कान्तिविशेष
करत्वादुपादेयएव भवतीति॥८॥ श्लाघ्यैरिति। उत्कर्षवानुदात्तो लोके
प्रसिद्धोबहुनाम्मध्ये यः श्लाघते स उत्कर्षवांस्तेन श्लाघ्यत्वमुदात्तल
क्षणान्तदिह काव्ये वाक्यार्थपोषाधायकतया सहृदयहृदयावर्जनक्षम
त्वेन श्लाघाविषयत्वे विशेष्यत्वञ्च वाक्यार्थोऽतस्तद्विशेषणपदेषु य
थोक्तरूपउत्कर्षोभिमतोऽनुदारश्चायङ्गुणइति स्वरूपविशेषकृतात्का
न्तिशरीरान्तर्गताच्चमत्कारित्वाद्भिद्यते नचात्र गुहतिरभिमतेति नैक
मपि कान्तिरूपमस्ति। अतएव पुराणच्छायमुदाहरति। श्रुत्वेति।
श्रुतिमात्रेणैवेयन्दशा दर्शनेतु न ज्ञायते कथम्भविष्यतीति। यमिति।
नह्यन्यस्य श्रुतमात्रस्य तादृशप्रभावसम्भावना। सहसेति। यावत्क्री
डासहचराणान्धवलगृहादीनामपिच प्रेमानुरूपमापृच्छ्यते तावानपि
समयोनलब्धइति ध्वन्यते। आगतमिति। निष्ठाप्रत्ययेन चेदिच्छतिसि

शः। अत्र शुभ्रेपल्लविनि नवाम्भोरुहि इत्यादिश्लाघ्य विशेषणोपादानादुदात्तता ॥ ९ ॥ ओजःसमास भूयस्त्वम्। यथा।जयतिभुजगरज्जुग्रन्थिनिष्पीडितेन्दुस्रवदमृतनिवृत्तप्रेतभावैः कपोलैः। विरचितनुतिबन्धोमूर्ध्निसद्यः पुरारेः परिणतबहुकल्पब्रह्मणां

---

द्रुमेवागमनमिति द्योतयति। निजेति। यस्यान्येनधर्षणं स्वप्नेपि न बुद्धिविषय आसीत्। सोपद्रवस्यापि यस्य न त्यागः कदापि कथञ्चिद्भूदिति व्यज्यते। निर्गच्छतामिति। हृदयवैमुख्येन पुनः पुनरवतिष्ठमानानामसंभवद्रूपं निर्गमनमिति द्योत्यते शत्रूणामिति बहुवचनेन यदैकावस्कन्दमुद्दिश्यायम्प्रचलति तदा सर्वेषामियन्दशा भवतीति प्रत्याय्यते। अतएवासमासः सजीवः। वियोगवेदनादूनमानसानामुद्गतोपि बाष्पस्तावादन्तरैव विच्छिद्यतइति लवपदेनध्वन्यते। पुनः समागमाशंसनशीलानाममङ्गलभिया बाष्पस्तम्भोलवपदरहस्यमित्येके मन्यन्ते। अन्यस्य बाष्पस्य निर्गमनानुपपत्तौ पुटयोरार्द्रभावमात्रम्। शुभ्रइति। यत्र चन्द्रातपेनपल्लविताः कान्तयः क्षणदाविलासविहारेषु कामपि रसमात्रामुत्कर्षयन्तीति व्यनक्ति। तदनन्तरमेव बाष्पामित्याह। नवाम्भोरुहीति। पूर्ववत्सम्भोगोद्गारः सश्राद्धलइत्यनेन रतिकुतूहलोत्कण्ठितानामद्रिशृङ्गारोहणश्रान्तानान्तदेवास्तरणमिति प्रकटीक्रियते। विवलितग्रीवतयाच पद्भ्याम्पलायनमेव नतु शरीरवलनमपीति। शृङ्गाराङ्गयानकएव रसःस्थायीति ध्वनितम्। तदेतत्सर्वमभिप्रेत्याह। अत्रेति ॥ ८॥ अरीतिमत्करणोक्तमभिप्रेत्यौजोलक्षणमाह। ओजइति। वैपुल्यवृत्तेर्बहुशब्दस्येयसुनि भूयइतिरूपम्। तथाच समासस्य भूयस्त्वं वैपुल्यविकटत्वमितियावत्। नचैवं गौडीयारितिरेवेयमिति वाच्यम्। क्वचित्समासभूयस्तामात्रस्यैवौचितीवशेन विशेषशोभावहत्वात्।यथा। वाद्यन्तिदिग्गजगण्डुकपर्वौभिर्न्नलस्तादृति। नच समासाभावोनोचितः। नत्द्येक एव समासोरूपभेदमादाय गुणत्वमनलङ्कारत्वञ्च प्रयोजयतीति किमनुपपन्नम्। एवम्प्रकृतोदाहरणेपि। त

ब्रह्मघोषः । अत्र भुजगरज्जुग्रन्थीत्यादिना समासभू
यस्त्वादोजः ॥ १० ॥ और्जित्यङ्गाढबन्धता । यथा ।
अस्मिन्नीषद्वलितविततस्तोकविच्छिन्नभुग्नः किंचि
ल्लोलोपचितविततःपुञ्जितश्चोच्छ्रितश्च धूमोत्पीडस्त
रुणमाहिषस्कन्धनीलोदवाग्नेः स्वैरंसर्पन्सृजतिगगने
गत्वरानभ्रभङ्गान्। अत्र गाढबन्धस्य स्पष्टमेव प्रतिभा

थाहि । परिणताः परिणामङ्कृताः । बहूनाङ्कल्पानामभ्यासा इति चतु
र्णाम्पदार्थानाम्भिन्नत्वे चत्वारि पदानि समबहुव्रीहिरूढिभिर्भुजग
रज्जुभिरिति ग्रन्थिदृढताबोधनाय रूपकमतएव निबीत्युपसर्गस्तात्प
र्यवान् । सद्योविरचिततनुतीत्यनेन कपालानामसाधारणोव्यापारोबन्धो
हि बाह्यरूपस्तात्त्वादिकमन्तरेण न निष्पद्यते जीवनानन्तरमेव
आसावेशात्स्तुतिरूपएव ब्रह्मघोष उदचरदिति भगवतस्त्रैलोक्यग्रहे
निरङ्कुशप्रभावः सद्यः पदेन सूच्यते । अथवा वेदागमानामात्मला
भानन्तरमेव परमेश्वरस्तुतिरूपतात्पर्यावसानमिति सर्वस्या अपिश्रुतेः
परमेश्वरप्रवणत्वमनन्यसाधारणभक्तिप्रह्वताञ्च कविरभिप्रैति । पुरारे
रित्यनेन संहारिरूपता भगवतः प्रकृतपोषानुगुणा प्रकाशिता ॥१०॥ औ
र्जित्यमिति । ऊर्जितोमहाप्राणस्तस्य भावऔर्जित्यन्तत्र सन्दर्भस्य म
हाप्राणतागाढत्वमन्तरान्तराविलम्बितनयद्भिः प्रयोगैः कुण्डलत्वम् ।
गुणसामान्यलक्षणादतिप्रसङ्गोनास्ति । तथाहि । प्रकृतोदाहरणे प्र
थमपादे विच्छिन्नभुग्नइत्यत्र तालव्यद्वयम् । कण्ठ्यदन्त्यसंयोगौ प्रस्फुटो
न्मिश्रौ । अन्ये मृदवः । द्वितीयपादे ओष्ठ्योपध्मानीयतालव्यचतुष्कसं
योगाः प्रस्फुटाः स्वरव्यञ्जनमध्येविसर्गपाठ उभयसंज्ञाभिप्रायेणेति
दुर्गसिंहः । तेन तदादेशस्यापि व्यञ्जनत्वमन्ये मृदवः । तृतीयपादे
दन्त्योष्ठ्यदन्त्यकण्ठ्यसंयोगाउन्मिश्रा अन्ये मृदवः । चतुर्थपादे रेफा
न्तसंयोगामृदवोयइति न क्वापि कठोरता प्रतिभासते । तथाच प्र
थमतृतीयाभ्यामत्र द्वितीयचतुर्थयोर्गाढत्वम् । तथा । हस्ते लीलाक
मलमलकम्बालकुन्दानुविद्धमित्यादेरगाढप्रथमतृतीययोरप्यस्ति गाढ

नादौर्जित्यम् ॥ ११ ॥ प्रेयः प्रियतराख्यानंचाटूक्तौ यद्विधीयते । यथा । सौजन्याम्बुनिधे बुधप्रिय गुण प्राकारधर्मद्रुमप्ररोहप्रतिपन्नवत्सल महात्यागिन्विवेकाश्रय।लक्ष्म्यावासमनस्विनीमनसिजव्यापारदीक्षागुरो श्रीमन्मुञ्ज किमित्यमुञ्जनमुपस्प्रष्टुं दृशा

---

शीलक्षाप्रमाणताव्यक्तेत्याह। अत्रेति ॥११॥ प्रेयइति। परप्रियाख्यानञ्चाटूक्तिस्तत्र यद्विधीयते स प्रेयोनामगुणः किन्तु क्रियत इत्याह। प्रियतराख्यानमिति। प्रत्ययांशेन।त्पर्यंलोकेसाधारणएवप्रियइत्युच्यमानेयस्तत्रासाधारणः प्रकर्षोवसीयतेसइत्यर्थोभवति। एतेन लक्षणपदेद्वयमुन्व्याख्यातः। उक्तिखण्डैरुपचितोर्थःसन्नसन्वाभवतुकविप्रतिकृष्टासूक्तिरेकएवत्रिभुवनेभूयसीनामपामधिष्ठानमेवं भवानपि तत्स्थानीयस्यसौजन्यस्येति प्रतीयते। बुधप्रियेतिबहुव्रीहितत्पुरुषाभ्यामर्थद्वय मुपात्तम्।सूक्ष्मगुणप्रतिबिम्बभासितयायावदभिमतदायितयाचप्रीतिध्वनितयाचप्रकर्षमर्पयति। गुणप्राकारेति। यथाप्राकारेउपर्युपरिशिलादीनामवस्थितिरेवमहमहमिकयात्वयि गुणानामथवायथाप्राकारः कलत्रावेक्षणस्थानमेवंभवानपिगुणानामेवप्रोच्यते। धर्मद्रुमप्ररोहेति।प्ररोहः प्ररोहोङ्कुरः। तेनातिजरतोभग्नानेकविक्रमादित्यादिशाखस्यधर्मतरोस्त्वमग्रिमःसंतानोवलम्बः।यदिवाधोमुखीलम्बमानलताप्ररोहः। तथाच धर्मतरोरुपरिब्रह्मलोकादिबद्धविस्तारस्यभगवद्रूपःप्ररोहोभूपृष्ठमधितिष्ठतीतिकोपिप्रीतौप्रकर्षः।प्रतिपन्नवत्सले त्युपकर्त्तव्यतयाप्रतिपन्नः स्वीकृतस्तत्रवत्सलोफ्कटितिस्नेहार्द्रमनाः करणस्तेनाङ्गीकृतभङ्गभीरुतामात्रेण पुरुहूतादिष्वनापिश्लेषाविश्लेषान्विततयाबलिकर्णादिवत्किंतुभवान् सिन्धुरिववाञ्छितादिकमुपकारंकरोतीतिसमानंपूर्वेण। महात्यागिन्निति।त्यागिनामपियःपूज्यः समहात्यागीतेननूनंदधीचिप्रभृतयोविश्राणितार्थाअपि नतवतुल्यतामारोढुमीशतेइतिपूर्ववत्। विवेकाश्रयइति। यथाकर्त्तव्यताज्ञानंविवेकः।तस्याश्रयोविश्रान्तिस्थानंयदित्वंमूलस्तम्भोनाभूस्तदा कमाश्रित्यविवेकप्रासादः पदमारोपयेदित्या

नार्हसि । अत्रसौजन्याम्बुनिधेइत्यादीनांप्रियार्था
नांपदानामुपादानंप्रेयः ॥ १२ ॥ व्युत्पत्तिः सुप्तिङां
या तु सोच्यते सा सुशब्दता । यथा । तस्याजीवनि
रस्तुमातरवमाजीवस्य माजीवतोभूयाद्वाजननेः कि
मम्ब जनिनाजन्तोर्वृथाजन्मनः। यस्त्वामेवनवन्द
ते न यजते नोपैति नालोकतेनोपस्तौति न मन्यते न
मनुते नाध्येतिनध्यायति । अत्राजीवनिरजननिरि

दिकंस्वयमूहनीयमिति तदेतत्सर्वंसूचयन्नाह । प्रियार्थानांपदानामि
ति। प्रियार्थानांप्रीतिप्रकर्षार्थानाम्॥१२॥व्युत्पत्तिरिति । विशिष्टाउत्प
त्तिर्व्युत्पत्तिःसुबन्तानांतिङन्तानांचबहूनामपिचकारादिमन्तरेणघट
नासौष्ठवार्पकतयाचमत्कार कारित्वमित्यर्थः। आक्रोशेनञ्यनिः। किम
र्थमिदमाशास्यतेइत्यतआह।जीवतोवमानइति । जीवतोवमाननंमाभू
न्मरणमपितदपेक्षयावरमित्यर्थः। आयुः कर्मवशात्तथाभूतोपिजीविष्य
तीतियदितदाऽजननिरनुत्पत्तिरेव भूयात्कुतइत्यतआह । किमिति ।
जनिनेतिपुल्लिङ्गनिर्देशश्चिन्त्यइकः स्त्रीप्रकरणेविधानात् । जनिरुत्प
त्तिरितिसाहचर्याच्च । कस्येदंसर्वमाशास्यतइत्यतआह।यस्त्वामेवेति।
त्वदन्यदेवताप्रवणस्यजन्मादिकं विफलमितिवदतः कोपिभगवतीवि
षयेभक्तिप्रकर्षोवसीयते । अन्येतुव्याचक्षते कवेः पदपरिचयान्तरीव्यु
त्पत्तिः । पदंचसुप्तिङन्ततयाद्विविधं तयोरेकमुभयंवायत्रनिवेश्यमानं
व्युत्पत्तिमभिव्यनक्तितत्रसौशब्द्यमिति लक्षणार्थः । तथाहिअजीवनि
रितिसोपाधिसिद्धकृदन्तंजीवितमुपन्यस्यतदेवजीवस्यजीवतइति नि
रुपाधिसिद्धसाध्यार्थाऽभिधायिकृदन्तमुपन्यस्तवान् । मातरवमेति ।
मातृत्वमुभयथोत्प्रेक्षितवान्।द्वितीयपादे जनिजीवमित्रोपपत्तिष्वजनि
नाजन्मेतितमेवप्रकारद्वयेनोपात्तवान्। एकैकधातुप्रपञ्चानांसुबन्तानां
दुर्घटमेकसन्दर्भप्रवेशंतत्तदुचितक्रियासंगमनेन विहितवानितिसुबन्त
व्युत्पत्तिरितिदिक्। अवमेतिअऽरित्वस्य नुपज्यते। वृथादिवापूर्वेणा
पिसंबध्यते । अथोत्तरार्द्वेतिङन्तव्युत्पत्तिः। तत्रपूर्वप्रकारस्मिंदोनघटते

त्यादीनां सुबन्तानांवन्दतेयजत इत्यादीनान्तिङ्
न्तानां च व्युत्पत्तिःसुशब्दता॥ १३॥ समाधिःसोन्य
धर्माणांयदन्यत्राधिरोपणम्। यथा। प्रतीच्छत्याशो
कीं किसलयपरावृत्तिमधरः कपोलःपाण्डुत्वादवत
रतितालीपरिणतिम्। परिम्लानप्रायामनुवदति दृ
ष्टिः कमलिनीमितीयं माधुर्यं स्पृशति च तनुत्वं च भ
जते। अत्रप्रतीच्छत्यवतरति अनुवदति इत्यादिचे
तनक्रियाधर्माणामचेतनेष्वधरादिषूपचारेण। ऽध्या

अतः साभिप्रायाणामेवोत्प्रेक्षणांसावाच्या। तथाहि वन्दतइतिआयमा
नमात्राऽभिवाद्यतयात्रिभुवनमातृता। यजतइतिसमस्तदेवतारूपत्व
म्। उपैतीति। सर्वोपगम्यतयाजगच्छरण्यत्वम्। आलोकतइति। विश्वव
र्त्तियावन्मनोहरत्वम्। स्तौतीति।समस्ताभिमतदायिता। मन्यतइति।
निखिलज्ञेयस्वरूपता। मनुतइत्यवधारणीयतयातत्त्वात्मकता। अध्येती
ति। कान्तारादिस्मर्त्तव्यतयादुर्गादिभेदेन प्रपञ्च्यमानत्वम्। ध्यायती
ति।निर्द्वन्द्वासनविषयतया प्रत्यग्ज्योतीरूपतेतिपरापरभेदभिन्नाभग
वतीस्तुताभवति। मन्यतेमनुतेइतियथासामान्यविशेषाभिधायिनौत
थाऽध्येतिध्यायतीअपि। तिङन्तानांचदुर्घटोपिपरस्परमन्वयःकेनापि
प्रकारेणघटितइतिपूर्ववद्बोद्धव्यः।तदेतदाह। अत्रेत्याऽऽदिपदसुभान्यां
संबध्यते तेन जीवितवर्गोजनिवर्गश्चाभिमतः।मतिः सकृदेवावृत्तइतिनो
क्तः भूयसाहिलोकेव्यपदेशोदृश्यतइति॥१३॥समाधिरिति। सम्यगाधान
मारोपणंसमाधिः।सम्यक्त्वंचवक्रतालोकातिगत्वंनतदधिकभावः। तदे
दंलक्षणेस्फुटम्।कमलानिनिमीलन्तिकुमुदान्युन्मिषन्तिचेत्यादौव्यभिचा
राच्च।तेनसंबन्धितानधर्मविशेषणमत्राभिमता।अलंकाराद्भेदश्चतुर्थेवक्ष्य
ते।प्रतीच्छतीति।प्रत्येषणंदीयमानस्यग्रहणंचेतनधर्मःसविरहवत्याअ
चेतनेऽधरेसमारोपितः। किसलयकान्तिमितोमन्दीभूतामवगमयति।दे
यस्यदातुरपसरणेऽन्यत्रसंक्रान्तौचप्रत्येषणनिर्वाहाच्च। तथाचाऽशोक
किसलयेभ्योपिकोमलपाटलत्वमधरस्येतिमाधुर्यपोषः। तदभिमुख

रोपणंसमाधिः ॥१४॥ अन्तः संजल्परूपत्वंशब्दानां सौक्ष्म्यमुच्यते। यथा। केवलं दधतिकर्तृवाचिनः प्रत्ययानिहनजातुकर्मणि। धातवःसृजतिसंहृशास्तयः स्तौतिरत्रविपरीतकारकः। अत्र श्रुतावगतवाक्यार्थस्यसृजतिसंहरतिशास्तिस्तूयतइतिशब्दानामन्तःसंजल्परूपेणसूक्ष्मतयासूक्ष्मत्वम् ॥१५॥ ध्वनिमत्तातु गाम्भीर्यम्। यथा। मौलौ धारय पुण्डरीकममि

---

त्तंनस्रवतरणमपिचेतनधर्मः सोऽचेतनेकपोलेसमारोपितः किंचित्पाण्डुतामवद्योतयति। नच प्रत्येषणावत्सामस्त्येन ग्रहणमपितुसंमुखीभावमात्रमित्याशयात् तथाचपूर्ववन्माधुर्यंपुष्णाति अनुवादोपिचेतनधर्मएवसोऽचेतनायांदृष्टावारोपितः पर्युषितकमलच्छायासवर्णतामेवात्रबोधयति।परप्रकर्षाभिमुखेपिविप्रलम्भेकदाचित्संकल्पोपस्थित प्राणनाथायां दृष्टौकान्तीभवतीतिप्रायःपदेनसूचितम्। स्पर्शस्यमाधुर्यविषयेऽसंभवात्स्पृशतीत्यप्यारोपः।प्रथमविग्रहशोभाविर्भावमभिव्यनक्ति।चेतनक्रियेति।प्रकृतापेक्षयाक्रियाक्रियावतोःसादृश्याभावान्नेयंगौणीकिंतूपचरितैव शुद्धेत्याह। उपचारेणेति। एतेनरूपकादिभ्योभेदः समर्थितः ॥१४॥ अन्तरिति। यथाकरितुरगादिरूपकाणांपाषाणशिलादावभिव्यक्तमवस्थितौसूक्ष्मरूपता तथाशब्दानांश्रूयमाणानामपि कथमन्यथावाक्यार्थभावनदशायांशेषनियमेनोन्मेषः। केवलमित्यादौ सृजतिसंहरतिशास्तयोधातवः कर्त्र्येवभगवद्विषयेप्रयुज्यमानाः प्रत्ययान्योजयन्तिनकर्मणीतिवाक्यार्थोयदाभाव्यतेतदैवायंसृजतिसंहरतिशास्ति नतुसृज्यतेसंह्रियतेशिष्यतइतिशब्दाः प्रकाशन्ते। एवंस्तौतिर्विपरीतकारकः। अत्रस्तौतिः कर्मण्येवप्रत्ययप्रयोजकोनकर्तरीतिवाक्यार्थभावनासमयएवनायंकिञ्चत्स्तौतिकिन्तुसर्वैः स्तूयतएवेतिशब्दाउन्मिषन्तितदेतदाह। अत्रश्रुतावगतस्येति।यावदेववाक्यंश्रूयमाणमवगम्यतेतस्यैवभावनापल्लवः पश्चादवसीयतइतिवटबीजन्यायमुपोद्बलयति। सोयंसहृदयप्रतीतिसाक्षिकोऽर्थः ॥१५॥ ध्वनिमत्तेति। ध्वननन्ध्वनि र्व्यञ्जना

तं तन्वात्मनो विक्रमं चक्राङ्कं वह पादयुग्ममवनिन्दो
ष्णा समभ्युद्धर । लक्ष्मीं भूनिकटे निवेशय भव ज्यायां
न्दिवौकस्पतेर्विश्वान्तःकरणैकचौर तदपि ज्ञातो ह
रिः खल्वसि । अत्र नाभ्यां पुण्डरीकधारणपरिमितवि
क्रमत्वं चक्राङ्कितकरत्वं दंष्ट्रया वसुधोद्धारणं वक्षस्थ

---

त्वाव्यापारः। स द्विविधः। शब्दध्वनिरर्थध्वनिश्च। येन शब्द एव ध्वन्यते स श
ब्दध्वनिरभिमत इति केचित्तन्न। शब्दस्यैव ध्वन्यतानङ्गीकारात्। नाभ्यां
पुण्डरीकधारणमित्यादिव्याख्याग्रन्थभङ्गप्रसङ्गाच्च। तस्माच्छब्दाश्रित
ध्वननं शब्दध्वनिरर्थाश्रितञ्चार्थध्वनिरिति वक्तव्यम्। प्रभूतध्वनिसम्ब
द्धपदकदम्बकस्य गाम्भीर्यम्। अथवा ध्वनयतीति ध्वनिः शब्दात्मकोऽय
मस्ति पदसमुदायस्तद्गाम्भीर्यम् तथाहि पुण्डरीकपदमस्ताबालसितच्छ
त्रे नियताभिधानशक्तिकं कांस्यतालानुस्वानस्थानीयां सिताम्भोजव्यक्ति
मुपजनयच्चोपलभ्यते। अनेकार्थनियताभिधानशक्तिकत्वाच्च। तदाह। अ
नेकार्थस्य शब्दस्य वाचकत्वे नियन्त्रिते। संयोगाद्यैरवाच्यार्थधीकृद्व्यापृति
रञ्जनमिति। एवं विक्रमादिषु। तथापि विक्रमः पौरुषं परिशिष्टः पादविक्षेप
श्च। चक्रं चक्रवर्तिचिह्नं रेखासन्निवेशलक्षणमायुधविशेषश्च। अभ्युद्धरणं स
म्यग्लाभपालनप्रापणमुत्थापनञ्च। लक्ष्मीः संपद्देवताविशेषश्च। ज्यायान्प्र
शस्यतरो वयोज्येष्ठश्च। इदमेवाभिसंधाय दिवौकस्पतेरित्युक्तं व्याचष्टे। अ
त्रेति। तदपीत्यपिशब्देन विरोधद्योतिना हरिर्भावमाचरन्निति प्रतीयते पु
ण्डरीकधारणादेरुभयतुल्यत्वान्मौलावित्यादिविरुद्धमलक्ष्य विपरीतस्था
नीयं विस्मौ ध्वनयत्प्रसिद्धिबलान्नाभ्यादिकमेव ध्वनयति। प्रसिद्धिरपि
हि विशिष्टार्थप्रतिपत्तौ कारणमेवेत्यभिप्रेत्य शब्दध्वनिप्रस्तावेप्यन्यद्व्या
ख्यातवान्। अन्यथा तु प्रकृतासंगतिशङ्कयानवाद्यार्थपुष्टिः स्यात्। सोयं
विरोधरूपमूलः प्रतीयमानव्यतिरेको वाक्यार्थः शब्दध्वनिश्चात्र जीवभू
तः। विश्वान्तःकरणैकचोर इत्यनेन त्रिभुवनमनोहरता। दिवानिशमन्तःक
रणानि चोरयन्न्यासकौशलाद्दिवाऽत्यन्तप्रसिद्धानि नारायणचिह्नानि गो
पायसीति प्रतीयमानोत्प्रेक्षा। ननु वस्तुध्वनिं शब्दशक्तिमूलमेके न मन्य

लनिवेशितलक्ष्मीकत्वमिन्द्रावरजत्वंच ध्वनतीति गाम्भीर्यम् ॥ १६ ॥ व्यासेनोक्तिस्तुविस्तरः । यथा। जनःपुण्यैर्यायाज्जलधिजलभावं जलमुचस्तथावस्थं चैनंनिदधतुशुभैःशुक्तिवदनैः । ततस्तां श्रेयोभिः परिणतिमसौ विन्दतु यथा रुचिं तन्वन्पीनस्तनि हृदि

स्तेकाथंतर्हि“पत्थिअणत्थसत्थरमत्थिमत्थं पत्थरत्थले गामे।उन्नअपओहरं पेक्खिअ उणजइ वससि ता वसस्सु,,इत्यादौ वस्तुवर्णनं नत्वत्रश्लेषन्यायेनवासमासोक्तिन्यायः सम्भवति।किंवालंकारध्वनावपिशब्दशक्तेरेवोपयुक्तेस्त्वत्मतः शब्दध्वनिः । येतुवदन्ति शब्दस्याभिधाव्यतिरिक्तावृत्तिरेवनास्तीति, लक्षणापितैरनङ्गीकरणीयास्यात्। नचानङ्गीकर्त्तव्येति वाच्यम्। गङ्गायांघोषइत्यत्रसमस्यनन्वयापत्तेः।प्रकृत्यनुगतस्वार्थाऽभिधानंहिविभक्तीनां व्युत्पन्नमितिघोषप्रतियोगिकाधिकरणभावयोग्यः कश्चिदर्थोगङ्गापदस्यवक्तव्यः । तथाचकान्यानामलक्षणा । एवंपुण्यत्वादिप्रतीतिस्तलएवभवन्तीध्वननमुपस्थापयतीत्यादिकमस्माभिःकाव्यप्रकाशविवरणेविपञ्चितमिहतु ग्रन्थगौरवभियाविरम्यते॥१६॥ व्यासेनेति यत्रस्तोकेपिवाच्ये वचनपल्लवश्चमत्कारकारीतत्रसएवगुणकक्षाधिरोहणमहतीति शब्दगुणेषुयुक्तोविवेकमतएवोक्तिंविशेष्यतयानिर्दिशति । जनःपुण्यैरित्यादौकथमहमित्यादौ निर्दिष्टोपिवक्त्राभिप्रायरूपोर्थउक्तिपल्लवेनप्रकर्षमानीयते । तथाहिजनइतितटस्थोत्त्यानमभेदृशानिभागधेयान्येनाहत्यननोनिर्वहति। पुण्यैरिति। बहुवचनेनानेकजन्मोपात्तानामेवेदंफलम् । यायादितिसम्भावनाऽभिप्रायेणलिङामुक्ताफलपरिणतियोग्य जलधिजलप्राप्तिसम्भावनापिकस्यचिदेवधन्यजन्मन इतिप्रकाशितेकोपिकारणप्रकर्षः । जलमुचइत्यनेनयेषांजलदानमेवव्यापारोऽपितुविश्वसंत। पच्छिदुराणामन्योपकारप्रवणतया शुक्तिमुखपर्यन्तमपितुनयनमुपपद्यतइति ।तथावस्थमित्यनेनयदैवसमरावस्थातदैवजलधरैः पानमाशंसामात्रगोचरोनतुपूर्ववत्संभावनामात्रगोचरोतएव शुभैरिति। समयविलम्बनस्यप्राक्तनपुण्यमानहेतुकत्वादित्यादिस्वयमवसेयम्।एते

तवायंविलुठति॥अत्रकथमहंत्वत्कुचतटेविलुठामीत्य
भिप्रायस्य विस्तरेणप्रकाशितत्वादयंविस्तरः॥१७॥
समासेनाभिधानं यत्ससंक्षेपउदाहृतः। यथा। समा
रुतिसमानीतमहौषधिहृतव्यथः। लङ्कास्त्रीणांपुनश्च
क्रेविलापाचार्यकंशरैः। अत्रकथाविस्तरप्रतिपाद्य
स्यार्थस्य प्रकृतसंग्रामरसविच्छेदाशङ्कयाश्लोकार्द्धमा
त्रेणोक्तत्वात्संक्षेपः॥ १८ ॥ यावदर्थपदत्वं चसम्मि
तत्वमुदाहृतम्। यथा। केचिद्वस्तुनिनोवाचिकेचि
द्वाचिनवस्तुनि। वाचिवस्तुनिचाप्यन्येनान्येवाचि
नवस्तुनि॥ अत्रार्थस्यपदानां चतुलाविधृतवत्तुल्य

---

नपदार्थैवाक्यरचनमितियदन्यैर्गुणान्तरमभिहितन्तद्विस्तारमेकमेव। घ
टनासौष्ठवमात्रोपयुक्तस्तुपल्लवोविशेषगुणेष्वस्माभिरभिधास्यते। त्वत्कु
चतटेलुठनमत्यल्पपुण्यस्यनसंपद्यत इत्येतावानेवार्थोविवक्षाविषय इ
तिकार्य्यविकाशस्यैवचमत्कारार्पणे प्रागल्भ्यमितिशब्दप्रधानकतया यु
क्तमत्रपरिसंख्यानमिति॥१७॥संक्षेपेणेति। अस्तिकश्चिद्विशेषोयत्रवाक्य
संकोचः प्रकृतौचितीवशेनचमत्कारकारणं तथाहि समारुतीत्यादौ
मारुतिनायदोषधेरानयनंयत्कृतया अथाहरणान्तदुभयमपीतिहासकथा
विस्तरेणप्रतिपादितमिहतुश्लोकार्द्धमात्रेणेतिशब्ददत्तमरस्वायंगुणो य
द्यपिभवतितथापियावद्विवक्षितोपादानकाव्यरूपेणार्थसंकोचोवक्तव्यः
सचतथाविधवक्रोक्तिसंकोच एव भवतीत्युक्तावेवसंकोचउल्लिखति।
कथमयंसंकोचः प्राप्तोचितभाव इत्याह। प्रकृतेति। अतएवोपाद्धि ममपी
तिहासार्थमपहायत्वराविष्टेनकविनाप्रकृतमुत्तरार्द्धं एवासंहितं पूर्वोत्त
रार्द्धस। मञ्जस्यायसंक्षिप्यैवप्रकृतमप्युक्तम्॥१८॥ यावदिति। यावन्तिव
र्णानिविनाप्रकृतमनुसर्तुमेवनशक्यन्ते तावन्मात्रमयत्वंवाक्यस्यसंमित
त्वम्। अतःसंक्षेपाद्भेदः। कवेः शक्तिव्युत्पत्तिभ्यामसत्यपिपल्लवे कदाचि
द्घटनालावण्यमुन्मिषत्येव। यथापूर्वमुदाहृतम्। कात्वंशुभेकस्यपरिग्रहो
वेत्यादि। अर्थव्यक्तिसंकरशङ्काप्यतएवनिराकृता। अस्त्युत्तरस्यांदिशिदेव

त्वेनसम्मितत्वम् ॥ १९ ॥ भावतीवाक्यवृत्तिर्याभावि कंतदुदाहृतम् । यथा । एह्येहिवत्सरघुनन्दनपूर्णच न्द्रचुम्बामिमूर्द्धनिचिरंचपरिष्वजेत्वाम् । आरोप्यवाहृदि दिवानिशमुद्वहामिवन्देथवाचरणपुष्करकद्वयंते ॥ अत्रप्रकर्षवशादनौचित्येनापिवन्देथवाचरणपुष्करकद्वयमित्यादीनामुक्तत्वाद्भाविकम् ॥ २० ॥ गतिनां

केचिदुदाहरन्तितदयुक्तम् । अनेननामपदयोः पल्लवरूपत्वात्संमितत्वाभावेकथमाभासत्वं भवतीति विस्मृतव्यभिचारिगुणप्रकरणस्यभाषितमुपेक्षणीयम् । केचिदितिसर्वनाम्नएवाभिमतकविविशेषपर्यवसानं सामर्थ्येन सम्भवतीतिनाध्याहारशङ्का । शक्ताइत्यादिक्रियापिसामर्थ्येनावसीयते तदेतत्सर्वमभिप्रेत्याह । तुलाविधृतवदिति ॥ १८ ॥ भावत इति । भावनादृशापन्ना चित्तवृत्तिर्भावः । भावनावासनाऽभिरित्यनर्थान्तरम् । तथाह्युच्यते अनेन गन्धेनरसेनवासवंभावितमितिहर्षादिभावितचेतसोहिवीचिप्रायाउक्तिभेदाः प्रादुर्भवन्तियैरप्रत्यूहमेवभावोभिव्यज्यतेतदिदमुक्तंयाभावतो वाचः काव्यरूपायाः प्रवृत्तिर्निष्पत्तिः सैवभाविकम् । भावप्रधानोनिर्देशः । तथाहिप्रकृतोदाहरणेएहीत्येकेनैवयुष्मदर्थाविनाभाविनाऽभिमुखीकरणेवृत्तेद्वितीयस्ययदुपादानम् । पूर्णचन्द्रेति यदग्रिमक्रियास्वनुपयुक्तस्यैवाभिधानम् । चुम्बामीतिकरिष्यमाणस्यापियोवर्तमानोपदेशश्चुम्बामीत्यत्रविशेषणमनुपादायपरिष्वजइत्यत्रचिरमितियद्विशेषणोपादानं त्वमितियोग्यार्थस्यापिप्रयोगः पूर्वोपात्तवदुत्तरक्रियास्पर्द्धितया यदेकस्यै ववहनस्यभाषणमेवसमस्तसमकालयैवयद्वहनाभिधानम् । वत्सेत्यभिधाय चरणौवन्दइतियाविरुद्धोक्तिर्यच्चते इत्यस्यावगतार्थस्यापि वचनंतत्सर्वमधर्मसिद्धमेत्रेतिभावार्थस्यनिष्पादितयास्वादहेतुर्भवति । प्रवर्त्तन्ते हिलौकिकानांस्नेहार्द्रानामुत्कलिकाप्रायावाचः स्वदन्तेच । यथा । इयंगेहेलक्ष्मीरियममृतवर्त्तिर्नयनयोरसावस्याः स्पर्शोवपुषिबहलश्चन्दनरस, इति । तदेतदभिप्रेत्यव्याचष्टे । अत्रेति । उद्भटत्वादत्तेनशेषाण्युपलक्ष

मक्रमोयः स्यादिहारोहावरोहयोः। यथा। वराहःक
ल्याणंवितरतुसवोयस्य शशभृत्कलाकोटीकान्तंक्रम
विदलदभ्युद्धृतिभिया। मिथःसंमूर्च्छद्बिम्बतुरुदधिक
ल्लोलपटलैरनामृष्टंदंष्ट्राशिखरमधिशेतेवसुमती॥ अत्र
पूर्वार्द्धेस्वरस्यारोहादुत्तरार्द्धेचावरोहादिः॥ २१॥ उप
क्रमस्यनिर्वाहोरीतिरित्यभिधीयते।यथा। ग्रावृणा

यति। अनौचित्येनापिवन्दइति॥२०॥गतिरिति। केचिद्व्याचक्षते। यती
नामारोहावरोहौविवक्षितौ क्वचित्कविशक्तिवशाद्यद्यद्या।रूढा अवरू
ढा इवप्रकाशन्ते। यथा। भुवोनीचैर्नीचैरवटपरिपाटीषुपततां स्फुरत्य
र्घोगर्वोगखिलभुवनेभोगितिलकः। क्रमादुच्चैरुच्चैर्गिरिशिखरभाजामपि
नृणामयंदूरेदूरेभवति भगवानम्बरमणिः। अत्रयतीनामारोहावरोहौ
तिलतन्दुलवत्प्रकाशते। इयंतुवृत्तौचितीवक्ष्यते। तथाचद्वितीयेसंगता
स्यात्। तस्मादयमर्थः। स्वराणामकारादीनामुपर्युपरितयाबोधः संनि
कृष्टानामिवप्रकाशनंगतिरिति। तथाचव्याख्यास्यति। स्वरस्येति। तथा
हिप्रकृतोदाहरणे वराहः कल्याणमित्यत्राकारइयंतुल्यजातीयं निर्द्दि
श्यसवो इत्यत्रौकारेणतुङ्गत्वमिवविधाय द्वितीयपादोपक्रमेकलाकोटी
कान्त मित्यत्राभिन्नजातीयारोहपरम्पराविहिता। उत्तरार्द्धेतु तथाना
स्ति। शेतेइत्यत्रापिनसोल्लेखआरोहःसोयमानुभविकोगुणः श्लोकार्द्धश्लो
कपादश्लोकांशक्रमेण नरसिंहवद्भवति। अत्रोपलक्षणतया ऽऽद्यमुदाह
रति। अत्रपूर्वार्द्धमिति। क्रमैरितस्ततश्चरणविन्यासैर्विगलन्तीअसम्पद्य
मानायाऽभ्युद्धृतिरभ्युद्धरणन्तस्याभीर्भयन्तयेतिकेचित्। अन्येतुवद
न्ति।क्रमेणविगलदभ्युद्धृतिभयमूर्द्धनयनेस्फुटनादिभयंयस्याःसा क्रमवि
गलदभ्युद्धृतिभियेति॥२१॥ उपक्रमस्येति।यादशीपदसन्निवेशस्वनोपक्र
म्यतेतादृश्यावृत्तनिर्वाहः क्वचिद्विशेषशोभावहोभवति।अवएवात्रनात्य
न्तनिर्वाहोभिमतः। एकदेशवृत्तेरप्यभिप्रायसमग्रकाव्यजीवभूतत्वादत
स्यएवनातिप्रसङ्गोपि तथाप्रकृतोदाहरणेप्रथमोत्थितायाअब्धिदुहितु
रव्याजसर्वाङ्गीणलावण्यमवलोकयिताकृष्णः स्वचक्षुषोःकृतार्थताङ्गमि

नासिगिरेः क्षतानपयसा नार्तासि नम्लायिता नश्वा
सैः फाणितोसि नत्वदनुगानायासिताकापि न। स्वंवे
श्मप्रतिगच्छतोरितिमुहुःस्त्रीशार्ङ्गिणोः सस्पृहंसाप्र
श्नोत्तरयुग्मपङ्क्तिरुभयोरत्यासता पातु वः। अत्रप्र
त्येकप्रश्नपदानन्तरंनञो विनिवेशात्क्रमाभेदोरीतिः
॥२२॥ विशिष्टाभणितिर्यास्यादुक्तिंतांकवयोविदुः।
यथा। कुशलंतस्याजीवतिकुशलंपृच्छामिजीवतीत्यु
क्तम्। पुनरपितदेवकथयसिमृतांनुकथयामियाश्वसि

---

तवान्। इदानीमधरोष्ठमुद्राभेदेनयदिवर्णमात्रामपिभारतीन्निश्चरन्ती
साकर्णयामि तदाश्रोत्रयोः सफलताभवेदितिमन्यते। नचेत्थमेवमु
ग्धाङ्गनानामालापः प्रवर्त्तते अपितुनायकसन्निधौभयादेवेतिप्रथम
म्पृच्छति। ग्रावणानासिगिरेःक्षतेति। अनन्तरञ्चयदिनवक्ष्यामि तदा
ग्राम्यामथवक्ष्यामितदाधृष्टामाकलयिष्यतीतिजानत्या द्वयमुत्तरमौचि
त्यापन्नंस्यात्। शिरःकम्पएकाक्षरञ्च। तत्राद्यःकालिदासेनप्रयुक्तो
मूर्द्धकम्पमयमुत्तरन्ददाविति। द्वितीयञ्चविनाविनिवेशितञ्चेति। एवंश्रु
जल्पितामृतस्तदनुबन्धेनकृतकृत्यमिवात्मानम्मन्यमानोधिकत्रासहेतुं
स्मारयन्पृच्छति। पयसेति। तदिदमुक्तमात्तैति। प्रकारान्तरेणोत्तरदाना
तसम्भवात्पुनरप्याह। नेति। तदनन्तरंव्याजसरसायाः कियदधिकव
चनश्रवणोत्कण्ठितः सर्वलोकप्रसिद्धमयहेतुंस्मारयन्पृच्छति। म्लायिते
ति। अभिमतस्यानिष्टम्स्वप्नेपिनसज्यतइतिदृष्टासीतिनोक्तम्। एव
प्रश्नपिवचनपल्लवनेन समस्तमुग्धाङ्गनाप्रसिद्धेनवचनोन्मुद्रणप्रकारेणपृ
च्छति। त्वदनुगेति। सर्वाकारेणोत्तमतामभिज्ञायमानदृप्तः स्ववेश्म
प्रत्येवगतवान्नतुपृष्टवानिति। तदिदंसर्वमभिप्रेत्यव्याचष्टे। अत्रेति॥२२॥
विशिष्टेति। लोकोत्तराः सन्तिहिभणितिप्रकारा लोकप्रसिद्धाः। य
थासुप्तोसीतिप्रश्नेगृहेदेवकुलेवेत्यादि। एतत्प्रसिद्धिव्यतिक्रमेणतु
याकाचित्कविप्रतिभयाभणितिराकृष्यते साभवतिलोकोत्तरा। तथाच
प्रतिभाकृष्टतयाचमत्कारित्वाद्गुणत्वम्। अतएवकवयइत्याह। कवि

ति । अत्रकुशलंतस्याइतिपृष्टेकुशलमकुशलंचेतिव क्तव्येयोयंजीवत्याद्युक्तिभङ्ग्याजीवितमात्रशंषताप्रति पादनप्रकारःसकाव्येशब्दगुणेषूक्तिसंज्ञांलभते॥२३॥

उक्तेः प्रौढः परीपाकः प्रोच्यतेप्रौढिसंज्ञया। यथा। अ भ्युद्धृतावसुमतीदलितंरिपूरःक्षिप्तक्रमंकवलिताबलि राज्यलक्ष्मीः।अत्रैकजन्मनिकृतंयदनेन यूना जन्मत्र येतदकरोत्पुरुषः पुराणः। अत्र प्रकृतिस्थकोमलकठो रेभ्योग्राम्योपनागरनागरेभ्योऽभ्युद्धृतादीनां प्रकृति

सहृदयानामेवतादृशोक्तिपरिचयसम्भवात् । तथाहि । प्रकृतोदाहर णेकुशलप्रश्नेकुशलंवेति लोकप्रसिद्धमतस्तदेववक्तुमर्हति । यत्तुतद पहायजीवतीत्युपात्तमपरत्रापिप्रश्नेतथैवोक्तन्तत्प्रतिभाकृष्टतयाबाभि प्रायमुन्नीयतइत्याह। अत्रकुशलमकुशलमित्यादि॥२३॥सम्प्रतिप्रकर्षका ष्ठालक्षणंवाक्यस्यगुणंलक्षयति॥उक्तेरिति।उक्तिर्वाक्यन्तस्यायम्पाकः साप्रौढिः।शब्दानाम्पर्यायपरिवर्त्तासहत्वम्पाकः। यदाह। यत्पदानि त्यजन्त्येव परिवृत्तिसहिष्णुताम् । तंशब्दन्यायनिष्णाताः शब्दपाकम्प्र चक्षतइति। प्रौढइति । उपक्रमसंहारयोर्निर्व्यूढः सचायन्नालिकेरस हकारमृद्वीकोपलक्षणैस्त्रिविधोगीयते । तद्यथा । नालिकेरफलम्पक्व न्त्वचिकठिनंशिरास्वविवृतकोमलप्रायकपालिकायाङ्कठिनतरन्तस्याक श्चित्सन्दर्भोमुखेकठिनस्तदनन्तरंमृदुप्रायस्ततःकठिनतरोनालिकेरपा कइत्युच्यते । तथाहि । प्रकृतोदाहरणेप्रथमपादेऽभ्युद्धृतेतिवर्णच तुष्टयमारम्भे कठिनं वसुमतीदलितइतिवर्णषट्ककोमलन्तंरिपूरइत्य नुस्वाररेफदीर्घैरक्षरचतुष्टयङ्कठिनतरम् । अत्रापितन्मितिमृदुप्रायनिवे शनेनकोमलकपालिकामुखभागतारूप्यन्द्रढयतीत्यस्मदाराध्याः। एव न्द्वितीयादिपादत्रयेचतुष्कषट्कचतुष्कैर्नालिकेरफलसाम्यमुन्नेयम् । क थम्पुनरेवंविधः पाकःसम्भवतीत्यतआह । अत्रेति । अभ्यासनिर्वृत्त आभ्यासिकः । काव्यङ्कर्त्तुंविचारयितुञ्चयेजानन्ति तदुपदेशेनकरणेयो जनेच पौनःपुन्येनप्रवृत्तिरभ्यासः । असावपिकथम्पाकविशेषोभव

स्थादीनां ग्राम्यादीनामुभयेषां व्यापदानामावापोद्वा
पाभ्यांसन्निवेशचारुत्वेनयो यमाभ्यासिकोनालिकेरी
पाकोमृद्वीकापाकइत्यादिवाक्यपरिपाकः साप्रौढिरि
त्युच्यते।तथाचैतद्वाक्यंनालिकेरीपाकइत्युच्यते । एवं
सहकारपाकमृद्वीकापाकेअप्युदाहरणीयेइति ॥२४॥

---

तीत्यतआह । सन्निवेशचारुत्वेनेति । सन्निवेशोरचनातस्याञ्चारुत्व
न्तदपिकथमित्यतआह । आवापोद्वापाभ्यामिति । सन्दर्भानुप्रवेशन
मावापस्ततः समुद्धरणमुद्वापः । केषामित्यतउक्तम् । पदानामिति ।
उद्धृतानामिति । बुद्ध्यापृथक्कृतानाम् । केभ्यइत्यतउक्तम् । प्रकृति
स्यादीत्यादि । तेनायमर्थः । प्रकृतिस्यादिपदकोप्येतदेवोद्वर्त्तव्यंयद्
घटनासौष्ठवेनपर्यायपरिवर्त्तनन्नसहते । भवतिहि सहृदयानामेवमन्य
त्पदन्नास्तीतिव्यवहारः । सोयंरचनासिद्धिविशेषःकथमन्यथातज्जा
तीयमेवपदमन्यत्रसन्दर्भेनिवेशितन्नतथास्वदते । अतएवासौवाक्यगु
णःकाठिन्यञ्चसंयोगैर्दीर्घैर्वास्वरैर्भवति । यथात्रैवोदाहरणेरिपूरइत्या
दौ । सुप्तिङ्व्युत्पत्तिलक्षणस्तुवार्त्तीकपाकः कैश्चिदुक्तः सतुसुशब्द
तालक्षणगुणएव । एवमिति । यथाद्राक्षाफलन्त्वचआरभ्यकोमलम
न्तरान्तस्त्रिचतुरास्थिसम्पादित किञ्चित्काठिन्यमेवङ्किञ्चित्सन्दर्भे उपक्र
मोपसंहारयोःकोमलएवमध्येकठिनएव । संयोगदीर्घस्वरमात्रकृतम
नाक्कठोरभावोमृद्वीकापाकइत्युच्यते । यथा । अयि त्वदावर्जितवारिस
म्भृतप्रवालमासामनुबन्धिवीरुधाम् । चिरोज्झितालक्तकपाटलेनते
तुलांयदारोहतिदन्तवाससा । यथाच । अनवरतनयनजललवनिपत
नपरिपीतहरिणमदतिलकम् । वदनमपयातमृगमदशशिकरणिवह
तिलोलदृशः । अतएव कविकन्पलताकारादिभिरुक्तोनीलकपित्थपाक
श्चतुर्थोनास्ति । यद्वन्नपरिणतं सहकारफलमारम्भादेवकोमलमस्थिनितु
कठोरप्रायमेवमपरःसन्दर्भोमुखादारभ्यमृदुरन्तरेकठिनतरःसहकारपा
कइत्युच्यते । यथा । कमलिनिकुशलन्ते, सुप्रभातंरथाङ्गाः, कुमुदिनि
पुनरिन्दावुद्गतेत्वंरमेथाः, । सखिरजनिगतासित्वन्तमोजीर्णसुञ्चैरिति,

उक्ताः शब्दगुणावाक्ये चतुर्विंशतिरित्यमी । अथै
तानेववाक्यार्थगुणत्वेनप्रचक्ष्महे ॥ तेषांश्लेषइति
प्रोक्तस्संविधानेसुसूत्रता ॥ यथा ॥ दृष्ट्वैकासनसं
स्थितेप्रियतमेपश्चादुपेत्यादरादेकस्यानयनेनिमील्य
विहितक्रीडानुबन्धच्छलः ॥ ईषद्वक्रितकन्धरःस
पुलकप्रेमोल्लसन्मानसामन्तर्हासलसत्कपोलफलकां
धूर्त्तोऽपरां चुम्बति ॥ अत्रैकासनसंस्थितयोःप्रिय
तमयोर्विलासिना एकानयननिमीलनकेलिकर्म्मणा
वञ्चितान्यातु वदनचुम्बनेन रञ्जितेतिसेयंविधानेसु
सूत्रताश्लेषोनामवाक्यर्थगुणः ॥ १ ॥ यत्तुप्राकट्य
मर्थस्यप्रसादःसोऽभिधीयते ॥ यथा । अयमुदयति

---

तरलितपक्षाः पक्षिणोऽश्नाहरन्ति । अत्रैवोदाहरणेपिद्विधापिकठोर
त्वमवसेयम् । तेमीत्रयएवशुद्धपाकाःव्यतिकरजन्मानस्तुभूयांसः । एत
एवार्थपाकाः पञ्चमेप्रकारान्तरेणप्रतिपादयिष्यन्ते॥२४॥सूत्रकारएवार्थ
गुणप्रकरणेसङ्गतिङ्करोति । उक्ताइति । वृत्तकीर्त्तनंहेतुभावप्रदर्शना
र्थम् । एतानेवश्लेषादिनामकानिति । एषामितिनिर्द्धारणेषष्ठी । वाक्या
र्थशरीरभूतःश्लेषः प्रथमंलक्ष्यतइति । घटनाश्लेष,इतिसूत्रयित्वाक्रमकौ
टिल्यानुल्वणत्वोपपत्तियोगोघटनेति,वामनेनव्याख्यातम् । अस्या
र्थः । इदङ्कृत्वाइदङ्कर्त्तव्यमितिक्रमस्तत्रैवकौटिल्यंलोकातिगामिनीव
कृता । अवक्रयोःशब्दार्थयोः वचनमात्रत्वात् । अतिमात्रतयाप्रति
भासाभावोनुल्वणत्वंकथमेवमर्थःसङ्गच्छतइत्यनुपपत्तिसमाधानौपयि
कविशेषनिवेशनमुपपत्तिस्तथाचक्रमेण कौटिल्येनानुल्वणतया उपप
त्यायोजनमर्थस्यश्लेष,इतितत्रसंविधानक्रमानुल्वणत्वेनसूत्रशब्देनोपा
त्ते स्वपदेनकौटिल्यमुक्तमघटमानस्येववाक्यार्थस्यबुद्धिचातुर्येण घटने
ति वाक्यार्थः । दृष्ट्वेति । एकानायिका,अपरानायिकाच तत्सखीप्रच्छन्न
नायकप्रेमपात्रन्तेनैकासनसङ्गतिः । प्रियतमेइतितदनुरञ्जनमेवजी
वितसर्वस्वमितिमन्यमानस्ययुगपत्प्रवृत्तिः । आदरेणनिभृतपदन्यास

मुद्राभञ्जनःपद्मिनीनामुदयगिरिवनालीबालमन्दारपुष्पम् । विरहविधुरकोकद्वन्द्वबन्धुर्विभिन्दन्कुपितकपिकपोलक्रोडताम्रस्तमांसि ॥ अत्रपद्मिनीविकाशकरणेउदयशैलावतरणेकोकशोकहरणेतमोविदारणेचानुक्तोपिसूर्यलक्षणोर्थःप्रकटमुपलक्ष्यते॥२॥ अवैषम्यंक्रमवतांसमत्वमितिकीर्तितम् ॥ यथा । अग्रेस्त्रीनखपाटलङ्कुरबकंश्यामन्द्वयोर्भागयोर्बालाशोकमुप्रोढरागसुभगम्भेदोन्मुखन्तिष्ठति । ईषद्बद्धरजःकणाग्रकपिशाचूतेनवामञ्जरीमुग्धत्वस्यचयौवनस्यचसखेमध्येमधुश्रीःस्थिता । अत्रमधुश्रियोमौग्ध्यंत्यागयौवनारम्भकृतानांविशेषणानामवैष

तातथाभूत्वायुगपत्कराभ्यांनयनद्वयपिधानंलोकप्रसिद्धःकेलिः । ईषदिति कन्धरामात्रंयथाचलतेनतुशरीरमपि । अन्यथाचलनज्ञानेनायिकायाःकषायभावःस्यात् । निभृतरागोन्मुद्रणात् पुलकोद्गमः । अतएवप्रेम्णास्वगोचरलोकोत्तरत्वाभिमानरूपेणलत्तद्नेकभावोर्मिभिरान्दोलनस्मनसउल्लासः साधुवञ्चनञ्जजानातीत्यभिप्रायिकसपत्नीगतधिक्कारभावनयानिभृतहासोन्मेषः । वञ्चनाचातुर्येणस्वमनीषितसंम्पादनन्धूर्त्तता । तदेतद्याचष्टे । अत्रैकासनेति ॥१॥ यत्तुप्राकट्यमिति । समभिव्याहृतपदार्थसंसर्गात्मनिवाक्यार्थेदर्पणतलइवानुपात्तस्यापि विवक्षितस्यवस्तुतःप्रतिभासोर्थप्रसादः । नचेहमनुमानं समानसंवित्संवेद्यत्वात् । तदाह । अनुक्तोपिसूर्यलक्षणोर्थःप्रकटमुपलक्ष्यतइति ॥ २ ॥ अवैषम्यमिति । येनरूपेणलोकेर्थः प्रतीतस्तदनतिक्रमणन्तस्योक्तिः समता । वक्रताचात्रविशेषणमूहनीयमन्यथामुक्ताव्रजतीत्यतःकोविशेषःस्यात् । अग्रेमुग्धइति । कोपात्प्रथममुद्भिद्यमानाकुरबककलिकाकान्तानखवत्पाटलाभवतीतिमधुश्रियोबाल्यम् । ततःप्रौढिमापद्यमानामुकलिकामुग्रयामोवृन्तभागःस्फुटितत्वाद्द्विधाऽवतिष्ठतेइतियौवनम् । एवम्बालाशोकमित्यादौक्रमेणबाल्ययौवनचिह्नोप

म्यात्समानता ॥ ३ ॥ माधुर्यमुक्तमाचार्यैः क्रोधादा
वप्यतीव्रता । यथा । भ्रूभेदे सहसोद्गतेपि वदनन्नी
तम्परान्नम्रतामीषन्माम्प्रतिभेदकारि हसितन्नोक्तं
वचो निष्ठुरम् । अन्तर्बाष्पजडीकृतम्प्रभुतया चक्षुर्न
विस्फारितङ्कोपश्च प्रकटीकृतो दयितया मुक्तश्च नो प्रश्र
यः । अत्र वासवदत्तालक्षणस्यार्थस्य कोपेपि योयं वि
नयावलम्बेन कोपचिह्ननिह्नवस्तन्माधुर्यम् ॥ ४ ॥
अनिष्ठुरत्वं यत्प्राहुः सौकुमार्यन्तदुच्यते । यथा । स
द्यः पुरीपरिसरेपि शिरीषमृद्वी सीता जवात्त्रिचतुरा
णि पदानि गत्वा । गन्तव्यमस्ति कियदित्यसकृद्ब्रुवा
णा रामाश्रुणः कृतवती प्रथमावतारम् । अत्र सीतायाः

---

दर्शनमवसेयम् ॥ ३ ॥ माधुर्यम् । शृङ्गारकरुणौ हि मधुरौ ततस्तद्व्यञ्ज
कोर्थोपि मधुरस्तस्य शर्करादिरससोदरम्माधुर्यम् । यथा हि । शर्करारसः
सहृदयस्याऽसहृदयस्य वा, सुस्थस्याऽसुस्थस्य वा, झटिति रसनाग्रम
पीति चमत्कारमावहति । तथा चित्तद्रुतिसारचर्वणैकप्राणरसव्यञ्ज
कोर्थस्तेन तद्व्यञ्जनशक्तिसमुद्रेकनिर्वहणं वाक्यार्थस्य माधुर्यमिति पर्य
वसितोर्थस्तच्च वासनापरिपाकवशादुदयव्ययवतीषु दीप्तचित्तवृत्तिषु जा
गरूकास्वपि समस्तन्यग्भावनया विरोधः सम्पद्यते इति क्रोधादावप्यतीव
तेत्युक्तम् । तथा हि भ्रूभेद इत्यादौ गात्रस्खलितादिना कदाचिदपराद्धे
नायके प्रेमस्वभावादीर्ष्यारोषलक्षणव्यभिचारिप्रादुर्भावात्तदनुभावभ्रूभे
दोद्गमो रतिप्रकर्षाद्गविष्णुनाऽवहित्थेन न्यग्भाव्यते । विरोधिविजये हि
भूयान्प्रकर्षः परस्य भवति । अत एव परामित्युक्तमेव सीषन्माम्प्रतिभेदका
रि हसितमित्यादौ माधुर्यमुन्नेयम् । तदिदमाह । अत्र वासवदत्तालक्ष्ये
ति ॥ ४ ॥ अनिष्ठुरत्वमिति । सामग्रीसम्भवेपि चित्तद्रुतिमनासादयन्नीर
सः कठोरोभिधीयते । अतथाभूतस्तु झटिति तन्मयीभवनयोग्यान्तःकर
णः सुकुमारस्तदिदमुक्तमनिष्ठुरत्वमिति । प्राहुरित्यनेन प्रसिद्धिं द्योतय
ति । सद्य इति ॥ सहगन्तुमुत्सुका कथमेवं सुकुमारप्रकृतिः कान्तारेषु भ

पुरीपरिसरेऽपि कियदस्ति गन्तव्यमिति वचनं शृण्वतो रामस्य शिरीषमृदु तदङ्गावलोकनेनाश्रुणोऽवतारः सौकुमार्यमाह ॥ ५ ॥ अर्थव्यक्तिः स्वरूपस्य साक्षात्कथनमुच्यते । यथा । पृष्ठेषु शङ्खशकलच्छविषुच्छदानां रेखाभिरङ्कितमलक्तकलोहिताभिः । गोरोचनाहरितबभ्रु बहिः पलाशमामोदते कुमुदमम्भसि पल्वलस्य ॥ अत्र कुमुदस्वरूपस्य साक्षादिव प्रतीयमानत्वेन यत्स्पष्टरूपाभिधानमसावर्थव्यक्तिः ॥ ६ ॥ कान्तिर्दीप्तरसत्वं स्यात् । यथा । मागर्वमुद्वह कपोलतले चकास्ति कान्तस्वहस्तलिखिता मम मञ्जरीति । अन्यापि किन्न सखि भाजनमीदृशीनां वैरी न चेद्भवति वेपथुरन्त

विघ्यसीति वार्यमाणापि हृदयवैमुख्येन पञ्चामिति त्वरितङ्गमिष्यामीति स्त्रे ह्मूढा त्रिचतुराणि पदानि जवाद्गतवती । अश्रुणः प्रथमावतारो भविष्यदश्रुपरम्पराप्रचारभूतः । सौकुमार्य्यमाहेति । अश्रुपातेनानुभावाश्रुनिमित्तभूता चित्तद्रुतिः करतलामलकवत्प्रकाश्यते ॥ ५ ॥ अर्थव्यक्तिरिति । स्वरूपं स्वमसाधारणङ्कविप्रतिभैकगोचरञ्चमत्कारिरूपं तस्य साक्षात्कथनङ्कविशक्तिवशात्साक्षात्कारसोदरप्रतीतिजनकपदवत्त्वं सन्दर्भस्यार्थव्यक्तिर्नाम गुणः । अर्थो यथोक्तस्तस्य व्यक्तिः प्रत्यक्षायमाणता जातेर्भेदस्तृतीये वक्ष्यते । पृष्ठेपि । ईषद्विकस्वरस्य कुमुदस्य किञ्चिद्विघटमानबहिःपलाशसम्बन्धिषु शीलातपासम्पर्कादत्यन्तविशदानां दलानां पृष्ठानि पाकलोहितरेखाङ्कितानि दृश्यन्ते । अतएवामोदन्ते किञ्चिदुद्भिदुरेण मुखेन गर्भपिण्डितमामोदम्मुञ्चतीति ॥ ६ ॥ कान्तिरिति । रसोऽभिमानात्मा शृङ्गारस्तस्य दीप्तत्वं विभावानुभावव्यभिचारिभिः सम्यक्संवलितेन स्थायिना निरन्तरमुपचीयमानस्य परमकोटिगमनम् । तथाहि । मागर्वमित्यादौ यत्र भङ्गेषु बहुतरसूक्ष्मभङ्गविशेषमयमञ्जरीलिखितेन बहिर्विषयातिरोधानलक्षणातादवस्थ्यात्प्रकाशनेन नायकस्य सपत्न्यामनुरागे विच्छायभावोक्तिः । स्वात्मनि तु सहसाविर्भव

रायः । अत्रनायिकायाःसपत्न्यामीर्ष्यानुबन्धेन
प्रतिपादितस्य प्रियतमानुरागलक्षणशृङ्गारस्यदीप्त
रसत्वङ्कान्तिः ॥ ७ ॥ भूत्युत्कर्षउदारता । यथा ।
प्राणानामनिलेनवृत्तिरुचितासत्कल्प वृक्षेवनेतोये
काञ्चनपद्मरेणुकपिशेपुण्याभिषेकक्रिया । ध्यानं र
त्नशिलागृहेषुविबुधस्त्रीसन्निधौसंयमोयद्वाञ्छन्ति
तपोभिरन्यमुनयस्तस्मिंस्तपस्यन्त्यमी ॥ अत्रमारी
चाश्रमस्यसत्कल्पवृक्षादिपदैर्वैभवोत्कर्षस्यप्रतिपा
दनमुदारता ॥ ८॥ आशयस्ययउत्कर्षस्तदुदात्तत्वमि
ष्यते । यथा । पात्रेपुरोवर्तिनिविश्वनाथेक्षोदीयसि
क्ष्मावलयेपिदेये । व्रीडास्मितन्तस्यतदातदासीत्त्वम

---

त्सात्त्विकप्रतिपादनेन जीवितसर्वस्वाभिमानात्मकरतिस्थायिभावप्र
काशनेतस्याःसापेक्षभावेनायिकायाअपितदवस्थैवसाप्रतीयतेतदिदमा
हप्रियतमानुरागेति । अनुरागेणलक्ष्यतेसप्रार्चिरिवार्चिषोपचीयतइत्य
नुरागलक्षणः ॥ ७ ॥ भूतीत्यादि । भूतिस्सम्पत्तस्याउत्कर्षोलोकातिग
प्रकर्षस्तस्यैव सहृदयचमत्कारार्पकतया गुणधुराधिरोहणक्षमत्वात् ।
प्राणानामिति । उचितातपोयोग्या । वनस्यकल्पतरुसम्बन्धःसम्पत्तत्रै
वसत्पदेनमुक्तास्तबकमाणिक्यमञ्जरीचीनांऽशुककिशलयादिविशेष
द्योतिना प्रकर्षःपद्मप्रकरस्तोयसम्पत्तत्रैवकाञ्चनमयत्वे पद्मानाम्प्र
कर्षः । बहुत्वंशिलावेश्मसम्पत् । तत्रैव रत्नरूपताप्रकर्षः सन्निधेःस्त्री
प्रतियोगिकतासम्पत् तत्रैवविबुधेतिप्रकर्षस्तदिदमाह । सत्कल्प
वृक्षादिपदैरिति ॥ ८ ॥ आशयस्येति । उत्कर्षः पूर्ववत् । उच्चाशयोलोके
उदात्तइतिप्रतीतः । पात्रइति । विश्वनाथइति । यदाज्ञावशंवदात्रिलोकी
सोपियत्प्रार्थयतइति, वलयेपीत्यपिशब्देनयस्यैकदेशःकुरुपाण्डव
निधननिदानतयाविख्यातस्तत्रापिदेयेलज्जतइति । देवासुरकिन्नरा
दिरयजङ्गमस्थावरप्रपञ्चोयदुच्छ्वासविलसितं सोपिचमत्कृतइति प
दार्थानभिहितःप्रकर्षोभिधेयः ॥ ९ ॥ ओजइति ॥ अध्यवसायोनिश्चयस्त

त्कृतोयेनसएवदेवः ॥ अत्रसकलक्ष्मावलयप्रदानेपि
जातव्रीडतयाबलेराशयोत्कर्षप्रतिपादनादुदात्तत्व
म् ॥ ९ ॥ ओजःस्वाध्यवसायस्यविशेषोर्थेषुयोभवे
त् । यथा । तान्येवयदिभूतानिताएवयदिशक्तयः ।
ततःपरशुरामस्यनप्रतीमःपराभवम् ॥ अत्रपरशु
रामोविजयतएवइत्यस्मिन्नर्थेस्वाध्यवसायप्रतिपा
दनमोजः ॥ १० ॥ रूढाहङ्कारमौर्जित्यम् ॥ यथा ।
उमावधूर्भवान्दातायाचितारइमेवयम् । वरःशम्भु
रलंह्येषत्वत्कुलोद्भूतयेविधिः । अत्रइमेवयमिति
आत्मान्वितव्रतचर्यादिसमुच्चयप्रौढहङ्कारप्रतिपाद
नादौर्जित्यम् ॥ ११ ॥ प्रेयस्त्वर्थेष्वभीष्टता । यथा ।
रसवदमृतङ्कः सन्देहोमधून्यपिनान्यथामधुरमधिक
ञ्चूतस्यापिप्रसन्नरसम्फलम् । सकृदपिपुनर्मध्यस्थः

---

अविशेषः पूर्ववत् । स्वपदेनवक्ताभिमतः । तानीति । यदिहन्तव्यजा
तीयमेवनविपर्यस्तम् । ताएवेति । प्रभावोत्साहमन्त्रजास्तद्वदर्थेनिर्व
ह्णप्रौढिप्रख्यात्कीर्त्तयःशक्तयोयदिनविलीनतामयासिषुः । परशुरा
मइति । अर्जुनभुजसहस्रच्छेदादिना यस्यपरशुरामवरदानेन त्रिभुव
नेपिप्रसिद्धइत्यादि ॥१०॥ रूढेति ॥ ऊर्जितशब्दोहङ्कृतेप्रसिद्धस्तात्का
लिकनिमित्तोपनिपातेवासनाविकाशात्तमोनिर्भेदस्थानेषुसुप्तप्रबुद्धइव
स्थायिभिरसंसृज्यमानःप्रथमप्रादुर्भूतोभिमानोहङ्कारइत्युच्यते । रूढः
सूक्ष्मावस्थातोद्वितीयामाविर्भावदशामापन्नोऽहङ्कारोयस्यसरूढाहङ्का
रस्तस्यभावस्तत्ता । सुगममुदाहरणम् ॥११॥ प्रेयइति । शब्दगुणेनुनिष्पा
दिवर्णनीयप्रीतिजनकत्वस्यादानामुक्तमिहतुवाक्यार्थस्यवक्तृप्रीतिगो
चरत्वमुच्यतइतिविशेषः । प्रीतिरुक्तपूर्वा । तत्रैवाभिशब्देनप्रकर्षो
द्योतितः । अभीष्टताप्रेयइतिप्रेयःपदप्रवृत्तिनिमित्तम् । रसवदिति
प्रशंसायाम्मतुप् । अमृतमितियस्यप्रसादात्त्रिदशैरमरत्वमासादितम् ।

सन्रसान्तरविज्जनोवदतुयदिहान्यत्स्वादुस्यात्प्रि
यारदनच्छदात्॥अत्रामृतप्रभृतिभ्यःप्रियारदनच्छद
स्याभीष्टताप्रदर्शनम्प्रेयः ॥१२॥ अदारुणार्थपर्यायो
दारुणेषुसुशब्दता । यथा । देवव्रतेवाञ्छतिदीर्घ
निद्रांद्रोणेचकर्णेचयशोवशेषे। लक्ष्मीसहायस्यतवा
द्यवत्सवात्सल्यवान्द्रौणिरयंसहायः । अत्रमुमूर्षा
मरणादीनान्दारुणार्थानान्दीर्घनिद्रांवाञ्छतियशोव
शेषइत्यादिभिःसुशब्दैःपर्यायेणभणनंसुशब्दता। सा
चमुख्यार्थव्यतिक्रमस्यवाक्यार्थत्वान्नशब्दगुणः॥१३॥
व्याजावलम्बनंयत्तुसासमाधिरितिस्मृतः । यथा।
दर्भाङ्कुरेणचरणः क्षतइत्यकाण्डेतन्वीस्थिताकति
चिदेवपदानिगत्वा । आसीद्विवृत्तवदनाचविमोच

---

मान्यथेति प्रत्यक्षसाक्षिकेवस्तुनिप्रमाणान्तरानुसरणम्।प्रसन्नरसमिति।
अम्लतालक्षणकाव्यार्थापगमेन परिणतिरित्यादि ॥ १२ ॥ अदारुणेत्या
दि । झटित्यातङ्कदायीदारुणस्तस्यसाक्षादभिधानेविवक्षितप्रतीति
स्खलनखेदसम्भवात्तदुपनीतस्यवस्तुनस्तदध्यासान्तरितस्यवाक्यार्थ
त्वादिति ।सर्वत्रैवहिलक्षणायामर्थाध्यासोङ्गीक्रियते लौकिकीचेयं ल
क्षणेतिनप्रयोजनगवेषणमपीति। सुगममुदाहरणम्॥१३॥व्याजेति। चि
त्तवृत्तिषुबलादाविर्भवन्तीषु प्रकृतरसौचित्यविरोधिप्रकर्षात्प्रकटमना
वरणीयासुच यदन्यथासमर्थनन्तद्व्याजावलम्बनम्प्रस्तुतोचितसमा
धानात्मकत्वात्। तथाहि। पूर्वानुरागे त्रपासाध्वसविवशायास्ताव
न्नायकसमीपादपसरणमौचित्यापन्नमनन्तरन्तूत्कण्ठातरलितायाःक्ष
णालोकमात्रेणापिकृतार्थःस्यादिति परावर्त्तनम्। तत्रच मौग्ध्यभङ्गश
ङ्कायांदर्भाङ्कुरक्षतिप्रभृतिव्याजावलम्बनमेव कार्यसर्वस्वमाभासतइति
॥ १४ ॥ सूक्ष्ममित्यादि । वाक्यैकगोचरोर्थःकुशाग्रीयबुद्धितया सूक्ष्मस्त
स्यदर्शनमुपायवैलक्षण्यात्तत्तद्विशेषवतःप्रत्यक्षायमाणता। सूक्ष्मालङ्का

यन्तीशाखासुवल्कलमसक्तमपिद्रुमाणाम् । अत्रगम
नेसातिप्रियजनावलोकनाभिलाषिण्याःशकुन्तलाया
दर्भाङ्कुरचरणक्षतिवल्कलव्यासङ्गादिव्याजावल
म्बनंसमाधिः ॥ १४ ॥ सौक्ष्म्यमित्युच्यतेतत्तुयत्सू
क्ष्मार्थाभिदर्शनम् । यथा । अन्योन्यसञ्चलितमां
सलदन्तकान्तिसोल्लासमाविरलसंवलितार्धतारम् ।
लिलागृहेप्रतिकलङ्किलकिञ्चितेषुव्यावर्तमानविनय
न्मिथुनञ्चकास्ति । अत्रान्योन्यसंवलितमांसलदन्त
कान्तीत्यादिवाक्येदम्पत्योरनुरागलक्षणस्यसूक्ष्मार्थ
स्यदर्शनात्सौक्ष्म्यम् ॥ १५ ॥ शास्त्रार्थसव्यपेक्षत्व
ङ्गाम्भीर्यमभिधीयते । यथा । मैत्र्यादिचित्तपरिकर्म
विदोविधायक्लेशप्रहाणमिहलब्धसजीवयोगाः ।
ख्यातिञ्चसत्वपुरुषान्यतयाधिगम्यवाञ्छन्तिताम
पिसमाधिभृतोनिरोद्धुम् ॥ अत्रमैत्र्यादिपदानांशा
स्त्रार्थसव्यपेक्षत्वाद्गाम्भीर्यम् ॥ १६ ॥ विस्तरोर्थवि

---

राद्भेदस्तृतीयेकरिष्यते । सचायम्भाव्योवासनीयश्च । भावनामात्रग
म्योभाव्योयथा । उम्मइअगमहिआवट्ढसिज्जन्तरोसपरिआरअम् ।
पाओपसरन्तमत्ताचंवफलिहचसअस्मुहम्बाला । एकाग्रताप्रकर्षगम्यो
वासनीयस्तमुदाहरति । अन्योन्येति । व्याजापहृतपरिवारे लीला
वेश्मनि तत्कालकलितमन्मथोन्मार्थंविदग्धमिथुनमुत्तरोत्तरमपनीय
मानत्रपासाध्वसतया प्रतिकलन्नवेन्दुवत्कान्तिविशेषमासादयति । वि
चित्रमव्यभिचार्यनुप्रवेशेहर्षरुदितस्मितादीनामव्यवस्थिततया व्यति
रेकरूपकिलकिञ्चिताख्यशृङ्गारभावोन्मेषः ॥ १५ ॥ शास्त्रार्थइति । ए
कपुरुषार्थप्रयोजनकपदार्थव्युत्पादनंविधिनिषेधव्युत्पत्तिफलकं शास्त्र
न्तदर्थसव्यपेक्षत्वम् । तदुक्तप्रक्रियानिरूपणाधीननिरूपणत्वंवाक्यार्थ
स्यगाम्भीर्यम् । मैत्री,करुणा,मुदितोपेक्षा,इतिचतस्रश्चित्तसम्मार्जनाः ।

काशः स्यात् ॥ यथा । संग्रामाङ्गणमागतेनभवताचा
पेसमारोपितेदेवाकर्णययेनयेनसहसायद्यत्समासादि
तम् । कोदण्डेनशराःशरैररिशिरस्तेनापिभूमण्ड
लन्तेनत्वम्भवताचकीर्तिरनघा कीर्त्या चसम्प्राब्धयः।
अत्रविपक्षवधात्सम्प्राब्धिव्यापिनीकीर्तिरर्जितेत्येता
वतोर्थस्यबहुविधंविकाशितत्वाद्विस्तरः ॥ १७ ॥
संक्षेपस्तस्यसंवृतिः ॥ यथा । श्रूयतान्धर्मसर्वस्वंश्रु
त्वाचैवावधार्यताम् । आत्मनःप्रतिकूलानिनपरे
षांसमाचरेत् । अत्रशास्त्रविस्तरप्रतिपादितस्यधर्म

---

अविद्याऽस्मितारागद्वेषाभिनिवेशाः,पञ्चक्लेशाः । चित्तवृत्तिनिरोधोयो
गःसएवव्युत्थानहेतुभिरनास्कन्दनीयःसबीजः । सत्त्वम्प्रधानम् । पु
रुषश्चिद्रूपस्तयोर्भेदःप्रथाख्यातिरिति, साङ्ख्यप्रक्रिया।मैत्र्यादिपदाना
मिति । वाक्यार्थस्यैवयथोक्तरूपत्वेतत्प्रतिपादकपदानामवश्यन्त
याभावोभवतीतिवैशेषिकाङ्गेदोवक्ष्यते ॥ १६ ॥ विस्तरइति । वाक्या
र्थस्यपल्लवभूततत्तत्सहृदयचमत्कारिविशेषप्रसारणंसंवृतविवृतपटवत्।
विस्तराख्योगुणः । विस्तरइवविस्तरःशब्दप्रपञ्चवदित्यर्थः । अन्यथा
विस्तारइतिस्यात् । संग्रामाङ्गणेत्यादौतुशत्रुशिरश्छेदात्सम्प्राब्धिव्या
पिनी त्वयाकीर्त्तिर्जितेत्येतावान्वाक्यार्थोलौकिकसाधारणतया च चम
त्कारास्पदमितिसंग्रामाङ्गणसंगतिरेवनतथा यथावीरमात्रस्योचिता त
त्रापिचापसमारोपणमितिकाप्युत्साहशक्तिः।अतएवबलवदाश्रयप्रसक्त
लुण्टाकवधेनयदवसितन्तेनैवतदासादितमितिसोपस्कारकर्त्तृकर्मप्रप
ञ्चेनविकाशनमेवकाव्यपदवीप्राप्तिबीजन्तदिदमाह।बहुविधंविकाशित
त्वादिति । नात्रशब्दविकाशाधीनःप्रकर्षइतिशब्दविस्तराद्भेदः॥ १७ ॥
संक्षेपइति । तस्येत्यर्थस्य । समासेगुणीभूतस्यापिबुद्ध्याविभज्यपरामर्शः।
यथा । अथशब्दानुशासनम् । केषांशब्दानामिति । अशेषविशेषोपग्राहक
पुरस्कारेण वाक्यार्थस्याभिधानंविवृतसंवृतपटवत्संक्षेपः।श्रूयतामिति।
अत्रानेनतेनविशेषेणविस्तरतःप्रतिपादयितव्यस्यधर्मस्ययत्किञ्चिदात्म

स्यश्लोकार्द्धेनप्रतिपादितत्वादयमर्थसङ्कोचःसंक्षेपः ॥ १८ ॥ शब्दार्थौयत्रतुल्यौस्तःसम्मितत्वन्तदुच्यते ॥ यथा। इन्दुर्मूर्द्ध्निशिवस्यशैलदुहितुर्वक्रोनखाङ्कःस्तने देयाद्वोभ्युदयन्द्वयन्तदुपमामालम्बमानम्मिथः। संवादःप्रणवेन यस्यदलताकायैकतायान्तयोरूर्ध्वंद्वार विचिन्तितेनचहृदिध्यातःस्वरूपेणच ॥ अत्रप्रणव लक्षणस्यार्थस्यतुल्यत्वेन यथावद्विभज्यविनिवेशनं सम्मितत्वम् ॥ १९ ॥ साभिप्रायोक्तिविन्यासोभाविकत्वन्निगद्यते ॥ यथा। दृष्टिंहेप्रतिवेशिनिक्षणमिहाप्यस्मद्गृहेदास्यसिप्रायेणास्यशिशोःपितानविरसाः कौपीरपःपास्यति। एकाकिन्यपियामितद्वरमितः

---

नः प्रतिकूलमन्यस्यनाचरणीयमिति सामान्येनाभिधानमप्रवृत्तप्रवर्त्तने प्रगल्भायमानमतिसुन्दरमाभासते।नात्ररचनासङ्कोचप्रतिष्ठितङ्काव्यमिति शब्दगुणाङ्केदः ॥१८॥ शब्दार्थाइति। शब्दस्यार्थौतयोर्विभज्यविनिवेशनंसम्मितत्वमितिकेचित्। तन्न। शब्दग्रहणवैयर्थ्यप्रसङ्गात्। द्वित्वाविवक्षाप्रसङ्गाच्च। "पल्लविअंविअकरपल्लवेहिंपप्फुल्लिअंवमुणाहअच्छेहिं। फलिअम्मिवपीणपओहरेहिंअज्जाइलावण्णम्,,*इत्यादौह्विप्रभृतीनामर्थानामविभज्यविनिवेशनमिष्यते।तस्माच्छब्दश्चार्थश्चशब्दार्थौ।तयोस्तुल्यत्वंयावदुद्देशशब्दार्थम्।अर्थस्यविभज्यतुलाधृतवत्प्रतिनिवेशः सम्मितत्वमिति।अर्थमुद्दिश्यशब्दतुलनङ्काव्यभावबीजंशब्दगुणः, शब्दमुद्दिश्यत्वर्थतुलनमर्थगुणश्च। तथाहिपरमेश्वरस्यमूर्ध्नि बालेन्दुः, पार्वतीस्तनेनखाङ्कइतिपृथक्शब्देनोद्दिश्य तदुपमायोग्यतयाकायैकतायान्दलनंहृत्पद्मनवमद्वारयोर्ध्यानेनयुगपत्सन्निधानमितिसम्यग्विभज्यतुलितस्येवप्रणवस्यप्रतिनिर्द्देशइतितदिदमाह। अत्रेति। यथावदिति। येनप्रकारेण सङ्कलतेइति तदनतिक्रमेणेति ॥ १९ ॥ साभिप्रायइति। अभिप्रायविशेषप्रतिबद्धस्यवाक्यार्थस्योक्तिविन्यासउक्त्याविशेषोन्यासः शब्दगुणोपदानाद्भावार्थनिष्पादिताइहत्वर्थस्येतिविशेषः। तथाहि। दृष्टिंसित्या

* पल्लवितमिवकरपल्लवाभ्यांप्रफुल्लितमिवसुग्धाक्षिभ्याम्।

स्त्रोतस्तमालाकुलंनीरन्ध्रास्तनुमालिखन्तुजरठच्छे
दानलग्रन्थयः। अत्रतमालमालावलयितसरित्तीरकृ
तसङ्केतायाःकुलटायाःस्तनौभाविनाम्परपुरुषनखक्ष
तानान्नलग्रन्थ्यालेखव्याजगोपनेनसाभिप्रायभणन
म्भाविकम् ॥ २० ॥ गतिःसास्यादवगमोयोर्थादर्था
न्तरस्यतु ॥ यथा । शुभेकोयंवृद्धो गृहपरिवृढः किन्त
वपिता नमेभर्तारात्रौव्यपगतदृगन्यश्चबधिरः । हुहुं
हुंभ्रान्तोऽहंशिशयिषुरिहैवापचरकेक्कयामिन्यांया
सिस्वापिहिननुनिर्दंशमशके। अत्रप्रश्नादर्थमवगम्यो
त्तरादर्थान्तरार्थावगमोगतिः ॥ २१ ॥ रीतिःसायस्
त्विहार्थानामुत्पत्त्यादिक्रियाक्रमः ॥ यथा । प्रथमम
रुणच्छायस्तावत्ततःकनकप्रभस्तदनुविरहोताम्यत्त
न्वीकपोलतलद्युतिः । प्रभवतिपुनर्ध्वान्तध्वंसक्षमः
क्षणदामुखेसरसबिसिनीकन्दच्छेदच्छविर्मृगलाञ्छ

दीतनुमालिखन्तुजरठच्छेदानलग्रन्थय इत्युक्त्याविन्यस्यमानएवभा
विनलग्रन्थ्यालेख्यरूपार्थःकुलटास्वरूपानुसन्धानदत्तान्तः करणस्यप्र
तिपत्तुरनन्तरमेवस्वैरविहारचिह्नगोपनमभिव्यनक्ति ॥ २० ॥ गतिरि
ति । अर्थादर्थविशेषाहृदयसंवादिनइतियावत् । अर्थान्तरस्यतथाभू
तस्य । तेनयत्रसहृदयहृदयङ्गमादर्थात्कांस्यतालानुस्वानन्यायेन तादृ
शमर्थान्तरमवगम्यतेसागतिरितिलक्षणार्थः । शुभेकोयंवृद्धइति । सर्वा
कारमनवद्यायास्तावद्दास्यमपिनायमर्हतीतिहृदयानुकूलमर्थम्प्रश्नाद
वगत्यगृहपरिवृढइत्युत्तरम् । अस्मादपिमनायकोपिकिन्तुगृहस्वा
मीतिहृदयसंवादिनमर्थमवधार्यकिन्त्वपितेत्यादिकप्रश्नोत्तरशृङ्खलाग
वेषणीयातदेतद्व्याचष्टे । उत्तरादिति । उत्तरमत्युत्तरवाक्यात् । उत्तर
न्तुपदम्प्रश्नपदमेव ॥ २१ ॥ रीतिरिति । उत्पत्त्यादीनांक्रियाणांक्रमः
काव्यशोभावहत्वेनगुणः । नेदंवस्तुस्वभाववर्णनमितिजातेरर्थव्यक्तेश्च

नः। अत्रोदयादारभ्यचन्द्रस्योत्पत्यादिक्रियाक्रमो
रीतिः ॥ २२ ॥ उक्तिर्नामयदिस्वार्थोभङ्ग्याभव्यो
विधीयते ॥ यथा। त्वमेवंसौन्दर्यासचरुचिरतायाः
परिचितःकलानांसीमानम्परमिहयुवामेवभजथः।
अपिद्वन्द्वन्दृष्ट्यातदितिसुभगेसंवदतिवामतःशेषञ्चे
तस्याज्जितमिहतदानींगुणितया। अत्राभीष्टनाय
कनायिकासङ्गमस्यभङ्ग्याभणनमुक्तिः ॥ २३ ॥ वि
वक्षितार्थनिर्वाहःकाव्येप्रौढिरितिस्मृता॥यथा। त्व
द्वक्त्रेन्दुविलोकनाकुलधियाधात्रात्वदीयांश्रियन्नि
क्षिप्यप्रतिराजकेषुविदुषांलक्ष्म्यातयापूरितः। तेनै
तेनियतन्दरिद्रतिगृहेष्वेषामियन्दृश्यतेनैनामाद्रिय
सेत्वमिच्छसितुतान्त्वामेवसाधावति। अत्रत्वद्व
क्त्रविलोकनाकुलेनधात्रात्वदीयालक्ष्मीःशत्रुषुनिक्षि
प्ताविदुषाञ्चलक्ष्मीस्त्वय्यारोपितातस्त्वंविपक्षल
क्ष्मीमाद्रियसेसाचत्वामनुधावतियाचविदुषांलक्ष्मी
स्तयात्वमापूरितस्तेनतेदरिद्राः। अतएवत्वमेना

भेदः। सुगममुदाहरणम् ॥ २२ ॥ उक्तिरिति। स्वीयोभीष्टोर्थःस्वार्थ
स्तस्यसाक्षात्प्रतिपादनमनुचितमितिअर्थान्तरभङ्गिभिःप्रतिपादनम
र्थगुणः। भव्योमनोहरः। सुगममन्यत्। नायकनायिकासङ्गमस्येति।
नायकस्यनायिकयातस्याश्चनायकेनेतिपरस्परोत्कण्ठाप्रकर्षोविवक्षि
तः। तेनैकशेषोनभवति ॥ २३ ॥ विवक्षितेति। कवेरभिमतस्यभूय
सोप्यर्थस्यस्वल्पेनैववाक्येनप्रतिपादनम्प्रौढिः। तथाहि। त्वान्निर्माय
जगद्विलक्षणवस्तुनिर्वहणचमत्कृतस्यधातुस्त्वद्वक्त्रेन्दुविलोकनन्तदा
सङ्गेनत्वदर्थनिर्मितायाः श्रियः प्रतिराजकेषुन्यसनक्रमेणसञ्चारणन्त
त्पूर्वापरप्रतिसन्धानबलाद्विद्वज्जनलक्ष्मीमाकृष्येत्यादिकोभूयानर्थःस्तो
केनवाक्येनोपनीतइति ॥ २४ ॥ सम्प्रत्यतिप्रसङ्गवारणार्थंकसप्राप्तावि

न्तादिद्रियसेइयवञ्चत्वाद्विरुद्धहेतोर्वद्दृश्यतेइत्येतावतःप्र
भूतस्यार्थस्यानेकवाक्येनप्रतिपादितत्वाद्विवक्षिता
र्थनिर्वहणम्प्रौढिः ॥ २४ ॥ पदाद्याश्रितदोषाणांये
चानुकरणादिषु। गुणत्वापन्नयेनित्यन्तेऽत्रदोषगुणाः
स्मृताः। त्रिविधाअपितेभूयश्चतुर्विंशतिधा बुधैः॥
प्रोक्ता यथागुणत्वेन प्रविभज्यतथोच्यते। याम्लिष्ट
म्लेच्छितादीनाम्पददोषेष्वसाधुता। निरूपितानुक
रणेगुणत्वं साप्रपद्यते ॥ यथा। उन्नमय्यसकचग्रह
मास्यञ्चुम्बतिप्रियतमेहठवृत्या। हुंहुमुञ्चममेति
चमन्दञ्जल्पितञ्जयति मानवतीनाम्। अत्रहुंहुममम
त्यसाध्वोरपिम्लिष्टम्लेच्छितयोरनुगुणत्वाद्गुणत्व
म् ॥ १ ॥ गुणत्वमप्रयुक्तस्य तथाऽनुकरणम्भवेत् ॥

शेषिकगुणालक्षयितव्यास्तेचदोषाअपिसन्तोगुणीभावमापन्नाउच्यन्ते।
तत्रैषकवीनामालापः। सामणणसुन्दरीणंविब्भममुव्वहइअविणओच्चे
अ। धूमोच्चिअपज्जलिआणम्बहुमओसुरहिदारुणम्*। दारुणानांगुण
त्वमितिशङ्कान्दर्शयन्नाह। पदादीति। पदवाक्यवाक्यार्थदोषाणां
गुणत्वापन्नयेनित्यंयेभवन्तितेनुकरणादिषुमध्येदोषगुणाःस्मृताइतिस
म्बन्धः। यद्यपिचानुकरणादिकाएवनगुणास्तथाप्यनुक्रियमाणाद्यभेदो
पचारेणोक्तम्। पदादिदोषेष्वन्त्यान्त्यस्यैकस्यनवधाभेदेचतुर्विंशतिप्र
काराः। यथेति। येनोपाधिनागुणीभवनमाचार्यैरुपपादितन्तत्तदु
पाधिविभागप्रदर्शनङ्करिष्यतइति। याम्लिष्टेति। इहद्वयेदोषानित्या
अनित्याश्च तत्रानुकरणमात्रानपवदनीयदोषभावाश्च्युतसंस्काराप्रयु
क्तादयोनित्याः।अनुकरणीयानुकरणापवादकहेतुकाःश्रुतिकटुत्वप्रभृत
यस्त्वनित्याः।येषुपददोषेषुम्लिष्टम्लेच्छितप्रभृतीनांयाऽसाधुतानिरूपि
तासागुणत्वमनुकरणेप्रपद्यतइत्यन्वयः। लुप्तैकदेशंम्लिष्टम्। अव्यक्त
रूपंम्लेच्छितम्।आदिग्रहणेनग्रस्तनिरस्तोपध्मातकम्पितादयः।हुंहुइति।

* सामान्यसुंदरीणांविभ्रममुद्वहतिअविनयोच्छ्रायः।

यथा। दिवम्पत्काषिणोयान्तियेचीकमतभाषिणः। पत्काषिणोपिनोयान्तियेवचन्तिप्रयुञ्जते। अत्राचीकमतवचन्तीत्यादिपदानाङ्कविभिरप्रयुक्तानामप्यनुकरणत्वाद्गुणत्वम् ॥ २ ॥ यच्छ्रुतेर्विरसङ्कष्टन्तस्य दुर्वचकादिषु ॥ गुणत्वमनुमन्यन्तेसानुप्रासस्यसूरयः ॥ यथा। त्वाष्ट्रास्त्वाष्ट्रारिराष्ट्रेनभ्राष्ट्रेनादंष्ट्रिणो जनाः। धार्तराष्ट्राःसुराष्ट्रेनमहाराष्ट्रेनचोष्ट्रिणः। अत्रश्रुतिविरसत्वात्कष्टेपिदुर्वचकत्वाद्गुणत्वम् ॥ ३ ॥ यत्पादपूरणाद्यर्थमनर्थकमितिस्मृतम्। गुणत्वमनु

---

द्वितीयत्तुङ्कारेबिन्दुमोल्लनान्स्लिष्टम्। ममेतिकिम्मुञ्चमुञ्चेतिस्लिष्टमुतममेतिननिश्चीयते ॥ अनुकरणत्वाद्गुणत्वमिति॥अर्थविशेषेहिसाधुत्वव्यवस्थेति। यच्चाशक्तिजमसाधुरूपन्तस्यानुकरणेसाधुत्वमिष्यतइत्युक्तमनुक्रियमाणन्तुस्वरूपपदानुकरणतयापूर्वार्थत्यागेनसाध्वेव।तस्यैवानुकरणस्यतत्कालरञ्जकमानवतीममवचनानुकारतयाचगुणीकरणसामर्थ्यमिति ॥ १ ॥ पत्काषिणइति। पादमविकषन्तः। हिमकाषिहतिषुचेतिपादशब्दस्यपद्भावः। वचेर्वचन्तीत्येवरूपमप्रयुक्तन्नत्वन्यथापि।सत्यन्न।मनवच्मीत्यादेरनुमतत्वात्। इत्यादिपदानामित्युदाहरणान्तराभिप्रायेण॥२॥यच्छ्रुतेरिति।दुर्वचकयोगाइति।व्यावहारिक वतुःषष्ट्यान्दुर्वचकप्रयोगोनुमतस्तस्यानुप्रासघटकत्वेऽलङ्कारनिर्वहणक्षमतयाकविशक्तिव्यञ्जकस्यगुणीभावः।आदिपदेनरौद्रादिरसानुप्रवेशः। यदाह।शषौसरेफसंयोगौटवर्गश्चापिभूयसा।विरोधिनःस्युःशृङ्गारेतेनवर्णारसच्युताः। तएवविनिवेश्यन्तेबीभत्सादौरसेयदा। तदातन्दीपयन्त्येवतेनवर्णारसच्युता, इति।त्वाष्ट्राराक्षसास्त्वष्टुरपत्यं वृत्रस्तस्यारिरिन्द्रस्तस्यराष्ट्रे स्वर्गेनसन्ति। भ्राष्ट्रे चणकादिभर्जनस्थानेनकुण्ठदंष्ट्राभवन्ति। असितचञ्चुचरणाहंसाधार्त्तराष्ट्रान्नविद्यन्ते। उष्ट्रिणउष्ट्रोपजीविनः ॥ ३ ॥ यत्पादपूरणेति। द्योतनीयमर्थमन्तरेणप्रयुक्तमव्ययपदमनर्थकमित्युक्तम्।पादपूरणार्थत्वन्तुदूषणताबीजम्।आदिग्रहणा

मन्यन्तेतस्यापियमकादिषु ॥ यथा । योषितामति
तरान्नखलूनङ्गात्रमुज्ज्वलतयानखलूनम्, बभौमुखेना
प्रतिमेनकाचनश्रियाऽधिकातामप्रति मेनकाचन, अ
त्रखलुशब्दस्यचशब्दस्यच पादपूरणमात्रेपिप्रयोजने
यमकत्वाद्गुणत्वम् ॥ ४ ॥ यत्तुरूढिच्युतत्वेनप्रोक्त
मन्यार्थसंज्ञितम् । प्रहेलिकादिषुप्रायोगुणत्वन्तस्य
युज्यते ॥ यथा । खातयःकनिकालेतेस्फातयःस्फा
र्हवलगवः । चन्द्रेसाक्षाद्भवन्त्यत्रवायबोममधारिणः ।
अत्र खातय इत्यादीनां घर्घरिकादौ घृङग्रानवस्थाने
रूढिः । गूढार्थेतुप्रहेलिकादौ तन्नदुष्यतीति तेषान्दो

---

द्भ्यपूरणम् । सतितूपयोगेतस्य तद्बीजाभावाद्दोषभावविरहोऽलङ्कारा
रम्भेचगुणत्वन्तदिदमुक्तंयमकादिष्विति । आदिशब्दोनुप्रासचित्रादि
परः।वाक्यालङ्कारार्थत्वमपिशब्दालङ्कारारम्भकत्वमेव । यदाह। आर्षा
र्षिपुत्रकर्षिकवैदिकादिवाक्यानामलङ्कारहेतवोवाक्यालङ्कारार्थाइति।
तेन "उत्फुल्लकमलकेसरपरागगौरद्युतेममहिगौरि । अभिवाञ्छित
मसिद्ध्यतुभगवतियुष्मत्प्रसादेन" इत्यत्रहिप्रभृत्येतयोर्नवाक्यालङ्कार
प्रयोजकत्वमित्युक्तप्रायम् । योषितामित्यादावतितरान्नखलूनंयोषि
तांगात्रमुज्ज्वलतयानोनमित्येवपर्याप्ते द्वितीयपादेतदुभयमपियमका
रम्भकंसत्प्रस्तुतोपयोगितयाकविव्युत्पत्तिपुरस्कारप्रवृत्तमपजहातिदो
षभावमुपादत्तेचगुणत्वमिति ॥ ४ ॥ यत्त्विति । रूढिच्युतत्वेनद्वि
तीयांसंज्ञाम्प्रयोजयति । आकीर्णामन्त्रणाद्युपयोगिनीप्रहेलिका तया
चतद्विद्यसम्भाषायांविदग्धैरुपन्यासैः स्वार्थाप्रत्यायकत्वलक्षणबीजा
भावान्नदोषो गुणस्तुभवति । अनुकरणादिकमादिपदेनगृह्यते । खात
योघर्घरिकाःकनीतिकन्यासंबोधनम् । कालश्वरणःकर्णाटदेशभाषानुसा
रात् । स्फातयःस्फीताःस्फार्होमनोहरोवल्गुर्ध्वनिश्चन्द्रआह्लादकोवा
यवःप्राणाःधारिणोऽनवस्थितास्तदयंवाक्यार्थः । हेकनिकन्येतवाह्ला

षगुणत्वम् ॥ ५ ॥ तुच्छवाच्यमपुष्टार्थमिति यत्प्राक् प्रकाशितम् । तस्य च्छन्दोनुरोधादौ गुणत्वमत्र धार्यते ॥ यथा । द्विरष्टवर्षाकृतिमेनमर्थिनामुशन्ति कल्पोपपदम्महीरुहम् ,, यमिन्द्रशब्दार्थनिषूदनंहरेर्हिरण्यपूर्वङ्कशिपुम्प्रचक्षते ,, अत्र द्विरष्टवर्षाकृतिकल्पोपपदम्महीरुहमिति हिरण्यपूर्वङ्कशिपुमित्यस्य तुच्छार्थत्वेपिच्छन्दोनुरोधाद्गुणत्वम् ॥ ६ ॥ प्रतिपादितमादौ यदसमर्थमवाचकम् । तस्यापि खलु मन्यन्ते गुणत्वं सीत्कृतादिषु ॥ यथा । आशुलङ्घितवतीष्टकराग्रे नीविमर्द्धमुकुलीकृतदृष्ट्या । रक्तवैणिककराहततन्त्रीमण्डलक्कणितचारु चुकूजे । अत्र कूजित

दकचरणबद्धाय यथोक्तविशेषणा घर्घरिकाः साक्षाङ्कुर्वन्ति श्रोत्रेण प्रत्यक्षी क्रियन्ते ऽत्र प्रस्तावे मम प्राणा उद्दीपनप्रकर्षमसहिष्णवो धारिणोऽनवस्थिता इति । व्रणप्ररोहस्यानादौ खात्यादिशब्दानां रूढिर्नतु घर्घरिकादावित्याह । अत्रेति । नामधातु विवक्षयाद्विधा व्याख्यातम् ॥ ५ ॥ तुच्छेति । शब्दपल्लवनस्य प्रकृतरसाननुगुणत्वेन दोषत्वप्रसङ्गे क्वचिदनन्यगतिकतया कवेरुत्पाद्यते । तथाहि । भिन्नसर्गान्तैरित्यादिना सर्गाणामौत्सर्गिकैकवृत्तनिर्वाहौचित्ये सम्यगुक्तसंक्षिप्तशब्दाप्रवेशात्पररूपेण तदर्थत्वस्य विवक्षितत्वान्न शब्दविकाशेन दोषः किन्तु गुण एव । प्रकृतोदाहरणे । द्विरष्टवर्षाकृतिमिति । कल्पोपपदम्महीरुहमिति च निदर्शनस्मन्यन्ते । षोडशादिशब्दानामपि वंशस्थप्रवेशत्वादनन्यगतिकत्वाभावात् । हिरण्यपूर्वङ्कशिपुमिति तु सङ्गच्छते । न हि हिरण्यकशिपुशब्दोत्र प्रविशति प्रदर्शनार्थन्तु द्वयमन्यदप्युपात्तम् । एवंविधः शब्दविस्तरो गुणतामासादयतीत्याशयात्तेनायमर्थः । पल्लवाख्य शब्दगुणेनाव तुच्छता चमत्कारकारितया गुणधुराधिरूढैवाविस्तरविविक्तविषयतयाक्वविशेषगुणस्य भवतीति जिज्ञासायान्तु च्छन्दोनुरोधोविहितः सोपिहि क्वादाचित्कः करोत्येव दोषभावव्यावृत्तिमिति ॥ ६ ॥ प्रतिपादितमिति ।

स्यपक्षिणोन्यत्रावाचकत्वेपिकामशास्त्रेनुमतत्वाद्गुणत्वम् ॥ ७॥ शास्त्रमात्रप्रतीपत्त्रादप्रतीतन्तदुच्यते। गुणत्वन्तस्यतद्विद्यसम्भाषादौविदुर्बुधाः ॥ यथा। सर्वकार्यशरीरेषुमुक्त्वाङ्गस्कन्धपञ्चकम्। सौगतानामिवात्मान्योनास्तिमंत्रोमहीभृताम्। अत्राङ्गस्कन्धपञ्चकइत्यस्यशास्त्रमात्राप्रसिद्धस्यापितद्विद्यसम्भाषायांगुणत्वम् ॥८॥ अर्थप्रतीतिकृद्दूरेक्लिष्टन्नामयदुच्यते। झटित्यर्थप्रतीतौतद्गुणत्वमुपगच्छति॥

---

अस्तिकश्चिदेवंविषयोयत्रासमर्थस्यचारुतयागुणभावः । तथाहि । यद्यपिगणपाठादव्यक्तशब्दःकूजितन्तथापिलोकेपक्षिविषयएवनियतन्तथाचाभिमतविषयेप्रयुक्तम्पक्षिविरुताकारमावेदयति । हारीतप्रभृतीत्यादिनाकामशास्त्रकारैः सीत्कारोपदेशनात् सीत्कारस्यचचतुः षष्टिकलात्वेनप्रवणतयात्यन्तमुपादेयत्वात् । तदाह । अन्यान्यप्याकृतिग्रहणान्युपलक्षयेदिति ॥ ७ ॥ शास्त्रेति ॥ शास्त्रमात्रप्रसिद्धानामाहत्यप्रतीत्यजननेनविवक्षितवाक्यार्थप्रत्ययपरिस्खलनच्छेददायिनानामुदुष्टताबीजम् । यदितुकुतश्चिद्विशेषाज्झटित्येवप्रतीतिञ्जनयेत्तदाकथन्दोषः॥ अस्तिचप्रतिपत्तिव्युत्पत्त्यतिशयलक्षणोविशेषस्तदिदमुक्तम् । तद्विद्येति। मन्त्रणाद्यवसरेऔचितीवशात्तत्पदानाङ्गुणत्वमपिनिर्वहति। शास्त्रप्रक्रियापेक्षित्वङ्गाम्भीर्यम्। शास्त्रव्यवहारसङ्केतितपदानाङ्गुणत्वमित्यन्यःप्रकार यथावद्विनियोगःकार्यस्तस्यप्रकारसाकल्यंशरीरंशब्दच्छलात्कायआत्मासारभूतःक्षेत्रज्ञश्च । कर्मणामारम्भोपायः पुरुषद्रव्यसम्पद्देशकालविभागोविनिपातप्रतीकारःकार्यसिद्धिरितिपञ्चाङ्गानि। रूपंसंज्ञासंस्कारोवेदनाविज्ञानमितिपञ्चस्कन्धाः ॥ ८ ॥ अर्थप्रतीतिकृदिति ॥ इहापितदेवदूषणताबीजंझटितिप्रतीतिजननेसतिसमाधीयते । समाधानोपायश्चपदान्तरसन्निधानमतिप्रसिद्धिर्वाप्रकरणंवा । तथाहि । प्रकृतोदाहरणेउत्तरार्द्धेहरिरित्यभिधानादात्मनःपदमितिहरेःपदमितिसम्पन्नस्यचसामान्यशब्दत्वादाकाशविषया

यथा। अथात्मनः शब्दगुणङ्गुणज्ञः पदंविमानेनवि गाहमानः। पितुःपदम्मध्यममुत्पतन्तीकाञ्चीगुण स्थानमनिन्दितायाः। अत्रात्मनःपदंशब्दगुणमिति पितुःपदंमध्यममितिचाकाशविषयाकाञ्चीगुणस्था नमितिनितम्बविषयमिति सर्वप्रसिद्धेर्झटित्येवप्र तीतिङ्करोतीतिक्लिष्टस्यास्यगुणत्वम्॥ १ ॥ अप्रसि द्धार्थसम्बन्धंयद्गूढार्थमितिस्मृतम् ॥ तद्व्याख्या नादिषुप्रायोगुणत्वेनतदिष्यते ॥ यथा। अह्मारि साविकइणोकइणोहालिवुद्धहालपमुहाविमरडुक्क मक्कडाविहुहोत्तिहरीसप्पासिंहावि *। अत्रमरडूकम

प्रतीतिर्यद्यपिझटिति नोत्पत्तुमर्हतितथापिशब्दगुणमितिविशेषणेन पदार्थान्तराद्यवच्छिद्यविवक्षिताभिमुखीप्रतीतिरुपजन्यते। पितुःप दमिति। यद्यपि पदमितिसामान्यन्तथाप्याकाशस्यैवमध्यमचरणवि न्यासस्थानत्वेनप्रसिद्धेर्नतथोचितप्रतीतिव्यवधानम्। काञ्चीगुणस्था नमिति। चरणादारभ्यवर्णनाक्रमेनितम्बएवकाञ्चीनिवेशनस्योचित त्वान्नप्रतीतिव्यवधानम् तदिदमुदाहरणत्रयप्रयोजनमुदाहरणादेरने कोत्रवाक्यार्थोगवेषणीयः। कथन्तर्हिसर्वप्रसिद्धेरितिब्रूवीति। इत्थं शब्दगुणशब्दस्य बहुव्रीहित्वादवश्यंविशेषपर्यवसानाय प्रसिद्धिरनुसर णीयाऽवश्यञ्च वर्णनक्रमेपि काञ्चीगुणस्थानमनिन्दितायाइत्यत्र का ञ्चीगुणस्थानशब्दस्यनितम्बविशेषपर्यवसानार्थङ्कवीनामौचित्यप्रसि द्धिरङ्गीकर्त्तव्येति। ननुचात्मनः पदंशब्दगुणत्वमित्यत्रप्रसादःकस्मा न्नभवति। एवमाहनभवतीति। उदाहरणस्यादूषणत्वात्सामान्यश ब्दस्यविशेषपर्यवसानमन्यच्च। समभिव्याहृतपदार्थसंसर्गरूपेवाक्यार्थं स्वच्छसलिलइवाभिमतविशेषप्रतिबिम्बनमित्युपाधिद्वयस्यसङ्कराच्च ॥ ८ ॥ अप्रसिद्धार्थसम्बन्धमिति॥ तस्यगुणार्थस्यव्याख्यानन्तद्व्याख्या नमत्राप्यतिप्रसिद्ध्याकृष्टस्यानतिप्रसिद्धार्थप्रतीत्यकरणन्दुष्टत।बीजम भिधानीयन्तत्तुप्रतीतिपर्यवसानादेवनिवर्त्तते। भवतिचाभिधानको

* अस्मादृशाअपिकवयः कवयो हरिवृद्धशालप्रमुखा अपि। मरडूक

कंटसर्प्पसिंहेष्वप्रसिद्धत्वाद्गूढस्यापिहरिशब्दस्यस्व
यंव्याख्यातत्वाद्गुणत्वम् ॥१०॥ नेयार्थंयत्स्वसङ्केत
क्लृप्तवाच्यन्तदीरितम् ॥ प्रहेलिकादिषुप्राज्ञैस्तद्गु
णत्वेनगण्यते॥ यथा॥ मोरुकलावेजवहइत्तहणामह
सरिणाउ । उस्सीसप्पाअन्तिगउअणुणन्तिहिजा
णुणाउ। अत्र मयूरबर्हकचन्द्रकसङ्केतेन कल्पितस्य
चन्द्रनाम्नोनेयार्थत्वेपिप्रहेलिकत्वाद्गुणत्वम्॥११॥

---

षइवव्याख्यानेझटितिप्रत्ययः।अस्मादृशाअपिमन्दप्रतिभानाःकवयःक
विशब्दवाच्याःहरिवृद्धशालिप्रमुखाश्च लोकोत्तरप्रतिभाशालिनस्तद्व
यवतांविख्यातेचाविख्यातेचशब्दाःसाधारणाभवन्तितद्यथाहरिशब्दए
वेतिव्याख्यानम्। ततोदोषत्वाभावःप्रतिवस्तुलक्षणालङ्कारपर्यवसायि
तयाचप्रकृतार्थानुगुणत्वेनगुणत्वलाभस्तदेतद्व्याचष्टे ॥ स्वयंव्याख्यात
त्वाद्दोषाभावोगुणत्वम्पुनराभिप्रायिकात्प्रकृतानुगुणभावादितिबोद्ध
व्यम् ॥ १० ॥ नेयार्थमिति । अत्रापिपूर्ववदेववासना । आकीर्णास
त्त्रणादौविदग्धानांलक्षणादयःप्रहेलिकाविशेषानुन्मीलयन्तउपयुज्य
न्ते। तथाहि। मयूरःकलापेनवहतितस्यनाम्नस्तत्सदृशनामा । उच्छी
र्षात्पादान्तङ्गतोनुनक्तंयथानौका। जिअनाउइतिपाठे जितनौकइति
सएवार्थोमयूरोबर्हभारेचन्द्रकंवहति। अनेनसङ्केतेनचन्द्रनामलक्ष्यते
संविष्टस्यशिरोदेशउच्छीर्षञ्चरणदेशःपादान्तः । उच्छीर्षेणप्राचीदिग्ल
क्ष्यते । प्राक्शिराःशयीतेतिवचनादर्थात्पादान्तेनप्रतीची ततश्च प्रा
च्याःप्रतीचीमर्द्धचन्द्रोगतइतिप्रातःकालोद्भेदोवाक्यार्थः । अणुणेन्ति
इति । अजिणाउ इति पाठे सुभगमानिनङ्कान्तमनुनयन्त्या मया
ज्ञातइति खण्डितकामिनीखेदोक्तिः । नचैतासां लक्षणानामस्तिकि
ञ्चित्प्रयोजनमितिनेयार्थत्वप्रसक्तौ प्रहेलिकाभावएवसमाधानहेतुः।
ननुचोच्छीर्षपादान्तपदयोरस्तुमयूरकलापइत्यादौतुकथम् । यमिति
हिसर्वनामाभिमतमेवतावदुपस्थापयतिबर्हैबहूनाम्बहुलेकथमेकस्यप्र
तीतिरिति । अभिधानेपिकदाचित्क्लिष्टस्यविशेषगुणःस्यात् । नात्रने

यदनिश्चयकृत्प्रोक्तंसन्दिग्धन्तद्गुणीभवेत् ॥ भवेद्वि
शेषावगमोयदिप्रकरणादिभिः ॥ यथा। महीभृतः पु
त्रवतोपिदृष्टिस्तस्मिन्नपत्येनजगामतृप्तिम्,, संशाङ्ग
चक्रासिगदाब्जपाणिर्मेघच्छविःपातुजगन्तिशौरिः,
अत्रतस्मिन्नपत्येइत्यनिश्चितस्याप्यपत्यविशेषस्यस
न्दिग्धेगौर्यामितिप्रकरणेनगम्यते। मेघच्छविरित्य
स्यचनश्यामादिपदानुपादानेपिशौरिसम्बद्धत्वा
न्नवमेघच्छविर्मेघश्यामच्छविरितिवाविशेषोनि

---

यार्थताकिन्तुतेनसङ्केतेनकल्पितस्यचन्द्रनाम्नइति। तस्यनाम्नःसदृश
नामेत्यनेनमुख्यवृत्त्यैवविवक्षितसदृशलाभादिति। अत्रेदंवक्तव्यम्।
तस्यनाम्नइत्यनेनचन्द्रकपदमुपस्थापितन्नचतेनसहास्तिचन्द्रपदस्यसा
दृश्यमिति तत्र लक्षणाश्रयणीया तदिदमुक्तञ्चन्द्रसङ्केतेनकल्पित
स्यचन्द्रनाम्न इति। उपलक्षणतयाच एकदेशव्याख्यानम्।॥ ११ ॥
यदिति। संशायकजातीयस्य सन्देहजनकत्वन्नामदूषकताबीजम्।
तद्यदिकुतश्चिद्विशेषाद्विवक्षितप्रतीतिरप्रत्यूहमुपपद्यतेतदाभवत्येव
दोषाभावः। विशेषावगमोविशेषदर्शनन्तस्यैवसंशयविरोधित्वात्।
महीभृतइत्यादावपत्यशब्दोयद्यपिगौरीशब्दोपितदितरदत्तपदइति
संशायकजातीयोभवति तथापितच्छब्दोपस्थापितएवविवक्षितविशे
षेपर्यवस्यन्नपजहातिदोषत्वम्। तच्छब्दएवकथन्तमर्थमुपनयतीत्यत्र
तुप्रकरणमेवजाग्रदवस्थमस्ति।मेघच्छविरित्यत्रतुयद्यपिमेघपदंश्यामा
श्यामदत्तपदतयासंशायकजातीयन्तथापिप्रसिद्धपदनीलवर्णार्थगौरी
पदसमभिव्याहाराच्छब्दान्तरसन्निधिरपिविशेषेनियमयतितद्वाक्यविप
दंवाविशेषेपर्यवस्यति। अत्रप्रकरणादीनांविशेषस्मृतिहेतुत्वात्। अ
तएवसूत्रेबहुवनादिपदानुपादानुपात्तास्तदेतदभिसन्धायव्याचष्टे। अ
त्रेत्यादि। एवन्नवमेघच्छविरितिचोक्तेयथानियमेनार्थप्रतीतिरप्रत्यूहा
भवति। यथामेघच्छविरित्युक्तइति। अतएवकविसमयप्रसिद्धविशेषा
वगमसामग्रीसम्पादनेनगुणत्वमिति। कथम्पुनरिदंक्लिष्टस्यवैशेषिक

श्रीयतेइत्यस्यापिगुणत्वम् ॥ १२ ॥ यत्तद्विरुद्धमि
त्युक्तंविरीतप्रकल्पनम् ॥ तथाभूताभिधानेनगुण
त्वम्प्रतिपद्यते ॥ यथा । अभिधायतदातदप्रियंशिशु
पालोनुशयम्परङ्गतः । भवतोभिमनाःसमीहतेसरु
षःकर्तुमुपेत्यमाननाम् । अत्रविपरीतार्थकल्पनंवि
रुद्धत्वेपिसन्ध्यर्थविग्रहार्थयोःस्फुटभिन्नार्थत्वेनाभि
धानाद्गुणत्वम् ॥ १३ ॥ अप्रयोजकमित्युक्तमविशेष
विधायकम् ॥ स्वरूपमात्रेवक्तव्येतस्यापिगुणतेष्यते ॥

---

न्नभवति कोवाक्यभूतेनभवति । किन्तुसंशायकत्वमापाद्यतःप्रतिभा
सोप्युक्तयुक्त्यानिवर्त्ततइत्यभिमतन्नचैवंरूपताक्लिष्टवैशेषिके सम्भवति।
एकस्यैवचित्रपदस्यसंशयशक्तिरितिनवाक्यार्थगामिता ॥ १२ ॥ यत्त
दिति ॥ एवंवस्तुप्रकृतमभिसन्धायवाक्यरचनेतदुपमर्द्दकवस्त्वन्तरप्रवे
शोविरोधः । यत्रद्वेअपिवस्तुनीप्रकृतेवस्त्वन्तरमेववाप्रकृतन्तद्यथोक्त
रूपाभावेकथन्दोषः । तथाहि । अभिधायेत्यादौदूतवाक्येसन्धिविग्रह
योर्मिथोविरोधिनोरपिविवक्षितंसदोषः।सरुषः सक्रोधस्यतवमानना
म्पूजांशिशुपालइच्छतिअनुशयः पश्चात्तापोऽभिमुखस्य सतथेतिसन्धि
पक्षेविग्रहपक्षेतुअनुशयःक्रोधोभवतःसकाशादभिभूयशून्यंयभोयस्येति
नित्यसापेक्षत्वात्समासःसरुषोमाननाउपयोगस्तदिह निस्पष्टार्थस्योभ
योपन्यासोयद्रोचतेतद्धीयतामित्यभिसन्धायरचितइतिगुणत्वमित्यु
भयविवक्षापक्षेव्याख्यानम् । यदातुशासनहरोदूतस्तदोद्यतेष्वपिशस्त्रे
षुयथोक्तवक्तारोदूताभवन्तीतिन्यायेनविग्रहार्थमेवाभिमतःविपक्षस्या
पिप्ररोचनादूतकर्त्तव्येतिमुखेसन्धिःपर्यायभूतोयुक्तएव। तदिदंव्याख्या
नेनस्फुटयति। अत्रेति।सन्धिरूपोर्थःसन्ध्यर्थःविग्रहरूपोर्थोविग्रहार्थ
योरभिधानेनस्फुटएवभिन्नोर्थःप्रयोजनम्पक्षद्वयेपि यत्प्रयोजनमुक्तन्त
दभिप्रायेणैतद्व्याख्यानम् ॥ १३ ॥ अप्रयोजकमिति । तदेवकविभिरु
पादीयतइतियदभिप्रेतसन्धिमाधत्ते । यत्रवाक्यार्थप्रविष्टमपिनतथा
भावमासादयतितदप्रयोजकमित्युक्तम् । तस्ययदिविशेष्यस्वरूपाभि

यथा। तेचाकाशमसिश्यामसुत्प्लुत्यपरमर्षयः,। सा
ग्रंवर्षसहस्त्रंसतपस्तेपेमहामनाः। अत्रासिश्याममि
त्याकाशम्प्रति,साग्रमित्यनेनचवर्षसहस्त्रम्प्रतिविशे
षानभिधानेपिदूरोत्पतनचिरतरतपश्चरणयोरुपयो
गविवक्षायांगुणत्वम्॥१४॥ यदव्युत्पत्तिमद्देश्यमि
तिपूर्वन्निरूपितम्॥महाकविनिबद्धंसत्तदप्यत्रगुणी
भवेत्॥ यथा। खण्डेषूद्दण्डपिण्डीतगरतरलनाःप्रा
पिरेयेनवेलामालम्बयोत्तालतल्लस्फुटितपुटकिनीव
न्धवोगन्धवाहाः,। पातालप्रतिमल्लगल्लविवरप्रक्षि

धानेपर्यवसानेनप्रयोगो न तर्हिदोषः। तथाहि। आकाशमित्यादौ
नासिश्यामताऽरूपंविशेषमाकाशेकाञ्चिदपिविशेषमात्रामुन्मुद्रयतिआ
काशस्यसर्वदातद्रूपानपायात्। एवमसमग्रस्यसहस्त्रत्वाभावात्साग्र
मित्यपिनविशेषाधायकम्। आकाशसहस्त्रयोस्तुयदेवरूपमावेदनीय
मित्यत्रैतावन्मात्राभिप्रायेणनास्तिदूषणन्तथापिनान्तरीयकयोरभिधा
नेकिम्प्रयोजनंयेनानयोर्गुणभावसम्पत्तिरित्यतआह। दूरेइति। अति
दूरेश्यामत्वमधिकम्प्रतिभाति। क्षणमात्रमपिनविरतिरासीदितिसा
ग्रपदाभिप्रायोतएवनात्रपौनरुक्त्यम्। तर्हिवाक्यार्थेविशेषाधायक
त्वमेवानयोरितिकथन्दूषणत्वसम्भावना। इत्थंयस्मिन्ननुपादीयमा
नेपिनाभिमतन्यूनतातत्पदमप्रयोजकम्। अस्तिचात्रद्वयोरपितज्जा
तीयतायान्दोषत्वप्रसङ्गः। सप्रकृतोपयोगविवक्षायामेवनिवर्त्तते।
सर्वथाप्रकृतानुपयोगेदूषणत्वानपायिताऽस्तिचात्रोचितएवोपयोगो
योविवक्षितुमर्हतीत्याह। विवक्षायामिति॥ १४॥ यदिति। सन्दर्भ
च्छायावैषम्यमत्रकष्टताबीजमितिपूर्वमुक्तन्तत्रयदिसमानच्छायशब्दम
ध्यनिवेशनेनप्रतिक्षिप्यतेतदाकथन्दोषः। तथाभूतानामेवपदानांस
न्दर्भेनिर्वाहकतयामहाकविनिबद्धमितिअतएवशब्दगमकतयागुणत्व
लाभः। उद्दण्डत्वेनपिण्डीतगराणाङ्कठोरता। तादृशानामपितरलने
प्रगौढिः। उत्तालेत्याद्यनुप्रासवत्प्रौढपदसजातीयमेवतल्लपदमेवङ्क

प्रसन्नार्णवम्,, किरन्तः कावेरीलडहलरीशीकरकणम्। अत्रतल्लगल्ललडहलहरीप्रभृतीनामव्युत्पत्तिमत्त्वेनदेश्यत्वेपिमहाकविभिरङ्गीकृतत्वाद्गुणत्वम् ॥ १५ ॥ ग्राम्यंघृणावदश्लीलामङ्गलार्थंयदीरितम् ॥ तत्संवीतेषुगुप्तेषुलक्षितेषुनदुष्यति ॥ तत्रसंवीतंयथा ॥ तस्मैहिमाद्रेःप्रयतान्तनूजांयतात्मनेयोजयितुंयतस्वा योपित्सुतद्वीर्यनिषेकभूमिःसैवक्षमेत्यात्मभुवोपदिष्टम् । अत्रतद्वीर्यनिषेकभूमिरित्यश्लीलस्यापिसंवीतत्वाद्गुणत्वम् । यदाह । संवीतस्यहिलोकेषुनदोषान्वेषणंक्षमम्। शिवलिङ्गस्यसंस्थानेकस्यासभ्यत्रवासना ॥ १६ ॥ गुप्तेयथा । सुदुस्त्यजायद्यपिजन्म

---

ल्लेत्यादौवोद्धव्यन्तदिदमाह । अत्रतल्लगल्लेत्यादि ॥ १५ ॥ ग्राम्यमिति । अत्रकेचिद्यथासङ्ख्यंव्याचक्षते । घृणावदादीनांत्रयाणांक्रमेण संव्यानगोपनलक्षणानिदोषत्वाभावबीजानीतितदसत् । घृणावदर्थादिमात्रएवाग्रेप्रतिसम्भेदत्रिकमुपादायसंव्यानादित्रिकस्योपदर्शनात् । एतादृशयथासङ्ख्यसूचनायैवलक्षणातिक्रमेणघृणावतःप्रथममुपादानम्। तस्मात्संव्यानंमिवसंव्यानंलोकानुमतिः।किञ्चित्पदन्दुष्टजातीयमपिलोकेनोपादानात्तद्रूप्यव्यञ्जहात्येव । प्रायेणलोकानुसारिकाव्यदर्शनम्भवत्यतःप्रतिस्वसम्भेदत्रितयसम्बन्धादुपपन्नंयथासङ्ख्यंस्यादित्यभिधायपूर्वक्रमेणोदाहरति । अत्रेति । एतेनसंवीतेष्वित्यादिकम्बहुवचनंव्याख्यातम् । यथाशिवलिङ्गस्यसंस्थानइत्यत्र । यद्यपिमुख्यविधैवशिवलिङ्गपदमश्लीलएवार्थेतथाप्यविगानेनानादिप्रयोगयोगित्वान्नव्रीडादानक्षमन्तथेहापि। तद्वीर्येति ॥शिवलिङ्गेत्यत्रभगवत्सम्बन्धः प्रयोजकइतितुतुल्यमत्रापीत्याह । तदिति ॥ अत्रहिजगदन्तर्यामिणोभगवतस्तद्विरोधितयाप्रसिद्धिरुपजीव्यातदुपजीवनेव्रीडादायिनी प्रतीतिरनुत्पायिन्येव । अत्रैवाचार्यमतंलिखति । संवीतस्यहीति ॥ कस्यासभ्यत्वेनेति॥पावनासकललोकसाधारणंज्ञानम्॥१६॥यस्यपदस्य

भूमिर्गजैरसम्बाधमयाम्बभूवे । सतेनुनेयःसुभगे
भिमानीभगिन्ययन्त्वःप्रथमोभिसन्धिः । अत्रजन्म
भूमिसम्बाधसुभगभगिनीशब्दानामश्लीलार्थान्तर
त्वेपिप्रथमार्थप्रभावभावनागुप्तत्वाद्गुणत्वम् । य
दाह।वस्तुमाहात्म्यगुप्तस्यपदार्थस्याविभावनात् । भ
गिनीभगवत्यादिनासभ्यत्वेनभाव्यते ॥ १७ ॥ ल
क्षितंयथा । ब्रह्माण्डकारणंयोप्सुनिदधेबीजमात्म
नः । उपस्थानङ्करोम्येषतस्मैशेषाहिशायिने । अ
त्रब्रह्माण्डोपस्थानशब्दयोरसभ्यस्मृतिहेतुत्वेप्यंन्यत्र
लक्षितत्वाद्गुणत्वम् ॥ एवमशस्तादीनामपिगुण
त्वंयथा । मद्रेमारिप्रशस्तंवदसदसिमुदानृत्यकृत्येमु
हूर्तंमृत्योरत्तैश्चतुष्कंविरचयरचयारात्रिकङ्कालरात्रे।

व्युत्पत्तिलभ्यमर्थान्तरंग्राम्यं यस्यवासमभिव्याहारलभ्यन्तत्रगोपनंस
माधानबीजम् । तदुभयम्भवतिरूढेर्वाबलवत्त्वञ्जलधरादिष्विवतया
तात्पर्यान्वयनप्रतिबन्धेनविपरीतार्थतात्पर्यान्वयनपर्यवसानंवा । य
थोदाहरिष्यमाणेतथाचप्रतीतेरप्रत्यूहेदूषणताबीजाभावस्तत्रप्रथमक
ल्पपदीकरणेनाद्यमुदाहरति॥ रूढ्युपस्थापितःप्राथमिकोर्थस्तस्यभा
वोझटितिवाक्यार्थज्ञानन्तस्यभावनावासना तयागोपनञ्चमत्कारार्पण
नतिरोधानमनुमेवार्थमाचार्यमतेनस्वहस्तयति । वस्तुमाहात्म्येति ।
अविभावनादिति॥विरुद्धंव्रीडादायितयाभावनन्तस्याभावात् । तेनक्व
चिद्योगोपादानेपितयाभावसम्पत्तौनदोषः । एतदेवोदाहरणेनस्फुट
यति । भगिनीति । एतेनभगवतीतिपूर्वानुपात्तमुदाहरणंव्याख्यात
म्।द्वितीयगोपनमशस्तार्थान्तरेव्यक्तीभविष्यतीति॥१७॥यस्यपदस्यैकदे
शोग्राम्यानुगामीतस्यस्मृतिहेतुतातत्रकुत्रचिदुक्तिवैचित्र्यादेकदेशोझ
टितिस्मारकःक्वचित्तथैवसमुदायशक्त्याविपरीतार्थोपस्थापनाज्झटिति
स्वार्थंसमुदायएवप्रतिपादयति । आद्योदूषणम् । द्वितीयस्तुवैजात्या

चामुण्डेमुण्डमालामुपनयविनयस्त्रायतामैरवीर्ष्या
मेवन्देवेभवानीवहतिपरिजनव्याहृतिस्त्रायतांवः।अ
त्रमारीकृत्यादीनामपिपदानांसमस्तमङ्गलायतनस्य
भगवतोविश्वेश्वरस्यसंबन्धेनोक्तत्वाद्गुणत्वम्॥१९॥
यथावा। सत्पक्षामधुरगिरःप्रसाधिताशामदोद्धतार
म्भाः। निपतन्तिधार्तराष्ट्राःकालवशान्मेदिनीपृष्ठे।
अत्रधार्तराष्ट्राःकालवशान्मेदिनीपृष्ठेनिपतन्तीत्य
स्यामङ्गलार्थत्वेपिहंसानहंधार्तराष्ट्रानितिव्यपदिशा
मीतिवक्ष्यमाणवाक्यान्तरगुप्तत्वाद्गुणत्वम् ॥२०॥
यथाच। कोभिप्रेतःसुसंस्थानस्तस्याङ्गतिनिश्चयः।
आशापिशाचिकैषातुकुमारीमावरीष्यति। अत्राभि
प्रेतासुसंस्थानमाशापिशाचीकुमारीतिपदानामश

भावाद्गुणः। तदेवंलक्षणंयस्याद्येग्राम्यत्वन्ततोन्यत्रैवबहुधालक्षणात्तदि
दमुक्तमन्यत्रलक्षितत्वादिति॥१८॥ पुनरपरेणप्रकारेणासंभवानम्भवतीत्य
प्रशक्तेस्फोरयति।परमेश्वरस्यमङ्गलायतनत्वन्तत्सम्बन्धिमात्रस्यैवमङ्ग
लीभवननियमेनशास्त्रेतिहासादौप्रसिद्धत्वात्। तदुक्तम्।तथापिस्मर्तॄ
णांवरदपरमम्मङ्गलमसीति। अयम्चप्रकारोऽप्रशस्तार्थएवभवति। मा
र्यादयोमातृविशेषाः। आरात्रिकन्नीराजनदीपव्यासङ्गपात्रम्। परिज
नपदंसम्बन्धम्पुष्णाति॥१९॥द्वितीयङ्गोपनप्रकारमशस्तार्थान्तरंव्यञ्ज
यति। यथावेति। पक्षःपतत्रम्परिकरश्च। आशादिक्तृष्णाच। म
दः क्षीबतादर्पश्च। निपातश्चागमनंशस्त्रादिहतानाम्मेदिनीसङ्गतिश्च।
रङ्गमङ्गलान्तःस्वस्त्ययनप्रवृत्तस्यसूत्रधारस्यमङ्गलार्थाधिकारवस्तुप्रस्ता
वनन्तावद्बुद्धिपूर्वकमत्रनसम्भवतिहंसानहमित्यादिनातात्पर्यस्यनिय
मितत्वात्। स्वशक्त्यातुपदार्थान्तरमाभासयन्तिपदानिदोषतयानप्र
तिभासते। तत्रवीप्स्यङ्गविशेषोपक्षेपस्यासुखशरीरत्वादौचित्यनिवेश
एवस्फुटङ्कारणमित्याशयोबोद्धव्यः। औचित्यविरोधोनसार्वत्रिकइ

स्तस्मृतिहेतूनामपिलोकैरन्य त्रलक्षितत्वाद्गुणत्व मू॥२१॥ एवंघृणावदर्थादीनामपिगुणत्वन्तत्रघृणा वतोयथा। पद्मान्यर्कांशुनिष्ठ्यूताःपीत्वापावकवि प्रुषः। भूयोवमन्तीवमुखैरुद्गीर्णारुणरेणुभिः।अत्र। निष्ठ्यूतोद्गीर्णवान्तादिगौणवृत्तिव्यपाश्रयम्। अ तिसुन्दरमन्यत्रग्राम्यकक्षांविगाहते॥२२॥ घृणाव दर्थान्तरस्ययथा। कामिनीगण्डनिःस्यन्दिबिन्दुरि न्दुर्मतिर्मम।अन्यथाकथमेतस्यजगद्धुद्योतनीद्युतिः। अत्ररागातिशयहेतुभूतयोः कामिनीकपोलचन्द्रम सोःस्वरूपभावनामाहात्म्येनार्थान्तरभावनागुप्तेपि गण्डनिःस्यन्दिबिन्दुरित्यस्यघृणावदर्थान्तरस्यापि नदोषः॥२३॥घृणावत्स्मृतिहेतुर्यथा। विपूयरसनाव न्तःपलाशाषाढधारिणः। ब्रह्मवर्चस्विनोयान्तिद्विज पौगण्डकाइमे। अत्रविपूयपलाशपौगण्डकशब्दानां घृणावत्स्मृतिहेतुत्वेप्यत्रलक्षितत्वाददोषत्वम्॥२४

---

लिनातिप्रसङ्गः॥२०॥कोभिप्रेतइत्यादौपूर्ववदेववासना॥२१॥ अथाप रंसंख्यानप्रकारङ्घृणावदर्थंकथयति।यथेति॥२२॥गुणवृत्तिव्यापाराश्रयेषु वान्तरादिपदेषुप्रथमतएवान्य क्रियादिधर्माणामन्यत्रारोपेसमाधिप्रा दुर्भावादनुत्थानन्दोषाभावत्वद्वारन्ततश्च मुख्यएवस्यानेजुगुप्सादायि त्वम्पूर्वाचार्यश्लोकेनैवव्याचष्टे। अत्रेत्यादि। गुणग्रस्तत्वमभिप्रेत्या तिशयसम्पत्तौप्रकृतौचित्यात्कपोलस्यैवप्रतिभासस्तदिदमुक्तंरागाति शयहेतुभूतयोरिति। तथाचजगन्नयनानन्दभूतस्यनिःशेषिताशेषत मसश्चन्द्रमसोयदिदमभिप्रेतकामिनीकपोललावण्यबिन्दुमात्रतयाभा नन्तदुचितमेवेति॥२३॥प्राच्यानामेववासनामभिसन्धायस्मृतिहेतुमुदा हरति।यथेति॥आषाढोदण्डः।ब्रह्मवर्चसिनइति।ब्रह्महस्तिभ्यांवर्चसः

एवमन्यदपि द्रष्टव्यम्॥ अत्र च। किञ्चिदाश्रयसम्ब
न्धाद्धत्ते शोभामसाध्वपि। कान्ताविलोचनन्यस्त
मलीमसमिवाञ्जनम्। यथा। अन्त्रप्रोतबृहत्कपालन
लकक्रूरक्कणत्कङ्कणप्रायप्रेङ्खितभूरिभूषणरवैराघोषय
त्यम्बरम्। पीतच्छर्दितरक्तकर्दमघनप्राग्भारघोरोल्ल
सद्व्यालोलस्तनभारभैरववपुर्दर्पोद्धतं धावति। अत्रा
श्रयस्य बीभत्सरसोचितत्वाददोषः। सन्निवेशवशा
त्किञ्चिद्विरुद्धमपि शोभते। नीलं पलाशमाबद्धमन्त
रालेस्रजामिव। तद्यथा। अन्त्रैः कल्पितमङ्गलप्रति
सराः स्त्रीहस्तरक्तोत्पलव्यक्तोत्तंसभृतः पिनह्य सहसा
हृत्पुण्डरीकस्रजः। एताः शोणितपङ्ककुङ्कुमजुषः स

---

तिसमासान्तस्ततो मत्वर्थीयइनिः पौगण्डोबालः ॥२४॥ एवमन्यप्रकार
मपि संख्यानादिकं स्वयमुन्नेयमित्याह। एवमिति। अनित्योयन्दोषः।
तेन यत्र दोषता नास्ति तत्र विषये रसप्रकाशसामग्र्यामन्तर्भावात्कथन्नगु
णत्वमन्तर्भावश्च द्विधा प्रयोगविषयौचित्येन वा वागनुभावौचित्येन वा।
तत्र प्रथमन्दर्शयति। किञ्चिदिति। यथाञ्जनस्य नाञ्जनवल्ल्यादि
सङ्गतत्वेन शतशोभाश्यमानस्याप्युद्दीपनविभावना। भवति तु कान्ता
विलोचनचुम्बितयानुसन्धीयमानस्य। तथा पदस्यापि विषयेऽतद्विष
ये च प्रयुज्यमानस्य तदेतद्व्याचष्टे। अत्राश्रयस्येति। द्वितीयमन्तर्भावप्र
कारं व्युत्पादयति। सन्निवेशवशादिति। सन्निवेशो वागनुभावः। औ
चित्याकृष्टपदघटनातद्वशत्वन्तदाकृष्टत्वमत एव विरोधिसङ्गततया वि
जातीययोरप्यौचितीवशेन कान्तिविशेषोन्मीलकत्वात् पत्रपुष्पव्यति
करजमालासादृश्यन्दर्शयति। नीलमिति। अन्त्रैरित्यादौ प्रत्युत्पन्नप्र
दोषोन्मत्तप्रेताङ्गनावलोकस्य माधवस्यालम्बनोद्दीपनविभावादिप्रक
र्षे बीभत्सरसोत्सेकस्तावदुपपन्नो यस्त्वयमकस्मादेव मङ्गलादिपदानां शृ
ङ्गारानुयायिनामिह निवेशः स कथन्दोषभावादपनेतव्यः कथं वा गुणत्व

मभूयकान्तैः पिबन्त्यस्थिस्नेहसुराः कपालचषकैः प्री
ताः पिशाचाङ्गनाः। अत्र शृङ्गारिणो हि जगदपि शृङ्गा
रमयं पश्यन्तीति बीभत्सरसेऽपि माईवेनान्त्रादिप
दानामन्तरेषु निवेशितानां मङ्गलप्रतिसरादिपदाना
मदोषः। अश्लीलादेरमी भेदा भिद्यन्ते यत्त्रिधा त्रिधा।
भवन्ति नवते नैते पूर्वोक्ता दश पञ्च च ॥ चतुर्विंशति
रित्येषा प्रोक्ता पदसमाश्रया। समासात्पूर्वदिष्टा
नान्दोषाणां गुणकृत्स्थये ॥ इत्येतत्पददोषाणामदो
षत्वमुदीरितम्। इदानीं वाक्यदोषाणां गुणत्वमभि
धीयते ॥ तत्र शब्दविहीनस्य विवक्षावशतः क्वचित्।
निसर्गसुन्दरत्वेन गुणत्वं परिकल्प्यते ॥ यथा। आ

---

मासादयितस्य इत्यतो हेतुगर्भं व्याचष्टे। अत्र शृङ्गारिण इति। शृङ्गारवास
नाभिविष्टः शृङ्गारी तथा च पूर्वं बीभत्सरसान्वयेऽपि प्रकृतशृङ्गारभङ्गो माभू
दित्येतदर्थमेव कविना समहीत्यादिना प्रतिज्ञाय लीनेवेत्यादिवासना
दृढत्वमुपपादितम्। अत एव प्रतिपदं रूपकमाविष्टाभिप्रायमेवं शृङ्गारम
यं शृङ्गाराङ्गतया रसतापन्नम्। उपपद्यन्ते च तच्चित्तस्य सादृश्यमात्रेण तद्रू
पतानुसन्धानम्। तत्र च कथं नोद्दीपनता च वस्तुसत्त्वस्यानुपयोगित्वात्।
अत एव सूत्रितस्य बीभत्सस्य प्रकृतेन बाधात् प्रकृतार्थानुपोष इति। ननु क
थमुद्देशे चतुर्विंशतिधेत्युक्तं दोषा हि पूर्वं षोडशैव विभक्ता इत्यत आह। अ
श्लीलादेरिति। निगदव्याख्यातम्। चतुर्विंशतिरित्येषेति आदशभ्यः सं
ख्यासङ्ख्येये वर्त्तते ततः सङ्ख्याने सङ्ख्येये चेत्यभिधानात् केवलसङ्
ख्यानवचनत्वेन गवां विंशतिरितिवत्पदसमाश्रयेत्युपपन्नम्। क्रमप्राप्त
वाक्यदोषगुणीभावमुत्पादनमवतारयति। इदानीमिति। यस्य वस्तुनो
नानारूपाणि विजातीयरूपाणि तत्र तद्रूपविवक्षावैचित्र्याच्छब्दवैचित्र्यं
सङ्गच्छत इति दोषत्वाभावः। एवंरूपतागमितवतीत्यादौ कदापि नास्ती
ति दोषरूपतैषा। क्वचित्पुनरस्ति रूपान्तरमित्याह। क्वचिदिति। भवत्वेवङ्गु
णत्वन्तु कथमित्यत आह। निसर्गेति। नियतरूपविवक्षा हि महाकवीनां

क्षिपन्त्यरविन्दानिमुग्धंतवमुखश्रियम् । कोशद
ण्डसमग्राणाङ्किमेषान्नुलुदुष्करम् । अत्रनलोकाव्य
यनिष्ठाखलर्थतृनामितिकर्तृकर्मणोःषष्ठीप्रतिषेधेकि
मेतेषान्दुष्करमित्यपभाषणेपिसम्बन्धमात्रतोगुण
त्वम् । यदाह । इदंहिशास्त्रमाहात्म्यदर्शनालसचे
तसाम् । अपभाषणवद्भातिनचसौभाग्यमुज्झति ।
॥ १ ॥ यत्नःसम्बन्धविज्ञानहेतुःकोपिकृतोयदि ।
क्रमलङ्घनमप्याहुर्नदोषःसूरयोयथा । बन्धुत्याग

लावण्यमनुसन्धायभवितुमर्हतीतितथाहि अाक्षिपन्तीत्यादौएषान्दुष्कर
मित्यत्रखलर्थयोगेनलोकाव्ययनिष्ठाखलर्थतृनामित्यनेनषष्ठीप्रतिषेधा
देषामिति कथंषष्ठीतिदुष्टजातीयतामादायशेषरूपविशेषविवक्षासमा
धानहेतुः । अस्तिहिषष्ठ्यर्थस्यसम्बन्धस्यद्वैरूप्यंसम्बन्धसामान्यंविशे
षश्चजन्यजनकभावादिः । तत्रसम्बन्धविशेषविहितषष्ठीमुपादायनलो
केत्यादिनानिषेधःसंबन्धसामान्यरूपमुपादायषष्ठीकेनवार्यते । अयमे
वसम्बन्धःशेषइत्युच्यते । एवन्तावन्नदोषत्वम् । यथाकोषसमग्राणां
राज्ञांविपक्षश्रीहरणमुपदिश्ययत्किमपिसम्बन्धिमात्रमेवनदुष्करन्तथा
पत्नानामितिसमर्थयामहे । कथमन्यथा दुरापत्वद्वदनश्रीहरणमिति
प्रकृतपोषलाभाद्गुणत्वमतिसुलभन्तदेतद्याचष्टे । अत्रेति । ननुसम्ब
न्धसामान्यविवक्षायान्दोषतामाभूद्गुणत्वन्तुकथमिति यथोक्तमभिसन्धा
यपरमतंलिखति । इदंहीति । शास्त्रमाहात्म्यंविधिनिषेधयोःपरस्परा
सङ्कीर्णविषयत्वम् ॥१॥ यत्नइति । क्रमत्वंशेहियथाभिमतान्वयप्रतीति
प्रत्यूहोदूषणताबीजन्तद्यदिकुतश्चिद्विशेषादस्खलितैवप्रतीतिरुपजाय
तेतदाबीजाभावेनतथाभावोनिवर्त्ततएवसचविशेषःप्रतिपदमनुक्रमि
तुन्नशक्यतइतिकोपियत्नइतिसामान्येनप्रतिपादितम् । सोयंशब्द
क्रमलङ्घनापवादोर्थक्रमलङ्घनेत्वभिप्रायविशेषस्तथाहिबन्धुत्याग -
इत्यादौबन्धुत्यागतनुत्यागदेशत्यागात्क्रमेणोद्दिश्यतथैवानुदेशोप्यर्ह
तिनत्वादिसमुद्दिश्यततोऽन्त्यस्ततोमध्यइतिउद्देशानुदेशलक्षणशास्त्र

स्तनुत्यागोदेशत्यागइतित्रिषु । आद्यन्तावायतक्ले
शौमध्यमःक्षणिकज्वरः । आद्यन्तौमध्यमइतिसम्ब
न्धिनिज्ञानहेतोर्विधानान्नशाब्दक्रमलङ्घनदोषः ।
वक्तुश्चबन्धुत्यागदेशत्याग योस्तनुत्यागाद्गरीयस्त्वे
नाभिमतत्वादित्यर्थक्रमलङ्घनस्यापिगुणत्वम्॥२॥
विरूपसन्धियत्पूर्वंविसन्धिश्चनिरूपितम् । नचदु
र्वचकेप्रायःप्रगृह्यादौचदुष्यति ॥ तत्रदुर्वचकेविरू
पसन्धिर्यथा । नयन्तिवर्षास्वितिभर्गदुर्गयोःसुदुर्व
चादुर्वचकप्रयुक्तः । अभेण्णगेडूजेखमपोग्रभोग्ररुग्ध्रु

क्रमत्वंशजातीयत्वेपिसम्बन्धज्ञानहेतुयत्नकरणाददूषणत्वंव्यवस्थाप्य
ते । यत्रश्चायमेव यदादिपदैरुल्लेखस्तानिहितत्तत्स्थानविशेषगामिन
एवप्रतीतिमुपजनयन्ति । अवश्यञ्चानेनक्रमेणात्रवक्तुमुचितन्तनुत्या
गस्यविजातीयताविवक्षयापृथगेववक्तुमर्हत्वात् । एवञ्चानुपपत्तिर्लौ
केबन्धुत्यागापेक्षयाशरीरत्यागस्यातिकृच्छ्रत्वेनप्रसिद्धेः । अतश्चमध्य
मस्यायतक्लेशआद्यन्तौक्षणिकज्वरावितिवचनमुचितमितिआर्थक्रमभं
शःकथंनभवतितत्राह । वक्तुश्चेति । अभिमतमित्यनेनाभिप्रायविशे
षोपवादहेतुर्यथारुचियथार्थित्वंयथाव्युत्पत्तिर्भिद्यते । आभासोप्यर्थ
एकस्मिन्ननुसंन्धानसाधित,, इतिन्यायादुपपन्नमेवैतदिति ॥ २ ॥
विरूपेति । विरूपोदुर्वाचकोविसन्धिर्विगतंसंहिताकार्यंदुर्वचकेकला
विशेषरूपतयानुमतेसंहिताकार्यनियमः । द्वितीयेकुत्रादूषणमित्याह
प्रगृह्यादाविति । प्रगृह्यमीदूदेद्द्विवचनम्प्रगृह्यमित्यादिनायत्रप्रगृह्य
संज्ञाविहिताआदिग्रहणाद्विनापिप्रगृह्यसंज्ञयायत्रप्रकृतिभावविधान
म् । यथोदाहरिष्यते । यत्रवावक्तुःखेदादिनाविच्छिद्यपाठेविरतिर्भव
ति । यथा । कालकशिरोरुहेति । तदेवन्दुर्वचकप्रगृह्यादीयथासंख्यं
विरूपविसंन्धिविगतसन्धानयोरपवादकारणेइत्याह। अत्रेति । प्रयुज्य
न्तइतिप्रयुक्तयोदुर्वचकाश्चताःप्रयुक्तयश्चेलिदुर्वचकप्रयुक्तयइतिकर्मधा
रयः ॥ सुदुर्वचाइति । अन्येनोच्चारयितुमशक्याः । स्वयमेवकविःप्रति

ङ्घ्रमन्त्रुगामुखिसध्र्यङ्जेऽधनः । अत्रोत्तरार्धस्यविरूप
सन्धित्वेपिदुर्वचत्वेनकलाविद्भिरादृतत्वाद्गुणत्व
म् । यदाहुः । शुकस्त्रीबालमूर्खाणाम्मुखसंस्कारसि
द्धये । प्रहासायचगोष्ठीषुवाच्यादुर्वचकादयः । प्रगृ
ह्यादौविगतसन्धिर्यथा । कमलेइवलोचनेइमेअनु
बध्नातिविलासपद्धतिः । सइतोब्दऋतावृताप्रियोन
ऋचस्त्वन्नयजूंषिऊहसे । अत्रविसन्धेःप्रगृह्यादि
हेतुत्वाद्गुणत्वम् । यदाह । नसंहितांविवक्षामीत्य
सन्धानम्पदेषुयत् । तद्विसन्धीतिनिर्दिष्टन्नप्रगृह्या
दिहेतुकम् ॥ ३ ॥ अनुकम्पाद्यतिशयोयदिकश्चि

---

त्तायउत्तरार्द्धेदुर्वचकान्याह । अभेडित्यादि ॥ हेअगेङ्गजेपर्वतराजपुत्रि
खसांकाशस भेङ्भानान्नक्षत्राणामीडीश्वरश्चन्द्रः सोऽविद्यमानोयत्र-
तिरोधानादसत्कल्पिताचन्द्रमसः केनपुनस्तिरोधानमित्याकाङ्क्षाया
न्द्वितीयंविशेषणंअपोग्रेति । अपगतोग्रदीप्तिर्येउग्ररुचिरादित्यस्त
दीयद्रोहकारिणोऽभ्रपदवाच्यामेघायत्र । अप्सुरोहतीत्यब्जुट्पद्मन्त
द्वन्मुखंयस्याइतिदेवीसम्बोधनम् । चेदीदृशन्तर्हिसध्र्यङ्सहचरोभ
वास्माकमितिगौर्याउत्तरम् । कलारूपत्वेनविरूपसन्धानस्यगुणत्वमि
त्याह । कलाविद्भिरादृतत्वादिति । कमलेइवेत्यादावुदाहरणत्वान्नै
कः श्लोकार्द्धः । पूर्वार्द्धेकमलेइत्यादित्रितयम्प्रगृह्यसंज्ञोदाहरणम् ।
उत्तरार्द्धेविनैवप्रगृह्यसंज्ञाम्प्रकृतिभावविधानंयत्रतत्त्रितयोदाहरणम्
तथाहि अब्दऋतावितिनऋचइतिचऋत्यकइत्यनेनप्रकृतिभावः ।
यजूंषिऊहसइति । इकोसवर्णेशाकल्यस्यह्रस्वश्चेत्यनेन ॥ अपरस्मादि
पदग्राह्यम्पूर्वमुदाहृतम् । अत्रापिसइतिबोद्धव्यम् । तदेतच्छास्त्रानु
मतमपिघटनासौष्ठवेननिवेशनीयम् । नत्वन्यथाउक्तञ्चपूर्वमेवयत्प्र
गृह्यादिहेतुकमपिनासकृत्प्रयोक्तव्यमिति ॥३॥ अनुकम्पेति । सन्त्वमा
दौयावद्बोधमित्यादिनापदद्विरुक्त्यादेरनुमतत्वान्नदोषत्वमभिप्रायव्य
ञ्जननैयत्येनप्रकृतिपोषानुगुणतयागुणत्वम् । तथाहि । हन्यतइत्या

द्विवक्ष्यते । नदोषःनपुनरुक्तंपिप्रत्युतेयमलङ्क्रिया । हन्यतेसावरारोहास्मरेणाकाण्डवैरिणा । हन्यतेचारुसर्वाङ्गीहन्यतेमञ्जुभाषिणी । हन्यतेहन्यतइतिशब्दपुनरुक्तञ्चारुसर्वाङ्गीवरारोहेत्यर्थपुनरुक्तन्तदुभयमपिअनुकम्पाद्यतिशयविवक्षायामदोषइतिगुणत्वम् ॥ ४ ॥ पदानांव्युत्क्रमोयत्रक्रमेणव्युत्क्रमेणवा तद्व्याकीर्णंविदुस्तस्यनदोषःक्वापितद्यथा । जुगुप्सतस्मैनमदुष्टभावम्भवम्भवान्नक्षतसाधुवृत्तः । इतीत्रवाचोनिगृहीतकण्ठैःप्राणैररुध्यन्तमहर्षिसूनोः । अत्रमास्मजुगुप्सतेतिवक्तव्येजुगुप्सतस्मैनमदुष्टभावमितिपदव्युत्क्रमस्यव्यस्तेपीच्छन्तिकेचिदितिलुङ्लङो

दौ हन्यतइति यद्यपि अभिधेयतात्पर्यमिति शब्दपुनरुक्तजातीयम्भवति । यद्यपि वरारोहेत्यभिधाय चारुसर्वाङ्गीत्यभिन्नाभिधेयता त्पर्यम्पर्यायरूपत्वादर्थपुनरुक्तजातीयन्तथापि विरहवेदनादूनायामनुकम्पातिशयादसकृदुपादानमहिरहिर्बुध्यस्वेति लोकानुसारात् । अनुकम्पाभयाद्यस्यहि तादृशीप दर्शितरभिप्रायविशेषार्थनिष्पादितया गुणकक्षाधिरोहणक्षमेवेत्याशयवान्व्याचष्टे । तदुभयपीति ॥४॥ पदानामिति । एकस्मिन्वाक्येपदानामुचितसन्निवेशविपर्यासःक्रमभ्रंशःसद्विधाभवति । पूर्वापरभावनियतानान्तादृशक्रमप्रच्यावनेन वा । यथाबहुतृणमित्यन्योर्थःतृणस्वल्पमित्यन्यः । पूर्वापरनियमशून्यानामितितादृगुच्चारणविपर्यासेनवा । यथाकपालमनुलिम्पतिदुकूलम्परिदधातीत्यत्रक्रमनियमोभिमतः । अनुलिम्पतिकपालम्परिदधाति वस्त्रमित्यपिकृतेनतस्यैवार्थस्यलाभात् । यदातुकपालम्परिदधातिदुकूलमनुलिम्पतीतिक्रियतेतदाभवतिसन्निधिविपर्यासस्तदेतद्व्याकीर्णसङ्कीर्णयोस्तुल्यन्तदिदमुक्तं क्रमेणव्युत्क्रमेणवास्मोत्तरेलङ्चेत्यनेनमाशब्दादुत्तरंयत्रस्मशब्दप्रयोगस्तत्रलुङ्लङोर्विधानेपदक्रमनियमःकृतस्तत्कथंसममेतिप्रयुक्तेसोर्थःप्रत्येतव्यइत्यतआह । व्यस्तइति ।

विशेषलक्षणाद्गुणत्वम् ॥५॥ पर्यायेणद्वयोर्यत्रवा
क्यम्प्रश्नोत्तरादिषु । सङ्कीर्णन्तन्तदोषायवाकोवाक्य
विदोविदुः । यथा । बालेनाथविमुञ्चमानिनिरुषं
रोषान्मयाकिंकृतङ्खेदोस्मासुनमेपराध्यतिभवान्सर्वे
पराधामयि । तत्किंरोदिषिगद्गदेनवचसाकस्याग्र
तोरुद्यतेनन्वेतन्ममकातवास्मिदयितानास्मीत्यतो

विशेषेणलक्ष्यतइतिविशेषलक्षणन्तस्यभावस्तत्वम् ॥ ५ ॥ पर्यायेणेति।
यत्रवाक्यैकवाक्यतायामवान्तरवाक्येषुपरस्परपदार्थप्रवेशेनयथाभिम
तसंसर्गप्रतीतिःस्खलिताभवतितत्रसंकरोदूषणंप्रतीतेरस्खलनेतुनदो
षः।स्खलनञ्चानेकवक्तृकपर्यायप्रवृत्तवाक्यावयवमिश्रणेनभवतितदपि
मिश्रणम्प्रश्नोत्तररूपसन्यादृशंवाभवतीत्याह । प्रश्नोत्तरादिष्विति॥विष
यसप्तमीयम् ।वाक्येवाक्यंवाकोवाक्यस्पृषोदरादित्वात्साधु।तत्रप्रश्नोत्त
रादिरूपंवाकोवाक्यमुदाहरति। बालेइति।अत्रबालेविमुञ्चमाम्प्रतिरु
षमितिप्रथमप्रश्नवाक्यंनाथरोषान्मयाकिंकृतमितितादृशमेवोत्तरवा
क्यम् । तत्रबालेइतिवाक्यप्रतीकानन्तरमेवनाथेतिवाक्यान्तरप्रतीक
स्यनिर्द्देशःसङ्कीर्णजातीयतामाकारयितुमुद्यतःप्रश्नोत्तरप्रभावादपोह्य
ते। सङ्कीर्णयोरपिवाक्ययोःपर्यायनिर्द्देशेभवत्येववाकोवाक्यमितिचेन्न
व्यतिकरस्याऽभिप्रायविशेषव्यञ्जकतयाचमत्कारकारित्वेनविजातीय
त्वादतएवगुणत्वम्। तथाहि । बालेइतिपदम्परञ्चिन्तानभिज्ञायाः क्षुद्र
सहचरीव्यसिविश्वासभाजः सोपालम्भंसम्बोधनमाविष्करोति।एतदा
कर्ण्यानन्तरमेवेर्ष्याकषायकामिनीवचनमुचितमितिनाथेतिसम्बोधनं
साभिप्रायम्प्रभुरसिनपुनरस्मासुदत्ताशयोनवास्वाधीनतासौभाग्यभा
गितिविवक्षितत्वात्।एवमुत्तरत्रस्वयमुन्नेयम्।उपलक्षणञ्चद्वयोरितिए
कस्यापिवक्तुः प्रहेलिकादौतद्विधविषयेतदाभाषणस्योचितत्वात्।वि
जातीयवाक्यद्वयसन्दंशपतितपदेकिमिदमनेनान्वीयतेऽनेनवेतिसन्दे
हसङ्कीर्णतासंशयोपिसङ्करमध्यासीनएवेतिगुरवः । अयमेतिपुत्रोरा
ज्ञः पुरुषोपसार्यतामित्यत्रराजपदंसन्दंशपतितङ्किम्पूर्वेणाथपरेणान्वी

रुद्यते । अत्र सङ्कीर्णत्वेपि वाक्ये वाक्यत्वान्नदोषः ॥६॥ प्रकृतिस्थादिभेदेनग्राम्यादिभिरथापिवा । अपदन्तस्यचानुज्ञाभाषाचित्रेविधीयते । यथा । हातोजोज्जलदेउनैवमदनःसाक्षादयम्भूतलेतत्किन्दीसइसच्चमाहतवपुःकामःकिलश्रूयते । एदूएकिच्चूले उभूतपतिनागौरीविवाहोत्सवेऐसेंसच्चाजिवोल्लहस्तकटकःकिन्दर्पणेनेक्ष्यते । अत्रग्राम्यःप्रष्टानगरमागतोराजानंदृष्ट्वाग्राम्यैःप्रकृतिस्थैरेववापदैः प्राकृतेनपृच्छति "हातोजोज्जलदेउइति,, नागरश्चतम

---

यतइतिसन्दिह्यतेराजगोष्ठीरादौद्वयेनानुयोगोपदस्यनिश्चितइति ॥६॥ प्रकृतिस्थेति । विभिन्नेत्यादावपदलक्षणसूत्रेषण्णामितिव्यतिकरयकत्वेननाभिप्रेतोऽपितुग्राम्यादित्रिकस्यवाप्रकृतिस्यादित्रिकस्यवेति विकल्पेनोपन्यासप्रयोजनमनुज्ञासम्पत्तिस्तेनदोषताभावगुणीभावौप्रतिपादितौ । विषयन्दर्शयति । भाषाचित्रइति । संस्कृतादिव्यतिकरस्यापदत्वेनाभिप्रेतत्वात् । संस्कृताद्यो ग्राम्यादयःप्रकृतिस्थादयश्च भाषाशब्देनाभिमताः । यथाहिनानावर्णारब्धमालेख्यचित्रंयथावा भिन्नप्रकारतन्तुनिर्वातः पटश्चित्रपटस्तथानानाभाषाभिरारब्धङ्किञ्चित्काव्यंचित्रमुच्यते । चित्रमाश्चर्यन्तत्कारिचचित्रम् । तेनरूपद्वयसम्पत्तौयुक्तिपोषःस्यादेवंयथौचित्याकृष्टनानाभाषाव्यतिकरजमेकंसम्भवतीत्याशङ्कासंक्षेपात्सर्वभाषासङ्करमेवोदाहरति । यथेति । सङ्करमौचितीञ्चव्याख्यानेनस्फुटयति । अत्रग्राम्यइति । ग्रामवासीकिञ्चिद्युत्पन्नश्च ।ग्राम्याश्चनगरवस्तुन्यद्भुतचमत्कारवन्तोजिज्ञासवश्चभवन्तीति जातिः ।तत्रराजानन्दृष्ट्वेति। अद्भुतवस्तुकथनेनचमत्कारः । पृच्छतीति। जिज्ञासाबहुमानश्चादरश्चमत्कारेणैव ।यद्वा याःपृच्छतितेष्वेवबहुमानोधन्यास्तेयेनामगोत्रादिकमेतस्यजानन्तःसततमेनमवलोकयन्तइत्याशयात् । प्रस्तुतग्राम्यप्रकृतेश्चास्यप्राकृतपदैरेवप्रश्नोयोग्यस्तदेतत्सर्वमादर्शयितुमप्रश्नम्पृथक्कृत्यदर्शयति । हातोइत्यादि । हातोइतिमहा

नुजिघृक्षरुपनागरैःकोमलैर्वापदैःसवक्रोक्तिप्रत्याच

राष्ट्रभाषायांप्रश्नकाकुरयंसइत्यर्थः । सइतियोनामैतन्नगरनायकत्वेना
स्मद्ग्रामेपिबहुशोविख्यातकीर्त्तिरितिचमत्कारः । जोज्जलदेउइति ।
जिज्ञासासामान्यतश्चनगरसञ्चरिष्णुजनगोचरोयंप्रश्नः । अत्रसर्वाण्येव
पदानिनातिहीनपात्रेग्राम्येप्रकृतिभवान्यपभ्रंशपदानि।देशीपदत्वेनस
र्वेषाङ्ग्राम्यता।हातोइत्यनेनस्वरकृतगौरवम्।जोज्जलदेउइत्येकसंयोग
वर्णापादितगौरवञ्चप्रकृतिस्यन्तदत्रप्राकृतग्राम्ययोरौचित्यात्कृष्टम्। प्र
कृतिस्थेतुनौचित्यमुपयुज्यते ऽपितुसन्दर्भारम्भस्तेनप्रक्रान्तइतिविव
क्षितम्।अधिकस्यप्रष्टव्यस्याभावादेतत्प्रश्नानन्तरमेवोत्तरावसरः। ततश्च
नानौचित्यम्।प्रश्नोत्तरोपन्यासोहीति॥प्रकृत्यैवचनागरकाग्राम्यमतवि
रोधिनोवक्रोक्तिरसिकाभवन्ति । यदितस्यग्राम्येजघन्यबुद्धिःकिमित्यु
त्तरमेवदास्यतीत्यतउक्तमनुजिघृक्षुरिति । सबहुमानम्पृच्छति । ग्रा
म्येयस्यदयातदानीमासीज्जिज्ञासानिवर्त्तकज्ञानजननमनुग्रहः । य
द्यपिनागरस्यनागराणिपदानिप्रयोक्तुमर्हन्तितथापिग्राम्यानुग्रहेकर्त्त
व्येतद्बोधयोग्यमेवाभिमतन्नतुनागरकत्वंतर्हि ग्राम्यैरेवकुतोनब्रूवीती
त्यपि नवाच्यम् । सहसैवतथाकरणेग्राम्यमतविरोधोऽपितूपनागर
करूपभङ्गप्रसङ्गात् । ततोमध्यमान्युपनागराणिप्रयोगयोग्यानीत्या
ह।उपनागरैरिति । स्वभावतएवप्राकृतप्रकृतिस्थानांसंस्कृतप्रकृतिस्था
नाम्प्रौढत्वम्भवति । येनयद्यपिग्राम्यप्रयुक्तजातीयान्येवसन्दर्भैकरू
पतासिद्ध्यर्थंघटयितुमुचितानितथाप्यौचितीप्राप्तसंस्कृतपदनिवेशने
यदिप्रकृतिस्थत्वमाद्रियेततदाच्छायावैरूप्यंस्यादित्याशयेनकोमलप्रा
यण्येवनिवेशितानीत्याह । कोमलैर्वेति । भूयसाव्यपदेशोभवती
तिलोकन्यायानुसारात्साक्षादित्येकस्य प्रकृतिस्थत्वेपि कोमलैरित्युक्त
म् । साकाङ्क्षप्रश्नेचकिमर्थंलोकोत्तरो“जोज्जलदेउ,, नान्यःकश्चित्ताट्टृ
गितिभावोविवक्षितस्तत्रनेत्येवोक्तेनानुग्रहःकृतःस्यादित्यधिकमपि
किञ्चिद्वक्तुमुचितमित्याह । सवक्रोक्तीति । एतेननागरकवृत्तिरूपबृं
हितानैवेत्येवकारेणमनुष्यएवायन्नभवतिदूरेतद्विशेषरूपोजोज्जलदेव

ष्टे । नैवमदनःसाक्षादयम्भूतलेइति ॥ अथग्राम्य
आहितप्रतिज्ञःपूर्वपदानुरोधादर्धप्राकृतेनैवग्राम्यो
पनागरैःप्रकृतिस्थकोमलैर्वापदैस्तमुपालभतेतत्किं
दीसइसच्चमाहतवपुःकामः किलश्रूयतेइति। अथना
गरोज्ञाततत्प्रावीण्यस्तत्पदानुरोधादेवार्द्धप्राकृतेन
ग्राम्योपनागरनागरैःप्रकृतिस्थकोमलकठोरैर्वापदैः
समाधत्ते । एद्दूएंकिअलेउभूतपतिनागौरीविवाहो

---

इतिप्रकाशितम् । साक्षादिति । प्रत्यक्षेणावधार्यमाणःकिञ्चिद्व्युत्पन्न
त्वेनग्राम्यस्योक्तत्वात् । कामस्यावृत्तसाक्षाद्भावलक्षणविरुद्धधर्मानुस
न्धानेनमदनदाहव्यतिकरतासम्भवतीतिलब्धावसरंग्राम्यानुयोगमव
तारयति । अथेति । शिक्षाविशेषस्पर्शिनीबुद्धिःप्रतिभा । सामेकान्त
तोनागरकवृत्तपरिचयपराधीनस्याशङ्किष्टाइत्याशयशौटीर्येणनागरक
प्रयुक्तजातीयैरेवपदैःप्रश्नोयोग्योनचैतावतैवसर्वथाप्रकृतित्यागोर्हती
त्यतःस्वप्रयोगयोग्यान्यपिप्रयोगमर्हन्तितत्रार्द्धम्प्रकृतिवेशसेनार्द्धम्प्रा
कृतमर्द्धंग्राम्यञ्चप्रश्नवाक्यानुचितमित्याह । पूर्वपदानुरोधादिति ।
पूर्वम्परप्रयुक्तंपदन्तर्क्कितम् । सच्चिमासत्यः । यावतीग्राम्यस्यव्यु
त्पत्तिरर्हतितावतीमुपन्यस्यति । श्रूयतइति । ऐतिहासिकमुखादेव
माकर्णितन्नपुनरद्यापिनिर्णयोवर्त्ततेइत्यर्थः । तर्कित्वमितिप्रकृतिस्थं
दीसदीतिकोमलंसच्चिमेतिप्रकृतिस्थंहतवपुरितिकोमलङ्कामःकिलेत्य
पितथाश्रूयतइतिप्रकृतिस्थमित्यनन्तरन्नागरिकस्योत्तरावसरः।कथम्प
रमार्थवादिन्युत्तरन्दातव्यमित्यनुपपत्त्यवयंसमाधानप्रकारोभवति।अ
स्तिग्राम्यस्यकिलश्रूयतइत्येताभ्यांसन्दिहानत्वङ्किञ्चिद्व्युत्पन्नत्वञ्चो
न्नीतमितिकिमप्यलीकमेवबुद्धिकौशलात्तथाप्रतीयमानमभिधायप्रता
रणमुपपद्यते । तन्मात्रपरत्वाच्चसर्वाकारमधिकाव्युत्पत्तिराहत्यदर्श
यितुमर्हतीतितर्कितमित्यादिपादेयावतीग्राम्यस्यव्युत्पत्तिस्तावदनु
करणङ्कियदधिकव्युत्पत्तिपुरस्कारमर्हतीत्याशयवानुत्तरमवतारयति।
अथेति । पादस्तर्कितमित्यादिग्राम्यप्रयुक्तस्तस्यानुरोधोव्युत्पत्त्यनु

तसवेइति । अथग्राम्यः श्लोकसमाप्तेः पादस्यतदुत्तर स्यचानुरोधाद्ग्राम्याणि प्रकृतिस्थानिवा त्रिचतुराणिपदानिप्राकृतेनोक्त्वापादार्धएवतिष्ठते “ ऐसेंसच्चजिओल्लइति ।अथनागरोजितकाशीग्राम्योपनागरनागरैःप्रकृतिस्थकोमलकठोरैरेवपदैःश्लोकमुत्तरञ्चपूरयति “ हस्तकटकःकिन्दर्पणेनेक्ष्यते „ इत्यत्रचप्राकृतानांसर्वेषामपिग्राम्यत्वम् । प्रष्ठुःसंस्कृतपदे

करणम् । पच्छापश्चात् । एएषः । एदूएइतिपाठेदूअंव्याजोनेनव्याजेनभूतपतिःपशुपतिः । ननुनक्वचिदेवंश्रूयतेतत्कथंग्राम्यस्यप्रबोधो भवतीत्याह । गौरीविवाहोत्सवइति । साश्रूयतामुपपत्त्यातुसिद्धो द्वितीयोयदिकामप्रादुर्भावोनस्यात्कथङ्गौरीपाणिग्रहेभगवतउत्साह इत्यतस्तेनैवकरुणासन्तानशान्तात्मनाभूयःस्पृष्टःस्यादित्यर्थः । पच्छेति प्रकृतिस्थमेइतिकठोरङ्किअलेउइति कोमलंभूतपतिनेतितथा। गौरीविवाहोत्सवइतिप्रकृतिस्थम्। एँदूएँइतिपाठेद्वयमपिकठोरम् । तदत्रकठोरनिवेशनंव्युत्पत्त्याधिक्यसूचनाय । एतावत्युक्ते परीक्षणव्युत्पत्तिर्नकिञ्चिद्ग्राम्यस्प्रतिभाति । नचतस्याद्यापिनिःशङ्कतावर्त्तते। ततोनागरकप्रामाण्यदत्तभरःप्रश्नोघटतइत्याशयवानवतारयति । अथ ग्राम्यमिति । प्रकृत्यापन्नएवतेनयथाप्रथमंहातोइत्यादिप्रश्नेगतिस्तथात्रापीतिग्राम्यप्रकृतिस्थयोरुपन्यासः । भाषाचित्रेणपरस्परसङ्घर्षादेककाव्यरचनाप्रवृत्तयोग्राम्यस्यापिश्लोकश्लोकसमाप्तिपदारम्भोयोग्य एव । यदिचायमेवसमस्तंनिर्वाहयन्नशेषशङ्कानिवृत्त्युपयुक्तमुत्तरन्नागरस्यनिवेशितंस्यादितितदुत्तरानुरोधेनपादार्द्धएवविलम्बोप्युचितः। एसेंएवमित्यत्रार्थे,,काकुगर्भम् । सच्चजिबोल्लइतिजिरवधारणे । सत्यमेवैतदुक्तम् । यदिसत्यपुरःसरम्ब्रूयास्तदाप्रत्येमीत्यर्थः । एवंग्राम्यताप्रतारणसिद्धौकिमत्रसर्वलोकसाक्षिकेवस्तुनिवक्रोक्त्यैवपूर्वव्युत्पत्तिमात्रनिवेशनेनोत्तरन्दत्वाश्लोकपूरणमेवनागरस्योचितमित्याशयेनोत्तरमवतारयति ।अथेति। हस्तेइतिप्रकृतिस्थङ्कटकमितिकोमलन्दर्प

पु*त्रपुरित्युपनागरंशेषाणिग्राम्याणि। प्रतिवक्तुग्रह
स्तविवाहगौरीपदानिग्राम्याणि । भूतपतिनेतिना
गरंशेषाण्युपनागराणि । तदिदमीदृशिप्रमेयेतथैवो
पक्रमान्नदुष्यति ॥ ७ ॥ वाक्यान्तरसगर्भंयद्वाक्य
न्तद्वाक्यगर्भितम् ॥ रसान्तरातिरस्कारेतदिष्टन्नेष्ट
मन्यथा ॥ यथा । दिङ्मातङ्गघटाविभक्तचतुराघा
टामहीसाध्यतेसिद्धासाचवदन्तएवाहिवयंरोम।ञ्चि
ताःपश्यत । विप्रायप्रतिपाद्यतेकिमपरंरामायतस्मै
नमोयस्मादाविरभूत्कथाद्भुतमिदंयत्रैवचास्तङ्गत
म् ।अत्रयथोक्तामहीसाध्यतेसिद्धाचसाविप्रायप्रति

पाद्यतइत्येतेप्रकृतिस्थेइतिप्रकृतिस्थादीनांसुपरिचेयत्वाद्ग्राम्यादी
न्येवव्याचष्टे । अत्रचेति । प्रकृतिव्यतिकराव्यतिकरत्वयोरौचित्याप
न्नत्वाद्भाषासङ्करःशोभावहत्वेनगुणएवभवतीत्युक्तमुपसंहरति । तदि
ति ॥ ७ ॥ वाक्यान्तरेति । रसान्तरंरसविशेषःप्रकृतरसानुसंहितो
रसस्तेनतिरस्कारोदोषभावस्यतस्मिन्नसतितथाकृतंवाक्यमिष्टमेवक
वीनामुपादानयोग्यमेवाऽन्यथानेष्टन्दुष्टमेवेत्यर्थः । तेनायमर्थोभव
ति । प्रकृतरसतिरोधायकत्वङ्किलदूषणताबीजन्तदतिरोधानेनैवनि
वर्त्ततेप्रत्युतद्वितीयपरिच्छेदेवक्ष्यमाणगर्भादिवाक्ययोजनप्रकारसम्प
न्नावलङ्कारलाभेगुणत्वम्भवति । तथाहि दिङ्मातङ्गानाङ्घटयाविभ
क्ताःपृथगुद्दिश्यव्यवस्थापिताश्चत्वारआघाटायस्यांसा तथा तेनसप्तद्वी
पावसुमतीसाध्यतइतिविवक्षितम् । येतावद्भरतभगीरथप्रभृतयःप्रथि
तप्रतापातिशयास्तेषान्तद्दूषणपरिनिष्ठितशक्तीनामेकस्याभिसमस्तक्षत्र
वंशोन्मूलनेननवखण्डमेदिनीसिद्धौनोत्साहशक्तिःश्रवणगोचरतामया
सीदितिलोकोत्तरापरशुरामस्योत्साहशक्तिराविद्यतेसिद्धा साचेत्यनेन
यावदेवाभिलषितन्तावदेवसिद्धमित्यहोविजिगीषुतेतिपूर्ववदेवाभिप्रा
यः । नचेदसौसिद्धिमभिसन्धायप्रवृत्तोनुपदमेवसासम्पन्नेतिचकारेण
द्योत्यते । एवमभिहितेऽभिप्रायेइत्यादिकमस्तिवाक्यशेषभूतन्तद्वि

* संस्कृतपदानांनैवमदनः साक्षादयंभूतलेइतिनागरंवपुरित्याद्युपन।

पाद्यतइतिवक्तव्येयोयंवीराद्भुतरसवशप्रवृत्तेनव
दन्तएवहिवयंरोमाञ्चिताःपश्यतइतिवाक्येनप्रकृत
वाक्योक्तेरसमाप्तावेवविप्रायेत्यादिपदविच्छित्तिःसा
रसान्तरतिरस्कृतिरित्युच्यते। तथाचेदंवाक्यान्तरस
गर्भमपिवाक्यन्नदोषायभवति ॥ ८ ॥ यद्भिन्नलिङ्ग
मित्युक्तंविभिन्नवचनञ्चयत् । उपमा दूषणन्तन्न
यत्रोद्वेगोनधीमताम् ॥ यथा । अन्यदाभूषणंपुंसः
शमोलज्जेवयोषितः । पराक्रमःपरिभवेवैयात्यंसु
रतेष्विव । अत्रपुंसोयोषितइवशमोलज्जेवपराक्र
मोवैयात्यमिवेतिलिङ्गभेदः । परिभवेसुरतेष्विवे

च्छिद्यैवमध्येवदन्तएवहिवयंरोमाञ्चिता इतिवाक्येनसगर्भतासानदो
षाय । अनेनहिवाक्येनलोकोत्तरवस्तुभावनात्मकविभावसंपत्त्याप्रादु
र्भवन्वक्तुमभिमतोरसोव्यज्यते । सचवीरानुसन्धानहेतुर्वीराद्भुतयोः
समानभूमिकयोरन्योन्यानुगमेनप्रतिकूलताविरहिता । तत्रयथाशृङ्गार
रौद्रबीभत्सानामेकप्रघट्टकेनसूत्रणे सन्निपातितैरपिहास्यकरुणभया।न
कैर्नतिरस्कारः।स्वाङ्गमव्यवधायकमितिन्यायात्तथेहवीरस्याद्भुतेनात
एवाद्भुतादुद्वेलस्यप्रादुर्भूतपुत्रकाऽङ्कुरलक्षणानुभावप्रदर्शनम्पश्यते
ति । नचात्रदोषोदाहरणेमयेतिकारकविभक्तेरुत्थिताकाङ्क्षायाखे
नमित्यादिनास्वरसबाधस्तथात्रसम्भवतिसिद्धेत्येतावत्यपिदर्शितेवा
क्यार्थपर्यवसानात् । नचसम्पूर्णोरसेवन्दन्तएवेत्यादिकमभिधातुमर्ह
ति । अद्भुताचपार्थिवानुभावस्यतन्मात्रपूरणापेक्षत्वात् । एवंरसानु
भावनातृप्तस्यतत्रैवपुनःपुनरुत्कण्ठायाञ्जिगीषुकरणीयलब्धपात्रप्रति
पत्तिविशेषस्फोरणेविप्रायप्रतिपाद्यतइत्युक्तम् । दानवीरोपिवीरए
वातएवाधिकस्यकर्त्तव्यस्याऽभावेकिमपरमित्यादिरुपसंहारस्तदेतत्स
र्वंव्याचष्टे ॥ अत्रेति ॥ ८ ॥ यद्भिन्नेति । दोषप्रकरणानुरोधेनसमस्तव्य
स्तोदाहरणम्बोद्धव्यम् । सहृदयोद्वेजकत्वेनहिदोषतायत्रतुकथञ्चित्त
थाभावोनभवतितत्रदोषत्वहानिरुचितैव । तथाहिस्त्रीपुंसयोरेवप्रकृ

तितु लिङ्गभेदोवचनभेदश्चदृश्यते । सचैषामेवपर रूपरोपमानोपमेयभावविवक्षायाम्पर्यायान्तराभा वादन्यथाकर्तुमशक्यमितिसहृदयहृदयानुद्वेजकत्वा न्नदुष्यतीतिदोषस्यापिगुणत्वम् । तदिदन्द्वयोरप्येक मुदाहरणम् ॥ अथभिन्नलिङ्गस्यैवयथा । यस्यत्रि वर्गशून्यानिदिनान्यायान्तियान्तिच । सलोहकार भस्त्रेवश्वसन्नपिनजीवति । अत्रप्राग्वदेवपर्यायान्त राभावात्सलोहकारभस्त्रेवेतिनदोषः ॥ ९ ॥ भिन्नवच नस्यैवयथा । प्राज्यप्रभावःप्रभवोधर्मस्यास्तरजस्त माः । मुक्तात्मानःशिवन्नेमिरन्येपिददताज्जिनाः ।

तानुगुणोपमानोपमेयभावविवक्षायामावश्यकलिङ्गवचनभेदयोरन्यत रदेकस्यपुंसउपमेयत्वेनदारशब्दस्यभिन्नवचनत्वनियमात्कलत्रपदस्भि न्नवचनमेव । पर्यायाणामपिलिङ्गभेदोनियतः । नचपुंवचनङ्किञ्चित्स मानस्वभावमस्तियेनायम्प्रकारोनिवर्तेत । नचैवंविधोपमामन्तरेणप्र स्तुतवाक्यार्थपोषः । एवमनन्यगतिकाभिन्नलिङ्गताभिन्नवचनतावा साहित्यसमयविदामुद्वेगन्नोत्पादयति । अतएवालङ्कारौचितीसम्पदा गुणत्वसिद्धिः । एवंशमलज्जयोःपराक्रमवैयात्ययोःपरिभवसुरतयोश्च बोद्धव्यमित्याशयवान्व्याचष्टे । अत्रेति । रतंरहःशयनम्मोहनमिति सुरतवाचिनांसर्वेषामेवनपुंसकतानदुष्यतीतिसहृदयहृदयानुद्वेजकत्वा दितिहेतुर्गुणत्वेत्वाभिप्रायिकःसचदर्शितएव । अथेति । धर्मार्थकामा स्त्रिवर्गः । वह्नितिग्मापनचर्मपुटोभस्त्रासायथावातेनपूर्यतेवातञ्चमुञ्च तिनतुकिञ्चित्पुरुषार्थमासादयतितथात्रिवर्गशून्येपिभस्त्रापर्यायस्यस मानलिङ्गस्याभावेन सहृदयानामनुद्वेगोलङ्कारसम्पत्त्यागुणत्वमुपपन्न मित्याह । अत्रप्राग्वदेवेति । अदोषइत्युपलक्षणङ्गुणश्चभवतीत्यपिबो द्धव्यम् ॥ ९ ॥ प्राज्येति । आर्हतानांनेमिनामाजिनविशेषोन्येजिना ऋषभनाथप्रभृतयःप्राज्यमुचितन्तथाभूतम्प्रभावः सिद्धिरूपोयस्यता दृशोनेमिःशिवन्ददतान्ददातु । ददतानइतिधात्वनुसारात् । कस्मैच

अत्रनेमिरन्येपीतिवचनभेददोषेपिददतामितिक्रि
यापदादेर्वचनश्लेषमाहात्म्याद्गुणत्वम्। नचेदंवा
च्यमत्रेवादिर्नविद्यतइतिनोपमात्वम् इवस्यापिना
समुच्चयार्थेनतुल्यधर्मेणान्तुधर्मस्यप्रभवइत्यादिभि

त्यपेक्षायाम्मुक्तात्माइत्यत्रनःपक्षेवोयुष्मभ्यंशिवन्ददतान्ददत्विति।
धर्मस्यप्रभवमुत्पत्तिनिमित्तम्। नेमिः प्रभवःप्रभुतायथावदनुशास
नेनजिनारजश्चतमश्चरजस्तमसीतेअस्तेनिम्नेयेनसतथाभूतोनेमिः। अ
स्तंरजोयैस्तेऽस्तरजसस्तेषुप्रकृष्टास्तमपिअस्तरजस्तमाः। मुक्तोनिरा
वरणआत्मा। आत्मशब्दआत्मवचनःस्वरूपवचनइतिवाबहुव्रीहिस्ता
दृशोनेमिःजिनास्तुमुक्तात्मानइतिस्पष्टम्। तदिहवचनभेदमन्तरेण
वचनश्लेषाभावाद्भिन्नवचनत्वस्यावश्यकत्वेनदोषः। श्लेषलक्षणालङ्का
रघटनयागुणत्वम्। ननुचलिङ्गादिभेदउपमायाद्दूषणत्वमुक्तमिहत्वल
ङ्कारान्तरउदाह्रियतेतत्कथम्पूर्वापरसमञ्जसत्वन्नचात्रोपमासम्भवतित
त्सामग्र्यसम्भवात्। उपमानोपमेयसाधारणधर्मेवादिशब्दाःकिलतद्घ
टकास्तदत्रत्रितयसम्बद्धेत्वपीववद्वाप्रभृतिशब्दानुपादानात्कथमुपमे
तिशङ्कामुत्थाप्यनिरस्यति॥ नचेति। इवादयोहिशब्दाःसादृश्यद्योतका
स्तथाचक्कचित्प्रसिद्धस्यप्रकृतेसम्बन्धप्रतीतिस्तेभ्योभवतिविम्बप्रतिबि
म्बन्यायाश्रयणादेवञ्चनयुगपत्तुल्यरूपसम्बन्धोऽपिशब्दस्तुयुगपत्तुल्य
रूपसम्बन्धंबोधयतीतिविभिन्नविषयत्वन्नहीवादिशब्दाभावेसादृश्य
मेवनप्रतीयतेलुप्तोपमाप्रपञ्चभङ्गप्रसङ्गात्। अन्यतएवप्रतीतिसि
द्धेरुपायान्तरवैयर्थ्यात्। किमितीहनेवादिपदम्प्रयुक्तमितिप्रश्नोव
शिष्यतेतत्रेदमुत्तरमिवस्येत्यादि॥ नेमिरन्येपीत्यपिशब्देनसमुच्चयो
प्यवसीयते। सचयुगपदेकसम्बन्धाभिधानेनिर्वहति। तेनानेकमुद्दि
श्यकिञ्चिदेकसम्बन्धाभिधानंसमुच्चयाभिधायिनोविषयः। एकमुद्दि
श्यप्रसिद्धान्यधर्मविधानन्तुयथेवादिरितिविषयविरोधान्नप्रयुज्यतइ
ति। स्यादेतदिववद्वायथादिशब्दायत्परास्तस्यैवोपमानताप्रतीतिस्त
थाचानेनेदन्तुल्यमितिसाधारणधर्मविधिरूपाकथमुपमेत्यतउक्तन्तु

र्वचनश्लेषैर्विषयापहारात् । यथाऽग्रतोद्योतकलोप
उपमायाम् । कोमलापाटलौतन्विपल्लवश्चाधरश्च
ते । नन्वेषोपिश्लेषःकस्मान्नभवति । उच्यते । यत्र
द्वयोःसदृशयोरभिधानंसश्लेषोयत्रसदृशात्सदृशप्रति
पत्तिस्तदुपमानम् । यत्रद्वयोःसादृश्यमभिधीयतेप्र
तीयतेवासोपमेतिप्रबन्धेनाग्रेवक्ष्यामः । उपमालक्ष
णञ्चैतत् । यदुपमायामेवलिङ्गवचनभेदेनदूषणन्त
स्यसर्वालङ्कारसाधारणत्वात्केवलसादृश्यमलंकारइ
तिदर्शनेउपमायामुदाह्रियते ॥ १० ॥ यत्रोपमान

---

ल्यधर्मत्वान्त्विति । नात्रवचनश्लेषतुल्यधर्मागमोपितुपृथग्व्यवसितानां
मेवशब्दतन्त्रतेतिधर्मस्यप्रभवइत्यादिभिर्हिवचनश्लेषैस्तथापिविषयो
पहृतइति । यदिचेवादिसन्तरेणनोपमाप्रतीतिस्तर्हिप्रसिद्धमुपमोदा
हरणमभज्यतेत्याह। यथेति। अग्रतश्चतुर्थपरिच्छेदे। अत्राप्युपमामनङ्गी
कुर्वतोमतमाशङ्कते। नन्विति। इहापिचकाराभ्यांयुगपत्पल्लवाधरयो
रेकधर्मविधानस्यतुल्यत्वादितिदेश्याभिप्रायः॥ उक्तयुक्त्यादूषयति ।
उच्यतेइति॥तर्हिप्रकृतोदाहरणेनास्त्येवोपमाकथंवचनभेदस्यगुणीभा
वउदाह्रियतइत्याह । यत्रेति। यद्यप्यभिधीयमानन्नास्तिसादृश्यन्तथा
पिप्रतीयमानोपमाव्यवह्रियतामित्यर्थः। शब्दमात्रसाम्यंश्लेषसङ्कीर्णमे
वेत्युपेक्षितवान् । ननुयत्रोपमयाकाव्यव्यपदेशस्तत्रप्रतीयमानमपि
सादृश्यमूरीक्रियते । यत्रत्वलङ्कारस्वभावव्यवस्थापितमेवकाव्यन्नत
त्रापीत्याह । उपलक्षणमिति ॥ प्रतिपत्तिवैरूप्यस्यालङ्कारान्तरसा
धारण्यादुपमातोऽन्यत्रापिलिङ्गवचनभेदोदूषणमेव । तद्यथामुखस्पद्म
मितिरूपकेमुखस्पद्मंवेतिसंशयेनमुखम्पद्ममेवेत्यपह्नवे । एवमन्येपि ।
अतएवद्वेभिन्नलिङ्गवचनेइत्यत्रनोपमाग्रहणम्।यद्येवङ्कथमुपमायामे
वदूषणमुदाह्रियतइत्यतआह । केवलमिति ॥ चिरन्तनैर्हिभरतमुनि
प्रभृतिभिर्हिएवयमकोपमेशब्दानुगतालङ्कारत्वेनेष्टे । तत्प्रपञ्चनमा
त्रन्तुपुनरन्यैरलङ्कारकारैःकृतमुपमायाःप्रभूतविषयतयाप्राधान्यात्त

धर्माः स्युर्नोपमेयेन सम्मिताः । तद्धीनोपममित्याहु स्तत्प्रसिद्धौ न दुष्यति ॥ यथा ॥ समारुताकम्पितपीतवासाबिभ्रत्सलीलं शशिभासमब्जम् । यदुप्रवीरः प्रगृहीतशार्ङ्गः सेन्द्रायुधो मेघ इवाबभासे । अत्र सेन्द्रायुध इति कार्मुकमात्रोपादानं वासशङ्खयोस्त्वनुपादानादूनोपमत्वन्तत्रेन्द्रविद्युतोरतिप्रसिद्धत्वाददोषत्वम् । यदाह । सर्वं सर्वेण सारूप्यन्नास्ति भावस्य कस्यचित् । यथोपपत्तिं कृतिभिरुपमानम्प्रयुज्यते । अखण्डमण्डलः क्वेन्दुः क्व कान्ताननमद्युति । यत्किञ्चित्कान्तिसाम्यात्तु शशिनैवोपमीयत इति ॥११॥
क्रमेण नेमं कृतिभिरेष्टव्यमधिकोपमम् । विशेषस्तूपमेयाङ्गमनुमानात्प्रतीयते ॥ यथा । सपीतवासाः प्रगृ

---

श्चोदाहृतमतिस्फुटत्वमवतीति संक्षेपः॥१०॥ यत्रोपमानइति । उपमेयेनउपमेयविशेषणेन सम्मितास्तुल्यसंख्याः । इन्द्रायुधमिन्द्रधनुरेकमुपमाने उपमेये पीतंवासः शार्ङ्गमब्जः शङ्ख इति त्रीणि विशेषणानि तदिहाधिकविशेषणविषय इति जिज्ञासासमकालमेवाप्रसिद्धेन्दुबिम्बयोरुपमानयोर्मेघानुसन्धानात्स्खलनाभिमुखी प्रतीतिरवलम्ब्यते । ध्वननव्यापारोन्मेषाच्च गुणत्वलाभः । तदुक्तम् । मुख्यामहाकविगिरामलङ्कृतिभृतामपि । प्रतीयमानच्छायैषा भूषालज्जेवयोषितामिति । नचैवं स्तनितादीनामितिकथम्प्रतीतिरितिवाच्यम् । प्रतीयमानस्यापि प्रतिपत्तिवैरूप्यसमाधावानौपयिकस्यानाकाङ्क्षितत्वेनादरादित्याह । सर्वं सर्वेणेति । यथोपपत्तिपर्यन्तोयावतोपमानविशेषणत्वेन प्रकृतमुपमेयविशेषणप्रतिबिम्बतानीयते तदतिक्रमेणैक प्रतीत्यनुरोधे कल्पितेनाप्युपमेयविशेषणेनेत्यर्थः । अन्यथा चन्द्रमुखादीनान्नोपमापर्यवस्येतेत्याह । अखण्डेति ॥११॥
अमुमेव प्रकारमधिकोपमेये योजयन्नाह । क्रमेणेति । यत्रोपमानेधिकविशेषणसंक्षेपस्तद्वाक्यमधिकोपममित्युच्यते तत्र झटिति प्रतिबिम्ब

हीतशार्ङ्गोमनोज्ञभीमंवपुरापकृष्णः । शतहृदेन्द्रा
युधवान्निशायांसंसृज्यमानःशशिनेवमेघः।अत्रशशि
नोग्रहणादधिकोपमत्वेप्युपमानत्वेनाविवक्षणाद्गु
णत्वम् । यदिवोपमानेधर्मोद्घाटनानुमानाच्छङ्खच
क्रगदाधरोविष्णुरितिप्रसिद्धेःशङ्खोऽनुमेयः॥१२॥ यदा
तीव्रप्रयत्नेनसंयोगादेरगौरवम् ॥ नच्छन्दोभङ्गमप्या
हुस्तदादोषायसूरयः । यथा । जहगहा उंग्रो इसोअ
भिन्नमुल्लहासिअमंसुअद्धन्तम् । तहआणरहासि
तुमंसच्छेगोलाणईतूहे । अत्रद्वितीयैकादशत्रयोविं
शतिवर्णानांसंयोगपरत्वाद्गुरुत्वेपिग्हल्हादिसंयो

---

गूतोपमेयविशेषणप्रतिसन्धानेनदोषस्तदेवतुकथमतउक्तम् । विशेष
स्त्विति । उपमेयांशेविशेषाविशेषणमुपादानादुपमानविशेषणात्प्रती
यते । शतह्रदाविद्युत् । उपमानत्वेनाविवक्षितत्वादित्यापाततः ।
उपमानविशेषणानांयावत्प्रतीतिनग्रहणमितिप्रकाशयितुम्पारमार्थि
कस्त्वयंसिद्धान्तइत्याह । यदिवेति । उपमानधर्मस्याधिकस्योद्घाटनम
भिधानन्तस्यानुपश्चान्मानंज्ञानम् । कथमेतदित्याह । अतिप्रसिद्धेरि
ति ॥ १२ ॥ यदाप्रयतनम्प्रयत्नःस्थानकरणव्यापारस्तस्यतीव्रत्वमुद्रेक
स्ततएवह्विपिण्डाक्षरादीनामकठोरत्वमाभासते। आदिग्रहणाद्विह्वि
ङ्कारौसानुस्वारौचकेवलौपदान्तेवर्तमानौतत्तद्भाषाविषयेऽवसेयौ ।
क्वचिदेवह्विवर्णौतथावभासतेनतुसर्वत्रतदुपलक्षणमेवरहवञ्जणसञ्जो
ए इत्यादिकंछन्दोविचितौदर्शितम् जहेति । स्नातुमवतीर्णेत्वयिअंशु
काद्र्दमुद्गमहंसदवन्नृत्तमाद्रीभूतंयथाचलत्वंस्थितेस्तथावगम्यतेनत्वन्न
जलञ्जलकेलिस्थानमवतीर्णइत्यभिप्रायशेषः । कथमन्यथागोदावरी
नद्याःस्वच्छञ्जलन्दृश्यतेइति । तूहन्तीर्थम् । अत्रद्वितीयैकादशादि
स्थानेषुयद्यपिसंयोगात्पूर्वभावेगुरुत्वंविद्यतेतथापितीव्रप्रयत्नोच्चारणी
यशकारहकारादिसंयोगमहिम्नानावच्छेदश्रव्यताकलुषीक्रियतइतिए
वमन्यदप्युदाहार्यम् । यथा [ धवलाइंगलेत्तिधवलेहिंअणञ्जणसाम

गस्यातीव्रप्रयत्नोच्चारणेनपूर्वलघुत्वेनच्छन्दोभङ्गइति गुणत्वम् ॥ १३ ॥ वाक्यमस्थानविरतिप्रागभग्नय तिसंज्ञया । समुद्दिष्टंयदधुनागुणत्वन्तस्यकल्प्यते ॥ यथा । शोभाम्पुष्यत्ययमभिनवः सुन्दरीणाम्प्रबोधः किञ्चिद्भावालसमसरलप्रेक्षितङ्कामिनीनाम् । कार्याकार्याण्ययमविकलेनागमेनैवपश्यन्वश्यामुर्वीं वहतिनृपइत्यस्तिचायम्प्रयोगः । अत्रपादत्रयेचतुर्थ स्थानेयतौकर्त्तव्यायाम्पञ्चमस्थानेकृतत्वादपरत्रच पादस्यमध्यभागेनिविष्टकेवलस्वरत्वाद्यतिभ्रंशेपिस्व रसन्धि कृतत्वादविभिन्ननामधातुशरीरत्वाच्चनदो षत्वम् । यदाह । स्वरसन्ध्यकृतेप्रायोधातुभेदेतदि ष्यते । नामभेदेचशेषेषुनदोषइतिसूरयः । लुप्तेपदा

---

लेहिणिसालआए । णखवत्तकुसुमाइं णहअलाओओसरइ ] इत्यादि नामधातुभागेस्वरासन्धानेचपठितिविच्छेदोनभवतीत्युक्तंसतदुक्तं छन्दे मात्रे [illegible] शोभांपुष्यतीति ॥ १२ ॥ कार्याकार्येति [illegible] [illegible] स्वरस न्धानेविच्छेदोऽतएवश्रव्यत्वमपितदेतद्व्याचष्टे। अत्रेति। मन्दाक्रान्ता मभनभयुगङ्गद्वयंवेददिग्भिरितिचतुर्थदशमयोर्यतिराम्नाता । पञ्चम स्थानइति । प्रथमतृतीययोर्द्वितीयेतुषष्ठेयतिकरणादितिबोद्धव्यम् । ननुपदच्छेदेस्वरसन्धानपठितिविरामःसोऽत्रेखोलत्यतेनतुचतुष्पादेत थास्तीतिकथंश्रव्यत्वमतआह । लुप्तइति । सन्धौविकारोयत्वयलोपा दिकङ्कार्यन्तथाचपदान्तेसतिपदच्छेदएवायमिकारोवतिष्ठतइत्यर्थः। ॥१४॥ अशरीरमिति । प्रधानाविमर्शेहिदूषणमित्युक्तन्तदुपात्तानामेव पदार्थानाम्प्रधानगर्भीकरणेतत्प्रतिबन्धेऽवश्यविधेयमन्यम्प्रतिगुणी भावेवासमाधीयतेऽतएवविशेषाद्गुणत्वम् । तथाहिकियन्मात्रंजानु दघ्नमित्यनयोःपरिमितंकियाप्रधानगर्भभूतानहिभवादृशाइत्यत्रतुस

न्तेशेषस्यपदत्वन्निश्चितंयथा । तथासंधिविकारा न्तम्पदमेवेतिवर्ण्यते ॥ १४ ॥ अशरीरंक्रियाहीनं क्रियापेक्षानयत्रतु । प्राशस्त्यादेरपेक्षावानदोषस्त त्रतद्यथा ॥ क्रियन्मात्रञ्जलंविप्रजानुदघ्नंनराधिप । तथापीयमवस्था तेनहिसर्वैभवादृशाः । अत्र त्रिषु पादेषुपदानि क्रियापदन्नापेक्षन्ते सापेक्षञ्चासमर्थ म्भवति । चतुर्थेतुनहीत्यादिभिःसन्तीत्यपेक्षते । न चैतावतामीषामसामर्थ्यम्भवति । यदाह । यत्रान्य क्रियापदन्नास्तितत्रास्तिर्भवन्ती*परःप्रथमपुरुषःप्रयु ज्यतेइति ॥ १५ ॥ श्लिष्टमस्पृष्टशैथिल्यंशिथिलन्तद्वि पर्ययः । गौडीयैरिष्यतेतत्तुबन्धप्राशस्त्यगौरवात्

त्ताक्रियायाःसकलपदार्थाव्यभिचारादपेक्षितइतिसिद्धिस्तदिदमाचा र्यसतेनाह । यत्रान्येति । भवन्तीवर्त्तमाना । तदेतद् वाक्यंक्रि याप्रधानमितिदर्शसप्रधानंविशेष्यमात्रन्तुवाक्यार्थइतिपरमार्थस्तेन राधारस्तःसाक्षिणामित्यादावावश्यकविधेयसाक्षिभावादिगुणतयारा धासम्बन्धादीनविवक्षितप्राधान्यानामपिप्रधानत्वाविमर्षानदोषइ त्युक्तम्भवति ॥ १५ ॥ श्लिष्टमिति । पारुष्यशैथिल्याभ्यांविनाकृतंश्लिष्ट मित्युक्तंतस्यविपर्ययोविपरीतंवाक्यंशिथिलम्भवति । परुषमल्पप्रा णाक्षरोत्तरंवेत्यर्थः । एवंविधमपिचैतदनुप्रासत्सौष्ठवात्पदानामेकता प्रतिभासेसमाधीयतेउद्भटानुप्रासतयाचकान्तिप्राधान्येगौडीयरीति प्राधान्येनगुणत्वमासादयतितदिदमुक्तम् बन्धप्राशस्त्यगौरवादिति । गौडीयैर्गौडीयरीतिगोचरहेतुवाक्प्रकर्षशालिभिः । लीलेति । अत्र दन्त्यवर्णमयत्वेनाल्पप्राणाक्षरोत्तरतायामपिपदैकताप्रतिभासानुप्रास योरुद्रेकःकान्तिप्रकर्षोवसेयः ॥ १६ ॥ नदोषइति । अर्थालङ्कारकार णादर्थालंकाररूपम् यत्रहिशब्दस्यार्थोन्यथान्यथारूपम्भजतेतत्रावश्य न्तदनुयायिनापदसन्दर्भेणभिन्नरूपेणभाव्यम् । एवमपिच्छायावैरूप्यंवै

* भवन्तीपरइति । लट्परोस्तिःसर्वत्राकाङ्क्षायांप्रयोक्तव्यइतिकैयटः

॥ यथा । लीलाविलोलललनाललितालकलासकाः । विलुप्तमालतीमालाजलकालानिलाववुः । अत्रशैथिल्यदोषेपिबन्धप्राशस्त्येनगौडैरादृतत्वाद्गुणत्वम् ॥ १६ ॥ नदोषःक्वापिवैषम्येप्यर्थालङ्कारकारणात् । पौरस्त्यैरादृतत्वाच्चशब्दाडम्बरतोपिवा॥यथा। चन्दनप्रणयोद्गन्धिर्मन्दोमलयमारुतः । स्पर्द्धतेरुद्धमद्धैर्योवररामाननानिलैः । अत्रसत्यपिवैषम्यदोषेशब्दालङ्कारगुणादर्थालङ्कारगुणात्पौरस्त्यैरादृतत्वाच्चगुणत्वम् ॥ १७ ॥ कठोरमपिबध्नन्तिदीप्तमित्यपरेपुनः । तेषाम्मतेनतस्यापिदूषणन्नैवविद्यते। यथा। न्यक्षेणपक्षःक्षपितःक्षत्रियाणांक्षणादयम् ।अत्रकठो

रस्यमेवावहतीत्याशङ्क्यशब्दाडम्बरइत्युक्तम् । आडम्बरउद्भटता । तस्याप्येकरीत्यनिर्वाहोदूषणमित्यत्रपौरस्त्यैरित्युक्तम् । शरावत्याःप्राग्देशभवाःपौरस्त्यास्तदीयहेवाकप्राचुर्यभाजएवहिखण्डरीतयः ॥ चन्दनेति । अत्रयद्यपिमलयानिलएकएववाक्यार्थस्तथापिचन्दनप्रणयेनप्रवृद्धसौरभेमन्दइत्यान्यांश्टङ्गाराङ्गताप्रतीतावुन्मिश्रःसंदर्भः । मलयमारुतइतिकोमलःवररामामुखानिलैरित्यपितथातत्राप्यारभटीप्रकाशनेस्पर्द्धतइतिस्फुटम् । एवंरुद्धमद्धैर्यइतितद्वेंसमताविपर्यासेपिविशेषणानामर्थानांभिन्नभिन्नरसानुप्रवेशेपृथगर्थालंकाराःप्रकाशन्ते अस्तिचात्रशब्दाडम्बरवशादेवच्छायारूपाप्रतिभासः।लाटीयाचरीतिः। ॥ १७ ॥ कठोरमिति सुकुमारताविपर्यासःकठोरःसंदर्भःप्रस्फुटतरवर्णाप्रधानमितियावत् । सोयंदीप्तरसानुप्रवेशादौचित्येनगुणत्वंभजतइतिव्यक्तमपरेपौरस्त्याः ॥ न्यक्षेणसामस्त्येन ॥ १८ ॥ अविद्वद्विपर्ययःप्रत्यनीकभूतंवाक्यमादिग्रहणाद्यमकश्लेषप्रहेलिकाप्रकरणानि ॥ यादेवीपवित्रत्वेनाश्रिताऽनीचयातुङ्गयाबुद्ध्यामायायामस्यअविद्याविस्तारस्य आयासंग्लानिंविच्छेदंयाचनीयाप्रार्थनीया यतोयातनंनरका

रेपिदीप्तत्वाद्गुणत्वम् ॥ १८ ॥ अविद्धदङ्गनाबाल प्रसिद्धार्थम्प्रसादवत् । विपर्ययोस्याप्रसन्नंचित्रा दौतन्नदुष्यति ॥ यथा । याश्रितापावनतयायात नाच्छिदनीचया । याचनीयाधियामायायामायासं स्तुताश्रिया । अत्राप्रसाददोषेपिचित्रत्वाद्गुणत्व म् ॥ १९ ॥ अध्याहारादिगम्यार्थन्नेयार्थम्प्रागुदा हृतम् । सगम्यतेप्रसिद्धश्चेन्नतद्दोषवदिष्यते ॥यथा। माभवन्तमनलःपवनोवावारणोमदकलःपरशुर्वा । वाहिनीजलभरःकुलिशंवास्वस्तितेस्तुलतयासहवृक्ष । अत्रदहत्यादीनामध्याहार्यतयानेयत्वेप्यतिप्रसि ध्याप्रतीयमानत्वाद्गुणत्वम् ॥ २० ॥ असभ्यार्थ न्नतद्ग्राम्यन्तद्ग्राम्योक्त्यैवदुष्यति । विदग्धोक्तौतु तस्याहुर्गुणत्वम्मनीषिणः ॥ यथा । कामङ्कदर्पचा

---

नुभवनीयंदुःखंछिनत्तिश्रियापिस्तुतेति । अष्टदलकमलबन्धोयम् * । तदिहतथावरासन्निवेशस्यचमत्कारकारित्वेनप्रसादोपिसहृदयश्लाघा विषयोगुणतामध्यास्तइति ॥ १८ ॥ अध्याहारेति । असंपूर्णंवाक्यं नेयार्थमित्युक्तंतस्यैवंरूपलाभ्झटितिश्रुतार्थापत्तिप्रादुर्भावपरिकरवकसं धानात्समाधीयते। तथाहि माभवन्तमनलइत्यादौवृत्तसमधिव्याहारे णदहनादीनांयोग्यतयाशीघ्रमेवधाक्षीदित्यादिक्रियान्वयोवसीयते। स्वस्तिवचनेनचामङ्गलप्रस्तावनिरासात्तथाभूतक्रियानुपादानंवक्तृवत्स तयागुणइति ॥ २० ॥ असभ्यार्थमिति । रसस्यादीप्तिःकान्तिविपर्य योवचनापराधेनदूषणतामध्यास्तेससमाधीयतेग्राम्योक्तिपरिहारे णैवातएवोक्तिसमर्पितच्छायाविशेषयोगेगुणत्वलाभःसहृदयसभायां नसाधुरसस्योवैदग्ध्यविधुरंग्राम्यन् ॥ २१ ॥ ओजइति । दीप्तरसा नुप्रविष्टार्थप्रतिपादकसंदर्भौचित्येन समासभूयस्त्वमोजोऽस्यविपर्य योदीप्तेरप्रत्यूहादेवसमाधीयते तदिदमुक्तं"दीप्तार्थंबध्यतेयत्रतद्दीप्तं

---

* अयं द्वितीये परिच्छेदे दर्शयिष्यते ।

गडालोमयिवामाक्षिनिर्दयः। त्वयिनिर्मत्सरोदिष्ट्या सोयमस्मास्वनुग्रहः। अत्रग्राम्यत्वेपिग्राम्यार्थस्यविदग्धोक्त्या तिरस्कृतत्वाद्गुणत्वम्॥२१॥ ओजःसमासभूयस्त्वन्तद्दीप्तार्थेषुवध्यते। विपर्ययोस्यासमस्तन्तद्दीप्तञ्चेन्नदोषभाक्॥ यथा। योयःशस्त्रम्बिभर्त्तिस्वभुजगुरुमदःपाण्डवीनाञ्चमूनां योयःपाञ्चालगोत्रेशिशुरधिकवया गर्भशय्याङ्गतोवा। योयस्तत्कर्मसाक्षीचरतिमयिरणेयश्चयश्चप्रदीपःक्रोधान्धस्तस्यतस्यस्वयमिहजगतामन्तकस्यान्तकोहम्। अत्रासमस्तत्वेपि प्रौढबन्धत्वाद्गुणत्वम्॥२२॥ समस्तमसमस्तंवानानिर्वहतियद्वचः। तदनिर्व्यूढमस्यापिन दोषःक्वापितद्यथा॥ प्रसीदचण्डित्यजमन्युमञ्जसा जनस्तवायम्पुरतःकृताञ्जलिः। किमर्थमुत्कम्पितपीवरस्तनद्वयन्त्वयालुप्तविलासमास्यते। अत्रसमस्तरीत्यानिर्वाहादनिर्व्यूढत्वेपिरसान्तरपरिग्रहेणरीत्यन्तरपरिग्रहाद्गुणत्वम्॥२३॥ अनलङ्कारमित्याहुर

---

भवेन्नदुष्यतीति। सुगममुदाहरणम्। व्यूढः प्रौढः॥२२॥ समस्तमिति। उपक्रान्तरीतेरनिर्वाहेमधुरसपर्यंताप्रतीतिः स्खलतीतिदूषणताबीजमुक्त तथाभूतरसानुगुणव्यभिचार्यनुप्रवेशव्यञ्जनौचित्यादुपक्रमनिर्वाहःसर्वस्वायमानोगुणतामासादयति। तथाहि प्रसीदेत्यादौप्रणयकेलिकुपितकामिनीप्रसादनायांशृङ्गारविरोधिसमासव्यतिकरेणरीतेरप्युक्रमेरोषलक्षणभावानुभावभूःस्तनकम्पवर्णनायांसमासोनुप्रविष्टइतिव्यक्तःपूर्वरीतेरनिर्वाहः। रसान्तरंप्रकृतविजातीयरससंबद्धोव्यभिचारीभावः॥२३॥ अनलंकारमिति। अनुत्कृष्टाप्रविष्टविशेषणवद्वाक्यंनिरलङ्कारोपूर्वोत्तरवाक्यसंगतिकरणप्रयोजनकतयानदो

लङ्कारोज्झितंवचः । पूर्वोत्तरानुसन्धाने तस्यसाधु
त्वमिष्यते ॥ यथा । निशम्य ताःशेषगवीरभिधातु
मधोक्षजः । शिष्याय बृहताम्पत्युःप्रस्तावमदृशद्दृ
शा । अस्यानलङ्कारत्वेपिपूर्वापरानुसन्धानप्रयोज
नभूतत्वाद्गुणत्वम् ॥ २४॥ वाक्याश्रयाणान्दोषा
णांगुणीभावोयमीरितः । यथावाक्यार्थदोषाणाम
दोषःकथ्यतेधुना ॥ समुदायार्थशून्यंयत्तदपार्थम्प्र
चक्षते । तन्मत्तोन्मत्तबालानामुक्तेरन्यत्रदुष्यति ॥
यथा । क्वाकृत्यंशशलक्ष्मक्वनुकुलम्भूयोपिदृश्येतसा
दोषाणामुपशान्तयेश्रुतमहोकोपेपिकान्तम्मुखम् ।
किंवक्ष्यन्त्यपकल्मषाःकृतधियोस्वैवसान्याद्दृशीचे
तःस्वास्थ्यमुपैहिकःखलुयुवाधन्योधरन्धास्यति ।
अस्यसमुदायार्थशून्यत्वेनापार्थस्यापिउन्मत्तवचन
त्वाद्गुणत्वम् ॥ १ ॥ यदप्रयोजनंयच्चगतार्थंव्यर्थ

षः । कथंतथाभूतस्यकाव्यत्वमित्यपिनवाच्यम् । अनुगतेनवक्रीभावे
नतत्समर्थनात् । व्यक्तमुदाहरणम् ॥ २४ ॥ सूत्रकारएववाक्यार्थदोष
गुणीभावविवेचनंसंगमयति । वाक्याश्रयाणामिति । सत्तादिवचना
न्यनुक्रियमाणानिचमत्कारमर्पयन्ति । अतएवच्छायालंकारप्रादुर्भा
वाद्गुणोऽनित्यदोषतयाचानुकरणान्यदपिगुणीभवनबीजमुन्नेयमि-
त्युदाहरणेनव्यञ्जयन्नाह । क्वाकृत्यमिति । अत्रश्रुतिशालिनोनाय
कस्यवासनापरिपाकवशाद्विप्रलम्भावेशेपिप्रथमंप्रादुर्भावः । क्वाकृत्यं
शशलक्ष्मणःक्वनुकुलमिति।तदेवंशान्तरसानुयायिनमनन्तरमेवबाधि
त्वाचितानुरञ्जकप्रकृतरसाव्यभिचारिणाऔत्सुक्यस्यप्रादुर्भावोभूयो
पिदृश्येतसेति । एवंदोषाणामुपशान्तयेश्रुतमित्याद्यौचित्यादीनांपूर्व
पूर्वप्रादुर्भूतानामुत्तरोत्तरभाविभिश्चिन्ताप्रभृतिभिरपवादेप्रकृतवासना
प्रौढिरवसेया । उन्मत्तवचनत्वादिति । रसाविष्टचेतसस्तदुत्कलिका

मेवतत् । तस्यापिक्कापिनिर्दोषःप्रयोगोदृश्यतेय
था ॥ गीताविदुरवाक्यानिधर्माःशान्तनवेरिताः ।
नश्रुताभारतेयेनतस्यजन्मनिरर्थकम् । अत्रगीतावि
दुरवाक्यादीनाङ्कथायामप्रयोजकत्वेपीतिहासव्या
जेनचतुर्वर्गप्रतिपादनस्यारम्भएवप्रतिज्ञानाद्गुणत्वं
तदिदमप्रयोजनम् ॥२॥ एवङ्गतार्थमपियथा । हृत्क
ण्ठवक्त्रश्रोत्रेषुकस्यनावस्थितन्तव । श्रीखण्डहार
कर्पूरदन्तपत्त्रप्रभंयशः । अत्रैकेनैवोपमानेनशौक्ल्य
प्रतीतौशेषोपमानपदानांव्यर्थत्वेपियशसः स्मर्यमा
णत्वगीयमानत्वस्तूयमानत्वश्रूयमाणत्वैर्हृदयादिषु
श्रीखण्डादिवदस्थानस्यप्रतीयमानत्वाद्गुणत्वम् ॥३
रिश्च विषेणपूर्वोक्तंयदिभूयोपिकीर्त्यते। तदेकार्थरसा

---

प्रायाणांभावानामव्यवस्थयाकीर्त्तनमुन्मादः ॥ १ ॥ यदप्रयोजनमि
ति । प्रबन्धार्थपोषीनाधायकवाक्यमप्रयोजनमर्थलाभप्रतिपादकत
याकृतकरंव्यर्थम् । एवकारोभिन्नक्रमस्तच्छब्दाऽनन्तरंद्रष्टव्यः । दृ
श्यतइत्यनेनतत्रतत्रप्रकृतसङ्गतौसत्यांदोषाभावोवसेयइतिदर्शितम् ।
यद्यपिभगवद्गीतायांमोक्षाधिकारिणामस्त्येवप्रकृतशान्तरसपरिपोषक
त्वंतथापितदन्तर्गतानांभूयसामाहत्यनास्तिभीष्मविदुरवाक्यानांतु
धर्माधिकारेप्रकृतानांव्यक्तएवनिष्प्रयोजनत्वावःसोयंयथासमाधीयते
तद्विवृणोति । अत्रेति । इतिहासरूपेप्रबन्धेसत्यपिशान्तस्यवाक्यार्थी
भावेनबहूनामितिहासानांत्रिवर्गाधिकारित्वाच्चतुर्वर्गप्रतिपादनमेवम
हर्षैरभिमतं धर्मादित्रितयस्यचप्रासंगिकतयानपूर्ववदस्यार्थैकताविरो
धः । तदिदमुक्तंव्याजेनेति । एवंचव्युत्पादयितव्यविषयजिज्ञासोपा
दानेधर्मार्थिप्रवृत्तयेवाक्यमिदंसफलतामासादयद्गुणएवभवति । एवङ्ग
तार्थमपीति ॥ २ ॥ श्रीखण्डेनैवोपमानेयशसःशुद्धत्वमवगतंश्लेषोप
मानपदानि केवलकृतकराणीतिव्यर्थत्वप्रसङ्गेस्मरणादिविशेषविवक्ष

क्षिप्तचेतसान्तन्नदुष्यति ॥ यथा । असारंसंसारंप
मुषितरत्नंत्रिभुवनन्निरालोकंलोकंमरणशरणम्बान्ध
नम्।अदर्पङ्कन्दर्पञ्जननयननिर्माणमफलञ्जगज्जीर्णा
रण्यङ्कथमसिविधातुंव्यवसितः। असारंसंसारमित्यु
क्त्वापरिमुषितरत्नंत्रिभुवनन्निरालोकंलोकञ्जगज्जी
र्णारण्यमितियदुक्तन्तस्यविशेषानभिधायकत्वेपिर
साक्षिप्तेनवक्त्राभिहितत्त्वाद्गुणत्वम् ॥ ४ ॥ संशयायै
वसन्दिग्धंयदिजातुप्रयुज्यते । स्यादलङ्कारएवासौ
नदोषस्तत्रतद्यथा ॥ कन्तोलम्भइपन्थिअ सत्थरअं
एत्थ गामणिघरम्मि । उसाअपओहरम्पेक्खिऊण
जइवससिताववससु । अत्र केनापिपथिकयूनाप्रावृ
डारम्भे ग्रामणीवधूः पीनोन्नतस्तनीसस्तरकमिति
स्रस्तरकव्याजेनशस्तरतंयाचितातम्प्रत्याचक्षाणेव
यथोक्तं ब्रूते कुतोत्रग्रामणीगृहे स्रस्तराःकुतोवाश
स्तंरतमुन्नतौपयोधरौममहृदये नभासित्वापयोधरा
न्दृष्ट्वायदिवससितदावसेतितदन्यगोपनायद्व्यर्थैरेव

---

यातिरस्क्रियतेयथासंख्यादिभङ्गिसौभाग्येनचगुणीभावइति॥३॥अविश
षेणेति। पूर्वोक्तपूर्वोक्ताभिन्नतात्पर्यकमविशेषेणतात्पर्यावृत्तिप्रयोजन
मन्तरेणतन्मयीभवनंचेतसआक्षेपः । असारंसंसारमित्यनेनस्थावरज
ङ्गमप्रपञ्चस्यनिःसारतांप्रतिपाद्य“जातौजातौयदुत्कृष्टंतद्धिरत्नंप्रचक्ष
त„इति। परिमुषितरत्नमित्यत्रापितावानेवतात्पर्यार्थः।एवंनिरालोकं
लोकं जगज्जीर्णारण्यमित्यत्रापिद्रष्टव्यं सुगममन्यत्॥४॥संशयायैवेति।
स्त्रिश्लेविरुद्धार्थवाक्यंसंशयापादनेनदुष्यतीत्युक्तम् ॥ यदातुसन्देहएव
तात्पर्यमवधार्यते तदासएवरञ्जकतयालङ्कारतामारोहतीतिकत्यनंगु
णीभावइतितदिदमुक्तम्।स्यादलंकारएवेति।कुतोलभ्यतेपथिकस्रस्तरः

पदैःप्रयुक्तमितिसन्दिग्धस्याप्यस्यगुणत्त्वम्॥५॥ वाक्येप्रबन्धेचार्थानाम्पौर्वापर्यविपर्ययः।दोषःसोपक्रमोनामचित्रहेतौनदुष्यति॥ यथा। पश्चात्पर्यस्यकिरणानुदीर्णञ्चन्द्रमण्डलम्। प्रागेवहरिणाक्षीणामुदीर्णोरागसागरः। अत्रपौर्वापर्यविपर्ययादपक्रमदोषस्यचन्द्रोदयम्प्रतिरागोद्दीपनप्रकर्षप्रकाशनत्वाददोषः ॥ ६ ॥ यस्मिन्नीतेरनिर्वाहःखिन्नन्तदभिधीयते। नदोषस्तस्यतुक्कापिवत्रच्छायानहीयते।यथा॥ अभिनववधूरोषःस्वादुःकरीषतनूनपादसरलजनाश्लेषस्तुषारसमीरणः। गलितविभवस्याज्ञेवाद्यद्युतिर्मसृणारवेःविरहिवनितावक्त्रक्लैव्यम्बिभर्तिनिशाकरः। अत्रोपमानानिसामान्यवचनैःसमस्यन्तइतिप्र

---

शक्तरतंचात्रग्रामणीगृहेग्रामणीग्रामप्रधानं उन्नतपयोधरान्मेघान् पयोधरौस्तनौवादृष्ट्वायदिवससितद्वस। अत्रप्रष्टुःसंदेहजननेननिभृतानुरागप्रकाशनंपथिकविषयेप्रतीयते। द्व्यर्थैरिति। तदुक्तंद्व्यर्थैःपदैःपिशुनयेच्चरहस्यवस्त्विति॥५॥वाक्येइति॥अर्थानांकार्यकारणभूतानांतेषामेवपौर्वापर्यनियमाद्यइतिपूर्वार्द्धेध्याहार्यम्।चित्रहेतावितिप्रसिद्धरूपविपर्यासेनहेतुवचनद्वाराप्रकृतवाक्यार्थपरिपोषाधानंचित्रहेतुःपर्यस्यविस्तार्यचन्द्रोदयरागोद्दीपनयोःसत्यपिहेतुहेतुमद्भावेनपौर्वापर्येप्रथमंरागसागरःपश्चाच्चन्द्रमण्डलमुदीर्णमितिविपर्यासप्रतीतिसमसमयमुद्दीपनविभावतानुसंधानात् हिमांशोरतिशीघ्रकारिताप्रकाशनात् प्रकृतशृङ्गाररसोदीप्यते।एवंकुलकादिरूपंप्रबन्धातर्गतवाक्येष्वपिगुणत्वमवसेयम्॥६॥यस्मिन्निति।वाक्यार्थस्यधर्मिणोयदलङ्कारभङ्ग्याप्रक्रमस्ययानिर्वहणाभावःखेदःसतुपूर्वालंकारविश्रान्तौप्रतीतेरस्खलनेनदोषः।गुणत्वंचतस्यभङ्ग्यन्तरैरपिप्रकृतालंकारेध्वननात्।तथाहिअभिनववधूरोषस्वादुरसरलजनाश्लेषइवक्रूर इत्युपमानानिसामान्यवचनैःसमस्यन्तइतिस

कान्तरीतेरनिर्वाहेपिसमासव्यापारत्वेनैवेवशब्दत द्धितयोःप्रयोगेप्रत्युतच्छायोत्कर्षइतिगुणत्वम् ॥७॥ लोकातीतइवार्थेयःसोतिमात्रइहेष्यते । वार्तादौ तेनतुष्यन्तिविदग्धानेतरेजनाः ॥ तच्चवार्त्ताभिधानेषुवर्णनास्वपिविद्यते । कान्तञ्जगतितत्कान्तंलौकिकार्थानुयायिवत् ॥ लौकिकार्थमतिक्रम्यप्रस्थानंयत्प्रवर्तते । तदत्युक्तिरितिप्रोक्तङ्गौडानाम्मनसोमुदे॥यथा।देवधिष्ण्यमिवाराध्यमद्यप्रभृतिनोगृहम्। युष्मत्पादरजःपातधौतनिश्शेषकल्मषम् । अत्रातिमात्राख्येदोषेपिवार्ताभिधानेभिधेयस्यकान्तगुणस्याभ्यनुज्ञानाद्गुणत्वम् । यथावा । अल्पन्निर्मितमकाशमनालोच्यैववेधसा।इदमेवंविधम्भाविभवत्याःस्तनजृम्भणम्।अत्रातिमात्रेपिवर्णनार्थत्वाद्गुणत्वम् । अथानतिमात्रङ्कीदृक् । उच्यते । वार्तंतावत् । यथा । गृहाणिनामतान्येवतपोराशिर्भवादृशः । संभावयतियान्येवपावनैःपादपांसुभिः ।

मासइयेनोपमामुपक्रम्यमलिनविभवस्याद्येवेतिसमासत्यागाद्धिरहिवनितावक्त्रक्लैब्यंबिभर्तीतिचान्तरधर्मारोपेणोचम।त्यागात्सत्यपिरीतेरनिर्वाहेउपमायामेवपर्यवसानंसमाधानहेतुः।गुणत्वहेतुमाह।व्यापारत्वेनेति। गलितविभवाज्ञामस्त्रणेतिसमासेकर्त्तव्येयोयमिवशब्दप्रयोगः सइवार्थेपूर्वौसमासौबोधयति।क्लैब्यंबिभर्त्तीतिसामान्यालंकारेकधर्मन्यधर्मसन्योवहतीतिप्रतिसंधानसमसमयंवक्त्रक्लैब्यमस्येत्यंतर्गतोपमाप्रकटीभावेउपमासमासपदयोरपिसाप्रतीयतइति सेयंकविचातुरीप्रतीयमानच्छायामेवपुष्णातितदिदमुक्तम्।प्रत्युतेति॥७॥अनामयेप्रियालापेवार्तंवार्त्ताचकीर्त्यते।वर्णनास्वपीत्यादिपदविवरणंद्र्यतेकान्तमित्य

अथवर्णनायां यथा। अनयोरनवद्याङ्गिस्तनयोर्जृम्भमाणयोः। अवकाशोनपर्याप्तस्तवबाहुलतान्तरे॥८॥ परुषान्निष्ठुरार्थन्तुयदतीवविगर्हितम्। विरुद्धलक्षणाद्यासुतदुक्तिषुनदुष्यति॥ यथा। हालाहलंविषम्भुङ्क्ष्वसखिमातत्रविश्वसीः। यद्दानदह्यसेकाष्ठैः स्वल्पैस्त्वमपिमेमतिः। अत्रपारुष्येपिविरुद्धलक्षणयार्थान्तरस्यलक्षितत्वाद्गुणत्वम्॥९॥ अप्रस्तुतरसम्प्राहुर्विरसंवस्तुसूरयः। अप्राधान्येतदेष्टव्यंशिष्टैःस्याद्रसवस्तुनोः॥ यथा। क्षिप्तोहस्तावलग्नःप्रसभमभिहतोव्याददानोंशुकान्तंगृह्णन्केशेष्वपास्तश्चरणनिपतितोनेक्षितःसम्भ्रमेण। आलिङ्गन्योवधूतस्त्रिपुरयुवतिभिःसास्रुनेत्रोत्पलाभिःकामीवार्द्रापराधःसदहतुदुरितंशाम्भवोवःशराग्निः। अत्रकरुणेशृङ्गारस्याप्रस्तुतत्वेपिशम्भुप्रभाववर्णनाङ्गभूतत्वेनद्वयोरप्यप्राधान्यादवैरस्येनगुणत्वम्॥१०॥ हीनंयत्रोपमा

---

भिसंबन्धः।लौकिकार्थानुयायियज्जगतिलोकैकान्तमुच्यतेतथाभूतमतिकस्ययत्कवीनांप्रस्थानंप्रवर्त्ततेतदपिगौडानांमनसोमुदेप्रोक्तंशब्दाडम्बरात्मकगौडरीतिप्रियाणांविदग्धकामाञ्ज्ञापकंसद्गुणीभवतीतिश्लोकार्थः। धिक्स्यंगृहम्। ननुप्रियालापवर्णनयोरेवंविधाएवलोकेकाव्ये चवचनसंदर्भाइतिनास्त्यतिमात्रतानतिमात्रतयोर्भेदइतिपृच्छति। अथेति॥८॥ सुगममन्यत्।परुषमिति।विरुद्धलक्षणालौकिकीतस्याहिभ्रूटित्यभिधानाविनाभावादपरुषार्थप्रतीतेरभिधानतःपारुष्यंनदोषोलक्षणापरिग्रहेणचगुणत्वम्। तदाहुः। अभिधेयाविनाभावप्रतीतिर्लक्षणेतिया। सैषाकाव्येविदग्धवक्राजीवितंवृत्तिरिष्यते॥९॥ अप्रस्तुतेति॥ अप्राधान्यइत्युपलक्षणं बाध्यत्वेपीतिचबोद्धव्यम्। रसवस्तुनोःपरस्पर

नस्यादुपमेयय्यंगुणाधिकम् । हीनोपमन्तदस्याहुःक
वयःक्काप्यदुष्टताम् ॥ यथा । ततःकुमुदनाथेनकामि
नीगण्डपाण्डुना । नेत्रानन्देनचन्द्रेणमाहेन्द्रीदिग
लङ्कृता। अत्रोपमानस्यहीनतायामपिरागातिशय
हेतुत्वाद्गुणत्वम् ॥ ११ ॥ यत्रोपमानमुत्कृष्टमुपमे
यन्निकृष्यते । ज्ञेयन्तदधिकौपम्यमस्यापिक्काप्यदो
षता । यथा । कान्त्याचन्द्रमसन्धाम्नासूर्य्यन्धैर्य्येण
चार्णवम्। राजन्ननुकरोषित्वंसौभाग्येनापिमन्मथ
म् । अस्याधिकौपम्येपिराज्ञोलोकपालांशत्वेनशि
ष्टैरादृतत्वाद्गुणत्वम् ॥ १२ ॥ उपमानेनवैषम्याद्वु
वेदसदृशोपमम् । तस्याभ्यनुज्ञामिच्छन्तिव्यतिरे
कोपमादिषु ॥ यथा । प्रहितःप्रधनायमाधवान
हमाकारयितुम्महीभुजा । नपरेषुमहौजसश्छलादप
कुर्वन्तिमलिम्लुचाइव । अस्यासदृशोपमत्वेपिव्य
तिरेकोपपादकत्वाद्गुणत्वम् ॥ १३ ॥ यस्योपमानं
लोकेषुनप्रसिद्धन्तदिष्यते । अप्रसिद्धोपमंनामतत्क्व
चिन्नैवदुष्यति ॥ यथा । उद्गर्भहूणरमणीरमणोप

विरोधिरसव्यञ्जकयोः । यद्वा । मिथोविरोधिरसरूपयोरेवस्तुनोऽस्त
दाह । बाध्यानामङ्गभावं याप्राप्तानामुक्तिवत्सलेति॥१०॥हीनमिति।
जातिप्रमाणाभ्यामपकृष्टंहीनंचन्द्रापेक्षयाकामिनीकपोलस्यापकर्षेऽप्य
त्मनस्तुल्यतामुद्दीपनस्यप्रतिपाद्यमानःप्रकृतश्शृङ्गारप्रकर्षमर्पयिष्यती
तिगुणत्वम् ॥ ११ ॥ एवमधिकोपमेपि ॥ १२ ॥ उमानेनवैषम्यमन्वये
नसादृश्याभावात् । व्यतिरेकोपमादीत्यादिग्रहणाद्व्यतिरेकदृष्टान्तो
त्त्यादिपरिग्रहः ॥१३॥ यस्योपमानमिति॥ लोकप्रसिद्धमेवकविभिरुप
मानेकान्तंभवतितेनयत्रलोकेप्रसिद्धंतेनसहोपमावर्णनेसंभवदप्यप्रसि

मर्द्दभुग्नोन्नतस्तननिवेशनिभंहिमांशोः । विम्बकु-
ठोरबिसकाण्डकडारगौरैर्विष्णोः पदम्प्रथममग्रकरै-
र्व्यनक्ति। अस्यांप्रसिद्धोपमत्वेनदूषणत्वेपिद्वयोरपि
शृङ्गारोद्दीपकत्वसाम्याद्गुणत्वम्॥१४॥ निरलङ्कारमि-
त्याहुरलङ्कारोज्झितंवचः । अर्थौर्जित्येपुतस्यापिक्व-
चिन्निर्दोषतामता॥ यथा । याञ्चांदैन्यपराभवप्रणयि-
नीन्नेक्ष्वाकवःशिक्षिताःसेवासंवलितः कदारघुकुले
मौलौनिबद्धोञ्जलिः । सर्वन्तद्विहितन्तथाप्युदधि-
नानैवोपरोधः कृतःपाणिःसंप्रतिमेहठात्किमपरंस्प-
ष्टुंन्धनुर्वाञ्छति ॥ अत्रनिरलङ्कारत्वेपिअर्थौर्जित्या-
द्गुणत्वम् ॥ १५ ॥ असभ्यार्थंयदश्लीलन्तदर्थान्त-
रवाचिवा।तस्येहदृश्यतेभूम्नाप्रयोगोनाभिदुष्यति॥
यथा । अद्यापितत्कनककुण्डलघृष्टगण्डमास्यंस्म-
रामिविपरीतरताभियोगे । आन्दोलनश्रमजलस्फु-
टघर्म्मबिन्दुमुक्ताफलप्रकरविच्छुरितम्प्रियायाः । अ

---

द्धोपमत्वंरसानुप्रवेशेनगुणीभवति।उद्गर्भत्वेनस्तनाग्रश्यामिकातयाला-
ञ्छनानुकरणमभिलषितम् ॥ १४ ॥ निरलङ्कारमिति ॥ दैन्यपराभवप्रण-
यिनीमित्याद्युत्कृष्टपुष्टिविशेषणयोगादस्तिशब्देऽस्पष्टेवक्रताऽर्थेतुना-
स्तिवक्रत्वंचालङ्कारइति।यद्यपिवाक्यार्थोनिरलङ्कारइवभासतेतथापि
विशेषतोलङ्कारानध्यवसायेपिसामान्येनवक्रताप्रकाशतएव । नहिलौ-
किकशास्त्रीयवचनार्थवैपरीत्यमिहप्रतीयते । तदिदमुक्तमर्थौर्जित्या-
दिति ॥ १५ ॥ अस्तिहिवयंयाचामहइतिउक्तेयाच्ञाचमिताकरोनाल-
क्षिताइत्युक्तौनायकप्रकर्षाभिव्यञ्जकोविशेषइत्याह । असभ्यार्थमि-
ति । क्वचिद्ग्राम्यमिकएवपदार्थसंसर्गोश्लीलःक्वचित्तुनतस्मिंस्तथाभूते-
पिसंसर्गान्तरमस्तीतियदश्लीलमर्थान्तरवाचिवेत्युक्तम् । कविभिरविगीत

त्राश्लीलार्थैपिकविभिरविगीतत्वाद्गुणत्वम् ॥ १६॥
देशोद्रिवनराष्ट्रादिःकालोरात्रिदिवर्त्तवः । नृत्यगीत
प्रभृतयःकलाःकामार्थसंश्रयाः॥ चराचराणांभूताना
म्प्रवृत्तिर्लोकसंज्ञिता । हेतुविद्यात्मकोन्यायःसंस्मृ
तिःश्रुतिरागमः ॥ तेषुतेष्वयथारूढंयदिकिञ्चित्प्रव
र्तते। कवेःप्रमादाद्देशादिविरोधीत्येतदुच्यते॥ विरो
धःसकलोप्येषकदाचित्कविकौशलात् । उत्क्रम्यदो
षगणनांगुणवीथींविगाहते ॥ तत्रदेशविरुद्धस्यगुणी
भावोयथा॥ तस्यराज्ञःप्रभावेणतदुद्यानानिजज्ञिरे ।
आर्द्रांशुकप्रवालानामास्पदंसुरशाखिनाम् । अत्रदे
शविरुद्धत्वेपि तस्यराज्ञःप्रभावेणेतिकारणोपन्यासा
द्गुणत्वम् ॥१८॥ कालविरुद्धस्ययथा । राज्ञांविना
शपिशुनश्चचारखरमारुतः। चुम्बत्कन्दम्बकुसुमैःस
हसप्तच्छदोद्गमान्। अत्रकालविरुद्धत्वेपिराज्ञांविना
शपिशुन इत्यनिष्टसूचकोत्पातरूपत्वाद् गुणत्वम्
॥१७॥लोकविरुद्धस्ययथा। ऐन्दवादर्चिषःकामीशि
शिरंहव्यवाहनम् । अबलाविरहक्लेशविह्वलोगणय
त्यलम्। अत्रलोकविरुद्धत्वेपिकामिभिस्तथासंवेद्य
मानत्वाद्गुणत्वम् ॥ १९ ॥ युक्तिविरुद्धस्ययथा।

---

त्वादिति।अविपरीताद्विपरीतंरसमुत्क्रम्यतइतिशास्त्रकारैराम्नानात्तस्य
शृङ्गारोद्दीपनतयाकविभिराहृतत्वादित्यर्थः॥१६॥देशोद्रीति। आदिपदे
नद्वीपादिपरिग्रहः।कामार्थसंश्रयाः। अर्थसंश्रयाः।प्रवृत्तयोव्यवस्थाविशे
षाः। हेतुविद्यान्वीक्षिकी। अयथारूढंतथाचाप्रसिद्धम्॥१७॥कालविरु
द्धस्येति। उपघातउत्पातः॥१८॥१९॥ससंकोचइति।यदिचन्द्रादिभ्यःकुसु

ससङ्कोचश्चन्द्रादिवकुमुदराशेरशरणः ससूर्यात्कोका नांविरहइवलुप्तप्रतिविधिः । गुणेभ्यस्तेखेदप्रशमन करेभ्योपियदयद्खलानामुद्वेगस्तदिदमनृतादेवमरण म् । अत्रयुक्तिविरुद्धत्वेपिच्छेकोक्त्यासम्भाव्यमानो पमयातथाप्रतीतेर्गुणत्वम् ॥ २० ॥ औचित्यविरु द्धस्य यथा । तेनाथनाथदुरुदाहरणातपेनसौम्या पिनामपरुषत्वमभिप्रपन्ना । जज्वालतीक्ष्णविशदाः सहसोद्गिरन्तीवागर्चिषस्तपनकान्तशिलेवसीता । अत्रस्त्रीत्वादौचित्यविरोधेपितत्समयोचितत्वाद्गु णत्वम् ॥ २१ ॥ वचनविरोधोयथा । परदाराभिला षोमेकथमार्यस्ययुज्यते । पिबामितरलंतस्याःकदा नुरदनच्छदम् । अत्रवचनविरोधेपिवक्तुस्तथावि धावस्थत्वाद्गुणत्वम् ॥ २२ ॥ धर्मविरोधस्ययथा । पञ्चानाम्पाण्डुपुत्राणाम्पत्नीपाञ्चालकन्यका । स तीनामग्रणीस्त्वासीद्दैवोपिविधिरीदृशः । अत्रधर्मवि रोधेपिदैवोविधिरित्यनेनाभिहितत्वाददोषः ॥ २३ ॥ धर्मशास्त्रविरुद्धस्ययथा । नीतिरापदियद्गम्यःपरस्त न्मानिनोह्रियै । विधुर्विधुन्तुदस्येवपूर्णस्तस्योत्स वायसः । अत्रापन्नःशत्रुरभियातव्यइतिनीतिस्तच्च मानिनोह्रियेभवतिइतिविरुद्धमपिउद्धतपुरुषभाष

---

दसंकोचादयोभवेयुस्तदाभवद्गुणेभ्यःखलानामुद्वेगउपनीयतेननुतथाखं भवतितेनायमलौकिकत्वादाश्चर्यमर्पयतीतिवाक्यार्थपरिपोषात्तश्चोप न्यासोगुणएवेति॥२०॥२१॥वचनविरोधस्येति।अष्टमीकामावस्था॥२२॥दै वोहीति । सिद्धादेशाच्चसतीत्वंपञ्चालकन्यकायाः । तिरस्कृतमित्यत्र

तत्रानुष्यतीतिगुणत्वम् ॥ २४ ॥ कामशास्त्रवि रुद्धस्ययथा । दोलातिप्रेरणत्रस्तवधूजनमुखोद्गतम् । कामिनांलयवैषम्याद्गेयंरागमवर्धयत् । अत्र त्रासतोलयवैषम्येनगेयस्यरागहेतुत्वेपिकामिनीमुखोद्गीर्णत्वाद्रागविवर्धनत्वेनगुणत्वम् ॥२५॥ इत्थं गुणाश्चदोषाश्चकाव्येदोषगुणाश्चये । आख्यातास्ते स्फुटंसम्प्रत्यलङ्कारान्प्रचक्ष्महे ॥ १ ॥ युवतेरिवरूपमङ्गकाव्यंस्वदतेशुद्धगुणन्तदप्यतीव । विहितप्रणयन्निरन्तराभिःसदलङ्कारविकल्पकल्पनाभिः ॥ २॥ यदि भवतिवचश्च्युतंगुणेभ्योवपुरिवयौवनवन्ध्यमङ्गनायाः । अपिजनदयितानिदुर्भगत्वन्नियतमलङ्करणानिसंश्रयन्ते ॥ ३ ॥ दीर्घापाङ्गन्नयनयुगलम्भूषयत्यञ्जनश्रीस्तुङ्गाभोगौप्रभवतिकुचावर्चितुंहारयष्टिः । मध्यक्षामेवपुषिलभतेस्थानकूर्पासलक्ष्मीःश्रो

---

ववापन्नधाविवक्षितइत्यागमः ॥२३॥उद्धतपुरुषभाषितत्वादिति । पूर्वपक्षतयासिद्धान्तोपोद्घातत्वादित्यर्थः ॥२४॥ लयवैषम्यादिति । गीतस्य कलाप्रकथनात्तस्यचविषमलयस्यारञ्जकत्वात्कथंरागवर्द्धनमितिदूषणंदोलागतागतत्रस्तकामिनीगीतप्रभावोक्तेश्चमत्कारकारित्वात्तिरोधीयतइतिगुणाभावंचनीयतेभावान्तरालवर्तीकामोलयः ॥२५॥ननुगुणैरेवशब्दार्थयोःसनाथीकरणेकिमलङ्कारविवेचनप्रयासेनेत्यतआह । युवतेरिति । अंङ्गेत्याक्षेपसंबोधने। अलङ्कारसाहित्यबुद्धिसंगतिःप्रणयः। विकल्पोविशेषस्तर्हिकिमुत्तरसिद्धौपूर्वेणेतिन्यायेनत्यज्यन्तांगुणाइत्यतआह॥२॥यदिभवतीति । विवृतमेतत्॥३॥तेचालङ्कारायथास्थानंनिवेश्यमानाएवसहृदयरञ्जनक्षमाइतिकवीञ्शिक्षयति।दीर्घेति।तेनशब्दा

णीविम्बेगुरुणिरशनादामशोभाम्बिभर्त्ति ॥ ४ ॥

इतिश्रीमहाराजाधिराजभोजदेवेनविरचिते सरस्वतीकण्ठाभरणनाम्न्यलङ्कार शास्त्रेगुणविवेचनन्नामप्रथमः परिच्छेदः ॥



---

द्विविषयविभागेनालङ्कारविवेचनंसप्रयोजनमेवेतितात्पर्यार्थः । शेषम तिरोहितम् ॥ २ ॥ इतिश्रीमिश्ररत्नेश्वरविरचितेरत्नदर्पण नाम्निसरस्वतीकण्ठाभरणविवरणेदोषगुण विवेचनोनामप्रथमःपरिच्छेदः ॥



शुभंभूयात् ॥

## ॥ सटीके सरस्वतीकण्ठाभरणे ॥

## ॥ द्वितीयः परिच्छेदः ॥

श्रीगणेशायनमः ॥ शब्दार्थोभयसंज्ञाभिरलङ्कारान्कवीश्वरः । बाह्यानाभ्यन्तरान्बाह्याभ्यन्तरांश्चानुशास्ति॥१॥येव्युत्पत्त्यादिनाशब्दमलङ्कर्तुमिहक्षमाः। शब्दालङ्कारसंज्ञास्तेज्ञेयाजात्यादयोबुधैः॥२॥जातिर्गतीरीतिवृत्तिच्छायामुद्रोक्तियुक्तयः।भणितिर्गुम्फणा

श्रीगणेशाय नमः ॥ क्षेत्रमध्यंविशालाक्षीयस्याधिवसतिप्रिया । अविमुक्तप्रतिष्ठायतस्मैकामद्रुहेनमः॥१॥ आद्यस्फुरतुवाग्देव्याःकण्ठाभरणकौतुकम्। मयिप्रक्षमनोवृत्तौतन्वानेरत्नदर्पणम् ॥२॥ एवंदोषगुणेपुनिर्णीतेष्वलङ्काराः प्राप्तावसरास्तत्रालङ्कारसामान्यलक्षणमाद्यपरिच्छेदेतद्विभागंदर्शयन्परिच्छेदत्रयंसङ्गमयति । शब्दार्थोभयसंज्ञाभिरिति । इत्थंभूतलक्षणेतृतीया मध्यमपदलोपीसमासः।तेनशब्दालङ्कारार्थालङ्कारोभयालङ्कारसंज्ञाभिरित्यर्थः । गुणप्रस्तावेबाह्यत्वादिकंविवृतं शब्दोवच्छेदकतयाप्रथमप्रतिसंधेयभावेनचशरीरस्थानीयोबाह्यस्ततस्तदाश्रयाअलङ्काराअपिबाह्याः।अर्थोविच्छेद्यतयापश्चादनुसंधेयतयाचात्मतुल्यआभ्यन्तरस्तेनतदाश्रयाअलङ्काराअप्याभ्यन्तराः। एतेनबाह्याभ्यन्तराव्याख्याताः। आश्रयाश्रयिभावश्चयथातथोक्तमेव । उभयालंकारेषुयोगस्यप्रायिकत्वमाश्रित्यकवीश्वराणामनुशासनमुक्तमेतद्विवेचयिष्यतेचतुर्थारम्भे ॥१॥शब्दालङ्कारसामान्यलक्षणमाह । येव्युत्पत्तीति । विशिष्टाउत्पत्तिर्व्युत्पत्तिर्लोपागमविकारादिप्रपञ्चः । अतएवहिसंस्कृतादिजातयोव्यवतिष्ठन्ते।आदिग्रहणाद्गुरुलघुसन्निवेशादयोगत्याद्यवच्छेदाश्चयोविंशतिरुपात्ताः । बाह्यकङ्कणादिसाम्यादियंसंज्ञाप्रवृत्तेत्याह ।

शय्यापठितिर्यमकानि च ॥३॥ श्लेषानुप्रासचित्राणि वा कोवाक्यम्प्रहेलिका । गूढप्रश्नोत्तराध्येयश्रव्यप्रेक्ष्याभिनीतयः ॥४॥ चतुर्विंशतिरित्युक्ताः शब्दालङ्कारजातयः । अथासां लक्षणं सम्यक्सोदाहरणमुच्यते ॥५॥ तत्र संस्कृतमित्यादिर्भारतीजातिरुच्यते । सात्वौचित्यादिभिर्वाचामलङ्काराय जायते ॥६॥ संस्कृतेनैव केप्याहुः प्राकृतेनैव केचन । साधारण्यादिभिः केपि केचन म्लेच्छभाषया ॥७॥ न म्लेच्छितव्यं यज्ञादौ स्त्रीषु नाप्राकृतं वदेत् । सङ्कीर्णं नाभिजातेषु नाप्रबुद्धेषु संस्कृतम् ॥८॥ देवाद्याः संस्कृतम्प्राहुः प्राकृतङ्किन्नरादयः । पैशाचाद्यम्पिशाचाद्याः मागधं हीनजातयः ॥९॥ संस्कृतेनैव कोप्यर्थः प्राकृतेनैव वापरः । शक्यो रचयितुङ्कश्चिदपभ्रंशेन जायते ॥१०॥ पैशाचाशौरसैन्यान्यो मागध्यान्यो विब

शब्दालंकारसंज्ञा इति ॥२॥ जातिरित्यादि । ते च प्रतिविशेषं वक्ष्यन्ते ॥३॥४॥ शब्दालङ्कारजातयः । शब्दालङ्कारसामान्यानि ॥५॥ स्वरूपस्थितौ रूपान्तरगवेषणमनुचितमतो जातेः प्राधान्यात्प्रथमं लक्षणमित्याह । तत्रेति । संस्कृतमिति भावप्रधानो निर्देशः । भारतीग्रहणं स्पष्टार्थम् । नन्ववश्यं शब्देन संस्कृताद्यन्यतमेन भवितव्यं तत्कोत्र कवेः शक्तिव्युत्पत्त्योरंशो येनालङ्कारता स्यादित्यत आह । सेति । औचित्यादेरेवालङ्कारोऽस्ति न संस्कृतादेरपि तथाभाव इति भावः ॥६॥ यद्यप्यर्थौचितीपूर्वं दर्शयितुमुचिता तथापि प्राधान्यमावेदयितुम्पृथक्कौचितीमाह । संस्कृतेनैवेति ॥ ७॥ विषयौचितीमाह । न म्लेच्छितव्यमित्यादि । म्लेच्छनमपशब्दः प्राकृतं संस्कृतभवम् । अभिजातः शुद्धान्वयः ॥८॥ अथ के संस्कृताद्युचितवक्तार इत्यत आह । देवाद्या इति । आदिग्रहणेन ऋषिभूमिपतिप्रभृतयः ॥९॥ वाच्यौचितीन्दर्शयति । संस्कृतेनैवेति । यथा हि । देवतास्तुत्यादौ संस्कृतम्प्रगल्भते न तथा प्राकृतादि । यथा च सूक्ष्मवस्तुस्वरूपो

ध्यते।द्वित्राभिः कोपिभाषाभिः सर्वाभिरपिकश्चन॥११॥
नात्यन्तंसंस्कृतेनैवनात्यन्तन्देशभाषया।कथाङ्गोष्ठी
षुकथयल्ँलोकेबहुमतोभवेत्॥१२॥शृण्वन्तिलटभंला
टाःप्राकृतंसंस्कृतन्द्विषः। अपभ्रंशेनतुष्यन्तिस्वेन
नान्येनगुर्जराः॥१३॥ब्रह्मन्विज्ञापयामित्वांस्वाधि
कारजिहासया। गौडस्त्यजतुवागाथामन्यैवास्तुस
रस्वती॥१४॥केभूवन्नाढ्यराजस्यराज्येप्राकृतभाषि
णः।कालेश्रीसाहासाङ्कस्यकेनसंस्कृतवादिनः॥१५॥
गिरःश्रव्यादिव्याःप्रकृतिमधुराःप्राकृतधुराःसुभव्यो
पभ्रंशोसरसवचनम्भूतवचनम्।विदग्धानामिष्टेमग
धमथुरावासभणितीर्निबद्धायस्तेषांसइहकविराजो
विजयते॥१६॥शुद्धासाधारणीमिश्रासङ्कीर्णानन्यगा

इङ्कनेप्राकृतस्यसौष्ठवन्नतथासंस्कृतादेरित्यादि॥१०॥द्वित्राभिःकोपि
काव्यसन्दर्भभेदस्यार्थः। सर्वाभिःकश्चनप्रकरणादेरर्थः॥११॥विषयौचि
त्यमेवक्वचिद्विशेषेकान्तिप्रकर्षमर्पयतीत्याह। नात्यन्तमिति॥समान
बुद्धिशीलवयसांविनोदार्थमासनबन्धोगोष्ठी॥१२॥देशौचितीमाह। शृ
ण्वन्तीति।लटभम्मनोज्ञम्। स्वेनगुर्जरजातीयेन॥१३॥ब्रह्मन्नित्यादिना
निन्दार्थानुवादेनगौडेषुप्राकृतानौचित्यंराजशेखरेणव्यञ्जितम्॥१४॥स
मयौचितीन्दर्शयति।केभूवन्निति। आढ्यराजःशालिवाहनःसाहसा
ङ्कोविक्रमादित्यः। ग्रन्थकृत्पूर्वजतयाश्रीपदम्॥१५॥ताश्चमाःपरस्परस
ङ्कीर्णाःषडेवसंस्कृतादिभाषाभवन्तीतिसामान्यविभागमेतद्विरचनप्रयो
जनञ्चोपसंहरति। गिरइति। दिव्याः संस्कृताभूतवचनंपैशाचम्।
मथुरावासिभणितिःशौरसेनी। तेषामिति। तच्चभूतवचनंसचाप
भ्रंशस्ताश्चदिव्याद्याइतिनपुंसकमनपुंसकेनेत्येकशेषःपाक्षिकंबहुवचन
म्। प्रतिभार्थप्रणयनाजीवद्वर्णनानिपुणोहिकविःसएवहिसर्वपर्यीन
ताहृगुक्तिसिद्धिसंपन्नःकविराजोऽतएवविजयतेसकललोकशास्त्रवचन

मिनी। अपभ्रष्टेतिसाचार्यैर्जातिः षोढा निगद्यते ॥ १७॥ तासूत्तमपात्रप्रयोज्या संस्कृतजातिः शुद्धा यथा। उन्नमितैकभ्रूलतमाननमस्याः पदानि रचयन्त्याः । कण्टकितेन प्रथयति मय्यनुरागं कपोलेन ॥१॥ मध्यमपात्रप्रयोज्या प्राकृतजातिः शुद्धा यथा। तुज्झ ण आणे हिअअं मम उण मअणो दिआ अ रत्तिं अ । णिक्किव तवेइ बलिअं तुह वुत्तमणोरहाइ अङ्गाइम्* ॥२॥ हीनपात्रप्रयोज्या मागधिका यथा। शदमाणुशमंशभालके कुम्भशह

स्रिर्मातृभ्यः प्रकर्षेणावर्त्तते इति ॥ १६ ॥ संस्कृतादिषु यथायोगं शुद्धादिभेदेन जातिः षोढा भिद्यत इत्याह । शुद्धा साधारणीति । इह भाषारूपविषयभेदेन भिन्नाः संस्कारा यानधिकृत्य पाणिनिवररुचिप्रभृतीनामनुशासनानि व्यवतिष्ठन्ते । तद्यत्रैक एव संस्कारः प्रत्यभिज्ञायते सा शुद्धा । संस्कारान्तराग्रहणात् । यत्र तुल्यगुणसम्भेदेन नानासंस्कारसम्पातः क्षीरनीरवत्सा साधारणी । रूपसाधारण्या नरसिंहवद्भाषाभेदव्यवस्थितभागद्वयात्मिका मिश्रा । रूपमिश्रणात् । तिलतण्डुलन्यायेन सङ्कीर्णा विजातीयवस्त्वन्तरव्यतिरेक एव लोके सङ्कीर्णव्यवहारात् । या पुनः प्रकृतिभावेनापि भाषान्तरसम्पर्कं न सहते सा नान्यगामिनी । संस्कारसंभेदेन वा प्रकृतिभावेन वा नान्यं गच्छतियतोपभ्रंशरूपाऽपभ्रष्टा ॥१७॥ तासूत्तमेति । पात्रलक्षणमुत्तमादिभेदश्च पञ्चमे वक्ष्यते। उन्नमितैकेति । पदानि प्रकृतानङ्कलेखोचितानि निर्व्याजप्रेमगर्भाणि । अत एवावापोद्धापप्रतिसन्धाननिमग्नमानसायाश्चिन्तानुभावरूपं भ्रूलताविरेचितमित्यासीत् । हस्ततलनिहितैककपोलायास्तादृक्पुलकितैककपोलदर्शनादतिमात्रात्मा शृङ्गारः सुप्रबुद्ध इव लक्ष्यते नायकस्यापीति मिथोऽनुबन्धलक्षणाऽपूर्वानुरागकक्षामधिरूढा रतिरेवकाव्यसर्वस्वायते । अत्र वक्तृविषयत्वाद्रस्य भाषान्तरसाधारण्येऽपि भूयसामुदाहरणत्वमेवमन्यत्रापि ॥१॥ तुज्झेति । बलिअम्बलवत्कृतमभिमुखम् ॥ २ ॥ शदमाणुशेति । शतमानुषमांसभारः कुम्भसहस्रं वसाभिः सञ्चिता । अनिशं च पिबा

* तव न जाने हृदयं मम पुनर्मदनो दिवा च रात्रौ च ॥ निष्कृप ! तापयति बलवत् त्वयि वृत्तमनोरथान्यङ्गानि ॥ १

श्शवशाहिशडिचदे। अणिशडचपिवामिशोणिहेव लिशशदेशमलेहुवीअदि॥३॥ नात्युत्तमपात्रप्रयोज्या पैशाचीयथा।पणमलपणअपकुप्पितगोलिचलनग्ग लग्गपलिबिम्बम्। तससुणहतप्पणेसंएआतसतनु घलन्तुद्धम्॥४॥ नातिमध्यमपात्रप्रयोज्याशौरसेनी यथा। तुंसिमएच्चूअंकुरदिण्णोकामस्सगहिअघणु अस्स। जुवइमणमोहणसहोपञ्चम्भहिवोसरोहो हि*॥५॥ नातिहीनपात्रप्रयोज्योपभ्रंशःशुद्धोयथा। ल इवप्पुलपिउदुद्धलाकडुअंह्माणहुंछासि। पुत्तहमत्थे हत्थुइदहिजम्मेविअआजाविअआसि। प्रायिक

भिशोणातंवर्षशतंसमरोभविष्यति। अत्रमांसादिलाभहेतुतयासमरा शंसनाद्बीभत्समुग्सुद्रयद्धीनपात्रतान्द्रढयति ॥ ३ ॥ नात्युत्तमेति। उत्तमादपकृष्टस्मध्यमादुत्कृष्टान्नात्युत्तमम्। प्रणमत प्रणयप्रकुपित गौरीचरणाग्रलग्नप्रतिबिम्बम्। दशसुनखदर्पणेष्वेकादशतनुधरंरुद्रम्। एवन्नामदेवीकोपेभगवतः प्रणयकातरता येनयुगपद्दिवसर्वाभिरपिमू र्त्तिभिःप्रणमतीतिप्रतीयमानोत्प्रेक्षा॥४॥ नातिमध्येति। हीनादुत्कृ ष्टस्मध्यमादपकृष्टान्नातिमध्यमम्। तुंसीति। कामस्यकामायेत्यर्थः। चतुर्थ्याःसंबन्धसामान्यविवक्षायांषष्ठीतिसूत्रात्षष्ठी॥५॥ नातिहीने ति। हीनात्किञ्चिदुत्कृष्टस्मध्यमादपकृष्टान्नातिहीनम्। लइवप्पुलेति। लइगृहाण। वप्पुलेत्यनुकम्पासम्बोधने।पिवदुग्धम्।कुतोस्माकंछासि पदाभिधेयन्तक्रम्। पुत्तकुलस्थेइतिशपथःपुत्रस्यमस्तकेनाहंशपेयदि तक्रस्यव्यापकन्दधिजन्मन्यपिजातमासीदितिव्यापकानुपलब्धिःप्रयु क्ता। ननुप्राकृतादिषूत्तमादिपात्रव्यतिकरदर्शनात्कथमेषाव्यवस्थाघ टतइत्यतआह।प्रायिकमिति। यत्रप्रकृतनिर्वहणोचितविशेषाभिसन्धा नेनकविरन्यथाप्रवर्त्तते।यथामालत्यांसंस्कृतमाश्रित्य।एषोस्मिभोःकार्य वशात्प्रयोगवशाच्चप्राकृतभाषीसंवृत्तइत्यादि,यत्रवाकवेर्व्युत्पत्तिकृतो भाषाविपर्यासःशक्त्यातिरस्क्रियतेयथामृच्छकटिकेविटस्यमध्यमपात्र

* स्मरमि मयाचताडर दत्तः कामायगृहीतधनुषे॥ युवतिज

ण्चैतत् । तेनकवेरभिप्रायशक्त्यादिभ्यःसर्वाअपिस
र्वप्रयोज्याभवन्ति । ताइमाःशुद्धाःषडेव ॥६॥ साधा
रण्यादयः पुनरनन्तास्तासुमध्यमपात्रभूमिकास्थोत्त
मपात्रप्रयोज्यासंस्कृतप्राकृतयोः साधारणीयथा ।
सरलेसाहसिरागंपरिहररम्भोरुमुञ्चसंरम्भम् । वि
रसंविरहायासंसोढुंतवचित्तमसहम्मे ॥७॥ नात्युत्तम
भूमिकास्थोत्तमपात्रप्रयोज्यासंस्कृतपैशाचयोस्साधा
रणीयथा । चम्पककलिकाकोमलकान्तिकलापाथ
दीपिकानङ्गी । इच्छतिगजपतिगमनाचपलायतलो
चनालपितुम् । एवंसंस्कृतापभ्रंशादिसाधारण्यःप्रा
स्यापिसंस्कृतोक्तिः । यत्रवाप्रबन्धौचितीपरवशाःसंस्कृतादिजातयोवि

---

पर्यस्यन्तेयथासर्गबन्धादौमध्यमादेरपिसंस्कृतमेवखण्डकथापरकथादौ
उत्तमादेरपिप्राकृतमेव,,बृहत्कथादौपैशाचमेव,,वस्तुबन्धादावपभ्रंश
एवेति।तत्रसन्धिसन्ध्यङ्गघटनासौष्ठवेनरसःपुष्यतीतिभरतमुनिप्रभृती
नामतिप्रकाशएवपन्थाः॥६॥साधारण्येति । संस्कृतस्यप्राकृतादिसाधा
रण्येपञ्चप्रकाराः प्राकृतस्यशौरसेन्यादिसाधारण्येचत्वारःशौरसेन्याः
पैशाच्यादिसाधारण्येत्रयःपैशाच्यामागध्यादिसाधारण्येद्वौ । मागध्या
अपभ्रंशसाधारण्येएकइति।द्विविकल्पेपञ्चदशप्रभेदास्त्रिविकल्पेविं
शतिश्चतुर्विकल्पेपञ्चदश पञ्चविकल्पेषट् षड्विकल्पेएकइतिसर्वेमि
लनेसप्तपञ्चाशत्प्रकारासाधारणी । एवम्मिश्रादावपिलोष्टप्रस्तावक्रमे
णबहवोभेदाइतितावदुदाहरणेग्रन्थगौरवंस्यादितिदिङ्मात्रमुदाहर
ति । तास्विति । संभिन्नसंस्कारा भाषाप्रयोगेहिप्रयोक्तृप्रकृतिसम्भेदे
भवति । नचप्रकृतिसम्भेदस्तात्त्विकःस्वभावसङ्करप्रसङ्गादतउक्तम्मध्य
मपात्रभूमिकास्थेति । भूमिकावर्णिका । मध्यमपात्रप्रकृत्युचितोरा
गाद्यभिनयस्तत्रतिष्ठति तत्परिग्रहेण चित्रतुरगवत्सामाजिकानां स
म्यङ्मिथ्यासंशयसादृश्यप्रतीतिविलक्षणप्रतिपत्तिपदवीमवतरतीति
मध्यमपात्रभूमिकास्थमुपलक्षणञ्चेदमुत्तमभूमिकास्थमध्यमप्रयोज्यापी

कुतम्भापादिनाधारण्यश्चद्रष्टव्याः॥८॥ वक्तृविषयौचि
त्यादिप्रयोज्यामिश्रायथा। जयतिजनताभिवाञ्छि
तफलप्रदःकल्पपादपोगिरिशः। जअइपअतमालिज्ज
न्तीगिरितणआपणअकप्पलआ*। एवम्भाषान्तरा
णामपिमिश्रीभावोऽवगन्तव्यः॥९॥ दुर्विदग्धादिपा
त्रप्रयोज्यासङ्कीर्णायथा॥ अकटगुमटीचन्द्रज्योत्स्ना
कलङ्कितकोइलोलवइअमुहुर्याम्योवायुर्निवारअत्रा
इदा। अविसखिअलारक्ताशोकस्तवापिमनोमुदेन
कजनकजम्मानेनाप्रियरुप्रतिजाहुदा। सेयंसंस्कृ
तमाहाराष्ट्रापभ्रंशयोस्तिलतण्डुलवत्सङ्कीर्णाजातिः
। एवंप्राकृतापभ्रंशसंकरोऽपिद्रष्टव्यः॥१०॥ क्रीडागो

---

यमेवएवमुत्तरत्र॥७॥ तवविरहाय।संसोढुममचित्तमसहमितियो
जना। अनङ्गस्येयमानङ्गी॥८॥वक्तृविषयेति। यदोत्तमादिपुनानावक्तृ
भिरेकाकाव्यसमस्याक्रियते। भिन्नभाषोचितवर्णनीयविषयंवाकाव्यमे
कमुपक्रम्यते।यदावाशक्तिनिरूपणायकवेरेवनानाभाषामयङ्काव्यमा
रब्धंस्यात्तदाकथन्नालङ्कारपदवीमध्यास्तेतत्राह। मिश्रेति। तमालि
अन्तीतमालीयमाना॥९॥ दुर्विदग्धादीति। नागरकभावमवाप्तस्तद्भू
मिकामवलम्बमानोदुर्विदग्धः। आदिपदात्पूर्वोक्ताःसमस्यादयः। अ
कटमाश्चर्यम्। गुमटीमनोज्ञा। आस्फालितखड्गस्येवस्फुरणोलवइइ
तिमहाराष्ट्रदेशी। तथाचप्रयोगः। लवइअविजृम्भणोहरीत्याख
ध्याः। अन्येतुलपतीत्यर्थमाहुरेवञ्चकलशब्दःपुष्यतीति। याम्योदक्षि
णोनिवाअरनिर्बन्धकोवारकशून्योवाइदावारकइति। अलात्रागतः।
यदिहमानोनक्रियेतज्योत्स्नादयोमनोमुदमेवाधास्यन्तीतिप्ररोचना।
यदातुमनोनुदइतिपाठोऽपिशब्देननायकसाधारणमुत्कण्ठाकारित्वमु
क्तञ्चन्द्रज्योत्स्नादीनामिति। अतोनकजनकजन्मार्थोनार्थईर्ष्यारोष
लक्षणेनप्रतिकूलभावावलम्बिनामानेनतस्मात्प्रियमेवप्रतिजाहुदाया

* जयति च तमालीयमाना गिरितनया प्रणयकल्पलता॥

ष्ठीविनोदाद्यर्थानन्यगामिन्यसाधारणी च यथा। भीष्मप्रोक्तानि वाक्यानि विद्वद्वक्त्रेषु शेरते। गोसे ति विञ्छिरिञ्छोली तल्लतूहे विवल्लिदा। अत्र पूर्वार्द्धपदानि संस्कृत एव उत्तरार्द्धपदानि प्राकृत एव सेयमसाधारण्यानन्यगामिनी जातिरुच्यते। भाषान्तराणाम्पुनरसाधारण्यन्नास्ति॥११॥ अपभ्रष्टा यथा। मुग्धा कि ग्रहण कुगृह्ण तुन्धरि मुद्दा निजहस्ति। निश्च उ सुन्दरि तुहमु परि मम सुरतस्पृह मस्ति। सेयमपशब्दवत्प्रयोगतोपभ्रष्टा

---

मः। यद्दा मनन्ति स्वयं वा तत्र गमनमिति॥१०॥ क्रीडेति। काव्यसमस्याक्रीडा उक्तपूर्वा गोष्ठी तत्र विनोदो मनोनुकूलेन समयातिवाहनम्। आदिपदम्पूर्ववत्। ननु मा भूत्प्रकृतिभावेन भाषान्तरसम्भेदः संस्कारसंपातेन तु भविष्यति तथा च कथं साधारणीतो भिद्यत इत्यत आह। असाधारणी चेति। गोसे प्रभाते ति विञ्छिरिञ्छोली कमलरजःपङ्क्तिस्तल्लमल्पसरस्तूहं तीर्थं विवल्लिदा प्रसारिता। नात्र पूर्वोत्तरार्द्धयोरैकमत्यमुदाहरणत्वात्। आराध्यास्तु यथा सरस्तीरे कमलरजःपङ्क्तिः प्रसृता शोभते तथा विद्वद्वक्त्रेषु भीष्मवाक्यानीत्युपमाकल्पनया कथञ्चिदेकवाक्यतामाहुः। अत्र पूर्वार्द्धपदानीति। न भीष्मादयो नभिधानादिति भाषान्तरस्यानिभावस्य प्रतिषेधात्। एवं वाचस्पतिविशिष्टरसवसप्रचेतसपोलादयो द्रष्टव्याः। प्राकृतएवेति। महाराष्ट्रदेशीयत्वाद्देशीपदानाञ्चरस्यानिभावासम्भवात्। भाषान्तराणाम्पुनरिति। सिद्धिर्महाराष्ट्रीतः, सिद्धिः शौरसेनीत, इत्युपक्रम्यानुशासनात्तद्भवरूपतैव स्फुटा। तत्समानान्तु साधारण्यमेवेति॥११॥ मुग्धे ग्रहणाकुरतमूल्यवन्यकं गृहाण त्वं धारय मुद्रामङ्गुलीयकन्निजहस्ते। निश्चयः सुन्दरि तवोपरि मम सुरतस्पृहास्ति,, इत्यत्र तवोपरि सुरतस्पृहमस्तीत्यादिकमपशब्दबहुलत्वेनापभ्रष्टा स्पष्टैव। सा तु कथमलङ्कार इत्यत आह। सेयमिति। श्रोत्रियश्छान्दस आद्यपदेन बालादयः सर्व एव हि लौकिकः पदार्थोभिनयकक्षामधिरूढः परित्यज्य ग्राम्यमभिमुखीभूतो विभावादिषु कथन्नालङ्कारस्तदिदमुक्तं प्रयोगत इति। न

प्यविद्वद्भिःश्रोत्रियाद्यैःप्रयुज्यतेइत्यपभ्रष्टाजातिः ।
अस्याश्चानुकरणेसाधुत्वमिष्यते ॥१२॥ १ ॥ पद्यङ्गद्य
ञ्चमिश्रंचकाव्येयत्सागतिःस्मृता । अर्थौचित्यादि
भिःसापिवागलङ्कारइष्यते ॥१॥ कश्चिद्गद्येनपद्येनक
श्चिन्मिश्रेणशक्यते । कवितुङ्कश्चनद्वाभ्याङ्काव्येर्थःक
श्चनत्रिभिः ॥ २ ॥ यादृग्गद्यविधौबाणःपद्यबन्धेन
तादृशः । गत्यांगत्यामियन्देवविचित्राहिसरस्व

---

चापशब्दानान्दोषत्वमेवेतिवाच्यम्। अनुकरणेतुसर्वेषामितिदोषसामा
न्यावलम्बिनागुणीभावेनास्यविषयीकृतत्वादिति ॥१२॥ नानाविच्छिन्न
जातिःकाव्यशरीरेनिविशतइतितदवच्छेदरूपाङ्गतिमनन्तरंलक्षयति।
पद्यमित्यादि । पठितेःपदात्पदान्तरसञ्चारोगतिःसाकेनचिदौचित्यो
पनिपातिनासन्दर्भपरिमाणेननियम्यते । ततस्तदप्युपचारेणगतिः ।
पठितिपरिमाणञ्चकाव्यंसमाश्रयतइतितदपिगतिस्तच्चपद्यादिभेदेन
त्रिविधमिति संक्षेपः । अतएवगद्यबन्धेतुकैश्चिद्वृत्तमाश्रितंवृत्तंवर्त्तन
मियत्तेतियावदिति । सर्वनामशब्दाहिकदाचिदुद्देश्यस्यलिङ्गमाश्रय
न्तेकदाचित्प्रतिनिर्द्देश्यस्येतिकाव्येयत्सागतिरित्युक्तम् । तत्रपद्यञ्च
तुष्पदीतिनलक्षणमुल्लालमात्रादौद्विपदपञ्चपदादिशरीरेतदभावात्।
अपादःपदसन्तानोगद्यमित्यपिन। अपादत्वंह्यप्रत्यभिज्ञायमानवृत्त
भागत्वंविवक्षितःचतुष्पदीव्यतिरिक्तत्वंवा। आद्येवृत्तगन्धिपद्यन्नस्या
त्। द्वितीयेत्वतिप्रसङ्गः।तस्माच्छन्दोनियमवतीकाव्यमतथाभूतातुग
द्यमितिविभागः । गद्यपद्यात्मकंवाक्यम्मिश्रम् । तदस्यागतेरलङ्का
रत्वमुपपादयति । अर्थौचित्यादिरिति ॥१॥ तत्रार्थौचितीमाह । क
श्चित्पद्येनेति । यथाह्यटवीवर्णनादौगद्यम्प्रगल्भतेतथानपद्यंयथाच
काव्यशास्त्रतानिर्वहणोचितेर्थेपद्यमुत्सहतेनतथागद्यमित्यादि । ए
वङ्कथाख्यायिकादौगद्यमेवचम्पूप्रभृतौमिश्रमेवेत्यादिपदोपात्तवन्यौ
चितीद्रष्टव्या ॥२॥ आस्तान्तावदर्थाद्यौचित्यगवेषणांस्वरूपेणैवपद्यादि
कम्परिस्फुरत्कविप्रतिभाविशेषावेदनेनसहृदयावर्जकमवसीयते । क

ती ॥३॥ यथामतियथाशक्ति यथौचित्यंयथारुचि ।
कवेःपात्रस्यचैतस्याःप्रयोगउपपद्यते ॥४॥ द्रुताविलम्बितामध्यासाथद्रुतविलम्बिता । द्रुतमध्याच
विज्ञेयातथामध्याविलम्बिता ॥५ ॥ सालघूनांगुरूणाञ्चबाहुल्यात्लपत्वमिश्रणैः । पद्येगद्येचमिश्रेच
षट्प्रकारोपजायते ॥ ६ ॥ तत्रवृत्तञ्चजातिञ्चपद्यमाहुरथोपृथक् । समञ्चार्द्धसमञ्चैतद्विषमञ्चप्रचक्षते॥७॥गद्यमुत्कलिकाप्रायम्पद्यगन्धीतिचद्विधा॥
द्विधैवगद्यपद्यादिभेदान्मिश्रमपीष्यते॥८॥ललितान्वि

---

यमन्यथाक्वचिदेवकस्यचित्सौष्ठवमित्याह । यादृगिति । गत्याकृत्यामिति । पद्येगद्येमिश्रेचेत्यर्थः । विचित्राअव्यवस्थितसिद्धिका॥३॥ प्रयोगव्यवस्थामुपपादयति । यथामतीति । मतिर्व्युत्पत्तिर्युक्तायुक्तविवेकइतियावत् । शक्तिःकवित्वबीजभूतःप्राक्तनःसंस्कार,,औचित्यन्दर्शितमेव। रुचिर्मनोनुकूलताप्रतिसन्धानम्।कवेःपात्रस्येति । यथायोगम् । तथाहिशक्तिव्युत्पत्तीकवेरेव । औचित्यम्पात्रस्यैवरुचिरुभयोरपीति ॥४॥ सचायंसन्दर्भावच्छेदोगुरुलघुसन्निवेशेनैवशोभतइतितमाश्रित्यविभागमाह।द्रुतेति।आद्यास्तिस्रःशुद्धाआसामेवमिथोव्यतिकरेणोत्तरास्तिस्रःसङ्कीर्णाः ॥५॥ कथमेषाव्यवस्थेत्यतआह।सालघूनांगुरूणामिति । बाहुल्यमल्पत्वम्मिश्रणञ्चतुल्यवत्प्रतिभानम् । नगद्यादिकमेवगतिःकिन्तुतदाधाराःपठितिसञ्चारइतिव्यनक्ति। पद्येगद्ये चमिश्रेचेति॥६॥वर्णनियतञ्छन्दोवृत्तम्।मात्रानियतञ्जातिः।समप्रस्तावंसमम्। प्रथमतृतीययोर्द्वितीयचतुर्थयोश्चतुल्यप्रस्तावमर्द्धसमम् । उभयबहिरर्द्धविषमम् ॥७॥उत्कलिकाकल्लोलस्तत्प्रायमुच्चावचमिवप्रतिभासमानमित्यर्थः । यथासलीलकरकमलतालिकातरलवलयावलीकममिति।
वृत्तगन्धिप्रतिभातवृत्तैकदेशम् । तदेतदल्पाख्यायामुत्पन्नेनसमासान्तेनव्यञ्जितन्तदयमर्थःसामान्यतःपद्यादिभेदेनगतिस्त्रिधा । तत्रापिजात्यादिभेदेनषट्प्रकारास्तेपिद्रुतादिभेदेनषट्त्रिंशदिति ॥८॥ ननुललि

धुरश्चूर्णमाविद्धञ्चेतियोपरः ॥ विशेषः सतु गद्यस्य रीतिवृत्त्योर्भविष्यति। तत्र पद्यभेदेषु समवृत्ते द्रुतागतिर्यथा। आर्यिविजहीहि दृढोपगूहनन्त्यज नवसङ्गमभीरु वल्लभम्। अरुणकरोद्गम एष वर्त्तते वरतनु सम्प्रवदन्ति कुक्कुटाः। सेयं समवृत्ते लघुसंयुक्ताक्षरभूयस्त्वाद्द्रुतागतिः॥ १ ॥ समवृत्ते विलम्बिता यथा। प्रणम्य हेतुमीश्वरम्मुनिङ्कणादमन्वतः पदार्थधर्मसङ्ग्रहः प्रचक्षते महोदयः ॥ सेयं स्थाने स्थाने गुर्वक्षरयोगाद्विलम्बि

ताद्यो गद्यभेदाः कैश्चिदलङ्कारकारैः परिसंख्यातास्ते कस्मान्नोच्यन्त इत्यत आह। ललितमित्यादि। सुकुमारसन्दर्भं ललितम्। यथा कमलिनीवन सञ्चरणव्यतिकरलग्ननलिननालकण्टकैर्वनक्वचिन्निर्भरम्पदमादधातीति। प्रस्फुटसन्दर्भं निष्ठुरम्। यथा उत्स्मितकुटिलकुन्तलकलापः श्मशानवाटमवतरतीति। अनुल्लिखितसमासं चूर्णं यथा। अभ्यासो हि कर्मणां कौशलमादधाति। नखलु सन्निपातमात्रेणोदबिन्दुरपि ग्रावणि निम्नतामादधातीति। उत्कटसमासमाविद्धम्। यथा। कुलिशशिखरखरतरखरप्रचयप्रचण्डचपेटपाटितमत्तमातङ्गमदच्छटाच्छुरितचारुकेसरभारभासुरमुखे केसरिणीति। रीतिवृत्त्योरिति विषयसप्तमी। तथा। ललितं कैशिक्यादौ „ निष्ठुरमारभट्यादौ „ चूर्णं वैदर्भ्यादौ „ आविद्धं गौडीयाप्रभृतौ „ यथायथमन्तर्भवतीति नोक्तभेदाः परिसंख्याता इत्यर्थः॥ २॥ उक्तप्रकारेषु किञ्चिदुदाहरति। तत्रेति। नवसङ्गमभीर्विति। सम्बोधनम्। भीरुशब्दादूङ् तस्मात्सम्बोधन ह्रस्वे रूपम्। गर्भगृहस्थानालोकयति चेत्तदाह। सम्प्रवदन्तीति। अत्र प्रतिपादमष्टौ लघवश्चत्वारो गुरव इति लघुबाहुल्ये संयोगाक्षराभावे चताललयवदतिव्यक्त एव द्रुतभावः॥ १॥ प्रणम्येति। अत्र यद्यपि पदचतुष्टये गुरुलघूनां समसंख्यत्वमेव तथापि संयोगाक्षरैरन्तरान्तरा पठिति दीर्घाभावो न्येषादारोह प्राधान्ये विलम्बिता। एवं व्युत्क्रमेणासमानि कायामपि विलम्बितैव। यथा मीनजालघटितानि सूर्यरश्मिबोधितानि

तागतिः ॥ २ ॥ तत्रैव मध्या यथा । आसीद्दैत्यो हयग्रीवः सुहृद्वेश्मसु यस्य ताः । वदन्ति स्म बलं बाह्वोः सितच्छत्रस्मिताः श्रियः । सेयन्नातिलघ्वक्षरप्रायत्वान्मध्यागतिः ॥ ३ ॥ द्रुतविलम्बिता यथा । अवतु वः सवितुस्तुरगावलीस्फुरितमध्यगतारुणनायका । समविलङ्घिततुङ्गपयोधरा मरकतैकलतेव नभःश्रियः । सेयन्द्रुतायाः विलम्बितायाश्च गतेरन्तरानुप्रवेशाद्द्रुतविलम्बितागतिः ॥ ४ ॥ द्रुतमध्या यथा । अपि तुरगसमीपादुत्पतन्तम्मयूरन्न स रुचिरकलापम्बाणलक्षीचकार । सपदि गतमनस्कश्चित्रमाल्यानुकीर्णे रतिविगलितबन्धे केशपाशे प्रियायाः । सेयन्द्रुतायामध्यायाश्च गतेरन्तरानुप्रवेशाद्द्रुतमध्यागतिः ॥ ५ ॥ मध्यविलम्बिता यथा । दुन्दुभयो दिवि दध्वनुरुच्चैरुच्चकराः कपयश्च ववल्गुः । सिद्धनि

मत्तषट्पदाकुलानि पश्य भीरु पङ्कजानि । तदिदमाह । सेयमिति । तेन विभागसूत्रे गुरुलघुमिश्रणमेवं रूपमपि बोद्धव्यमिति ॥२॥ आसीदिति । अत्र यद्यपि गुरवो बहवस्तथापि न द्रुतिर्न विलम्बनम्पठितेरित्यनुभवसाक्षिकोऽयमर्थस्तदेतदाह । नातिलघ्वक्षरेति ॥३॥ अवतु व इति । अरुणो गरुडाग्रजः शोणश्च नायको नेता हारमध्यमणिश्च पयोधरा मेघाः स्तनौ च तदेतस्मिन्द्रुतविलम्बिताख्ये वृत्ते समाख्यैव रूपम्बोधयतीति ॥४॥ अपि तुरगेति । उत्पन्नाविर्भवद्बर्हगतोज्ज्वलविचित्रकोमलमयूरस्तत्कालमथ्याजप्रेमनिर्यन्त्रणकचग्रहविलुलितप्रियाकेशपाशवासनाविकाशहेतुः सर्वस्वायमानः कथम्बाणलक्ष्यतां सहतइति च्छिन्नप्रत्ययेन व्यज्यतइति । अत्र पादचतुष्केऽपि प्रथमन्द्रुता पश्चान्मध्या च भागशः प्रत्यभिज्ञायतइत्याह । सेयमिति ॥५॥ दुन्दुभयइति । अत्रापि प्रतिपादम्पूर्वम्मध्या ततो विलम्बिता च खण्डशः प्रतिभासतइति दर्शयति । सेयमिति ।

कायकराब्जविमुक्तमाल्यमथाङ्गदमूर्ध्निपपात । से यम्मध्यायाः विलम्बितायाश्चगतेरन्तरानुप्रवेशान्म ध्यविलम्बितागतिः॥६॥एवमर्धसमविषमयोर्मात्रा छन्दस्सुगद्यमिश्रयोश्चलघुगुरून्मिश्रवर्णविन्यासवि शेषभूयस्त्वेनद्रुतादिगतिवन्तोगवेषणीयाः। तत्रवि षमवृत्तच्छन्दसिद्रुतायथा । अथवासवस्यवचनेन रुचिरवदनास्त्रिलोचनम् । क्लान्तिरहितमभिराध यितुंविधिवत्तपांसिविदधेधनञ्जयः ॥ ७ ॥ अर्द्धस मच्छन्दसि विलम्बिता यथा । विहिताम्प्रियया मनःप्रियामथनिश्चित्यगिरङ्गरीयसीम् । उपपत्तिम दूर्जिताश्रयन्नृपमूचेवचनंवृकोदरः॥८॥ उत्कलिका प्रायगद्येद्रुतमध्याचयथा। व्यपगतघनपटलममल जलनिधिसदृशमम्बरतलंविलोक्यते । अञ्जनचूर्णपु ञ्जश्यामंशार्वरन्तमस्त्यायते ॥ ९ ॥ पद्मगन्धिगद्ये वृत्तगन्धौमध्याजातिगन्धौद्रुतमध्यायथा॥पातालता लुतलवासिषुदानवेषुहर इवजितमन्मथोगुहइवाप्र तिहतशक्तिरिति॥१०॥ गद्यादौमिश्रेगद्यपद्ययोर्द्रुत

---

इमामेव व्यवस्थामर्द्धसमधसादिष्वप्यतिदिश्यतइतिदिङ्मात्रमुदाहरति एवमिति ॥६॥७॥८॥ उत्कलिकाप्रायेति ।उच्चावचभावेनप्रतिभासमानमु त्कलिका।यथा।सलीलकरकमलतालिकातरलयावलीकमिति। तथैवत दपिप्रकृतोदाहरणमितिव्यक्तम् । पातालेत्यादौवसन्ततिलकाभागइव हरइवेत्यादावार्याभागइवप्रतिभातीति॥९॥वृत्तगन्धौजातिगन्धाविति। [तृतीयादिषुभाषितपुंस्कम्पुंवद्गालवस्य] इतिपुंवद्भावेननुम्नभवति ॥१०॥हन्तेति । आश्चर्यस्तिमितस्यहन्तेत्येववागनुभावस्ततोभिमानो न्मेषेपुण्यवानस्मीतिअनन्तरंलोकोत्तरविभाववर्णनात्स्वरितस्यपदस्यमि

मध्यायथा । हन्तपुण्यवानस्मियदहमतर्कितोपमो दर्शनोल्लसितयानया । अविरलमिवदाम्ना पौण्डरीकेणनद्धःस्नापितइवचदुग्धस्रोतसानिर्भरेण । कवलितइवकृत्स्नश्चक्षुषास्फारितेन प्रसभममृतमेघेनैवसान्द्रेणसिक्तः ॥ ११ ॥ पद्यादौमिश्रद्रुतविलम्बितायथा । असौविद्याधारःशिशुरपिविनिर्गत्यभवनादिहायातः सम्प्रत्यविरलशरच्चन्द्रमधुरः । यदालोकस्थानेभवतिपुरमुन्मादतरलैः कटाक्षैर्नारीणांकुवलयितवातायनमिव । अत्रबालसुहृदामकरन्देनसहविद्यामान्वीक्षकीमधीतेसएषमाधवोनामेति ॥ १२ ॥ २ ॥ वैदर्भादिकृतःपन्थाःकाव्येमार्गइतिस्मृतः । रीङ्गताविति धातोःसाव्युत्पत्यारीतिरिष्यते ॥ १ ॥ वैदर्भीसाथपा

---

त्यादिगद्यापर्यवसानएवाविरलमित्यादिवृत्तमाविरासीदिति मध्येविच्छेदकारणानुपपत्तौ गद्यपद्याभ्यामेकवाक्यम् ॥ ११ ॥ असाविति । दूतीकल्पेकयाचित्प्रच्छन्नप्रार्थनीययाअस्मभोगसुलयेदित्याम्नातम् । तदिहोत्प्रेक्षामनोहरग्राम्यसालोकनमुक्तम् । तेनैकस्मिन्वर्णनीयवस्तुनिवृत्तप्रपञ्चेनोक्तेप्रकृतसङ्गतिमात्रङ्गद्येनकृतवतीतियुक्तेयमानुपूर्वीवाक्यैकवाक्यताचेति ॥ १२ ॥ वैदर्भादीति । गुणवत्पदरचनारीतिः । गुणाःश्लेषादयःकाव्याव्यभिचारिणोनव । तेषामन्योन्यमीलनक्रमतयापानकरसइवगुडमरिचादीनांषाडवइवमधुराम्लादीनांयत्सम्मूर्च्छनरूपावस्थान्तरगमनन्तत्संस्कारादेवहिलोकशास्त्रपदरचनातःकाव्यरूपारचना व्यावर्त्तते । अतएवमृग्यतेकविभिरासंसारमितिमार्गपदेनोच्यते । वैदर्भादयोविदर्भादिदेशप्रभवास्तैःकृतसुखहेवाकगोचरतयाप्रकटितोन तुतत्तद्देशैःकाव्यस्यकिञ्चिदुपक्रियते । पन्थाइति । प्रतिष्ठन्तेहिमहाकविपदवीलाभार्थिनइति । ईदृशमेवरीतिलक्षणमानन्दवर्द्धनादीनामपिमतमेतदुपलक्षणतयासूत्रंव्याख्यातम् । कथम्पुनरुक्तमुपमादेरी

ञ्चालीगौडीयावन्तिकातथा। लाटीयामागधीचेति षोढारीतिर्निगद्यते ॥ २ ॥ तत्रासमासानिःशेषश्लेषादिगुणगुम्फिता। विपञ्चीस्वरसौभाग्यावैदर्भीरीतिरिष्यते ॥ ३ ॥ समस्तपञ्चषपदामोजःकान्तिविवर्जिताम्। मधुरांसुकुमाराञ्चपाञ्चालीङ्कवयोविदुः ॥४॥ समस्तात्युद्भटपदामोजःकान्तिगुणैर्युताम्। गौडीयेतिविजानन्तिरीतिंरीतिविचक्षणाः॥५॥ अन्तरालेतुपाञ्चालीवैदर्भ्योर्यावतिष्ठते। सावन्ति

---

तिपदस्यव्युत्पत्तिमित्यतआह॥रीङ्गताविति।रियन्तेपरम्परयागच्छन्त्यनयेतिकरणसाधनोयंरीतिशब्दोमार्गपर्यायइत्यर्थः॥१॥ एवंसिद्धेसामान्यलक्षणेविभागमाह। वैदर्भीति॥२॥ वक्ष्यमाणरीत्यावैदर्भीप्राधान्यमभिप्रेत्याह। तत्रेति। असमासाअनुल्लिखितसमासाः। निःशेषश्लेषादीति। श्लेषादयोनवगुणास्तैर्गुम्फिता। मिथोमिलनेनसम्मूर्च्छितैरनुपलभ्यमानान्यतमसात्रकैरपिपरस्परविभक्तस्वरूपभावेनसहृदयहृदयसंवादगोचरैरारब्धा। एवंविपञ्चीस्वरसौभाग्या। विपञ्चीवाग्रूपासरस्वतीबिम्बप्रतिबिम्बभावेनद्विविधा। प्रतिबिम्बाधिष्ठानतयादारवीदियन्त्रमपिविपञ्चीत्युच्यतेतदीयाःस्वरास्तन्त्रीकण्ठोत्थिताःस्थानक्रमवैपरीत्यानुमेयशारीराःप्रतिबिम्बभावाःषड्जादयस्तेषुश्रुतिसम्मूर्च्छनरूपेष्वपिमिथोविभक्ताःश्रुतयःश्रोत्ररञ्जकस्वरावस्थामापन्नाःसमस्तगान्धर्वविल्लासादिकाःप्रकाशन्ते। अतएववीणैवप्रधानंसमस्तस्यस्वरजातस्यतत्रैवश्रुतिमण्डलोन्मेषादिति ॥३॥ यदातुपानकादिन्यायेनकश्चिदंशउद्रिक्तोभवतितदारीत्यन्तरमुत्तिष्ठतीत्याह।समस्तेति। ओजःकान्तिविवर्जिताम्। ओजःकान्त्योर्विशेषेणवर्जिताम्। न्यग्भूतौजःकान्तिगुणामितियावत्। यतस्तत्प्रतिद्वन्द्विनोर्माधुर्यसौकुमार्ययोस्तत्रोद्भवस्तदेतदाह। मधुरांसुकुमाराञ्चेति। अतएवौजःप्रकाशकःषडधिकेषुपदेषु समासोनक्रियते ॥४॥ समस्तेति। अत्युद्भटानिसोल्लेखसमासानियस्मादोजःकान्त्योरुद्भवेन्यग्भूतगुणसप्रकेयंरीतिः ॥५॥ अन्त

कासमस्तैःस्याद्द्वित्रैस्त्रिचतुरैःपदैः॥६॥समस्तरीतिर्व्यामिश्रालाटीयारीतिरुच्यते। पूर्वरीतेरनिर्वाहेखण्डरीतिस्तुमागधी॥७॥तासुवैदर्भीयथा। मनीषितास्सन्तिगृहेषुदेवतास्तपःक्कवत्सेक्कचतावकंवपुः। पदंसहेतभ्रमरस्यपेलवंशिरीषपुष्पन्नपुनःपतत्रिणः। सेयमसमस्तपदासमग्रश्लेषादिगुणवतीवैदर्भीरीतिः॥१॥ पाञ्चालीयथा। गात्राभिघातदलिताङ्गदजर्जराणाङ्गण्डस्थलीलुलितकुन्तलताडितानाम्। क्षोभस्फुटन्मुकुटकोटिविघट्टितानान्नादोभवत्कणभ्कणामुखरोमणीनाम्। सेयमोजःकान्त्यभावादाश्लिष्टश्लथपुराणच्छायामाधुर्यसौकुमार्यवतीसमस्तपञ्चषपदापाञ्चालीरीतिः॥२॥ गौडीयायथा। यस्यावस्क

रालइति। माधुर्यसौकुमार्ययोःकिञ्चिदुद्भवेननिमीलनाङ्गप्राधान्येनवाऽन्तरालकल्पना।तांव्यनक्ति। द्वित्रैरिति। द्वेत्रीणिवात्रीणिचत्वारिवेतिवार्थेबहुव्रीहिः॥६॥समस्तेति।यद्यप्युपक्रान्तरीत्यनिर्वाहोत्राप्यस्तितथापितिलतण्डुलवद्व्यावद्भिभक्तरीतिसंवलनस्यकविसंरम्भगोचरस्योत्तररीतेःपृथग्भावः। पूर्वरीतेरिति॥एकांरीतिमुपक्रम्ययदन्यया सन्दर्भनिर्वहणमसावन्यएवप्रकारः। नचानिर्वाहोदोषश्छायावैरूप्याभावात्। रीतिखण्डनेपिहिसन्दर्भसौभाग्यसम्पत्तिःशक्तिमेवाविष्करोति॥७॥मनीषिताइति।अत्रदीर्घसमासाभावेकथमोजइतिकस्यचित्कुदेश्यमपरीतिमत्प्रकरणएवेत्यपास्तम्।एतेनगुणनवकस्यसमकक्षतयासम्भेदोगणइति। असमस्तपदेत्यनुल्लेखसमासपदेत्यर्थः। समग्रानवगुणवतीतिनित्ययोगेमतुप्॥१॥ गात्राभिघातेति। अत्राद्यतृतीययोःषड्द्वितीयेचपञ्चपदानिसमस्तानि। ओजःकान्त्यभावादिति। ईषदर्थेनञ्। अतएवमाधुर्यसौकुमार्ययोरुन्मेषःश्लिष्टाप्राप्तायथासङ्ख्यमोजःकान्तिनिमीलनलब्धप्रादुर्भावाश्लथा। पुराणीचच्छायायस्येतिविग्र

न्दलीलाचलितबलपरस्पन्दखर्वीकृतोर्वीसंरम्भोत्तंसनायोन्नमितभरनमत्कन्धरासन्धिरासीत्। शेषो विस्फारफुल्लस्फुटपृथुलफणाफूत्कृताग्निस्फुलिङ्गस्फूर्जत्सन्दोहसन्देहितविकटशिखामण्डलीरत्नखण्डः । सेयमोजःकान्तिमती समस्तोद्भटभूरिपदा च गौडीया रीतिः ॥ ३ ॥ आवन्तिका यथा। एतानि निःसहतनोरसमञ्जसानि शून्यम्मनः पिशुनयन्ति पदानि तस्याः । एते च तीरतरवः कथयन्ति तापमालम्बितोज्झितपरिम्लापितैः प्रवालैः। सेयं समस्तद्वित्रिचतुष्पदा वैदर्भीपाञ्चाल्योरन्तरालवर्तिन्यावन्ती नाम रीतिः ॥ ४ ॥ लाटीया यथा । अयमुदयति मुद्राभञ्जनः पद्मिनीनामुदयगिरिवनालीबालमन्दारपुष्पम् ॥ विरहविधुरकोकद्वन्द्वबन्धुर्विभिन्दन्कुपितकपिकपोलक्रोडताम्रस्तमांसि। सेयं समस्तरीतिमिश्रा लाटीया नाम रीतिः ॥५॥ मागधी यथा करिकवलनशिष्टैः शाकशाखाग्रपत्रैररुणसरणयो मीसर्वतोभीषयन्ते। चलितशबरसेनादत्तगो

---

हः ॥२॥ अवस्कन्दो धाटकः । समस्तोद्भटभूतिपदेति । उद्भटता प्रौढिप्रकर्षः ॥३॥ एतानीति । निःसहतनोरसमञ्जसानि मार्गतरवइति द्वे द्वे पदे आलम्बितेइत्यादौ त्रीणिपदानि समस्तानि माधुर्यसौकुमार्ययोर्मनागुन्मेषः पाञ्चालीभागः । इतरेषां समकक्षता वैदर्भीभागः । अनयोः सम्भेदेनान्तरालकल्पनाव्यक्तैव ॥४॥ अयमिति । मुद्राभञ्जनइतिद्वाभ्यां समस्ताभ्यामावन्ती । उदयगिरीत्यादिना पञ्चकेन पाञ्चाली । प्रौढिप्रकर्षेण गौडीया । अयमुदयतीत्याद्यसमासेन वैदर्भीच प्रत्यभिज्ञायतइति पूर्वोक्तसमस्तरीतिसम्भेदइति ॥५॥ करिकवलनेति। अत्र पूर्वार्द्धे यथोक्तावन्तीमुपक्रम्य चरमार्द्धे गौडीयापरिग्रहादुपक्रान्तरीतेरनिर्वाहः ख

शृङ्गचण्डध्वनिचकितवराहव्याकुलाविन्ध्यपादाः।
सेयमारब्धरीतेरनिर्वाहात्खण्डरीतिर्मागधी ॥६॥३॥
याविकासेथविक्षेपेसङ्कोचेविस्तरेतथा। चेतसोवर्त्त
यित्रीस्यात्सावृत्तिस्सापिषड्विधा ॥१॥ कैशिक्यारभ

---

ण्डनं तथापिचनच्छायावैरूप्यमितिकविशक्तिव्यञ्जकत्वादलङ्कारभा
वइति। शाकोवृक्षविशेषः॥६॥ याविकाशइति। वृत्तिर्वर्त्तनंरसविषयो
व्यापारः काव्यस्य रसप्रवणत्वात्। सचव्यापारःसत्वाद्युद्रेकलक्षणोज
न्मान्तरानुभवभावितवासनासमुत्थः परिपूर्णोभविष्यद्रसास्वादसर्व
स्वायमानचित्तावस्थनिदानभूतोर्थगतः पञ्चमेभिध्यास्यते। शब्दगतः
पुनरत्रसङ्गतःसन्दर्भस्यरसप्रकाशकारणेषुप्रधानत्वात्। यदाह। क
विवागभिनेयश्चतदुपायोद्विधेष्यते। वस्तुशक्तिमहिम्नातुप्रथमोत्रवि
शिष्यते। वर्त्ततेनयाचितमितिकरणसाधनोयंवृत्तिशब्दइतिवर्तयित्री
त्यनेनप्रयोजकव्यापारप्रधानेनदर्शितम्। तत्रविषयवैचित्र्याद्विकाश
द्याश्चतस्रश्चित्तावस्थाविषयोहिदीप्तमसृणमध्यमभेदेनत्रिविधः। विभा
वाद्युपधानमहिम्नातन्मयीभवनयोग्यंहिचेतःकदाचिद्विकसति। स
त्वाविर्भावोविकासः। न्यग्भूतरजस्तमोगुणंहिचेतःसत्वोद्रेकप्रकाशा
नन्दमयसंविद्विश्रान्तिमासादयति। ततःसत्वभागप्रतिष्ठितःशृङ्गारस्त
दाभासोपितामेवभूमिकामालम्बते। अतएवशुक्तिरजतवद्भावोदये
पिदोषमहिम्नैवकाव्यमहिम्नातद्व्यञ्जनात्। तत्समानभूमिकयाहा
स्योरसः प्रादुर्भवतीत्यभिसन्धायाह"शृङ्गाराद्धिभवेद्धास्यमिति,,भरतमु
निः। तेनविकासभूमिकौशृङ्गारहास्यौ। विकासात्प्रच्युतमप्राप्तगुणा
न्तरप्रादुर्भावंविक्षिप्तमित्युच्यते। तत्रोचितविभावादिवैचित्र्यादा
विर्भवद्रजोगुणस्यचेतसोविक्षेपप्रच्युतिदशायांरौद्ररसोन्मेषः। अतए
वसमानभूमिकयारौद्राच्चकरुणोरसइत्याह। यदातुसत्वतमोनिमीलने
नकेवलरजःप्रतिष्ठञ्चेतस्तदाबहुमुखव्यापारोन्मेषाद्विस्तराख्यामवस्था
मासादयति। तद्भूमिकोवीररसस्तदवस्थामेवास्थायाऽद्भुतोपिप्रथत
इतिवीराच्चैवाद्भुतोत्पत्तिरित्युक्तंन्यग्भूतरजोगुणस्यप्रबुद्धतमसश्चेतसो

टीचैवसात्वतीभारतीतथा । मध्यमारभटीचैवतथा मध्यमकैशिकी ॥ २ ॥ सुकुमारार्थसन्दर्भाकैशिकीतासुकथ्यते। यातुप्रौढार्थसन्दर्भावृत्तिरारभटीतिसा॥३॥ कोमलप्रौढसन्दर्भाकोमलार्थाचभारती। प्रौढार्थाकोमलप्रौढसन्दर्भांसात्वतींविदुः ॥४॥ कोमलेप्रौढसन्दर्भात्वर्थेमध्यमकैशिकी । प्रौढार्थाकोमलेबन्धेमध्यमारभटीष्यते ॥५॥ तत्रकैशिकीयथा । शशिरुचिषु दलेषुनागवल्ल्याविचकिलदामनिचन्दनेचहृद्ये।कुवलयिनिपुराणसीधुपात्रेत रलदृशामपतन्दृशःप्रिये च। सेयमर्थस्यसन्दर्भस्यचसौकुमार्यात्कैशिकीनामवृत्तिः ॥१॥ आरभटीयथा । योयःशस्त्रम्बिभर्तिस्व

ऽवस्थाविशेषःससङ्कोचस्तमालम्ब्यबीभत्सःप्रादुरास्तेतदेकभूमिकश्चभयानकइतिबीभत्साच्चभयानकइत्याह । तेमीचत्वारश्चित्तावस्थाविशेषाः ॥१॥ कथमविशेषणादेवसन्दर्भाद्भवन्तीत्याशङ्क्यविभागेनोत्तरमाह । कैशिक्येति । शुद्धिसङ्कराभ्यांरीतिवदत्रापिषट्प्रकाराः ॥२॥ सुकुमारेति। चित्तद्रुतिकारित्वंसौकुमार्यंसुकुमारावर्थसदर्भौयस्यामितिविग्रहः एवम्प्रौढार्थसन्दर्भेत्यपि। चित्तदीप्तिविधायिताप्रौढिः । अर्थसौकुमार्यादिनाविशेष्यमाणसन्दर्भःसुकुमारत्वादिः शब्दालङ्कारतामप्रयोजयति। कोमलप्रौढोमध्यमःप्रकारान्तरविरहाच्चमध्यमभारत्यादयोनसम्भवन्ति ॥३॥४॥५॥ शशिरुचिष्विति । नियमितादिषुमुग्धाङ्गनासुम्बनरसोत्सुकानामतिमनोज्ञाधररागसमर्पकेषुनागलत।दलेषुततोमानपरिग्रहेवलितकादिषुम्बनविशेषार्थिनीनाङ्कचग्रहसौभाग्यसुन्दरेमल्लिकादाम्नितत:सर्वाङ्गीणाश्लेषसौभाग्यार्थंकचन्दनरसेऽनन्तरमीर्ष्यारोषवासनानिःशेषकेलियन्त्रणरतोत्कण्ठितानांसीधुपात्रे । ततःसर्वोपकरणजीवितसर्वस्वेप्रियतमेसमकालतयैवदृष्टयःपेतुरिति । कुवलयिनीतियुक्तःपाठः । कुवलयितेतिपाठेविशेषणाङ्गप्राधान्यविवक्षायांसमासेगुणीभावस्यानुचितत्वात् । सेयङ्कैशिकीमसृणेशृङ्गारादौविनियु

भुजगुरुमदः पाण्डवीनाञ्चमूनां योयः पाञ्चालगोत्रे शिशुरधिकवया गर्भशय्यां गतोवा । योयस्तत्कर्मसाक्षीचरतिमयिरणेयश्चयश्च प्रतीपः क्रोधान्धस्तस्यतस्यस्वयमिहजगतामन्तकस्यान्तकोहम् । सेयम्प्रौढसन्दर्भार्थाआरभटीवृत्तिः ॥२॥ भारतीयथा । उत्तिष्ठन्त्यारतान्तेभरमुरगपतौ पाणिनैकेनकृत्वाधृत्वाचान्येनवासोविलुलितकबरीभारमंसेवहन्त्याः । भूयस्तत्कालकान्तिद्विगुणितसुरतप्रीतिनाशौरिणावः शय्यामालिङ्ग्यनीतंवपुरलसलसद्बाहुलक्ष्म्याः पुनातु । सेयमतिसुकुमारार्थैनातिसुकुमारसन्दर्भाभारतीनामवृत्तिः ॥३॥ सात्वतीयथा । वन्द्यौद्वावपितावनार्यचरितप्राप्तप्रतापोदयौभीमोभीमपराक्रमः सचमुनिर्भास्वत्कुठारायुधः । एकेनामृतवद्विदार्यकरजैः पीतान्यसृञ्जिद्विषामन्येनापिहताहितास्त्रसरसिस्त्र तद्वत्क्रुधःशान्तये । सेयम्प्रौढार्थानातिप्रौढसन्दर्भासात्वतीनामवृत्तिः ॥ ४ ॥ मध्यमकैशिकीयथा । किन्द्वारिदैवहतकेसहकारकेणसंवर्द्धितेनविषपादपएषपा

व्यतइति ॥१॥ योयइति । ओजः प्रधानतयाप्रौढः सन्दर्भः । यस्मादियमारभटीदीप्तेरौद्रादौविनियुक्तातेनयुक्तंशब्दार्थयोः प्रौढत्वमिति ॥२॥ उत्तिष्ठन्त्याइति । सर्वाङ्गीणाश्लेषसमुत्सुकेप्रियतमेबहिर्व्यावर्त्तनमन्तरनुवर्त्तनञ्चमुग्धाङ्गनाजातिरितिन्यायेननीवीबन्धकेशपाशसंयमार्थिन्यानिर्भरकेलिखेदेनभुजलतालसंलसत्येवनतुव्यापारयितुमपिशक्यतेतितत्कालिकोतिपोषः ॥ अत्रसमसृणोपिरसेवृत्त्यौचित्येनसंदर्भस्यप्रौढिरुचितैव । दीर्घसमासोहिशृङ्गारादौनिषिद्धोनतुप्रौढिः । रेफहकारादिवर्णनिवेशात्सुकोमलतासन्दर्भस्येति । एवमुत्तरोदाहरणेष्वपिविशेषस्त्व

पः ॥ अस्मिन्मनागपिविकासविकारभाजिभीमाभवन्तिमदनज्वरसन्निपाताः । सेयंसुकुमारार्थप्रौढसन्दर्भामध्यमकैशिकीनामवृत्तिः ॥५॥ मध्यमारभटी यथा।त्वंनागराजबहुमस्यनितम्बभागंभोगेनगाढमुपवेष्टयमन्दराद्रेः। सोढाविषह्यवृषवाहनयोगलीलापर्यङ्कबन्धनविधेस्तवकोऽतिभारः । सेयम्प्रौढार्थसुकुमारसन्दर्भामध्यमारभटीनामवृत्तिः ॥६॥४॥ अन्योक्तीनामनुकृतिच्छायासापीहषड्विधा । लोकच्छेकार्भकोन्मत्तपोटमत्तोक्तिभेदतः ॥ १ ॥ तासुलोकोक्ति

यसूहनीयइति ॥३॥४॥५॥६॥ अन्योक्तीनामिति । लोकेबिम्बप्रतिबिम्बयोःप्रतिबिम्बञ्चमत्कारितयाप्रसिद्धमतएवअव्यात्प्रेत्य ज्यायइत्याह । शब्दालङ्कारकाण्डेवाक्यानुकरणमेवप्रतिबिम्बवाचिनाछायापदेनगुणवृत्तेनाख्यायते ॥ तदेतदनुकरणमनुकार्यभेदादेवषोढाव्यवतिष्ठतइत्याह । छेकेति । छेकादीनांलोकविशेषाणामेवशोभाकारित्वेनपृथगुपादानेऽर्थात्तदितरानेकविधित्रतत्तदनुकार्यपरोलोकशब्दः । छेकाविदग्धाः।पोटास्त्रीपुंसलक्षणा । सहजकेलिरितिप्रसिद्धापोटा । भुजिष्यादासीत्यन्ये । अत्रकेचिदन्यच्छायायोनिजमपिकाव्यंछायालङ्कारव्यवहारभूमिमाहुः । प्रकृतिपरिणामः,परपुरप्रवेशः, खण्डसंघात्य चूडिका,परिमल, इतिपञ्चयोनिजकाव्यभेदास्तत्रकिञ्चिद्विकृतार्थःप्रकृतिपरिणामः । यथा । घुअमेहंमहुअरानुव्वणसमअहियओणअविमुक्काओ । णहयाअवसाहाओ णअअव्वाणवयडिगआओदिसाओ* । यथा च । सिसिरपडिरोहमुक्कपरिहुत्तम्पअअवलिअक्कम् । इहरद्दअरयाअलिअंवित्थरदिदिसाहिङ्कहिअंवणहअलम्* । अत्राकाशादिशांविस्तारभणनमनाग्विकृतमुपलभ्यतइतिप्रकृतिपरिणामनामायंयोनिजकाव्यभेदः । भाषामात्रभिन्नःपरपुरप्रवेशोयथा । देवाधिपोवाभुजगाधिपोवाधराधिपोवायदिहैहयःस्याम् । सन्दर्शनन्तेगुणकीर्त्तनन्ते सेवाञ्जलिन्तेतदहंविदध्याम् । यथाच । सविमोअणज्जुणमित्तंअमहिन्दम

च्छायायथा । शापान्तोमेभुजगशयनादुत्थितेशार्ङ्ग
पाणौमास।नेतान्गमयचतुरोलोचनेमीलयित्वा। प
श्चादावांविरहगुणितन्तन्तमात्माभिलाषन्निर्वेक्ष्या
वःपरिणतशरच्चन्द्रिकासुक्षपासु। सेयंलोचनेमीलयि
त्वेतिलोकोक्तेरनुकृतिर्लोकोक्तिच्छाया ॥१॥ छेको
क्तिच्छायायथा। योहिदीर्घासिताक्षस्यविलासललि
तभ्रुणः । कान्तामुखस्यावशगस्तस्मैनृपशवेनमः ।

---

वामुहअअप्पाणम् । सेडज्जलदंसणगुणकहामुतहजणूपज्जत्तम्*। अ
त्रभाषामात्रभिन्नमितिपरपुरप्रवेशनामायंयोनिजकाव्यभेदः । विकी
र्णसमाहारःखण्डसंघात्यम् । यथा । छिन्नाण्यम्बुजिनीदलानि
सरसामुत्सङ्गमध्यास्तेमौलौकिंशुकशाखिनश्चचतुरानाबिभ्रतेकोर
कान् । गर्भग्रन्थिषुपञ्चषाःसुमनसोबध्नन्तिचूतद्रुमाःसम्प्राप्ताःप्रकटी
भवन्तिकुररीकण्ठेषुकूजोर्मयः । अत्रकाव्यचतुष्कादुच्छिद्यपादचतुष्टयं
ग्रथितमितिखण्डसङ्घात्यनामायंयोनिजकाव्यभेदः । तावन्तमर्थमु
पादायाधिकोवापञ्चूलिका । यथा । कमलमनम्भसितत्रचकुवलयेता
निकनकलतिकायाम् । साचसुकुमारसुभगेत्युत्पातपरम्पराकेयम् ॥
तथाच । उभौरम्भास्तम्भावुपरिविपरीतौकमलयोस्तदूर्ध्वंरत्नाश्मस्थ
लमपिदुरूहङ्किमपियत् । ततःकुम्भौपश्चाद्बिसकिसलयेकन्दलमथोत
दन्विन्दाविन्दीवरमधुकराःकिम्पुनरिदम् । अत्रस्थानेस्थानेधिकावा
पस्यप्रत्यभिज्ञानाच्चूडिकानामायंयोनिजकाव्यभेदः । बन्धच्छायामात्र
संवादीपरिमलः । यथा । अनेनयूनासहपार्थिवेनरम्भोरुकच्चिन्मनसो
रुचिस्ते । सिप्रातरङ्गानिलकम्पितासुविहर्तुमुद्यानपरम्परासु । य
थाच । यात्राप्रसङ्गादुपवीणयन्तीतस्मान्महाकालमविप्रतिष्ठम् । कृ
शाङ्गिवीणागुणसारणासुचिरात्कलान्यासफलंलभेथाः । अत्रसन्दर्भ
च्छायामात्रमनुकूलमितिपरिमलनामायंयोनिजकाव्यभेदः ॥१॥ शापान्त
इति । लोचनेमीलयित्वेत्यनेनलोकोक्त्यनुकारेणनयननिमीलनवदा
शुभावितासमागमसमयस्यप्रतिपाद्यते । तथाचसुकुमारतरकान्ताजी

सेयंतस्मैनृपशवेनमइतिविदग्धोक्तेरनुकृतिश्छेको क्तिच्छाया ॥२॥ अर्भकोक्तिच्छायायथा । किंसःस्वर्गतरुःकोपियस्यपुष्पन्निशाकरः । तेवृक्षाःकीदृशामातर्येषाम्मुक्ताफलम्फलम् । सेयमव्युत्पन्नशिशुजनोक्तेरनुकृतिरर्भकोक्तिच्छाया ॥ ३ ॥ उमत्तोक्तिच्छायायथा । दृष्टःकथंसुतनुकिङ्कुरुतेकिमस्मद्वार्तांसपृच्छतिश्रृणोतिनिवेद्यमानाम् । आस्तांकिमस्यकथयाकथयाशुतावदत्रागमिष्यतिनवाखलुसोभिमानी। सेयमसमञ्जसायाउन्मत्तोक्तेरनुकृतिरुन्मत्तोक्तिच्छाया ॥४॥ पोटोक्तिच्छायायथा । तिलकमसहास्मिसोढुंघनसारेणातिसारदोषोमे । लम्भयतिचदौर्बल्यङ्कुङ्कुमरागोममाङ्गानि । सेयमुत्तमपदारोपितनीचयुवत्युक्तेरनुकृतिःपोटोक्तिच्छाया ॥ ५ ॥ मत्तोक्तिच्छायायथा । पिपिप्रियससस्वयम्मुमुमुखासवन्देहिमेततत्यजदुदुद्रुतम्भभभाजनङ्काञ्चनम् । इतिस्खलितजल्पितम्मदवशात्कुरङ्गीदृशःप्रगेहसितहेत

---

चिताध्यवसायाभिप्रायः प्रवासविप्रलम्भाविष्टचेतसः प्रकाशितोभवतीति । उपलक्षणञ्चैतत् वर्षाकालेचतुरोमासानित्यपिलोकोक्तिरेव ॥१॥ योहीति। कान्तामुखमेवजीवितसर्वस्वमभिमन्यमानस्तत्रालम्भप्रत्ययशालिनःपशूनिवप्रतिश्रृङ्गारीविदग्धः ॥२॥ किंसइति । नूनंत्रिजगद्वर्त्तिसकलार्थिसार्थकीकरणविख्यातकीर्त्तेःपारिजातप्रमुखस्यकस्यचिदेकस्तबकःसुधाभिराह्लादयन्नयमवलोकेदृश्यतइत्यादि ॥३॥ दृष्टइति । कथमित्यादिनातदेकतानतामाविष्कृत्यसहसैवास्तामित्यादिसम्भ्रान्ताणाङ्कथयतावदित्यादिनाचपुनरादानमसमञ्जसम् ॥४॥ उत्तमपदस्थानीययुवतिमनुकुर्वाणाउत्तमपदारोपितनीचयुवतिः ॥५॥ पिपिप्रियेति । अव्यक्तव

वेसहचरीभिरध्यैयत । सेयंस्खलत्यामन्त्रोक्तेरनुक्ति
तिर्मन्त्रोक्तिच्छाया ॥६॥५॥ साभिप्रायस्यवाक्येयद्वच
सोविनिवेशनम् । मुद्रान्तांमुत्प्रदायित्वात्काव्यमु
द्राविदोविदुः ॥१॥ सास्मिन्पदस्यवाक्यस्याविभक्ति
वचनस्यच । समुच्चयस्यसंवृत्याषोढान्यासेनजाय
॥२॥तासुपदमुद्रायथा । निर्माल्यंनयनश्रियःकुवल
यंवक्त्रस्यदासःशशीभ्रूयुग्मस्यसनाभिमन्मथधनुर्ज्या
तन्त्रास्मितस्याञ्चलः । सङ्गीतस्यचमत्तकोकिलरुता
न्युच्छिष्टमेणीदृशःसर्वाङ्गीणमहोविधेः परिणतंवि
ज्ञानचित्रंचिरात् । अत्रनिर्माल्यन्दासःसनाभ्यञ्च
लउच्छिष्टमितिपदानाङ्गौणवृत्तिव्यपाश्रयेणमुत्प्रदा

त्तिरूपंस्खलितजल्पितम्॥६॥ साभिप्रायेति । यद्यपिसम्पूर्णमेवकाव्यंव
क्त्रभिप्रायप्रतिच्छन्दकभूतम् । उक्तञ्च । वक्त्रभिप्रायंसूचयेयुरिति ।
तथापिनास्मिन्नितरसाधारणतयावाक्यार्थगोचरमभिप्रायमावेदयत्ये
वकाव्यसनाथीकरणक्षमवक्त्रभिप्रायविशेषप्रतिरूपकएकदेशनिवेशोदृ
श्यते । अतएवाङ्गुलीयादिमुद्रेवमुद्रेत्युच्यते । निरुक्तिमाह । मुत्प्रदा
यित्वादिति । मुद्युपपदेरातेर्दानकर्मणःकेरूपम् । मुद्रैवपदादिप्रका
श्यध्वनिव्यवहारभूमिरन्येषाम्॥१॥सास्मिन्निति पदम्प्रातिपदिकंकृत्त
द्धितसमासरूपम् । विभक्तिवचनयोःसामान्यविशेषभावेपिपृथक्पृथ
गभिप्रायव्यञ्जकतयानिर्देशः।आस्तामित्यादिवचनसङ्कोचःसंवृतिः॥२॥
गौणवृत्तिव्यपाश्रयेणेति।निर्माल्यादिपदानामत्यन्ततिरस्कृतवाच्याना
मतिविच्छायत्वादिलक्षणाद्वारेणलावण्यविशेषध्वननात्सहृदयहृदया
वर्जकानान्निवेशोदृश्यते।एवम्।तालाजाअन्तिगुणाजालातेसहिअएहि
घेप्पन्ति । रविकिरणाणुग्गहिआइंहोन्तिकमलाइंकमलाइम्*। तथा ।
अमृतममृतञ्चन्द्रश्चन्द्रस्तथाम्बुजमम्बुजंरतिरपिरतिःकामःकामोमधू
निमधून्यपि।इत्यादावर्थान्तरसङ्क्रमणादिनातत्प्रकाश्योध्वनिरनुस

यिनांसाभिप्रायनिवेशादियम्पदमुद्रा ॥१॥ वाक्यमु
द्रायथा । यत्स्वच्छेसलिलात्मनिप्रतिफलद्देवेत्रिया
मापतौपीयूषाकृतिपर्यवस्यतिकिलज्योत्स्नेतितत्वा
न्तरम् । तिग्मन्धामाचिरञ्चकास्तिदिवियत्तत्रा
स्तिदिव्यःपुमान्यंविज्ञातवतांत्रुटन्तिनिखिलाभूयो
भवग्रन्थयः । अत्रतत्रास्तिदिव्यःपुमानित्यादेर्वा
क्यान्तरस्यपूर्ववाक्योपकारित्वेनमुत्प्रदायकस्याभि
प्रायपूर्वन्निवेशादियंवाक्यमुद्रा ॥२॥ विभक्तिमुद्राय
था। श्रियःप्रदुग्धेविपदोरुणद्धियशांसिसूतेमलिनम्प्र
मार्ष्टि। संस्कारशौचेनपरम्पुनीतेशुद्धाहिबुद्धिःकिल
कामधेनुः। अत्रप्रदुग्धेरुणद्धिसूतेप्रमार्ष्टिपुनीतेइति
लिङ्विभक्तीनां(दुहिपच्योःसकर्मकयोरुपसङ्ख्यानं)

---

न्धेयः॥१॥यत्स्वच्छइति। आदित्यकलाएवप्रतिफलिताश्चन्द्रव्यपदेशंल
भन्तइत्यागमः। तदाह। सलिलमयेशशिनिरवेर्दीधितयोमूर्च्छितास्त
मोनैशम्।दलयन्तिदर्पणोदरविहताइवमन्दिरस्यान्तरिति। पूर्ववाक्यो
पकारित्वेनेति। देवेपीयूषकृतिलत्वान्तरन्तिग्मधामचकास्तीतिचप
दगाधतयालक्षितमिति किलशब्दकटाक्षितसभिधानम्। तत्रकिंसम्ब
न्धमित्याकाङ्क्षाविपूरकन्तत्रास्तीत्यादिवाक्यम्। तथाहि। यएषआ
दित्यपर्यन्त्याप्यपुरुषोदीप्यतइत्याद्युपनिषदर्थनिवेशनमभिप्रायपूर्वक
मामासते। एतेनान्येपिवाक्यप्रकाश्यप्रकाराःपरिगृहीताबोद्धव्याः॥
पूर्ववाक्येन्तर्भावितद्वित्वमवसेयमिति ॥२॥ श्रियइति। बुद्धिरूपाकाम
धेनुःश्रियःप्रथयतीत्युक्तेनतयाप्रकर्षोयथोक्तेतुविशिष्टःकवेरभिप्रायउ
न्नीयते। तथाहि। यथोदुम्बरःसलोहितम्फलम्पच्यतइतिकर्मकर्त्तरिफ
लोदुम्बरयोरैकात्म्यमवसीयतेतथेहापिश्रीरूपमात्मानम्बुद्धिःप्रकाश
यतीति।अतएवहि[दुहिपच्योःसकर्मकयोः] इतिबाह्यकर्मविशिष्टस्यैव
कर्तुःकर्मवद्भावःशिष्यते। [नदुहस्नुनमांयक्चिणौ]इतियगभावोपिवि

(रुधादिभ्यःश्नम्)इत्यादिभिर्विशेषलक्षणवतीनांयो
गैःपरस्मैपदात्मनेपदपर्यायेणनिवेशोदृश्यते । श्रि
योविपदोयशांसिमलिनंसंस्कारशौचेनेतिचसुब्विभ
क्तीनाम् (अचिश्नुधातुभ्रुवांय्वोरियङुवङौ) इत्या
दिविशेषलक्षणवतीनां विकृताविकृतानाम्मङ्गलाम
ङ्गलार्थपरत्वेनमङ्गलार्थानामभिप्रायतःप्रयोगोलक्ष्य
ते । तेनेयंविभक्तिमुद्राभवति ॥३॥ वचनमुद्रायथा ।
विश्वम्भराभगवतीभवतीमसूतराजाप्रजापतिसमो
जनकःपिताते । तेषांवधूस्त्वमसिनन्दिनिपार्थिवा
नांयेषाङ्कुलेचसविताचगुरुर्वयञ्च। अत्रवयमित्या
त्मनिबहुवचनेनसविताचेतिसवितर्येकवचनेनसवि
तुरप्यहम्बहुमतइत्यभिप्रायोवक्तुरितीयंवचनमुद्रा॥४॥

---

शेषाभिप्रायनियतएवरुणद्धीत्यागमरूपः । सूतेइतिलुप्तः प्रमार्ष्टीतिवृ
द्धियोजकःपुनीतेइतिस्वरूपेणाविकृतश्चविकरणः।आत्मनेपदपरस्मैप
दयोरेकान्तरितोनिवेशः श्रियइतिप्रकृतिभागेइयङादेशोविकारोविभ
क्तावपिविकारोविपदइति प्रकृतिरविकृता । विभक्तिस्तुरुत्वेनाविकृ
ता । यशांसीतिद्वेअपिविकृते । मलिनमितिवैकल्पिकपरसवर्णविधौ
द्वयमविकृतम् । संस्कारशौचेनेति प्रकृतिरविकृता । प्रत्ययस्त्विना
देशेनविकृतः।तथा श्रियइतिसङ्कल्यम्। विपदइतिविपरीतमितिक्रमेण
शुद्धाबुद्धिःकामधेनुरिति मङ्गलपरम्परानिवेशनेनोपसंहारश्चित्रांशुको
ज्ज्वलइव प्रतिभासमानोनुबिम्बमिवकामपि कान्तिमभिव्यञ्जयत्तूप
लक्ष्यते।मङ्गलामङ्गलार्थपदपरत्वेनेति । मङ्गलामङ्गलेभ्यःपदेभ्यःपरव
र्त्तित्वेनेत्यर्थः ॥३॥ विश्वम्भरेति । अहङ्कारपरोहस्यपूर्वङ्गुणप्रयोजक
त्वमुक्तम्। इहतुकवेरभिप्रायविशेषस्यालङ्कारघटकतेतिविभागः ॥ अ
त्राशंसायामिति। गतमितिनिष्ठाप्रत्ययेनभूतताद्योतनादाशंसाप्रतीता
वपिकथम्प्रकृतपोषइत्यतउक्तंसमुच्चयद्वारेणेति । तेनहितुल्यकक्षता

समुच्चयमुद्रायथा । जातश्चायम्मुखेन्दुस्तेभ्रुकुटिप्र
णयीपुरः । गतश्च वसुदेव स्यकुलन्नामावशेषता
म् । अत्र (आशंसायाम्भूतवच्च) इतिभूतवद्भावस्य
हयग्रीवप्रभावातिशयंसूचितःसमुच्चयद्वारेणनिवेशा
दियंसमुच्चयमुद्रा ॥५॥ संवृतिमुद्रायथा । मणिरत्न
म्प्रसेनस्यतच्चानार्येणविष्णुना । लब्धयेनाद्ययोगेनते
नकिङ्कीर्तितेनवः । अत्रकथापिखलुपापानामलमश्रे
यसेयतइतिकिन्तेनवःकीर्तितेनेतिसाभिप्रायसंवृति
कारणादियंसंवृतिमुद्रा ॥६॥६॥ विधिद्वारेणवायत्रनि
षेधेनचवापुनः । प्रतीयतेविशिष्टोर्थःसोक्तिरत्राभिधी
यते ॥१॥विधेरथनिषेधात्स्यादधिकाराद्विकल्पतः ।
नियमात्परिसङ्ख्यायाउपाधेःसेहषड्विधा ॥२॥ ता
सुविध्युक्तिर्यथा । शुश्रूषस्वगुरून्कुरुप्रियसखीवृत्तिं
सपत्नीजने । अत्राप्राप्तौप्रापणवचनंविधिः ॥१॥ नि

---

प्रतीतौत्वच्चेदङ्गीकृतरोषस्तदा.सेद्धमेवसमीहितमिति । वस्तुरध्यव
सायविशेषप्रतीतौसमुच्चयएवमुद्रापदवीमारोहतीति । शेषंसुबोधम्॥
४॥५॥६॥ विधीतिवाक्तिरभिधा । साङ्गयीभावाभावविषयत्वात् । त
र्हिगोरपत्यमयङ्गौरित्यतःकोभेदइत्याशङ्क्य विधिद्वारेणवेत्यादि । भा
वज्ञानंविधिरभावज्ञानन्निषेधो लोकेगृहीतव्युत्पत्तिबलेन भावाभावा
न्यतरसंवित्सरणिमारुह्यकाप्येकगोचरेरसाद्यात्मनिपर्यवस्यन्तीभवत्यु
क्तिरलङ्कारइतिभावः ॥१॥ सोयम्भावादिप्रपञ्चेनषोढाविधिःप्रपतइ
त्याह । विधेरिति । उपाधिर्विशेषणंविव्यधिकारौशुद्धभावभेदौनिषेध
नियमौशुद्धप्रतिषेधभेदौ । विकल्पपरिसङ्ख्ये सङ्कीर्णभेदाविति । त
त्राप्राप्तप्रापणोविधिःप्रसक्तप्रतिषेधोनिषेधःक्रियाफलसम्बन्धोधिका
रस्तुल्यकक्षयोरेकबाधेनान्यसम्बन्धोविकल्पोव्यावृत्तिफलकोविधिर्नि
यमःशेषविधिनिषेधनान्तरीयकौविशेषनिषेधविधीपरिसङ्ख्या ॥२॥

षेधोक्तिर्यथा। भर्तुर्विप्रकृतापि रोषणतया मास्म प्रतीपङ्गमः। अत्र प्राप्तौ निवारणान्निषेधः॥२॥ अधिकारोक्तिर्यथा। भूयिष्ठम्भव दक्षिणा परिजने भोगेष्वनुत्सेकिनी यान्त्येवङ्गृहिणीपदं युवतयो वामाः कुलस्याधयः। अत्र विधिनिषेधज्ञानाद्विधिनिषेधयोग्यताधिकारः॥ ३ ॥ विकल्पोक्तिर्यथा। एको नेता क्षत्रियो वा द्विजो वा एका विद्याध्यात्मिकी वा त्रयी वा। एका भार्या वंशजा वा प्रिया वा एकस्मिन्नम्भूपतिर्वा यतिर्वा। सोयञ्जातिक्रियागुणद्रव्यावलम्बी चतुर्विधो विकल्पः॥४॥ नियमोक्तिर्यथा। विवादोपार्थ एवायम्पार्थ एव धनुर्धरः। योन केवलमात्मीयैः परैरप्यभिनन्द्यते। सोयमयोगान्ययोगात्यन्तायोगव्यवच्छेदलक्ष

---

अप्राप्तौ प्रापणं वचनमिति। अप्रवृत्तप्रवर्त्तनात्मको हि विधिः कथमितरापेक्षत्वे सङ्गच्छते। अत एवोच्यते। विधिरत्यन्तमप्राप्ताविति॥१॥ प्राप्तौ निवारणमिति। रोषेण प्रसजत्प्रतीपाचरणान्निवार्यते॥२॥ विधिनिषेधज्ञानादिति। विहितनिषिद्धक्रियाज्ञानेन तत्फलसम्बन्धयोग्यत्वमधिकारः॥३॥ शुश्रूषस्वेति भूयिष्ठम्भव दक्षिणेति द्वे विहिते मास्म प्रतीपङ्गम इति भोगेष्वनुत्सेकिनीति द्वे निषिद्धे। विधिनिषेधयोग्यता विधिनिषेधफलसम्बन्धयोग्यत्वङ्गृहिणीपदप्राप्तिर्विहितक्रियाफलम्। कुलाधीभवनन्तु निषिद्धक्रियाफलमिति। सोयमिति। जात्यादय एव पदार्थास्ते च विकल्पन्ते। कुतो जात्यादिना तद्व्यवस्था। वा शब्दः पाक्षिकभावमाहेति भावाभावसङ्करः॥४॥ अपार्थ एवेति। विशेषणसङ्गत एवकारः केवलविशेषणयोगस्यासम्भवे व्युत्पत्तिवशेन तदभावं व्यवच्छिन्दन्योग्यस्यावृत्ताववतिष्ठते। पार्थ एवेति विशेष्यसङ्गत एव शब्दस्तदन्यस्य धनुर्द्धरतारूपं विशेषणं व्यावर्त्तयन्नन्ययोगव्यवच्छेदद्योतको भवति। केवलमिति। अभिनन्दनस्यनायोगन्नवान्ययोगं व्यवच्छिनत्ति। किन्तु तत्स

णत्त्रिःप्रकारोनियमः ॥ ५ ॥ परिसङ्ख्योक्तिर्यथा ।
पञ्चपञ्चनखाभक्ष्याग्रामेनाक्ष्णानपश्यति । काठि
न्यमस्याःकुचयोःकिमसद्यन्नरोचते । तदिदंविधिनि
षेधाभ्यांविशेषाभ्यनुज्ञानम्परिसंख्येत्युच्यते ॥६॥७॥
अयुज्यमानस्यमिथःशब्दस्यार्थस्यवापुनः । योजना
क्रियते यासौ युक्तिरित्युच्यते बुधैः ॥१॥ पदञ्चैव
पदार्थश्चवाक्यंवाक्यार्थएवच । विषयोस्याःप्रकरण
म्प्रबन्धश्चाभिधीयते ॥२॥ तत्र । योगकारणपर्याया
ङ्गाङ्गिभावपरम्पराः । पदयुक्तेर्निमित्तंस्युर्निरूढाः
पदसिद्धये ॥ ३ ॥ विरुद्धानां पदार्थानाञ्जात्यादी

न्वन्यन्योयस्त्वात्यन्तिकमयोगमत्यन्तायोगव्यवच्छेदोभिधीयते ॥५॥
पञ्चपञ्चेति । पञ्चनखेषुपञ्चभक्ष्यानान्ये । कुचयोरस्याःकाठिन्यंन
वचनादावितिविशेषविधीशेषनिषेधमनुजानीतः । वामेननपश्यतिद
क्षिणेनतुपश्यत्येव । किमसत्किमशोभनम् । यद्यस्मैनरोचतेइतरत्तुसदे
वेतिविशेषनिषेधौशेषविध्यन्यनुज्ञाविषयाविति॥६॥अयुज्यमानस्येति।
पूर्वम्पदैकवाक्यतातावाक्यैकवाक्यत्वमनन्तरंप्रकरणैकवाक्यत्वमि
तिप्रबन्धनिर्वहणंयावत्कविव्यापारः । तत्रगामन्याजशुक्लान्दण्डेने
त्यादीनांलोकेगृहीतव्युत्पत्तीनामेवयद्यपिकाव्यानुप्रवेशस्तथापिभङ्गी
भणितिसनाथान्येवकाव्यपद्धतिमध्यासतेइत्यप्रहतानामुपादेयत्वेय
त्रापाततःपरस्परमन्वयोनप्रतिभासतेतत्रावश्यङ्कविनास्वाभिप्रायप्र
तिच्छन्दकभूतविशेषनिवेशनेनविवक्षितवाक्यार्थप्रतीत्यस्खलनंविधेय
मतएववैचित्र्यादलङ्कारता । तदिदमुक्तम् अयुज्यमानस्येति । आपा
ततइतिशेषः । योजनाअन्वयौपयिकरञ्जकविशेषनिवेशनन्तस्यविष
यःशब्दार्थौशब्दःपदंवाक्यम्प्रकरणम्प्रबन्धोर्थःपदार्थोवाक्यार्थश्च॥१॥
विषयभेदात्षोढायुक्तिरित्याह । पदञ्चैवेति॥२॥योगेत्यादौद्वन्द्वपरव
र्त्तीपरम्पराशब्दःप्रत्येकमन्वीयते।योगोयोगरूढिःकारणङ्कार्यकारणभा
वः । निरूढाःप्रसिताः।पदसिद्धयेपदसमुदायात्मकवाक्यैकदेशतासि

नाम्परस्परम् । योजनायेहतांयुक्तिम्पदार्थविषयां
विदुः ॥४॥ गर्भः सहनिगर्भेण संवृत्तिः ससमुच्चया ।
हेतवोवाक्ययुक्तीनां क्रियतामेवमादयः ॥ ५ ॥ य
त्तदादेरुपादानंक्रियाभ्याससमुच्चयौ । क्रियासम
भिहारश्च वाक्यार्थान्युज्यते मिथः ॥ ६ ॥ यदश्रद्धे
यशैलादिवर्णनाभ्युपपत्तये । वाक्यंसेहप्रकरणवि
षया युक्तिरिष्यते ॥७॥ प्रबन्धविषयाप्येवं युक्ति
रुक्तामनीषिभिः । उदाहरणमालैषांरूपव्यक्त्यैनिद
र्श्यते॥८॥तत्रयोगरूढिपरम्परादिनिमितापदयुक्ति
र्यथा । प्राच्यान्निर्जितजम्भजिद्द्विपशिरःसिन्दूर
शोभन्दिशिप्रत्याख्यातहयाङ्गनास्यहुतभुग्ज्योतिःप्र
तीच्यर्णवे । प्रातर्जातमदोन्मिषत्कमलिनीकिञ्जल्क

---

द्वये॥३॥ यद्यपिपदानामर्थद्वारकएवसम्बन्धस्तथापितदौपयिकविशेषः
क्वचित्स्वदेहेवसाक्षादवसीयतेक्वचित्पदार्थेष्वित्यभिप्रेत्याह । विरुद्धाना
मिति।एवंवाक्यवाक्यार्थयोरपिवाक्यमध्यवर्त्तिप्रकृतरसानुगुणरसस
र्पकंवाक्यान्तरम्॥४॥गर्भस्तस्यैकदेशभूतस्तथाभूतोनिगर्भः।उक्तोरूपसंहा
रवचनंसंवृतिः । तुल्यप्रधानभावानांयुगपदेकार्थसम्बन्धःसमुच्चयः।आ
दिपदादन्वाचयादयः॥५॥यत्तदोरुद्देश्यविधेयगामिनोरादिग्रहणादिद
मेतदादाक्ष्क्रियाणामावृत्तिरभ्यासः। विजातीयानामेकदैकत्रसम्बन्धः
समुच्चयः । समभिहारोभृशत्वम्प्रकर्षइतियावत्॥६॥अतिमात्रतयाप्रति
भासमानत्वमश्रद्धेयता । तदेतासांयुक्तीनामतिदुरूहत्वादाह । उदा
हरणमेवेति॥७॥जम्भजित्पदंकृदन्तत्वाद्यौगिकम् ।तथाजम्भजिद्द्विपइ
त्यपिसमासत्वात् । तदेतदुभयंयोगेनातिप्रयुज्यमानन्निरूढिद्वयेनवि
वक्षितैरावतरूपेवस्तुनिनियम्यते । हयाङ्गनेति । वडवापर्यायः ।
आस्यमितिमुखपर्यायः। हुतभुगित्यनलपर्यायःसेयम्पदपरम्परापर्याय
तायप्रतिप्रस्थानेनाभिमतवडवामुखानलप्रतीतिङ्करोति । मदस्यकिञ्ज

कल्कोद्भटम्भानोःपूर्णनभःकटाहकुहरक्रोडम्महःपातु
वः॥ अत्रजम्भजिदद्विपइतियोगरूढिपरम्परा । ह
याङ्गनास्यहुतभुगितिपर्यायपरम्परा । प्रातर्जात
मदोन्मिषत्कमलिनीकिञ्जल्ककल्कोद्भटमितिहेतुपर
म्परा । नभःकटाहकुहरक्रोडमित्यङ्गाङ्गिभावपरम्प
राचपरिस्फुरन्तीदृश्यते ॥१॥ विरुद्धजात्यादियोग
निमित्तापदार्थयुक्तिर्यथा । तन्नागेन्द्रकरोरुदोःक
रिशिरःपीनस्तनांसंवपुः स्त्रीपुंसाकृतियत्पितुस्तवमु
खेरम्योग्रमीक्षामहे । वाराह्याइतिनर्मणीभवदनः
पश्यन्यदास्यामुखन्नाभिष्टौतिहसन्ननिन्दतितदा
श्लिष्टोम्बयापातुवः । अत्रस्त्रीपुंसाकृतीतिविरुद्धजा
तियोजना । नाभिष्टौतिननिन्दतीतिविरुद्धक्रिया
योजना । रम्योग्रमितिविरुद्धगुणयोजना । मुखेत्र
परीक्षामहेइतिविरुद्धद्रव्ययोजनाचलक्ष्यते ॥ २ ॥

ज्जल्कोन्मेषेतस्यकल्कोतस्याप्युद्भटतायांहेतुभावइतिकार्यकारणपरम्प
रा । नभःकटाहोङ्गी । तस्याङ्गमेकदेशःकुहरन्तस्यापिक्रोडइत्यङ्गाङ्गि
परम्पराचयथाभिमतपदैकवाक्यतानिदानमितितदेतद्व्याचष्टे । अत्रे
ति। परिस्फुरन्तीकविशक्तिव्यञ्जकतयासहृदयहृदयेषुप्रतिफलन्ती॥१॥
नागेन्द्रकरवदूरुःपार्वतीभागेदोर्बाहुश्चदेवभागेकरिकुम्भवत्पीनःस्तनो
देवीभागे । अंसःस्कन्धश्चदेवभागे । एवंविधत्वत्पितुरीश्वरस्यवपुस्त्व
न्मुखे । एकविषाणतयाकरिकरिणीसमाहारात्मनिवीक्ष्यामहइतिवा
राह्याःपरिहासोक्तिः । वाराहीवराहप्रकृतिभूतोमातृविशेषः । इभ
वदनोविनायकः । स्त्रीत्वपुंस्त्वयोःपरस्परपरिहारेणोपलम्भाद्विरु
द्धयोरपित्वत्पितुरित्यनेनस्तुतिनिन्दयोःप्रतिषेधेनरम्यताभीषणतयो
र्भोगश्चवस्तयामुखवपुषोःसादृश्येनाभितोभिप्रायप्रतिबिम्बितेनयोज
नाविहितेतितत्प्रतिपादकानाम्पदानामेकवाक्यतासिद्धिः । तदिद

वाक्यगर्भादिविषया वाक्ययुक्तिर्यथा । दिङ्मातङ्गेत्यादौ । अत्र वदन्त एव हि वयं रोमाञ्चिताः पश्यतेति वाक्यगर्भः । तत्रैव पश्यतेति वाक्यान्तरे भावाविष्कारवाचा निगर्भः । किमपरं रामाय तस्मै नमः इति वाक्यसंवृतिः । यस्मादाविरभूत्कथाद्भुतमिदं यत्रैव चास्तङ्गतमिति वाक्यसमुच्चयः । सेयमेतेषां योजनाद्वाक्ययुक्तिर्भवति ॥ ३ ॥ यत्तत्तदाद्युपादाननिमित्ता वाक्यार्थयुक्तिर्यथा । तिष्ठद्वारि भवाङ्गणे व्रज बहिः सद्मेति वर्त्मेक्षते शालामञ्च तमङ्गमञ्च वलभीमञ्चेति वेश्मा

माह । अत्रेति ॥ २ ॥ जातिक्रियेत्यादिना क्रमेण विरोधप्रसिद्धे गुणविरोधमुल्लङ्घ्य क्रियाविरोधो व्याख्यातः । आघाटः सीमा । गर्भो विवृतपूर्वस्तत्रैव आश्चर्यरसाविष्टस्य वक्तुः पश्यतेति वाक्यान्तरन्निगर्भः । गर्भवाक्येन समर्प्यमाणप्रकृतरसान्वयिनि रसे प्रकर्षाधायको निगूढो गर्भो निगर्भ इत्युच्यते । तदिदं भावाविष्कारवाचीत्युक्तम् । विप्राय प्रतिपाद्यते सम्पन्नातैरनुज्यत इत्यादिवक्तव्ये किमपरमित्यस्य संवृतित्वेन योजना । एवं हि कियदस्य महानुभावस्य तादृशाचरितं प्राप्यते तदिह मौनमेवोचितमिति भूयान्प्रकर्षोऽवसीयते । यस्मादाविरभूत्कथाद्भुतमिदं यत्रैव चास्तङ्गतमिति वाक्यद्वयस्य पूर्ववाक्यगततर्कार्थसमुच्चयवाचिना चकारेण योजना व्यक्तैव । एवमादय इति । तद्यथा । वीथ्यङ्गानि त्रयोदश प्रस्तावनापरिच्छेयानि । सन्ध्यङ्गानि विलासाद्यानि चतुष्षष्टिः सन्ध्यः स्वरूपकावयवभूता मुखप्रतिमुखगर्भविमर्षनिर्वहणाख्याः पञ्च । प्रकृतरसावस्थारूपाणि च पञ्चैव । बीजबिन्दुपताकाप्रकरीकार्याणि तत्प्रकरणप्रबन्धरूपवाक्यैकदेशयोजनान्यन्तर्गतान्यानि ॥ ३ ॥ तिष्ठेति । उपस्थितिसमयसीमामतिक्रामति प्रियतमे तत्कालद्विगुणितोत्कण्ठा तरलितान्तःकरणा कदाचित्प्रागिव गर्भगृहद्वारि तिष्ठति । ततस्तत्रानवलोकमाना गृहाङ्गणे भवति । तदनन्तरं वेश्मनो बहिर्व्रजति । सोऽयं विजातीयक्रियार्थनानाधातुगोचरः सर्वकालेषु [ समुच्चयेऽन्यतरस्याम् ] इति लो

उच्यति दूतींसन्दिशसन्दिशेतिबहुशः सन्दिश्यसास्ते तथातल्पेकल्पमयीवानिर्घृण ! यथानान्तन्निशाग च्छति । अत्रप्रथमपादेक्रियासमुच्चयोद्वितीयेक्रिया भ्यासस्तृतीयेदूतींसन्दिशसन्दिशेतियावत्क्रियास मभिहारः । शेषेतुतथानिशान्तन्नगच्छतीतियत्तदो रुपादानंवाक्यार्थयुक्तेर्हेतुःप्रतीयते । सेयमुक्तलक्ष णावाक्यार्थयुक्तिर्भवति ॥४॥ अप्रहेयपर्वतादिवर्ण नहेतुःप्रकरणविषया यथा । मुदेमुरारेरमरैःसुमेरो रानीयपस्योपचितस्यशृङ्गैः । भवन्तिनोद्दामगिराङ्क वीनामुच्चावचसौन्दर्यगुणामृषोद्याः ॥५॥ प्रबन्धव्या पिवस्तूपपत्तिहेतुस्तुप्रबन्धविषयायुक्तिर्भवतिसाय था । धूमज्योतिःसलिलमरुतांसन्निपातःक्वमेघः स न्देशार्थाःक्वपटुकरणैःप्राणिभिःप्रापणीयाः । इत्यौ त्सुक्यादपरिगणयन्गुह्यकस्तंययाचेकामार्ताहिप्रकृ तिकृपणाश्चेतनाचेतनेषु ॥६॥ ८॥ उक्तिप्रकारोभणि

---

टोहिरनुशिष्यते । अतएवदर्शनावच्छेदभूतद्वारावस्थानादिसामान्य वचनः [ समुच्चयेसामान्यवचनस्य ] इत्यनुशासनान्नियमितप्रयुक्तिरी क्षतिरनुप्रयुज्यते। नायकस्यसर्वथाहृदयवैशसंसर्वथैवाश्रद्दधानादूरदूर तरदूरतमरथ्याभागावलोकनार्थिनीशालाङ्कहमारोहति । ततस्तस्मा दुच्चैस्तमङ्गमट्टालकमनन्तरंतस्मादुच्चतरांवलभीमुपरितमकूटीमिति । अतएवाञ्चनक्रियैवात्रावृत्तेति [ क्रियासमभिहारेलोट्लोटोहिस्वौ वाचतध्वमोः ] इत्यनुशिष्यते । अतएवच [ यथाविध्यनुप्रयोगःपूर्व स्मिन् ] नितितस्यैवधातोरनुप्रयोगोपि । एवमप्यनागच्छतिनायकेदू तीव्यापारःशरणंयत्कुष्ठमायांस्वयंवातत्रगमनमित्युपदिश्यतेतेनतत्त दभिप्रायसंवर्द्धकसन्देशप्रकर्षःसोयमाभीक्ष्ण्यद्विरुक्त्याव्यज्यते । अत

ति: सम्भवेऽसंभवे च सा । विशेषसंवृत्त्याश्चर्यकल्पना
सुचकल्पते॥१॥ अत्र संभवभणितिर्यथा । सद्योद्रावित

एवलोटः समभिव्याहारो विषयो न तु घञादिवदभिधेय इति पूर्वाचार्याः ।
इतिशब्दादधिकन्त्वतुर्यथाक्यानुप्रविष्टमितियावच्छब्देनावच्छिनत्ति
सन्दिग्धसन्दिग्धेतियावदितिदिक् ॥४॥५॥६॥ उक्तीति । उक्तिरभिधानमुच्चा
रणक्रियालक्षणा क्रियासा सर्ववाक्यसाधारणी कथमलङ्कार इत्याशङ्क्य प्र
कारपदम् । प्रकारो भङ्गीरूपता । लौकिकशास्त्रीयवचनातिगामी विशे
षः स एव कैश्चिदभ्याभिमननुसन्दधानैरलङ्कारसामान्ये उक्तः । उक्तिरूप
त्वाविशेषे कथमयमेव सङ्गच्छतामित्यतो विभागप्रदर्शनव्याजेन विषय
विशेषादेव तद्रूपतामुपपादयति । सम्भव इत्यादि । तत्र बहिरसम्भा
व्यमानस्यापि प्रतिभानिर्मितचित्रतुरगवत्प्रतीतिः सम्भवस्तामर्पयन्ती
सम्भावनात्मिका भणितिः सैव हि किन्त्वस्ति काचिदपरापि पदानुपूर्वीय
स्याः किञ्चिदपि किञ्चिदिवावभातीति न्यायेन तत्तदर्थनिर्माणप्रवीणा
"यथास्मै रोचते विश्वं तथैव परिवर्त्तते" इति व्यवहारकारणम्भवतीति
तथाविधस्य च विषये शास्त्रप्रसिद्धप्रकारवैपरीत्येन बाधवर्णनमसम्भाव
ना । तदुच्यते । इह ते जअन्ति कइणो जअमिणमो जाणसअलपरिणा
मम् । वाआसु ठिअन्दीसइ आमोअघणंव तुच्छंव* । अत एवेयन्निषेधरू
पा । तज्जातीयस्यावृत्तो धर्मो विशेषस्तं क्वचिद्विदधाना कवेरभिप्रायवि
शेषमर्पयन्ती निषेधप्रसङ्गे विशेषभणितिर्विधिरूपा भवतीति तामवलम्ब
माना चमत्कारकारिणी विशेषे पर्यवस्यन्ती वर्णना । पल्लवप्रसङ्गे सङ्कोचम
वगाहमाना विधौ निषेधरूपा पर्यवस्यति । अतर्कितोपनतं विस्मयजन
कमाश्चर्यं तस्य निषेधे विधातव्ये यत्किञ्चिद्विधानं तदाश्चर्यरूपतामन्तरे
णाकाव्यकक्षामारोढुं न क्षमत इति नूनमनया विस्मयार्पणमेव सर्वस्वभूतम
वलम्बनीयमिति निषेधविधिप्रसङ्गे निषेधरूपा भणितिर्बहिरसम्भावि
तः क्वचिदसतो विशेषस्योत्प्रेक्षाकल्पना । तामाश्रयन्ती विधाननिषेधमा
त्रेण चरितार्था किंचिद्विशेषं विदधातीति विधिनिषेधप्रसङ्गे सामान्यतः
प्रतिषेधति विशेषतश्च विधत्त इति निषेधविधिरूपा कल्पनाभणितिः ॥१॥

केतकोदरदलस्रोतःश्रियंबिभ्रतीयेयम्मौक्तिकदामगुम्फनविधेर्योग्यच्छविःप्रागभूत्। उत्सेक्याकलशीभिरञ्जनिपुटैर्मेयामृणालाङ्कुरैःपातव्याचशशिन्यमुग्धविभवेसावर्ततेचन्द्रिका। अत्रसद्योद्रावितकेतकोदरदलस्रोतःसादृश्यादिसंभवादियंसम्भवभणितिर्द्विरूपा ॥१॥ असम्भवभणितिर्यथा। क्वपेयञ्ज्योत्स्नाम्भोवदनबिसवल्लीसरणिभिर्मृणालीतन्तुभ्यःस्रिचयरचनाकुत्रभवति। क्वबापारीमेयोबतबकुलदाम्नांपरिमलःकथंस्वप्नःसाक्षात्कुवलयदृशङ्कल्पयतुताम्। अत्रज्योत्स्नादीनांमृणालादिभिःपेयत्वादेरसंभवादियमसंभवभणितिर्निषेधरूपा ॥२॥ विशेषभणितिर्यथा। रेवतीदशनोच्छिष्टपरिपूतपुटेदृशौ। वहन्हलीमदक्षीवःपानगोष्ठ्यांपुनातुवः। अत्ररेवतीदशनोच्छिष्टयोरपिहलिदृशोर्यत्पूतत्वंमदक्षीवस्यापिहलिनोयत्पावनत्वमसौविशेषइतीयंविशेषभणितिर्निषेधेविधि

सद्यइति। केतकोदरदलानां द्रावणं ततः स्रोतोरूपता ततस्तेनोपमितायाबहलतरवहिर्भोगस्यकलशीभिरुत्सेचनमनन्तरंकिंचिदल्पीभूतमध्यभागस्यकरतलाञ्जलिपुटैर्मानन्ततः शेषीभवतः सारभागस्यमृणालाङ्कुरैःपानमितिबहिरसम्भाविनएवश्रियम्बिभ्रतीतिनिदर्शनयायोग्यपदेनोत्सेक्येत्यादिभिश्चमत्कारिणीसम्भावनाजायते ॥१॥ क्वपेयमिति। स्वप्नस्यसाक्षात्कल्पनेसामर्थ्यमसम्भावितन्तदेवमेवोच्यमानन्तथाशोभामुन्मीलयतीतिक्वपेयमित्यादिप्रतिवस्तुनानिर्देशश्चकृत्यारक्तिसुषमाविस्तारङ्कुर्वाणाभवत्यसम्भवभणितिः। पारीभाण्डभेदः॥२॥ रेवतीति। दशनोच्छिष्टंचुम्बितम्। उच्छिष्टक्षीवयोर्नक्वचित्पूतत्वंपावनत्वंवादृष्टचरमितिहलिनेत्रपुटहलिनोर्विधीयमानन्देवतावरितस्यलो

रूपा ॥ ३ ॥ संवृतिभणितिर्यथा । आभरणस्याभ
रणंप्रसाधनविधेःप्रसाधनविशेषः । उपमानस्या
पिसखेप्रत्युपमानंवपुस्तस्याः । अत्रप्रसिद्धवर्णनाप्र
पञ्चविधेराभरणस्याभरणंवपुरित्यादिवाक्यैःसंवर
णादियंसंवृतिभणितिर्विधौनिषेधरूपा ॥ ४ ॥ आश्च
र्यभणितिर्यथा । ज्योतिर्भ्यस्तदिदन्तमःसमुदितञ्जा
तोयमद्भ्यः शिखीपीयूषादिदमुच्छ्रितंविषमयच्छा
यात्प्रजन्मातपः । कोनामास्यविधिःप्रशान्तिषुभवेद्
बाढन्द्रढीयान्नयङ्ग्रन्थिर्यत्प्रियतोपिविप्रियमिदंस
ख्यःकृतंसान्त्वनैः।अत्रज्योतिःप्रभृतिभ्यस्तमःप्रभृती
नामुत्पत्तेराश्चर्यरूपत्वादियमाश्चर्यभणितिर्निषेधवि
धौविधिनिषेधरूपा ॥५॥ कल्पनाभणितिर्यथा । दृ
श्यन्दृशांसहस्रैर्मनसामयुतैर्विभावनीयञ्च । सुकृत

---

कोपरताङ्गमयतीतिनिषेधप्रसङ्गेविधिरूपेयम्भणितिः ॥ ३ ॥ आभरण
स्येति । अत्रचन्द्रमुखीदुग्धधवलनयनाबिम्बोष्ठीकरिकुम्भस्तनीत्या
दिकविसमयप्रसिद्धवर्णनाप्रपञ्चप्रसङ्गेयथोक्तरूपेणतस्यसङ्कोचोनिषेध
स्तत्प्रतिष्ठाभणितिरलङ्करणमेवानयाक्रियतइतिकान्तिविशेषंव्यञ्जय
न्तीविधौप्रसक्तेनिषेधरूपाभवति॥४॥ज्योतिर्भ्यइति । प्रियोहिनाप्रिय
माचरतीत्युत्सर्गसिद्धाप्रियानाचरणन्दैवगत्याशठेसम्भाव्यमानमाश्चर्य
मुन्मुद्रयत्सामान्यपरम्परयाप्रेमाविष्टमन्तःकरणमावेदयति । यदिज्यो
तिरादेस्तमःप्रभृतीनामुद्गमःस्यादपिप्रियादप्रियमितिसर्वथैवनिषेधे
विधातव्येप्रत्यक्षपरिकल्पितस्यान्यथाकर्तुमशक्यत्वात्प्रमेयविरोधम
सहमानाविधत्तेचनिषेधतिचेतिनिषेधविधिप्रसङ्गेविधिनिषेधरूपाभ
णितिर्भवति।५।दृश्यमिति । यद्यपि द्वाभ्यामेकेनाल्पीयसाचनेत्राभ्या
म्मनसासुकृतेनचवयसोयौवनस्यदृश्यत्वविभावनीयत्वभोग्यत्वानिप्र
तीतिमुखमवतीर्णानितथापिजीवितसर्वस्वभूतायामितरकामिनीसा

शतकोटिभोग्याङ्कमपिवचःसुभ्रुवःस्वदते । अत्रव
योरामणीयकातिशयस्यदृक्सहस्रादिभिरेवावलोक
नीयत्वादियोग्यताकल्पनादियङ्कल्पनाभणितिर्वि
धिनिषेधेनिषेधविधिरूपा ॥६॥ १॥ वाक्येशब्दार्थ
योःसम्यग्रचनागुम्फनास्मृता । शब्दार्थक्रमपर्याय
पदवाक्यकृताचसा॥१॥तासुशब्दकृतायथा । रामा
भिषेकेमदविह्वलायाःकराच्च्युतोहेमघटस्तरुण्याः।
सोपानमासाद्यचकारशब्दंठठंठठंठठठंठठठंठठ
ठठंठः । सेयंठठंठमित्यादेर्निरर्थकस्यश्लोकपाद
स्यार्थानुगुण्येनवाक्येरचितत्वाच्छब्दरचना ॥१॥ अ
र्थकृतायथा।दिक्कालात्मसमैवयस्याविभुतायस्तत्रवि

धारण्यामितरसाधारण्यमसहमानोदृगादिसामान्येसहस्रत्वादिकङ्क
ल्पयन्साधारणधर्मनिषेधसरणिमारुह्यविशेषंविधत्ते । सेयम्भणितिर्वि
धिनिषेधप्रसङ्गेनिषेधघटकद्वाराविधिरूपाभवतीत्याशयःविस्तरः॥६॥
वाक्यइति।एकार्थप्रतिपादनावच्छिन्नःशब्दसमुदायोवाक्यन्तस्मिन्वि
षयभूतेआनुपूर्व्येणग्रथनंरचनासाकथमतिप्रसक्ताप्यलङ्कारइत्यतआ
ह।सम्यगिति। प्रकृतपरिपोषाधानलक्षणमौचित्यमापन्नेत्यर्थः। वाक्य
त्वमर्थशब्दाभ्यांविशेषणविशेष्याभ्यांव्यवतिष्ठते । तेनद्वयोरेवगुम्फना
समाप्यतइत्याशयेनशब्दार्थयोरित्युक्तम् । तत्रशब्दोद्विविधोवाच्यउ
पाधिश्च । प्रतिपादकशब्दोद्विरूपःपदवाक्यभेदात् । पदन्द्विधापर्या
यभूतरूपमतथारूपञ्च । तदेतद्विधतावैचित्र्यमङ्गीकृत्याविभजते ।
शब्दइति । अप्रतिपादकःशब्दःशब्दपदेनोक्तः । अर्थोवाच्यः।क्रमग्रह
णमुपाध्युपलक्षणम् ॥१॥ रामेति । राज्याभिषेकोत्सवजातहर्षायाःकरा
त्प्रच्युतस्यसोपानपरम्परासुस्खलतःकाञ्चनकलशस्यभूभागप्राप्तियाव
त्क्रमेणोच्चरन्तीशब्दमालानुकृतेतिप्रकृतार्थानुगुण्यम् । एवंहिकरच्यु
तमपिनसम्भावयतीतिकोपिमदप्रकर्षोव्यज्यते ॥१॥ दिक्कालेति । दि

द्योततेयत्रामुष्यसुधीभवन्तिकिरणाराशेः सयासाम
भूत् । यस्तत्पित्तमुषस्सयस्यहविषे यस्तस्य जीवात
वेवोढायद्गुणमेषमन्मथरिपोस्ताः पान्तुवोमूर्त्तयः ।
सेयंव्योमादीनामष्टानामपिमहेशमूर्तिलक्षणानाम
र्थानामुत्तरोत्तरसङ्कलनयारचितत्वादर्थरचना ॥२॥
क्रमकृतायथा । नीलाब्जानान्नयनयुगलद्राघिमा
दत्तपत्रः कुम्भावैभौकुचपरिकरः पूर्वपक्षीचकार । भ्रू
विभ्रान्तिर्मदनधनुषोविभ्रमानन्ववादीद्वक्त्रज्योत्स्ना
शशधररुचन्दूषयामासयस्याः । अत्रपत्रदानपूर्वप
क्षोपन्यासानुवाददूषणोद्भावनानाम्बुधजनप्रसिद्ध

ककालात्मतुल्यंसर्वमूर्त्तसंयोगाश्रयतालक्षणंविभुत्वमाकाशस्यैवतस्मिन्न
र्थाद्वितीयेयच्छब्दोयमुद्देश्यगामीनिविशतेतमुपजीव्यतच्छब्देनप्रतिनि
र्देशोयुक्तः । आकाशेविशेषेणचन्द्रतारादितेजोभिभवसामर्थ्यलक्षणेन
द्योततेभगवानादित्यइतियच्छब्देनतमुद्दिश्योत्तरवाक्येऽदसाप्रतिनि
र्दिष्टवान् ॥ कर्णगत्याप्रतिफलिताः सूर्यकिरणाः सलिलमयेशशिन्येवसु
धाव्यपदेशंलभन्तेतत्रैवयच्छब्दोनिविष्टस्तदुपनीतमर्थमुत्तरस्तच्छब्दो
विषयीकरोतीत्यादिअपामेवराशेश्चन्द्रोजातस्तासाम्पित्तंवह्निस्तस्यसा
यस्मातराहुतयेयजमानः सवायुनाजीवति । सचपृथिवीगुणङ्गन्धंवह
तीतिपूर्वपूर्वसङ्कलनेनोत्तरंवाक्यार्थरचनाविहितेति । यद्यपिचार्थगु
म्फेशब्दगुम्फोध्रुवभावीतथापिप्रथमानुसन्धेयमर्थगुम्फनमेवात्रप्रधा
नमितितेनैवव्यपदेशोयुक्तइत्याशयवान्व्याचष्टे । अत्रेति । यदीयंस
ङ्कलनप्रतिसन्धीयतेकथम्परमेश्वरमूर्त्तयोष्टौलभ्यन्तइतिभावः ॥२॥ नी
लाब्जेति । पत्रदानेस्पर्द्धाव्यज्यते । साचसादृश्यपर्यवसायिनीतिप्रती
यमानोपमा । इभकुम्भपूर्वपक्षीकरणेनकुचाभोगस्यसिद्धान्तभावोवग
म्यते । तथाचव्यतिरेकोध्वनितः । अनुवादेनाप्युपमाप्रतीयतेदूषणे
नव्यतिरेकइतिप्रकृतपर्यवसानेसमासोक्त्यायत्रदानादीनांविद्वद्वादि
प्रसिद्धानांशब्दानभिधेयएव क्रमउपाधिभूतोग्रथित इत्युदाहरणव्या

क्रमेणरचितत्वादियंक्रमरचना ॥ ३ ॥ पर्य्यायकृता यथा । कणइल्लिच्चिअजाणईकुन्तपल्लसाइकीरसंलवई । पूसअभासम्मुचसुणहुरेहन्धह्लवाम्प्राडी । सेयंशुकनामपर्यायाणामर्थानुगुण्येनरचितत्वात्पर्यायरचना ॥ ४ ॥ पदकृतायथा । लोलल्लाङ्गूलवल्लीवलयितबहुलानोकहस्कन्धलोलैर्गोलाङ्गूलैर्नदद्भिःप्रतिरसितजरत्कन्दरामन्दिरेषु । खण्डेषूद्दण्डपिण्डीतगरतरलनाःप्रापिरेयेनवेलामालम्ब्योन्नालतल्लस्फुटितपुटकिनीबन्धवोगन्धवाहाः । अत्रलाङ्गूलवलयितबकुलैर्नदद्भिर्गोलाङ्गूलैःप्रतिरसितकन्दरामन्दिरेषुखण्डेषुपिण्डीतगरतरलनाःपुटकिनीबन्धवोगन्धवाहावेलामालम्ब्ययेनप्रापिरेइत्यतोधिकानामपुष्टार्थानामपिपदानामनुप्रासायच्छन्दःपूरणाय

च्यानग्रन्थार्थः॥३॥कणइल्लिच्चिअ । केनचिद्विटेनशुकभाषामनुकुर्वताप्रियायाम्परिहासआराब्धः सातस्यदुर्विदग्धत्वमाकलयन्तीतदुचितमुत्तरमदात् । शुकप्रलपितान्किलशुकीजानातिनान्या नचाहंशुकी । ततोविफलस्तवायम्प्रयासइत्यर्थः । अत्रकुन्तकीरपूसशब्दाःशुकपर्यायाः । कणइल्लीवाम्प्राडीशब्दौशुकीपर्यायौ । तत्रापिकीरशब्दस्तत्समः । अन्येदेशीरूपाः । तदेतेषाम्पर्यायाणांयथोक्तरूपानुगुणानामेकत्रवाक्येगुम्फनमेवकविसंरम्भगोचरइति॥४॥लोलल्लाङ्गूलवल्लीति । लाङ्गूलवलयितेत्यादियथोक्तवाक्यविरचनमात्रेणैवप्रयोजनपरिग्रहेसिद्धेयदधिकानांलोलल्लीप्रभृतिपदानामावापस्तेनविनानोचितानुप्राससिद्धिर्नघतयाविनावृत्तौचितीसमाप्यते । नवातामन्तरेणलाङ्गूलादीनामभिमतास्तेतेविशेषाःप्रतीयन्तइतिपल्लवप्रतिष्ठैवहिसरस्वतीसहृदयानावर्जयतीति । वाक्यप्रतीतिमात्रार्थानुपात्तेषुपदेषुयः । उपस्कारःपदैरन्यैःपल्लवन्तम्प्रचक्षते ॥ अपल्लवन्तुयद्वाक्यङ्कविन्यस्तन्नरोचते ।

चार्थानुगुण्येनरचितत्वादियम्पदरचना ॥ ५ ॥ वा
क्यकृतायथा । पतिश्वश्रुरताज्येष्ठेपतिदेवरतानुजे ।
मध्यमेषुचपाञ्चाल्यास्त्रितयंत्रितयंत्रिषु । इहमह
तोर्थस्याल्पीयसाग्रन्थेनाभिधानमिति व्युत्क्रमेणा
पिग्रन्थलाघवायवाक्यार्थोरचितइतीयंवाक्यरचना
॥ ६ ॥ १० ॥ शय्येत्याहुःपदार्थानांघटनायाम्परस्प
रम् । साप्रक्रान्तेनकस्मिंश्चिदप्रक्रान्तेनकुत्रचित् ॥१॥
अतिक्रान्तेनकुत्रापिपदार्थेवर्णयोःक्वचित् । वाक्या
र्थेवाक्ययोःक्वापिप्रकीर्णानाञ्चदृश्यते ॥ २ ॥तासुप्र
क्रान्तघटनायथा । सतथेतिप्रतिज्ञायविसृज्यकथ
मप्युमाम् । ऋषीञ्ज्योतिर्मयान्सप्तसस्मारस्मरशा
सनः । सेयम्प्राप्तर्षीणामागमनस्यप्रक्रान्तस्यैवघ
टना ॥ १ ॥ अप्रक्रान्तघटनायथा । अत्राप्युदा
हरन्तीममितिहासम्पुरातनम् । निषादस्यचसंवा

---

प्रयुज्यतेतथाभूतमुदीच्यैःकविगर्हितम् । तदिदमाह । अत्रेत्यादि ।
॥५॥ वाक्यरचनातुमहावाक्यएवभवतीति । तथाहि । पतिश्वशुरते
त्यादिकमल्पाक्षरमेववाक्यम्महतोर्थराशेःसमर्पकमितिभावयतांसहृद
यानाङ्कविस्वशक्तिरप्रत्यूहैवप्रकाशते।अतएवशक्तितिरस्कारादाद्यन्ता
वभिधायमध्यमाभिधानेक्रमस्त्रंशोपितिरस्क्रियतइत्याह।अत्रेति ॥६॥
शय्येति । किञ्चिदेकंवस्तुबुद्धौसमाधायतदधिकारप्रबन्धरचनायामधि
कस्यान्तरान्तराप्रकृतेयोजनाशय्या । पदार्थानांप्रस्तुताप्रस्तुतवस्तूना
म् । तच्चयोजनीयंशब्दार्थभेदेन द्विविधम् । तत्रवस्तुवाक्ययोरेवयो
जनामहाकविप्रबन्धेषुदृश्यते । अर्थस्तुप्राकरणिकार्थोपयोगीतदनुयो
गीचेतिद्विविधः।द्वितीयोप्यतिक्रान्तोतथाभूतश्चेतिपूर्ववद्विभागवाक्यं
व्याख्येयम्॥१॥पदार्थम्पदसिद्ध्यर्थमेवंवाक्यार्थमिति॥२॥सेयंसप्तर्षीणामि
ति । गौरीपरिणयप्रापकतयाप्रकरणसङ्गतसप्तर्षिवृत्तान्तः ॥१॥ इयमप्र

दमृषेः संवरणस्य च । सेयमप्रक्रान्तस्य निषादसंवरणसंवादस्य घटानादप्रक्रान्तघटना ॥ २ ॥ अतिक्रान्तघटना यथा । तस्य च क्रुश्चमत्कारं व्यतीतसमयाश्चपि । स्मितार्द्रमुकुलोद्भेदाः कदम्बवनराजयः । इयमतिक्रान्तस्यापि कदम्बवनराजीनामार्द्रमुकुलोद्भेदस्य विरहिमनश्चमत्कारिणो रामस्य स्मृतिद्वारेण घटनादतिक्रान्तघटना ॥ ३ ॥ पदघटना यथा । छिन्नेन पतता वह्नौ यन्मुखेन हठात्कृते । स्वेति हेति हरेणोक्ते स्वाहासीत्स रावणः । इयं स्वेति हेति वर्णाभ्यां स्वाहेति पदस्य घटितत्वात्पदघटना ॥ ४ ॥ वाक्यघटना यथा । हंसप्रयच्छ मे कान्तां गतिस्तस्यास्त्वया हृता । विभावितैकदेशेन स्तेयं यदभियुज्यते । इयम्पूर्वशास्त्रनिबद्धस्योत्तरार्द्धस्य तदर्थाननुयायिनापि प्रस्तुतार्थाविरुद्धेन पूर्वार्द्धेनैकवाक्यतयैव घटितत्वाद्वाक्यघटना ॥ ५ ॥ प्रकीर्णघटना यथा । एक्कहिं अच्छिहिं सावणु अण्णहिं भद्दवउ माउ महि अलसत्थरि

---

क्रान्तस्येति । संवरणनिषादसंवादस्य पूर्वापरप्रकरणानुपयोगेपीति हासरूपेणसङ्गतिः ॥२॥ इयमतिक्रान्तस्यापीति ॥ कदम्बकुसुमोद्भेदस्य प्रत्यक्षस्यैव विरहिजनतातङ्कदायित्वं सम्भवतीति कथमतीतस्य तद्रूपस्येत्युक्तं "स्मृतिद्वारेणेति । सङ्कल्पवशेन प्रत्यक्षायमाणस्येत्यर्थः ॥ एवमनागतयोजनापि गुणादिना बोद्धव्या ॥३॥ इयं स्वेति । स्वाहाकारप्रदानो होमस्तत्र सद्यश्छिन्नेन शिरसा प्राणशेषयोगात्पदार्द्धमात्रे निष्पादिते तदैवम्भूतकरुणासन्तानशान्तात्मना परमेश्वरेण खेदाविकारवाची हाशब्दः प्रयुक्तस्तेनैव निरन्तरमुच्चरता स्वाहापदं सिद्धमिति ॥४॥ इयम्पूर्वशास्त्रेत्यादि सुगमम् ॥५॥ अत्रश्रावणादीनामिति । प्रकीर्णं विकीर्णमनेकत्र

गण्डस्थलेसरउ । अङ्गहिगिह्मसुहच्छितिलअणमग्ग
सिरुमुद्दिहिमुहपङ्कअसरिआत्रासिउसिसिरु । अ
त्रश्रावणादीनामयुगपद्भावित्वेनविप्रकीर्णानांघट
नादियम्प्रकीर्णघटना । प्रकीर्णशब्दश्चायंशेषवाची
तेनान्यासामपिप्रकीर्णघटनानामिहावकाशोभवति
तेनयाइमामहाकविप्रबन्धेषुमुख्यगौणीलक्षणातद्भा
वापत्तिरुपचरितालक्षणेतिशब्दवृत्तयस्ताअपीहप्र

प्रतीतमितियावत् । तद्द्विविधङ्कालतोदेशतश्च ॥ अत्रहिश्रावणादि
मासर्तुषट्कस्ययुगपदसम्भवत एकत्रविरहिणीशरीरेयुगपद्भावोनिब
द्धःसगुणवृत्तिव्यपाश्रयेणश्रावणादिपदेप्रतिपाद्यमानःप्रवासविप्रल
म्भप्रकर्षमावेदयतीति । एवन्देशविकीर्णघटनाप्युदाहार्या । यथा । अ
मृतममृतञ्चन्द्रश्चन्द्रस्तथाम्बुजमम्बुजंरतिरपिरतिःकामःकामोमधूनि
मधून्यपि । इतिनभजतेवस्तुप्रायःपरस्परसङ्करन्तदियमबलाधत्तेभा
वान्कथंसकलात्मकान् । यस्त्वत्रसिद्धादिभेदःकश्चिदुपवर्णितःसतथा
नचमत्कारकारीतिग्रन्थगौरवभयादुपेक्षितोस्माभिः । तत्तदनेकासा
धारणरूपाण्यपिप्रकीर्णानिप्रकीर्णपदेनग्राह्याणि । तेषामनुक्तान्यत
यावोपग्रहोपिप्रयुज्यतइत्याह । प्रकीर्णशब्दश्चायमिति । व्याख्या
नान्तरप्रयोजनमाह । तेनेति । शब्दस्यार्थप्रतिपादनशक्तिरभिधा ।
सात्रिधामुख्यागौणीलक्षणाच । तासुमुखमिवप्रथमंयस्यामर्थःप्रतीय
तेसामुख्यातथाभूतार्थातद्भावापत्तिश्च । तत्रावान्तरार्थसम्बन्धविषया
तथाभूतार्था ॥ यथा॥ क्षात्मेन्दुवह्निपवनार्कमहीपयोभिरष्टाभिरेवत
नुभिर्भवतासमस्ते । व्याप्तेजगत्यपरमिच्छतियोत्रवक्तुंकोन्योगतत्रपत
यासदृशोस्तितेन । सैवार्थान्तरस्यार्थसम्बन्धविषयातद्भावापत्तिः ।
अतथाभूतस्यतथात्वापादनंहिसा । अतएवस्वतोन्यतोवास्वार्थाव
च्छिन्नस्यसाक्षादभिधानशक्तिरेवमुख्येत्याचार्याः । यथा । [कमलाअ
रणासणिआहंसाउड्डाविआणअपिउच्छा । केणविगामतडाएअब्भंउ
त्ताणअंवूढम् ] । गुणव्यवहितार्थागौणी । गुणनिमित्ताउपचारनिमि

त्ताच । तत्र द्वयोर्यत्रद्रव्यवचनयोःसामानाधिकरण्येनवैयधिकरण्येन वाप्रयोगेविशेषणविशेष्यभावान्यथानुपपत्याप्रतीयमानाभिधीयमान गुणद्वारकसम्बन्धोभवतिसागुणनिमित्ता । यथा । [ पडिवक्खमणुपु ञ्जेलावण्णकुण्डेअणङ्गगअकुम्भे । पुरिससअहिअअभरिएकीसखल त्तीथणेवहसि ] । मुख्ययागौण्यावान्यविशेषणस्यान्यत्रप्रयोगउपचरि तासापिगुणयोगमुपजीवन्तीगुणवृत्तिरेव । एतावांस्तुविशेषोयद्गुण निमित्तायामभिधेयगुणयोगइहतुस्वाभिधेयविशेष्यगुणयोगइति । य था । परार्थेयःपीडामनुभवतिनिर्व्योजमधुरोयदीयःसर्वेषामिहखलु विकारोप्यभिमतः । नसम्प्राप्तोवृद्धिंसपदिभृशमक्षेत्रपतितःकिमिक्षो र्दोषोयन्नपुनरगुणायामरुभुवः । स्वार्थसम्बन्धव्यवहितालक्षणा । त दुक्तम् ॥ अभिधेयाविनाभूतप्रतीतिर्लक्षणेतिया । सैषाविदग्धवक्रो क्तिजीवितंवृत्तिरिष्यते । साद्विधा । शुद्धालक्षितलक्षणाच । तत्रसा क्षात्स्वार्थसम्बन्ध्यविनाभूतविषयाशुद्धा । यथा । यत्तालीदलपाकपा ण्डुवदनम्,. अभिनवकरिदन्तच्छेदपाण्डुःकपोल,,इति । यथापूर्वपूर्व लक्षितमेवलक्ष्यतेसालक्षितलक्षणेतिकेचित् । यथा । मधुद्विरेफःकु सुमैकपात्रे,, भीमोभीमपराक्रम,,इति । अत्रहिद्विरेफादिनाशब्देनल क्षितएवभ्रमरप्रभृतिर्लक्ष्यतेनतुकुररादिः । अन्येतु लक्षणाव्यवहिता लक्षणालक्षितलक्षणेत्याहुः । यथा । सुवर्णपुष्पांपृथिवींचिन्वन्तिपु रुषास्त्रयः । शूरश्चकृतविद्यश्चयश्चजानातिसेवितुम्,, । तद्वायापत्त्या दिविशेषसमभिव्याहारेणमुख्यादिशब्दात्तदितरतथाभूतस्वागोचरा इतिपूर्ववद्व्याख्येयम् ॥ क्वपुनःपदेकावृत्तिरित्यतआह । अत्रेति । एक्क हिअच्छिहिं अण्णहिम्महिअलसत्थरे गण्डत्थलेअङ्गहिम् । इत्या दिषडाधारवचनाः । अत्रयद्यपिगण्डस्थलपदङ्गौणमेवतथाप्यनादि प्रयोगयोगितयामुख्यकल्पमितिषट्स्वाधारवचनेष्वित्युक्तम् । अङ्गादि पदानिचस्वार्थविशिष्टान्यपराण्येवप्रयुक्तानीतिमुख्यैववृत्तिः । एव म्मुग्धायाइतिसम्बन्धिपदेपि । मुहच्छितिलवणेमुहपङ्कअसरिइतिद्वा वाधारवचनौशेषौ । अत्रतिलवनसरःपदयोःस्नेहनिर्भरत्वसरसत्व लक्षणगुणद्वारकैवसुखासिकामुखपङ्कजयोर्वृत्तिः । मुखपङ्कजसरसीत्य

यन्ते। यत्रादितःषट्स्वाधारवचनेषुमुग्धायाइतिस
म्बन्धिपदेचमुख्या। शेषयोर्द्वयोराधारवचनयोर्गौ
णी। श्रावणादिषुचतुर्षुमासवचनेषुलक्षणा। षट्
स्वपिचाधेयवचनेषु वर्षादिषुलक्षिताभिहितेष्वपि
युगपदसम्भवत्सुश्रुतार्थापत्तिलभ्यातावद्भावापत्तिः।
आवासितइतिक्रियापदेचोपचरिताव्यक्तमेवप्रती
यते। लक्षितलक्षणापिचैतास्वेवव्याख्यानतउन्मि
षति। तथाह्यावासितशब्दोयमभिमतप्रदेशनिवेशि
तमहापरिच्छदेमहाराजादौनिरूढाभिधानशक्तिः।
सउपचारेणश्रावणादिषु प्रयुज्यमानस्तेषामपिमह
त्त्वमभिलक्ष्यमहापरिच्छदतामहासम्भवत्त्वंच लक्ष
यन्प्रस्तुतायाअपिप्रवृत्तेर्महान्तमनुबन्धंलक्षयति।

---

अयद्यपिपदद्वयङ्गौणन्तथापिपङ्कजपदस्यवृत्तिराभधातुल्येतिनकविसं
रम्भगोचरस्तेनव्यवहारोयुक्तः। सावणभद्दवअसाहवमग्गसिरुइतिच
त्वारोमासवचनाः। तेचस्वार्थसम्बन्धव्यवहितंवर्षाप्रभृतिसमुदायंल
क्षयन्तीति। वक्ष्यमाणरीत्यावर्षादयःषडाधेयवचनास्तेचविरहवती
शरीरेयुगपत्त्वासम्भवदवस्थितयोजलादिसम्पदादिस्वस्वप्रवृत्तिनिमि
त्ताध्यासेनप्रयुज्यमानास्तद्भावापत्तिरूपांवृत्तिमासादयन्ति। अस्या
श्चविवर्त्तपरिणामाध्यासादयःषट्प्रकारागौरवभियानदर्शिताः। श्रुता
र्थानुपपत्तिमूलाकल्पनाश्रुतार्थापत्तिः। राजादेरासितेआवासितश
ब्दोमुख्यवृत्त्यैवविशेषणतयारूढः॥ सस्वविशेषगुणव्यवहितेर्थान्तरे
प्रयुक्तोगौणीवृत्तिमनुप्रवन्वसन्तादेरपिविशेषणतामासादयति। ल
क्षणाव्यवहितालक्षणा लक्षितलक्षणा॥ साकथमावासितेतिशब्देसम्प
द्यतइत्यतआह। सउपचारेणेति। कथञ्चित्सारूप्येणश्रावणादिषुप्र
योगादुपचारस्तमुपजीव्यप्रयुक्तःस्वार्थाविनाभूतमहत्त्वादिकम्प्रकृते
षुलक्षणयासंक्रामयतीति॥ आद्यालक्षणातद्व्यवहितान्द्वितीयामाह।

तेचयुगपल्लोचनादौचानुपपद्यमानस्थितयःस्वशब्द शक्तितस्तत्रतत्रचनिवेश्यमानाः स्वधर्मसम्पदः प्रत्यासन्नायान्तद्धर्मसम्पदमुपलक्षयन्ति । असावसौविरहवत्यावियोगवेदनातिशयं लक्षयन्तीकमितरि स्नेहातिशयं लक्षयति । तत्र श्रावणोभाद्रपद इत्येताभ्यामवयवाभ्यां वर्षर्तुर्लक्ष्यते। सच लोचनयोरनुपपद्यमानस्थितिरपिविभक्तिश्रुत्यानिवेशितः पयःपृषत्प्रवाहलक्षणायाःस्वधर्मसम्पदःप्रत्यासन्नामविच्छिन्नाश्रुसम्पदमुपलक्षयन्समागमोत्कायाउत्कण्ठातिशयंलक्षयति । माधवइत्युत्तरावयवेनवसन्तोलक्ष्यते। सोपिमहीतलस्तरेनुपपद्यमानस्थि

प्रस्तुतायाअपीति । आवासितस्यापिहियथोक्तविशेषणस्यपरदुर्गग्रहणादौमहाननुबन्धोदृष्टःसइहप्रस्तुतायांविरहवतीसन्तापलक्षणायाम्प्रवृत्तौलक्ष्यतेइत्येकलक्षणाव्यवधानेनेयंलक्षणा । एवंलक्षणाद्वयव्यवधानेनापिभवतीत्याह । तेचेति । श्रावणादयःस्वधर्मसम्पदोनिरन्तरवर्षणादेःस्वार्थाविनाभावेनलक्षितायाःप्रत्यासन्नासदृशीतेषांलोचनादीनान्धर्मसम्पदश्रुप्रभावादिलक्षणालक्ष्यतइतिद्वितीयालक्षणा । तत्पुरःसरांतृतीयामाह । असावसाविति । एवंलक्षणात्रयपूर्वापिलक्षणाबोद्धव्येत्याह । कमितरीति । स्नेहप्रतीत्यातुविभावादिसंवलितयारसोव्यज्यतेनतुलक्ष्यतइत्यन्यत्रविस्तरः । कस्याःपुनःस्वधर्मसम्पदःप्रत्यासन्नाकातद्धर्मसम्पदित्यतोविवेचयति ॥ तत्रेति । यदिश्रावणादिपदेषुसमुदायलक्षणानस्यात्तदामासानुपक्रम्यऋतूनामभिधानेप्रक्रमभेदोभवेत् । नभवेच्चतत्तदृतुप्रतीतऋतुसम्पत्प्रतीतिःक्वचिदितियुक्तैवसमुदायलक्षणा । एताभ्यामिति । प्रत्येकन्तुपदद्वयेलक्षणासम्भवति । विभक्तिश्रुत्येति । सप्तमीप्रथमाविभक्तिभ्यामाधाराधेयभावःस्वशक्त्याप्रतिपाद्यतेतदनुपपत्त्यार्थान्तरलक्षणाप्रादुर्भवति।

तिः प्राग्वदेवशब्दशक्त्यानिवेशितःकुसुमकिसलयमृ
णालकमलिनीदलादिकायाःस्वधर्मसम्पदसमासन्नां
शिशिरोपकरणसामग्रीमुपलक्षयन्कामवत्याःशरीरा
न्तस्तापंलक्षयति। शरदित्यनेनऋतुविशेषोभिधीय
ते। सगण्डयोरनुपपद्यमानस्थितिःप्रशंसावचनस्या
पिस्थलस्यानुस्वानशक्त्यासमाकृष्यमाणःकाशकुसुम
हंसागमनकुमुदसरःप्रसादचन्द्रातपादिकायाःस्वधर्म
सम्पदः समासन्नङ्गण्डयोःपाण्डुभावं लक्षयन्मृगेक्ष
णायाविरहकार्श्यमुपलक्षयति।ग्रीष्मइत्यनेनापिऋ
तुविशेषएवोच्यते। साप्यङ्गनाङ्गेनुपपद्यमानःसूर्यांशु
कार्कश्यप्रतप्तपांसुतापपरुषोष्मानिलत्वदावाग्निका
लुष्यादेःस्वधर्मसम्पदःसमानानीकभूतपूर्वानङ्गज्वर
लिङ्गसम्पदमुपलक्षयति। मार्गशीर्षशीर्षइत्यनेनतुपू
र्वावयवेनहेमन्तोलक्ष्यते। तेनचयथाहेमन्ते तिलव
नंलूयतेतथास्याःसुखासिकासाम्प्रतंलूयतइति लक्षि
तेनातिशायिनीमनःपीडोपलक्षिताभवति। कापुनः

एवञ्चैत्रवैशाखसमुदायात्मनोवसन्तस्योत्तरावयवोवैशाखस्तद्वाचकेपि
माधवपदेसमुदायलक्षणाद्वारेणलक्षणाभवति । प्रशंसावचनस्यापी
ति। गर्भीकृतसारूप्याहिव्याघ्रादयउपमेयवाचिभिःसमस्यन्ते। तच्च
सारूप्यमप्रकर्षलक्षणमेवेतिप्रशंसापरत्वेस्थितेनाभिधेयमप्रतीत्यसारू
प्यंवारूपान्तरंवाप्रत्येतुंनशक्यतइत्यभिधेयप्रतीत्यनुनिष्पादिनीघण्टा
नुस्वानसोदरास्वधर्मसम्पद्यथोक्ताप्रतीयते । स्वनेकिलशरदाकाश
कुसुमहंसादिकास्वसम्पद्विस्तार्यते । नमुखचन्द्रादिवत्सुखासिकाति
लवनयोःसादृश्यप्रतीतिर्नच तदभिधीयमानङ्किञ्चिदत्रास्तीतिपृच्छ
ति। कापुनरिति। माभूत्तथाप्रसिद्धिःकवेरभिप्रायारूढातुप्रतीयतइ

सुखासिकातिलवनयोःसमानधर्मतायेयंस्नेहनिर्भर
तानाम । अभिसारिकाणाञ्चप्रायेणतिलवनाब्
जिनीखण्डयोरेवबहुमानप्रसिद्धिः । यदित्थमाह ।
आत्तातहरमणिज्जंअह्मङ्गामस्समण्डणीहूअम् । लु
अतिलआडिसरिच्छंसिसिरेणकअम्मिसिणीसण्डम् ।
अतएवायमुत्तरवाक्येकमलसरश्शब्देनाब्जिनीखण्ड
मपिनिर्द्दिशति । तद्यथा । मुद्धहिमुहपङ्कअसरि
आवासिउसिसिरु । तत्रशिशिरइत्यनेनऋतुविशे
षेणमुग्धामुखेपिपद्मसरसीवशब्दशक्त्यानिवेशितेन
कमलवनोपप्लवादेःस्वधर्मसंपदोलोकप्रतीतायाः प्र
त्यासन्नामुग्धामुखाम्भोरुहलोचनोत्पलस्मितकुसुम
दशनकेसरादेश्छायापरिम्लानिर्लक्ष्यमाणा विप्रल
म्भानुभावप्रकर्षमुपलक्षयति । शिशिरलक्ष्मीवर्णनप्र
स्तावाच्चमुखमर्द्धंशरीरस्यसर्वंवामुखमुच्यत, इतिप्र
स्थानप्रधानलक्षणयासर्वर्तुभ्यः शिशिरएवप्रधानमि

---

त्युत्तरमाह । येयमिति । ननुस्नेहोनामद्वयोरेकःकश्चिदस्तिनचानभि
धीयमानमपिसादृश्यंशब्दसामान्यमाश्रयलइत्यतःप्रकारान्तरमाह ।
अभिसारिकाणाञ्चेति । कथमेतदवगतमित्यतआह । यदित्यमिति।
ननुकमलिनीशब्दस्यात्रबहुमानगोचरताप्रतिपादितानतुतिलवनस्ये
त्यतआह । अतएवेति । उपमानोपमेययोर्द्वयोरपिकामिनीबहुमान
गोचरतांवितरन्तीशिशिरेणसाम्प्रतन्तिलवाटिकालवनमपिवर्त्ततइत्य
भिप्रैतीतिभावः । सुखमर्द्धंशरीरस्येत्यादिन्यायेनमुखशब्दःप्राधान्यं
लक्षयतिततोमुखपङ्कजसरसिशिशिरइतितद्भावापत्त्याहेमन्तस्यापिऋ
तुषुप्रथमतयाप्राधान्यमेवद्योतितमिति । तदुक्तम् । [ पडिकम्मदूइपे
सणमाणग्गहणेसुभासुरपहुप्पन्तो । हेमन्तिओसुहाअइमलिणमिअ

त्यपि लक्षितम्भवति ॥६॥ १ १॥ काकुस्वर पदच्छेद भेदाभिनयकान्तिभिः । पाठोयोर्थविशेषाय पठितिःसेह षड्विधा ॥ साकाङ्क्षा यथा । यदि मे वल्लभा दूतीतदाहमपिवल्लभा । यदितस्याःप्रियाबाचस्तन्ममापिप्रियप्रिया । अत्रैकयाकाङ्क्षाविधिरन्ययानिषेधः प्रतीयते ॥१॥ स्वरेणयथा । सुभ्रूस्त्वङ्कुपितेत्यपास्तमशनन्त्यक्ताकथायोषितान्दूरादेवमयोज्झिताःसुरभयःस्रग्गन्धधूपादयः । रागंरागिणिमुञ्चममय्यवनतेदृष्टेप्रसीदाधुनासत्यन्त्वद्विरहाद्भवन्तिदयितेसर्वाममान्धादिशः । अत्रदृष्टेइत्यत्रप्लुतस्वरकरणात्कुपितकान्ताप्रसादनपरमपिइदंवाक्यमुत्कुपिलदृष्टिप्रसादनताम्प्रतिपद्यते ॥ २ ॥ पदच्छेदेनयथा । सर्वाक्षितिभृतान्नाथदृष्टासर्वाङ्गसुन्दरी । रामारम्ये

---

ङ्कोविकासिनीगायत्रोसो*] ॥६॥ काकुस्वरेति । किञ्चिदेकपरतयाप्रवृत्तमुच्चारणमर्थान्तरविवक्षयायदन्यथाक्रियतेसापठितिः । अन्यथाकरणञ्चकाकुप्रभृतिभिःषड्भिरिति । तत्र । भिन्नकण्ठध्वनिर्धीरैःकाकुरित्यभिधीयते । साद्विधा । विधिकाकुर्निषेधकाकुश्चतयोर्निषेधपरोच्चारणान्यथाकरणेनविधिपर्यवसायिनीविधिकाकुः । यथा । शल्यमपिस्खलदन्तःसोढुंशक्येतहालहलदिग्धम् । धीरैर्नपुनरकारणकुपितखलालीककटुवचनम् । एवंविधिपरोच्चारणान्यथाकरणेननिषेधव्यञ्जिकानिषेधकाकुस्तामुदाहरति । यदीति । यदिदूतीप्रियातदाहमपिप्रियेत्यादिऋजूक्त्याशठनायकविषयाकृत्रिमाप्रीतिःप्रतीयतेकाक्वातुतवैवनाहम्प्रियेतीर्ष्यारोषः ॥१॥ स्वराःप्लुतादयउदात्तादयश्च । नामीषांवेदवत्काव्येभूयान्प्रयोगइतिकिञ्चिदुदाहरति । सुभ्रूस्त्वमिति । चरणतलाग्रपतितेमयिदृष्टेसतित्वम्प्रसीदेतिदीर्घमात्रोच्चारणेकुपितकान्ताप्रसादपरत्वंयथोक्तप्लुतकरणेतुदूराह्वानादौतदनुशासनात्कुपितदृ

वनान्तेऽस्मिन्मयाविरहिता त्वया । अत्र मयाविर हितेत्येतावतिपदच्छेदे पुरूरवसस्त्वयेत्येतावतिपर्व तस्य वाक्यभेदो भवति ॥३॥ पदभेदेन यथा । येन ध्वस्तमनोभवेन बलिजित्कायः पुरास्त्रीकृतो योग

ष्टिसम्बोधनबुद्धिरुपजायते । अशनादयोहि द्वयोः साधारणा एवेति श्लेषोपादानमेवेति । एवंह्रस्वस्यदीर्घकरणेनदीर्घस्यह्रस्वकरणेनार्था न्तरप्रतीतिरवसेया । यथाविश्वामित्रोविश्वानरइतिऋषिराजर्षिविशे षौप्रतीयेते । यथायुवतीतिसंबोधनप्रतीतिः । एवमुदात्तादयोपियथा दर्शनमुत्प्रेक्षणीयाः॥२॥शृङ्खलाभङ्गःपरिवर्त्तकश्चूर्णमितिचत्वारश्छेदाः । तत्र पूर्वापरवर्णानामन्योन्यसङ्कलनयास्थितिः शृङ्खला । यथा । का न्तारतरलासितमृगयुवरचितान्तरेतिपठितिस्तदाप्रियासम्भोगमयि तहर्षितलुब्धकप्रचुरच्छन्नमध्येतिप्रतीयते । सेयमन्योन्यंवर्णसङ्क लनयाशृङ्खलेत्युच्यते । एकस्यशब्दस्यमध्येविच्छेदेनद्वैधीकरणमात्रम्भ ङ्गः । तमुदाहरति । सर्वेति । मयाविरहितेत्येतावतिसमुदायेमहि योगवतीत्वयादृष्टेत्यष्टमकामावस्थाविष्टस्यपुरूरवसःपर्वतविषयम्प्रश्न वाक्यम्भवति । यदातुमयेतिविच्छिद्यपूर्ववाक्यसम्बन्धिक्रियतेतदात्व याविरहितासतीमयादृष्टेतिपर्वतस्योत्तरवाक्यंसम्पद्यते । वर्णान्तरक ल्पनापरिवर्त्तः । यथाकलिकामधुगर्हणेति । अत्रयथाश्रुतवर्णपरिग्र हेकलिकामधुनोगर्हणानिन्देतिप्रतीयते । यदातुकलिकामधुगर्हणे तिवर्णान्तरकल्पनयाछेदस्तदापूजैवकलौकामधेनुरिति । पिण्डाक्षर विभागश्चूर्णम् । यथा । पश्यसलिलम्पयोधेर्दूरसमुन्मुक्तशुक्तिमीना ङ्कान्तमिति । अत्रयथाश्रुतेदुःखेनरसनीयमुद्भ्रान्तशुक्तिकोषमत्स्या ङ्कितपर्यन्तमितिप्रतीयते । यदातुदूरसमुन्मुक्तशुक्तिमीनाङ्कान्त मितिपिण्डचूर्णनेनच्छेदस्तदात्यन्तहर्षयुक्तेतित्यक्तशोकेतिचसम्बोध नद्वयंकृष्णस्यप्रतीयते॥३॥येनेति। ध्वस्तमनोभवेनदग्धकामेनबलिजि तोनारायणस्यकायःपुरात्रिपुरदाहव्यतिकरेऽस्त्रीकृतःशरतांनीतःग ङ्गाम्भागीरथीन्दधे । अन्धकोदैत्यविशेषस्तस्यक्षयोविनाशोबर्हिपत्रोम

ङ्गाऽच्चद्धेन्धकक्षयकरोयोबर्हिपत्त्रप्रियः । यस्याहुः
शशिमच्छिरोहरइतिस्तुत्यञ्चनामामराःसोव्यादिष्ट
भुजङ्गहारवलयस्त्वांसर्वदोमाधवः। अत्रयेनध्वस्तम
नोभवेनेत्यादेर्येनध्वस्तम्अनोभवेनेत्यादेश्चपदभे
दादुमाधवोमाधवइत्यर्थद्वयम्प्रतीयते। तयोश्चद्वयोर
पिप्राधान्येनोपपादनादङ्गाङ्गिभावेनप्रकृताप्रकृतरू
पतयाचानवस्थानात्परस्परमसम्बन्धेनायंश्लेषः ।
पदभेदेनतुपाठेपर्यायतोर्थद्वयप्रतीतेरियं श्लेषोपस
र्जनापदभेदपठितिः॥१॥ अभिनयेनयथा । एहहमेत्त

यूरवाहनः कार्त्तिकेयः शशिमच्चन्द्रकलाङ्कितंशिरोविश्वमोहच्छिदुर
स्यहरइतिस्तुत्यञ्चनामभुजङ्गाएवहारवलयानियस्यसर्वदासर्वकाल
मिति उमाधवपक्षे । माधवपक्षेतु । येनध्वस्तंविनाशितमनःशक
टमभवेन संसारबन्धरहितेनबलिर्ज्जितवान्यः कायःसपूर्वं समुद्रमथ
नावसरेऽमृतगृहयालुदैत्यव्यामोहनायस्त्रीरूपतान्नीतोऽगङ्गोवर्द्धना
ख्यङ्गाम्पृथिवीमेकार्णवमग्नामुद्धृतवानन्धकायदुविशेषास्तेषांक्षयोनि
वासः । बर्हिणोमयूरस्यपत्रम्पिच्छन्तत्प्रियोवर्हिपत्रकृतापीडमिति
गोपालध्यानेगौतमेनाभिधानात् । शशिनम्मथ्नातीतिक्विप्शशिम
द्राहुस्तस्यशिरोहरइतिस्तुत्यञ्चनाम । भुजङ्गहागरुडःसद्दष्टोयस्य ।
रवेशब्दब्रह्मशिलयोयस्यसतथा सर्वदोयावदभिमतप्रदइति । ननुवि
भिन्नरूपाणांशब्दानामुच्चारणेतन्त्रतयाश्लेषएवायन्नपठितिरित्यतआ
ह । तयोश्चेति । श्लेषोहिश्लिष्यमाणयोःपरस्परसम्बन्धेभवति । सच
सम्बन्धोरूपतात्पर्यसम्बन्धलक्षणोवाअङ्गाङ्गिभावोवाउपमानोपमेयभा
वोवायथाग्रेवक्ष्यते । नचायमेकोत्राभिमतःकिन्त्वेकपरमेवोच्चारणेप
दभेदेनार्थान्तरङ्गमयतीतिपठितिरेवेयम् । एतेनसमाध्युक्तिसमासो
क्त्योरपिभेदउक्तः । तत्किमुच्चारणतन्त्रतानास्त्येवेत्यतआह । श्ले
षोपसर्जनेति । यत्रहियस्यप्राधान्येनविवक्षातत्रतेनव्यपदेशोयुक्तः ।
अतएवविवक्षान्तरेणश्लेषव्यवहारोप्यत्रसमर्थनीयएव ॥४॥ एहहमेत्ते

स्थाणिआएद्दहमेत्तेहिं अच्छिवत्तेहिम्। एद्दहमेत्तात्र
स्थाएद्दहमेत्ते हिन्दिअहेहिम्। अत्रइयन्मात्रस्तना
दीनान्तथाभूतहस्ताभिनयैः सहपठनात्तथाविधार्थ
विशेषोगम्यते। अपदेशोऽप्यभिनयविशेषएव। यथा।
इतःसदैत्यःप्राप्तश्रीर्नेतएवार्हतिक्षयम्। इत्यात्मानं
मपादिश्य ब्रूते॥५॥कान्त्यायथा। यस्यारिजातन्नृ
पतेरपश्यदवलम्बनम्। यथौनिर्झरसम्भोगैरपश्य
दवलंवनम्। अत्रावलम्बनमवलंवनमितिपदेपद
द्वयेवाद्वितीयचतुर्थस्थानयोर्यौवकारबकारौ तयोर
न्तःस्थपवर्गान्त्याऽपवर्गान्तःस्थाभ्याञ्चकान्तिमति

ति। अत्रसर्वपदानामर्थान्तरसाधारणतयानतावदभिमतपरिमाणवि
शेषप्रतीतिरुपजायतेयावदुच्चारणसहकारिभूतप्रसारितकरद्वयकोषप्र
सृतिभिदङ्गुलिप्रसारिताङ्गुलीगणनारूपाभिनयप्रतिसन्धानन्नभवति।
तेनाभिनयपठितिरियं साक्षादिववस्तुस्वरूपबोधिकाक्रियाभिमुख्यन
यनादभिनयइत्युच्यते। तदिदमाह। तथाभूतेत्यादि। अपदेशो
पीति। आत्मनिर्द्देशिकाक्रियापदेशः। अस्याभिनयविशेषत्वेपिका
न्तिकरतयापृथगुपादानम्। यावन्नस्वरूपसमुच्चारणविशेषणन्नानुस
न्धीयतेनतावच्छ्रीप्राप्तिक्षयोःकारणविशेषःप्रतीयतइति॥५॥ यस्यारि
जातमिति। कान्तिश्छायासाअप्रतिहतरूपापदवर्णपुनसम्भवतीति
श्रुतिरूपागृह्यते। तथाहि। अवलम्बनमित्यत्रद्वितीयचतुर्थस्थानस्थ
योर्वकारबकारयोः क्रमेणान्तःस्थपवर्गभावानुसंधानेऽवलम्बनमित्येक
पदतायांत्राणहेतुमपश्यदित्यर्थःप्रतीयते। यदातुद्वितीयेऽवलम्बन
मित्यत्रतयोरेवपवर्गान्तःस्थभावानुसन्धानम्भवतितदाबलंवनमितिच्छे
देनपदद्वयसम्पत्तौबलरहितंसद्वनमरण्यंययावित्यर्थान्तरप्रतीतिरुप
जायते। तदिदमुक्तम्। पदेपदद्वयेचेति। अपश्यत्। शयनभोजन
शून्यंशयनंशीरदनमत्। निर्जरसम्भोगैःनिर्जरजलमात्रोपयोगैरतएव
बलरहितम्। अत्रचयमकेनसंसृष्टिरवबोद्धव्या। आवृत्तिमादाय

पाठेर्थभेदोजायते ॥ ६ ॥ अपरेपुनःपठितिमन्यथा
कथयन्ति। पदपादार्धभाषाणामन्यथाकरणेनयः।
पाठः पूर्वोक्तसूक्तस्य पठितिंतां प्रचक्षते ॥१॥ तत्र प
दान्यथाकरणन्द्वेधा । प्रकृतितोविभक्तितश्च । तत्र
प्रकृतितोयथा । असकलहसितत्वात्क्षालितानीव
कान्त्या मुकुलितनयनत्वाद्व्यक्तकर्णोत्पलानि । पि
बतुमधुसुगन्धीन्याननानिप्रियाणान्त्वयिविनिहि
तभारःकुन्तलानामधीशः । अत्रत्वयीत्यस्यस्थानेम
यीतियदापठ्यते तदैतत्प्रार्थनावाक्यमप्यनुमतिवा
क्यम्भवति ॥७॥ विभक्तितोयथा । सहभृत्यगणंस
बान्धवं सहमित्रंससुतं सहानुजम् । स्वबलेन निह
न्तिसंयुगेनचिरात्पाण्डुसुतःसुयोधनम्। अत्र यदा
पाण्डुसुतःयोधनमित्यस्यस्थाने"पाण्डुसुतंसुयोधन
मिति,, तदैतदमङ्गलार्थमपि सुयोधनेमङ्गलार्थम्भव
ति ॥ ८ ॥ पादान्यथाकरणेन यथा॥एकान्ते विज
नेरत्रावन्तर्वेश्मनिसाहसे। न्यासापह्नवनेचैवदिव्या
सम्भवतिक्रिया। अत्र तृतीयपादस्थाने"तन्वङ्गीयदि

---

त्कमन्यथाभविष्यति ॥६॥ अपरेपुनरिति । अन्यथेत्यतःपरमपिशब्दो
ध्याहार्यः।पादाद्यन्यथाकरणेनापिहिप्रकृतमुच्चारणमेवविशिष्यते। य
दाह । पूर्वोक्तसूक्तस्येति । अतएव श्लोकान्यथाकरणेनपठितिर्नसम्भ
वति । तेनप्रागुक्तभेदैःसहद्वादशप्रकारापठितिरितितात्पर्यम् । यद्य
पिचपादाद्यन्यथाकरणमपिपदभेदप्रकार एवतथापिनतत्रपूर्वोक्तत्या
गस्तुतत्परित्यागेनपदान्तरकल्पनमित्येतावान्विशेषः॥१॥तत्रपदंवि
भक्त्यन्तंविशेषणविशेष्यभेदेनद्विधाक्रियतइत्याह । पदान्यथाकरणंद्वे
धेति॥७॥८॥एकान्तइति । साहसेप्रच्छन्नाभिसारलक्षणे । प्रकाशात्प्रच्छ

लभ्येत,,इतिपाठोभवतितदेतत्परीक्षौपयिकमपिका मौपयिकम्भवति ॥ ९ ॥ अर्द्धान्यथाकरणेनयथा। तत्तावदेवशशिनः स्फुरितम्महीयोयावन्नतिग्मरुचि मण्डलमभ्युदेति। अभ्युद्यते सकलधामनिधौ तु त स्मिन्निन्दोःसिताभ्रशकलस्यचकोविशेषः। अत्रय दामध्यपादयोःस्थाने " यावन्नताःकिमपिगौरित राहसन्ति।ताभिःपुनर्विहसिताननपङ्कजाभिरिति,, पठ्यते तदेतद्वीरार्थोक्तिरूपमपिश्टङ्गारोक्तिरूपं स म्पद्यते ॥ १० ॥ पादत्रयस्यचान्यथाकरणेनयथा। त्यागेनयुक्तादिवमुत्पतन्ति त्यागेनहीना नरकंव्रज न्ति। नत्यागिनान्दुष्करमस्तिकिञ्चित्त्यागोहिसर्व व्यसनानिहन्ति। अत्रतुरीयपादमेवोपादायपादत्र यस्यचान्यथाकरणेनवक्ष्यमाणःपाठोभवति। तदेत त्त्यागप्रशंसार्थमपित्यागनिन्दार्थञ्जायते। यथा। "त्यागोहिसर्वव्यसनानिहन्तीत्यलीकमेतद्भुविस म्प्रतीदम्।जातानिसर्वव्यसनानितस्यास्त्यागेनमेमु ग्धविलोचनायाः,, ॥११॥ भाषान्यथाकरणेनयथा। किन्तादेणनरेन्दसेहरसिहालीढग्गपादेणमेकिंवामे ससुरेण वासवसहासीहासणद्धासिणा। ते देसा गि रिणो अ तेवणमही सज्जेअमेवल्लहाक्कोसल्लातणअ स्सजत्थचलनेवन्देअणन्दामिअ। अत्रयदिभाषान्त

लोगरोयानिलन्यायात् । दिव्यास्वभोगसोदराक्रियावल्लक्षणा ॥९॥ गौरितरेति। घरूपेत्यादिनापूर्वपदह्रस्वः॥१०॥एतेषाञ्चपदाद्यन्यथाक रणानाम्परस्परसङ्करोपिभवतीत्यावेदयति। पादत्रयस्यचेति॥११॥ भाषाभेदेनकथंस्त्रीपुंसवचनतागम्यतइत्यतआह। तदेतच्छौरसेनी

रेणपठ्यतेतदैतच्छौरसेनीभाषयासीतावाक्यंसंस्कृत भाषायां सुमन्त्रेण दशरथाय निवेदितम् । तद्यथा । "किन्तातेननरेन्द्रशेखरशिखालीढाङ्घ्रिपादेनमेकिं वामेश्वशुरेणवासवसभासिंहासनाध्यासिना। तद्देशा गिरयस्तेवनमही साचैवमेवल्लभाकौसल्यातनयस्य यत्रचरणौवन्दामिनन्दामिच,,।सेयमेवम्प्रकारापठि तिः ॥१२॥१२॥ विभिन्नार्थैकरूपाया यावृत्तिर्वर्णसंह तेः ॥ अव्यपेतव्यपेतात्मायमकंतन्निगद्यते ॥१॥ तद व्यपेतयमकं व्यपेतयमकं तथा ॥ स्थानास्थानविभा गाभ्यांपादभेदाच्चभिद्यते ॥ २ ॥ यत्रपादादिमध्या न्ताःस्थानन्तेषूपकल्प्यते ॥ यदव्यपेतमन्यद्वातत्स्था नयमकं विदुः ॥ ३ ॥ चतुस्त्रिद्व्येकपादेषु यमका

ति । विभागन्यूनतामाशङ्क्ययोक्तप्रकारेणसमाधानमभिसन्धायाह । सेयमेवम्प्रकारापठितिरिति ॥१२॥ अथावृत्त्युपजीविनोलङ्कारालक्षयि तव्यास्तेषांसमग्रकाव्यपर्यन्तावृत्तिसमाश्रयणाद्यमकम्प्रधानमित्याश येनाह । विभिन्नेति । विभिन्नार्थेत्यर्थाभेदव्यतिरेकपरम् । तेनद्वयोरे कस्यवानिरर्थकत्वेपियमकमुपगृहीतम्भवति । एवमपिसरोरसइत्या दावतिप्रसङ्गस्स्यतउक्तमेकरूपेति । रूपमानुपूर्वीविभिन्नार्थाचासावे करूपाचेतिविग्रहः । विविधधवेन्यादावेकवर्णावृत्तावप्यावृत्तिसमुदा यएवयमकक्रमसुल्लिखतीत्यभिसन्धायसंहतेरित्युक्तम् ।विभिन्नार्थैकरू पायावर्णसंहतेर्याआवृत्तिः सायमकमितिव्यवहितेनान्वयः ॥१॥ आवृ त्तिर्द्विधाअनावृत्ताव्यवहिताव्यवहिताचेति ॥ २ ॥ सामान्यतोविभज ते । अव्यपेतेति । व्यवायोव्यवधानम् । तदेतदुभयमपिस्थानादि भेदेनत्रिधाभवतीतिपूर्वोक्तानुवादपूर्वकमवान्तरविभागमाह । तदि ति । पादआदिमध्यान्ताअर्थादेतेषुविशेषतोनुल्लिखदस्थानयमकमु क्तम्भवति । एतदपिद्विधा॥३॥चतुरादिपादविकल्पेनविषयतोभिद्यत

नां विकल्पना: । आदिमध्यान्तमध्यान्तमध्याद्यन्ताद्यसर्वत: ॥ ४ ॥ अत्यन्तबहवस्तेषाम्भेदा:सम्भेदयोनय: । सुकरादुष्कराश्चैवदर्श्यन्तेतत्रकेचन ॥ ५ ॥ तत्रचतुष्पादयमकेषु अव्यपेतमादिमयकंयथा । राजीवराजीवशलोलभृङ्गम्मुष्णन्तमुष्णन्ततिभिस्तरूणाम् । कान्तलकान्ताललना: सुराणांरक्षोभिरक्षोभितमुद्वहन्तम् ॥ १ ॥ तदेवमध्ययमकंयथा ॥ दधतमाकरिभि:करिभि:क्षतै:समवतारसमैरसमैस्तटै: । विविधकामहितामहिताम्भस:स्फुरसरोजवनाजवनानदी: ॥ २ ॥ तदेवमन्तयमकंयथा ॥ व्यथितसिन्धुमनीरशनै:शनैरमरलोकवधूजघनैर्घनै: । फणवतामभितो

---

इत्याह । चतुर्ष्वीति । आदिश्चमध्यश्चान्तश्चेतिआदिमध्यान्तास्त्रय: शुद्धा । मध्यान्तौमध्यादीआद्यन्तौआदिमध्यान्ताश्चेतिमिलित्वाचत्वार:सङ्कीर्णा: । सर्वतइति । सार्वविभक्तिकस्तसि: ॥ ४ ॥ एवम्पादविकल्पानामाद्यादिविकल्पानाञ्चपरस्परयोजनेऽन्येपिबहव: प्रकाराग्रन्थगौरवकारिणोभवन्तीत्याह । अत्यन्तेति । नवकठोरनीरसत्वाद्वक्ष्यवक्तव्यइत्याह । दुष्कराइति । शिष्यव्युत्पत्तयेतुकतिपयेदर्शनीयाइत्याह । तत्रकेचनेति ॥ ५ ॥ राजीवराजीपद्मपङ्क्तिस्तद्वशालोला:सस्पृहाभृङ्गायत्रतम् । यतस्तरुपङ्क्तिभिरुष्णंघर्मम्मुष्णन्तमपहरन्तम् । कान्तोमनोज्ञोऽलकान्तश्चूर्णकुन्तलच्छटायासान्ता: । यस्माद्रक्षोभीराक्षसैरक्षोभितमधर्षितम् । अत्रप्रथमेपादेपूर्वंसार्थकमपरमनर्थकन्द्वितीयादिषुद्वयमप्यनर्थकम् । एवमन्यत्रापियथायथमवगन्तव्यम् ॥ १ ॥ आकरीभि:प्रशस्ताकरयुक्तै:करिभि:परिणतिक्रीडासक्तै:।विविधेभ्य:कामेभ्योहिता: । महितम्पूजितञ्जवनावेगवती ॥ २ ॥ नीरशनैर्निर्गतादूरीभूतारशना:क्षुद्रघण्टिकायेभ्य: काञ्चीगुणयुक्तै:।तेनस्थपुटकर्कशरत्नादिरचनयासिन्धुव्यथापोष:शनैर्मन्दइत्यनैर्मांसलैरभितोवित

विततन्ततंदयितरम्यलताबकुलैःकुलैः ॥ ३ ॥ आदि मध्ययमकंयथा ॥ घनाघनाभस्यमहीमहीयसःसुरासुराणांदयितस्यतस्यसा । धराधराकारगृहागृहार्थिनोबभूवभूमेर्नगरीगरीयसी ॥ ४ ॥ आद्यन्तयमकंयथा ॥ द्रुतंद्रुतंवह्निसमागतन्त्वतंमहीमहीनद्युतिरोचितञ्चितम् । समंसमन्तादपगोपुरम्पुरम्परैःपरैरप्यनिराकृतंकृतम् ॥५॥ मध्यान्तयमकंयथा ॥ उदयितेदयितेजघनंघनंस्तनवतीनवतीर्यतनुस्तनुः । सुमनसामनसासदृशौदृशौद्युकुरुमेकुरुमेभिमुखम्मुखम् ॥ ॥ ६ ॥ आदिमध्यान्तयमकंयथ ॥ सीमासीमानभूमिः

---

तंसर्वतोविस्तीर्णम् । फणभृताङ्कुलैस्ततंव्याप्तम् । लवङ्गबकुलमालतीसुरभिशीतलतयाफणभृत्प्रियत्वम् ॥३॥ घनाघनोमेघस्तदाभःश्यामो महीपृथ्वीतस्याम्महीयान्पूज्यः । धराधरःपर्वतस्तदाकारगृहाः ॥४॥ वह्निसमागतंसद्द्रुतंविलीनमतएवद्रुतंशीघ्रम्महीङ्गतम्पृथिव्यांविस्तीर्यपतितमहीनयाद्युत्यारोचितंशोभितम् । चितन्निबिडेनसन्निवेशेनस्थापितंसमन्तात्सर्वतःसमंसलक्ष्मीकमस्थपुटंवा । परैःशत्रुभिःपरैःश्रेष्ठैरनिराकृतंयदासीत्तद्देववह्निनाहेममयम्पुरमपगोपुरमपगतद्वारम्महींगतंच कृतमितिसम्बन्धः ॥५॥ उदयउद्भवोविस्तारवत्त्वरूपस्तद्युक्तमुदयि । घनम्मांसलम् । नवेनतीर्थेनरजसातनूकृता । स्त्रीरजःशास्त्रयोस्तीर्थम् । सुमनसाङ्कुसुमानाम्मनःशकटन्तेन । सदृशौसुमनसाम्मनसामितिपाठे,सुमनसःसहृदयास्तन्मनसांसदृशौसंवादिन्यौ । द्यौश्चकुश्चद्युकू द्यावापृथिव्यौतयो रुमालवणाकरोलावण्यविश्रान्तिस्थानत्वात् ॥६॥ सीमा मर्यादातस्यामासनशीलः । मानम्परिमाणातिशयोमानःपूजावातद्भूमिः । फणिबलम्भुजङ्गसमुदायस्तस्ययद्वलनन्तेनोद्भाविनीयाराजीरेखातयाविराजनशीलः । हारीताःपक्षिविशेषास्तद्युक्तैः । परिसरसरणिस्तीरमार्गस्तत्रास्तमालैःक्षिप्तमालासन्निवेशैःखण्डरूपतामापन्नैरि

फणिवलवलनोद्वा विराजी विराजीहारीहारीतवाद्भिः परिसरसरणावस्तमालैस्तमालैः । देवादेवाप्तरक्षःकृतभवभवतोग्रेनदीनोनदीनो मुक्तामुक्ताच्छरत्नःसितरुचिरुचिरोल्लासमुद्रःसमुद्रः ॥ ७ ॥ त्रिपादयमकेष्वपेतमादियमकंयथा ॥ विशदाविशदामत्तसारसेसारसे जले । कुरुतेकुरुतेनेयंहंसीमामन्तकामिषम् । नास्य चतुरःप्रयोगइतिशेषभेदानोदाह्रियते ॥ ८ ॥ द्विपादयमकेष्वपेतमादियमकंयथा ॥ करोतिसहकारस्यकलिकोत्कलिकोत्तरम् । मन्मनोमन्मनोप्येषमत्तकोकिलनिःस्वनः ॥ ९ ॥ तदेवमध्ययमकंयथा ॥ तुलयतिस्मविलोचनतारकाःकुरबकस्तबकव्यतिषङ्गिणि । गुणवदाश्रयलब्धगुणोदयेमलिनिमालिनिमाधवयोषिताम् ॥ १० ॥ अन्तयमकंयथा ॥ खण्डिताशंसयातेषापराङ्मुखतयातया । आविवेशकृपाकेतूकृतो

तियावत् । ईदृशैस्तमालैर्हारीमनोहरइतिसम्बन्धः । देवादेवाःदेवासुराःतैरमृतलाभेनाप्तरक्षस्थानेनचामारक्षायस्मात्सतथाकृतभवःसम्पादितोद्भवोनदीनामिनःस्वामीसमुद्रोभवतोग्रे नदीनः कान्नादीनएव । मुक्ताभिरमुक्तान्यच्छानिरत्नानियत्रसतथा । सितरुचिश्चन्द्रस्तेनरुचिरा मनोहराउल्लासमुद्रावृद्धिरूपायस्य । तदेतेषामुदाहरणानाञ्चतुर्ष्वपिपादेषुयथोक्तंयमकमस्तीतिचतुष्पादयमकप्रपञ्चोयम् ॥७॥ एवंत्रिपादयमकप्रपञ्चोपिभवतीत्याह । त्रिपादयमकेष्विति । विशदाधवलाविशन्तआमत्ताःसारसायत्रतस्मिन् । सारसंसरःसम्बन्धि । मन्मथोन्मादायितया कुत्सितंरुतङ्कुरुतम् । मध्यान्तादीनित्रिपादयमकानिकिमितिनोदाहृतानीत्यतआह । नास्येति ॥८॥ उत्कण्ठाउत्कलिकातदुत्तरम्तदङ्कूलम् । मन्मनोऽव्यक्तमधुरोमन्मनोमदीयस्मनः ॥९॥ अलिनियोमलिनिमाकज्जलाभत्वंसमत्तमाधवयोषितांया

श्चैर्वानरन्नरम् । एवमादिमध्यान्यपिद्रष्टव्यानि । एकपादयमकेषु अव्यपेतमाद्यन्तयोरनुल्लेखीतिनोदाहृियते ॥ ११ ॥ मध्ययमकन्तुचतुर्थपादएवोल्लिखति ॥ यथा । विलुलितालकसंहतिरामृशन्मृगदृशां श्रमवारिललाटजम् । तनुतरङ्गततीः सरसान्दलत्कुवलयंवलयन्मरुदाववौ ॥ १२ ॥ एवमावृत्याधिक्येप्यव्यपेतमुदाहार्यम् ॥ यथा ॥ वियद्वियद्वृष्टिपरम्परम्परंघनाघनालीरसितासितासिता । सरःसरस्यःस्वरसारसारसासभासभारात्रिरतारतारता ॥ १३ ॥ आवृत्येकरूपतायामपि ॥ तत्रादियमकंयथा । यामया

---

दव स्त्रीणांविलोचनतारका स्तुलयतिस्मेतिसम्बन्धः ॥ १० ॥ केतूकृतोध्वजतन्नीतः । उच्चैर्वानरोहनूमान् । नरोर्जुनः ॥ ११ ॥ आद्यन्तयोरनुल्लेखीति । महाकविप्रयोगेषुविशेषशोभाकरतयाप्रसिद्धेरभावोनुल्लेखोनत्वसम्भवएव । एवम्मध्ययमकन्त्वित्यादौबोद्धव्यम् । आमर्शनमाोञ्छनम् । दलत्कुवलयमितिक्रियाविशेषणम् । तरङ्गाणामितस्ततोवलनेनप्रौढतरकुवलयकलिकास्फुटनजातिः ॥ १२ ॥ आवृत्तिः सकृदावर्त्तनेनैवनिर्वहति । तत्किमसकृदावृत्तौयमकन्नभवतीत्यतआह । एवमिति । आवृत्तिसामान्यमधिकमनधिकं वा द्वयमप्यावृत्तिपदेनाऽभिमतमित्यर्थः । वियदाकाशम् । वियतीअपगच्छन्ती वृष्टिपरम्परा यस्मात्तत्त्थापरमुत्कृष्टरमणीयम् । घनाघनाली मेघपङ्क्तिः । रसिते स्तनिते आसिताऽवलम्बिता । सिताशुभ्रा । सरांसिचसरस्यश्चसरःसरस्यःस्वरसारास्तत्कालोन्मिषितकूजितकान्तिप्रधानाःसारसाःपक्षिणोयत्रतास्तथाभूताःसभागृहरूपाःजलसमुदायोवा । सभाःसदीप्तिःताराणान्तारतानिर्मलताप्रकर्षः केञ्चिद्घनरोधसद्भावादीषत्तारता यस्यां सातथा ॥ १३ ॥ आवृतितीति । यज्जातीयमाद्यपादेपदमावृत्तन्तज्जातीयमेवद्वितीयादिपादेष्वपियथास्थानमावर्त्ततइतिप्रकारान्तरमप्यावृत्तिपदेनैवसङ्गृहीतमित्यर्थः । यामत्रयाधीनायामया । प्रहरत्रयविश्रान्त्या

मत्त्रयाधीनायामयामरणान्निशा। यामयामधियाऽस्व
त्यायामयामथितैवसा ॥ १४ ॥ तथैवमध्ययमकं य
था ॥ स्थिरायते यतेन्द्रियो न हीयते यतेर्भवानमायते य
तेप्यभूत्सुखायते यतेक्षयम्॥ १५॥ तदेवान्तयमकं यथा॥
भवादृशा नाथ न जानते नतेरसं विरुद्धे खलु सन्नते नते।
य एव दीनाः शिरसा नतेन ते चरन्त्यलं दैन्यरसेन तेन ते।
तदेतत्सर्वमप्यव्यवहितावृत्तेरव्यपेतयमकम्भवति॥१६॥
अथ चतुर्षु पादेष्वव्यपेतमादियमकं यथा॥ काञ्चिप्रतो
लीमनुकामिनी ह्यञ्चित्स्रवतीवनमातरिश्वा । का

---

वद्दीर्घतामकारया। निशारात्र्यामरणं यामैस्तवियोग खन्नस्य प्रार्थना।
किमित्येवममङ्गलमाशास्यत इत्यत आह । यामिति । धिया बुद्धया
मया जीवितसर्वस्वाभिमानगोचरतामनैषम् । सा अनया कल्पकोटिश
तायमानया मया रजन्या अमूना प्राणानामार्त्तिः पीडा तया द्वारभूतया
प्रायेणामथितैव भविष्यतीति सुकुमारतरकान्ताजीवितानध्यवसायोक्ति
रियम्। अत्र यामेत्येवपदस्य पादचतुष्टयेप्यावृत्तमेवमुत्तरत्र ॥१४॥ आय
तिरुत्तरकालविशुद्धिः । जितेन्द्रियो विजितेन्द्रियग्राम एवंभूतो भवान्य
तेर्न हीयते यतितुल्य एव भवतीत्यर्थः । अपिशब्दो भिन्नक्रमः । अमाय
तामायाशून्यत्वं सापितवद्दयत्ते परिच्छेत्तुमशक्यायतयं विनाशमयतेऽ
गच्छते सुखायाऽभूत्॥१५॥ नतेः कुपितकामिनीप्रसादरूपाया रसो विप्रल
म्भपृष्ठभावी मधुरतरः सम्भोगः किं मतिता दृशा रसन्न जानते यस्मात सन्न
ताश्रवसाद्योगित्वमिनता प्रभुता एते द्वे विरुद्धे नैकत्र सम्भवतो न हि प्रभ
वो नमन्ति । एतदेव व्यतिरेकेण द्रढयति । य एवेति । ये दीनास्त एव
नतेन शिरसा लक्षिताः । तेन हेतुना दैन्यरसेनात्यन्तं चरन्ति व्यवहरन्ती
ति । अव्यपेतपदार्थं व्याचष्टे । तदेतत्सर्वमिति॥१६॥ क्रमप्राप्तं व्यपेतमु
दाहर्त्तव्यमित्याह । अथेति । काञ्चिर्नगरी तस्याः प्रतोलीराजरथ्या
तामनुलक्षीकृत्य । केन पानीयेनाञ्चनशीलाया स्रवन्तीनदीतद्वनमा

ञ्चिप्रभृत्याभरणोज्झितानाङ्गाञ्चिचल्लुनीते सुरतस्त्र
मार्तिम्॥१७॥तदेवमध्ययमकंयथा॥ मदनदारुणउ
त्थितउच्छिखोमधुमदारुणहूणमुखच्छविः। तरुणि
दारुणएषःदिशःसमम्ममहृदारुणदाम्रवणानलः॥१८॥
अन्तयमकंयथा॥ तवप्रियासञ्चरितप्रमत्तयाविभू
षणन्धार्यमिहांशुमत्तया। रतोत्सवामोदविशेषमत्त
यानमेफलङ्किञ्चनकान्तिमत्तया॥ १९॥ आदिम
ध्ययमकंयथा। घनागिरीन्द्रविलङ्घनशालिनावन
गतावनजद्युतिलोचना। जनमतादद्दशेजनकात्म

---

तरिस्त्रावायुः।काञ्चिप्रभृतीनिमेखलाप्रमुखानि।काञ्चित्सर्वाङ्गीणालस
भावसमर्पिकामतएवमेखलाप्रभृतिभूषणत्यागः। अत्रप्रतिपादंकाञ्ची
काञ्चीत्यादिनैरन्तर्येणावर्ततेनव्यपेतम्। सान्तरत्वेनपुनरादिमध्यय
मकमेवस्यादितिपादभेदेनैवास्यसम्भवः॥१७॥ मदनएवदारुकाष्ठन्त
तउत्थितःशिखामञ्जरीच्छटाज्वालाच। स्वभावताम्रनेवमधुमदेनय
द्विगुणमरुणंहूणमुखन्तच्छविर्दारुणोभयङ्करोमसहृदासमन्दिशोऽरुण
द्रुद्रुवान्। आम्रवणमेवतापकारितयानलोवह्निः। अत्रयद्यपिप्रति
पादमपिव्यवायेनमध्ययमकंसम्भवति तथापि नतथोक्तेखीतिपूर्वाप
रसदृशमेवोदाहृतम्॥१८॥ सञ्चरिताप्रमत्तेति। सोत्प्रासंसम्बोधन
द्वयम्। यावत्प्रियारतोत्सवामोदविशेषेणरतिकेलिहर्षप्रकर्षेणमत्ता
तयेदमंशुमन्मणिकिरणकरम्बितम्भूषणन्धार्यम्। अर्हेकृत्यः। त्वया
किमितिनधार्यमित्यतआह। नमेभूषणसम्पाद्ययाकान्त्याकिञ्चनफल
म्। कामिनाम्यवडनश्रीर्न्नतिहिसफलत्वंवल्लभालोकनेनेतिन्यायात्
॥१९॥ अत्रापिसान्तरनिरन्तरप्रसङ्गेपादभेदएवसङ्करःसङ्कीर्णव्यपेतानि
तुप्रतिपादमेवसम्भवन्तीत्युदाहरति। आदिमध्येति। घनागिरिन्द्रा
नात्यवनत्पादम्यसुवेलंयावद्गिरिपरम्परावनजम्पद्मन्नञ्जनानामताम्म
ता। वनमृगःशाखामृगोहनुमान्। अत्रघनेत्यादिशब्दभागःपादद्वत्

जातरुमृगेणतरुस्थलशायिनी ॥२०॥ आद्यन्तयमकं यथा । विहगाःकदम्बसुरभाविहगाःकलयन्त्यनुलक्षणमनेकलयम् । भ्रमयन्नुपैतिमुहुरभ्रमयम्पवनश्चधूतनवनीपवनः ॥२१॥ मध्यान्तयमकंयथा । मितमवददुदारंतां हनूमान्मुदारं रघुवृषभसकाशंदेवियामिप्रकाशम् । तवविदितविषादोदृष्टकृत्स्नामिषादःस्त्रियमनिशमवन्तम्पर्वतम्माल्यवन्तम् ॥२२॥ आदिमध्यान्तयमकंयथा । समंससैन्येनसमन्ततःसमम्पुरंदरश्रीःपुरमुच्चगोपुरम् । मदालसांतांप्रमदांसुसम्मदांययौनिधायाक्षययौवनाययौ ॥ २३ ॥ त्रिपादयमकेषुव्यपेतमादियमकंयथा । करेणतेरणेष्वन्तकरेणद्विषतांहताः । करेणवःक्षरद्रक्ताभान्तिसंध्याघनाइव । अस्यापिनातिप्रचुरःप्रयोगइतिविशेषभेदानोदाह्रियते ॥ २४ ॥ द्विपादयमकेषु

---

ष्वयेपिगिरीन्द्रेत्याद्यनावृत्तव्यवहितएवादिमध्ययोरावर्त्ततइति ॥ २०॥ गाःकूजितानिकदम्बसौरभानीतवर्षर्त्तुपयोदाः कलयन्तिकलरूपताङ्कयन्ति । कूजितक्रियान्तरालकालोद्भुतमध्यविलम्बितास्मानेकोलयः । अभ्रं मेघः । नीपःकदम्बः । कदम्बवनधूननेनसर्वतःसौरभसञ्चारोपपत्तिः । अत्रविहगाइत्यादिकम्प्रतिपादमाद्यन्तयोरनावृत्तवर्णषट्कव्यवहितमेवावर्त्तते ॥२१॥ मितमल्पाक्षरमरमत्यर्थमुदारमल्पाक्षरव्यञ्जकम्मुदाहर्षेण रघुवृषभोरामस्तस्यसकाशोवासभूमिस्तयापुरस्कृतः। आमिषादाराक्षसाः । अत्रदारमित्यादिप्रतिपादम्मध्यान्तयोरेवानावृत्तवर्णपञ्चकव्यपेतमावर्त्तते ॥२२॥ समंसहसमंसश्रीकंसम्मदोहर्षः । ययुरश्वमेधीयोश्वः । अत्रप्रतिपादंसममित्यादिकमादिमध्यान्तेषुयथोक्तानावृत्तवर्णाव्यवहितमावर्त्तन्ते ॥२३॥ द्विषतांशत्रूणामन्तकरेणविनाशकारिणाकरेणहस्तेन । करेणवोहस्तिनः । एवन्द्वितीयादिपादगोचर

व्यपेतमादियमकं यथा । मुदारमणमन्वीतमुदारम
णिभूषणा । मदभ्रमदृशः कर्तुमदभ्रजघना क्षमा ।
मध्ययमकम्पुनरनुल्लेखीति परिह्रियते ॥२५॥ अन्त
यमकं यथा । इहमुहुर्मुदितैः कलभैरवः प्रतिदिशं क्रि
यते कलभैरवः । स्फुरति चानुवनं चमरीचयः कन
करत्नभुवां चमरीचयः ॥ २६ ॥ एकपादयमकमि
ह शुद्धं न सम्भवति तस्य स्थाने द्विपादयमकमेवोदाह्रि
यते । तदादियमकं यथा । मधुरेण दृशां मानं मधु
रेण सुगन्धिना । सहकारोद्गमेनैव शब्दशेषं करिष्यति

---

मध्यादियमकञ्च किमिति नोदाह्रियत इत्यत आह । अस्यापीति ॥२४॥
रमणं वल्लभम्मुदा हर्षेणान्वीतं सङ्गतं कर्तुं क्षमा इत्यन्वयः । उदारमुत्कृ
ष्टम् । मदेन भ्रमन्ती श्यामान्ता अदभ्रं विपुलम् । अत्र यद्यपि चतुर्षु पा
देषु यमकमस्ति तथापि द्वयोर्द्वयोरेवावृत्तिः पर्यवस्यतीत्युदाहरणद्वय
मिदं द्रष्टव्यमेवमत्र प्रथमतृतीययोः प्रथमचतुर्थयोर्द्वितीयतृतीययोर्द्विती
यचतुर्थयोश्च व्यपेतमादियमकमवसेयम् । अनुल्लेखोऽव्याख्यात एव ॥२५॥
कलभाः करिशावकारवः शब्दः कलो मधुराव्यक्तो भैरवो भयङ्करः । अ
नुवनमिति वीप्सायामव्ययीभावः । चमरी चमरगवी । चयः समूहः ।
मरीचयः किरणाः । अत्रापि पूर्ववदेव द्विपादयमकं व्याख्येयमिति ॥२६॥
एकपादयमकमिति । नैरन्तर्येणावृत्तावव्यपेतत्वम् । सान्तरत्वे त्वा
दिमध्यादिभावप्रसङ्ग इति शुद्धं न भवति तत्किमनुदाहरणीयमेवैतदित्य
त आह ॥ तस्येति । आवृत्तिरेकत्रैव सम्भवतीति एकपादगोचरता ।
सा तु प्रतियोगितया द्वितीयमपेक्षत इति पादान्तरस्वीकार इति कथंचित्प्र
कृतिगणनासमाधानमेतत् । मधुश्चैत्रः । अनेन पूर्वावयवेन वसन्तो ल
क्ष्यते । एणदृशां हरिणलोचनानाम्मधुरेण मधुरास्वादेन सहकारोद्गमे
नैवेत्येवकारेण सतामतीवतावद्विख्यातप्रभावातिशयाः पिकपञ्चमा
दयः सहकारप्रथमोद्भेदमात्रेणैव तु मानिनीमानग्रहग्रस्ता निरवशेषिते

॥ २७ ॥ इहापिमध्ययमकमनुल्लेखीतिपरिह्रियते ॥
अन्तयमकंयथा । यस्याहुरतिगम्भीरजलदप्रतिमङ्ग
लम् । सवः करोतु निस्सङ्गमुदयम्प्रतिमङ्गलम् ॥२८॥
एवमावृत्त्याधिक्येपियथा । अवसितंहसितम्प्रसित
म्मुदाविलसितंह्रसितंस्मरभासितम् । नसमदाःप्रम
दाहतसम्मदाःपुरहितंविहितन्नसमीहितम् ॥ २९ ॥
आवृत्त्येकरूपतायामपि । तत्रादिमध्ययमकंयथा ।
सारयन्तमुरसारमयन्तीसारभूतमुरुसारधरातम् ।
सारसानुकृतसारसकाञ्चिसारसायनमसारमवैति ॥
३० ॥ मध्यान्तयमकंयथा । लीलास्मितेनशुचिना
मृदुनोदितेनव्यालोकितेनलघुनागुरुणागतेन । व्या
जृम्भितेनजघनेनचदर्शितेनसाहन्ततेन गलितम्मम
जीवितेन ॥३१॥ आद्यन्तयमकमादिमध्यान्तयमक

---

स्युद्दीपनतामकर्षोध्वन्यते ॥२७॥ गम्भीरोमांसलोगलः कण्ठोमङ्गलकु
स्याणम् । निस्सङ्गमप्रत्यूहमुदयः संयत्तस्प्रसि ॥२८॥ अवसितंसमाप्तंमु
दामसितमनवद्यंहसितंसितम्भूत्तंस्मरेणभासितंशोभितंसम्मदोहर्षः ।
अत्रप्रतिपादंसितंसितमित्यादिद्वाभ्यामेवयमकन्निर्व्यूढम् । तृतीयन्तु
सितमित्यादिकमाधिक्यमेवप्रयोजयतिलक्ष्म सर्वमनावृत्तिव्यवहितमि
तिव्यपेतयमकमेवभवति ॥२९॥ सारयन्तमात्मसमीपमानयन्तम् । उर
साघनतरस्तनाढ्येनसारभूतञ्जीवितसर्वस्वतामापन्नमुरुर्महान्सारउ
त्कर्षः । अनुकृतसारसासारसकूजितसंवादिनी । सारसाशब्दाकाञ्चि
र्मेखलायस्याःसातथा । सारसानुकृतेतिजातिकालसुखादिभ्यः परावक्त
व्येतिनिष्ठायाःपरनिपातः । रसायनंसर्वोपद्रवहरम्भेषजम् ॥३०॥ शुचि
नाकान्तेनमृदुनाकोमलेनोदितस्भाषितंलघुनातरलेनगुरुणास्तनजघन
भारालसेनव्याजृम्भितेनप्रकटीभूतविस्तारप्रकर्षेण ॥ अत्रतेनतेनेतिन
व्यान्तयोरावृत्तम् ॥३१॥ इहेत्यावृत्त्येकरूपतायामेकस्यावान्वितरत्रस्यान्ते

ऽप्येहास्थानयमकत्वप्रसङ्गान्नसङ्गच्छते। आदिमध्या न्तयमकानितुप्रथममेवोदाहृतानि। आवृत्त्येकरूप तायामावृत्त्याधिक्येचमध्ययमकं यथा। समासुरा जन्मसुराहतैर्मुखैर्महीसुराणांवसुराजितैःस्तुताः। न भासुरायान्तिसुरान्नतेगुणाः प्रजासुरागात्मसुराश्रि ताङ्कताः। तदेतत्सर्व्वमपिद्व्यवहितवृत्तेर्व्यपेतयमक म्भवति ॥ ३२॥ नादौनमध्येनान्तेयत्सन्धौवायत्प्र काशते॥ अव्यपेतव्यपेतंतदस्थानयमकंविदुः ॥ १॥ पादेश्लोकेचतत्प्रायःपदसन्धौचबध्यते ॥ स्वभेदेचा

---

वर्त्तमानमेकरूपसन्धिपातित्वादस्थानयमकमेवभवति। एवमादिम ध्यान्तयमकमपिनात्रसङ्गच्छते तर्हिसन्धिविनाकृतमुदाह्रियतामित्यत आह। आदिमध्यान्तेति। आवृत्त्याधिक्यइति। एकैकस्मिन्पादेतृतीया आवृत्त्यापूर्वमाधिक्यम्पादान्तरावृत्तिसरूपतयासारूप्यञ्चोक्तम्। इह तु सरूपावृत्त्यैवाधिक्यविरूपत्वइतिसङ्करप्रकारोपलक्षणमिदम्। स भासुजनसमवायेषु असुराहतैर्मदिरापानपराभूतैर्महीसुराणांब्राह्मणा नांवसुनातेजसाराजितैःशोभितैःभासुरादीप्ताः सुरान्देवाननयान्ति नि षेधद्वयेनयान्त्येवेत्यर्थः। रागोनुरागस्तत्प्रधानआत्मायासांतासुप्रजा सुराश्रितास्तुअताङ्कताः। व्यपेतमुपसंहरति। तदेतदिति ॥ ३२॥ क स्मात्पुनरस्थानयमकंलक्षयति। नादाविति। आदावेवेत्यादिनियमे नस्थानयमकमुक्तन्तदभावेत्वस्थानयमकम्भवति। तत्किमाद्यादिस्था नमिदमाश्रयतएवनेत्याह। संधौवेति। सन्धौपादसन्दंशेएकस्यादि स्परस्यान्तइति। नेदंस्थानयमकन्तद्धिप्रतिपादंस्थाननियमेननिरूप्य तद्रूपमुक्तमयम्। अव्यपेतव्यपेतमिति। द्वाभ्यामपन्वीयते ॥१॥ तत्प्र पञ्चयन्श्लोकतयाद्विविधमित्याह॥ पादेश्लोकेचेति॥ पादसन्धौचप्र बध्यतेतत्स्वभेदेचान्यभेदेचस्थूलंसूक्ष्मञ्चभवतीत्यर्थः। एतद्यथास्थानं विवरिष्यते। स्थूलंसूक्ष्मञ्चेति। पूर्वेणापिसम्बध्यते। सकृदावृत्तिस्थू

मव्यपेतंयथा। वीनांवृन्दऽच्चैतत्कूटे समरुतिसुतरु
ण्यभेदेचस्थूलंसूक्ष्मऽचसूरिभिः ॥ २ ॥ अत्रपादेस्थूल
णिसमरुतिसुतरुणि । चित्तंवातेतत्क्रोडेस्मिन्सुरम
णिगुणरुचिसुरमणिगुणरुचि । अत्रस्थूलेनैत्रावृत्ति
द्वयेन श्लोकपादयोर्व्याप्तत्वादादिमध्यान्तानसम्भ
वन्तीत्यस्यानयमकमिदंस्थूलाव्यपेतमुच्यते ॥ १ ॥
पादएव सूक्ष्ममव्यपेतं यथा। स्वस्थः शैलेपश्यास्ते
सौरुरुरुरुरतिरतितनुतनुमतिमति । लोकोयद्दैत्या
त्यानीकङ्गुरुगुरुमयिमयितरितरिसतिसति । अत्र
पुनःसूक्ष्मेणावृत्यष्टकेन श्लोकपादौव्याप्ताविति अ
स्यानयमकमिदंसूक्ष्माव्यपेतमुच्यते ॥ २ ॥ श्लोके

---

लमवहुवर्णावृत्तिसूक्ष्मम् ॥२॥ वीनाम्पक्षिणांवृन्दङ्कूटेशृङ्गे समरुति
मारुतसहिते। सुतरुणिशोभनवृक्षेकूटविशेषणद्वयमिदंसमरुतिसमान
कूजितेसुतरुणीतिप्रियासम्बोधनम्। वाशब्दइवार्थे। सुरमणीनान्दे
वरमणीनाङ्गुणेनदाम्नारोचतेशोभतइतिक्विप्। तस्मिन्क्रोडेसुरमणी
तिसम्बोधनम्। गुणोपुरुचिर्यस्यतद्गुणरुचिचित्तम्। अत्रसमरुतिसुत
रुणासुरमणिगुणरुचीतिद्वितीयचतुर्थपादयोर्वर्णाष्टकावृत्तिद्वयमिति
पादव्यापकमव्यपेतमुच्यते ॥ १ ॥ रुरुर्बहुशृङ्गोमृगऽरुरतिरुपचितप्री
तिः। अतितनुरतिकृशातनुर्यस्याइतिसम्बोधनम्हृस्वः। मतिमतिम
तिरुचितज्ञानन्तद्वतीत्यपिसम्बोधनम्। पश्येतिवाक्यार्थकर्मकम्।
गुरुविपुलम्। गुरुःशुक्रोमयोदैत्यविशेषस्तद्युक्तंतरितरिविजयमाने
सयिसति। सतीतिसम्बोधनम्। सतीशोभना। यथामयदैत्या
नीकविजयेलोकोयंसुखमास्तेतथासौरुरुरितिवाक्यार्थोभिमतः॥तदि
दंवर्णद्वयावृत्यासूक्ष्मकचान्योन्यंव्यवहितमव्यवहितमित्यव्यपेतञ्च
भवति। तदेतदेकस्मिन्नपिपादेऽनुक्तद्वयादिपादविकल्पेनचबोद्धव्य
म्। गिरिजाःपर्वतजादयितावल्लभा। एवंविधाश्रपिहस्तिनीनदयिता

स्थूलमव्यपेतं यथा । नगजानगजादयितादयिताविगतंविगतंललितंललितम् । प्रमदाप्रमदामहतामहतामरणम्मरणंसमयात्समयात् । अत्रावृत्यष्टके नश्लोकोपिवयाप्त इत्यस्यानयमकमिदंश्लोकेस्थूलाव्यपेतमुच्यते ॥ ३ ॥ श्लोकएवस्थूलव्यपेतंयथा ॥ विविधधववनानागगर्द्धर्द्धनानाविविततगगनानाममज्जज्जनाना । रुरुशशलनानावबन्धुन्धुनानाममाहिहितततनानाननस्वस्वनाना । वलभद्रम्प्रातिकूलवाक्यं समुद्रतीरभूवर्णनपरम् । विविधानि धवानान्तरुभेदानांवनानियस्यांसानागेषु सर्पेषुगर्द्धेनाभिलाषेणबुभुक्षयाऋर्द्धैः समृद्धैर्नानाविधैर्विभिः पक्षिभिर्विततंव्याप्तङ्गगनं यस्यांसा । अनामेन अनमनेनमज्जन्तोजनायस्यांसा । बहूदकेत्यर्थः । यद्वा । अस्यविष्णोर्नामनिमज्जन्तस्तत्परा इतियावत् । तादृशा जना यस्यांसा । आविद्यमाना नरो

नरक्षिताः । वीनांहंसप्रभृतीनाम्पक्षिणाङ्कुलम्बङ्क्रमणंविगतमपगतंललितंविलसितंललितम्मन्द्रम् । प्रमदाकान्ताऽप्रमदाहर्षशून्या । आसधिहव्यथारूपोरोगस्तेनहतामहताम्प्रकर्षशालिनामरणंसङ्ग्रामवर्जितम्मरणंविनाशः समयाद्दैवात्समयात्सङ्गतमासीत् ॥३॥ विविधानि धववनानियस्यांसातथा । धवोविट्खदिरः । नागाःसर्पान्हस्तिनोवागृध्यन्त्यभिलषन्तीतिनागगर्द्धाः । अद्भुतउपचितानानावयोविचित्राःपक्षिणस्तैर्विततंव्याप्तङ्गगनंयस्यांसातथा । कल्लोलपरम्पराभिरनामनमनशून्यम् । मज्जन्तःस्नान्तोजनायस्यांसा । अना स्त्रीरूपा । रुरूणांशशानाञ्चलनमुत्कालोयस्यांसातथाभूता नौश्चावयोरबन्धुंधत्रुन्धुनानास्तिपक्षी । हरिप्रबोधेवलभद्रस्यकृष्णम्प्रत्युक्तिः । यस्मान्ममाहित

ऽर्वाचीनामनुष्यायस्यांसा । समासान्तविधेरनित्य
त्वान्नद्यृतश्चेतिनकप् । यद्वा । अविद्यमानश्चोवि
ष्णुर्यस्यांसा । यद्वा । अनामनिविष्णुनामनिमज्ज
द्भ्यस्तत्परेभ्योजातन्नानंयस्यांसानं ज्ञानन्तत्वज्ञान
मितियावत् । ननमयनव्यमनन्न । नंरुरूणांशशानाञ्च
लनङ्क्रीडनंयत्रसा । नौआवयोरबन्धुंवैरिणंधुनाना
नाशयन्तीहिनिश्चितममाहितन्तनोतिसा । अवि
द्यमानमाननम्मुखंयस्यसः । मुखंविनैवजायमानइ
त्यर्थः । ईदृशो यःस्वस्वनःशब्दस्तत्रअनाःप्राणायस्यां
सा । उदकशब्दवतीत्यर्थः । अत्रसूक्ष्मतराभिरष्टाविं
शत्यावृत्तिभिः श्लोकोव्याप्तइत्यस्यानयमकमिदंश्लो
केसूक्ष्मावृत्रपेतमुच्यते ॥४॥ पादसन्धावन्यभेदोच्छेदे
नस्थूलंयथा । उपोढरागाप्यबलामदेनसामदेनसा
मन्युरसेनयोजिता । नयोजितात्मानमनङ्गतापिता

---

तनाहितन्तनोति । अनाननोमुखशून्योयःस्वआत्मा । तेनस्वनाना
शब्दायमाना । शीलेचानश् । अनित्यमागमशासनमितिमुगभावः ।
यद्वा अनाननोमुखंविनाकृतःस्वकीयःस्वनोयस्याःसा । अनितीत्य
नामाणासुक्ता । अन्तर्णीतेषार्थेञ्चैतत् । वर्णद्वयपर्यन्तमावृत्तिःसूक्ष्म
ता । सैवैकवर्णगोचरासूक्ष्मतरा ॥४॥ पादसन्धाविति । स्वभेदेवान्यभे
देवेत्यत्रव्यपेताव्यपेतयोःस्वत्वमन्यत्वञ्चव्याख्येयमप्रकरणात् । तत्वे
प्रसङ्गेचयथासम्भवंसमीयोजनीया । मदेनप्राप्तरागापिबलसएवमनन्म
थोन्मादेनतापिताउत्तापङ्गतापियदात्मानमबलानयोजितमनीलमूम
स्मदेनसामदीयदुरितेनभूयोपिमानरसम्प्रापितास्यात् । अतएवयतेव
मनःशक्यायसन्तापापायनावेतिकाङ्क्षातापप्रकर्षेमयनम् । योजितेति ।
योजयतेर्गत्यर्थत्वमाश्रित्यकर्तरिक्तः । गत्यर्थाकर्मकेत्यादौचकारस्य

ङ्गतापितापायममासनेयते । अत्रान्तादिसन्दंशा
दव्यपेतम्प्रवर्त्तते । व्यपेतन्तुपादसन्धिषुनिवर्त्ततइ
त्यस्यानयमकमिदंस्थूलावृत्तेःसन्धिस्थूलाव्यपेतमुच्य
ते॥५॥अन्यभेदानुच्छेदेनसूक्ष्मंयथा । मताम्धुनानार
मतामकामतामतापलब्धाग्रिमतानुलोमता । मताव
यत्युत्तमताविलोमतामताम्यतस्तेसमतानवामता ।
अत्र व्यपेतानुच्छेदेनैवपादसन्धिष्वव्यपेतमुत्पाद्यते
इत्यस्यानयमकमिदंसूक्ष्मावृत्तेःसंधिसूक्ष्माव्यपेतमु
च्यते॥६॥स्वभेदेपूर्वभेदानुच्छेदेनस्थूलंयथा । सतमाः
सतमालोयःपारापारायतःसदावोदावः । लोकालो
कानुकृतिःसह्यःसह्ययमनघकूटैःकूटैः । अत्रविषम
पादयोः समपादावन्त्येवतिष्ठमानावादियमकाद्य
न्तयमकयोरादिमध्यान्तयमकतामापादयन्तः पा

---

नुक्तसमुच्चयार्थत्वाद्वा । अन्यथाद्वितीययोस्तृतीयचतुर्थयोश्चान्तर
तोविच्छिद्यपाठेक्रियमाणेसन्धिषुव्यपेतप्रसङ्गःस्यात् । निरन्तरपठि
तौतुसनिवर्त्तते । यथैवचवृत्तौचितीवशात्सौभाग्यमुन्मिषति । तेन
व्यपेतबाधादव्यवेतपुरस्कारस्तदिदमाह । अत्रेत्यादि । सन्दंशःसंघा
नम् ॥५॥ मतांसम्मतामारमतांयोगिनामकामतांवीतरागतान्धुनाना
ऽधःकुर्वाणाम्रतायोनायासस्तेनलब्धोऽग्रिमतानुलोमतेश्रेष्ठतानुकूल्ये
ययासा । अतएवोत्तमतायाविलोमतामतिरेकमयतीनगच्छन्तीईदृ
शीतथाताम्यतः संसारखेदेनाबाध्यमानस्यमतौसमतानतुवामतावैष
म्यमिति ॥ अत्रप्रतिपादमादिमध्यान्तेषुव्यवेतयमकमुपलभ्यते । स
न्धिषुचसन्दंशपाठादस्थानयमकमव्यवेतञ्च । नचपूर्वोपलब्धम्बाध्य
ते । नवास्यौविरतिरितिप्रसङ्गःसङ्गच्छते । तेनव्यवेतानुच्छेदकमेत
दव्यवेतम् । अत्रापिवृत्तौचितीसर्वस्वायते ॥६॥ तमोत्वगहनतातयासत
माःसान्धकारम्पारानामनदीतस्याः पारेश्रायतोविस्तीर्णोदावोवनस्त

रापारेतिसह्यसह्यइत्यावृत्तीस्थूले एवादिमध्यव्यप
देशश्चलभतइत्यस्यानयमकमिदम् ॥७॥ स्वभेदेपूर्व
भेदानुच्छेदेस्थूलाव्यपेतमुच्यते । तदेवस्वान्यभेदो
च्छेदेसूक्ष्मंयथा । सनाकवनितन्नितम्बरुचिरञ्चिर
रंसुनिनदैर्नदैर्वृतममुम् । मताफणवतोवतोरसपरा
परास्तवसुधासुधाधिवसति । अत्रपादान्तादिषु
व्यपेतम्मध्येष्वव्यपेतन्तदुभयमपिपादान्तादिसंहि
तायामव्यपेतमभिन्नजातीयञ्जायते । नचप्राचीना
म्मध्ययमकताञ्जहातीत्यस्यानयमकमिदंसूक्ष्मावृत्ते
रन्यभेदोभेदेनस्वभेदानुच्छेदेसूक्ष्मावव्यपेतमुच्यते ।
उभयमपिचैतदेवंविधेष्वेवच्छन्दस्सुद्रष्टव्यम् ॥८॥ पा

---

द्गुलत्वाद्दावोवनवह्निप्रभावरहितो लोकालोकवच्चवालाख्यःपर्वत
स्तदनुकृतिस्तत्सदृशोयःसोयंसह्यनामागिरिरन्यकूटशून्यैः कूटैःशृङ्गैर्ल
क्षितः । हिशब्दोवाक्यालङ्कारे । अत्रप्रथमतृतीययोरादौद्वितीय
चतुर्थयोराद्यन्तयोर्व्यवेतयमकमेववर्तते । तदनुच्छेदेनैवसन्दंशपाठा
द्वियमकयोराद्यन्तयमकयोश्चाव्यवेतादिमध्यान्तयमकता प्रकाशते ।
यतोद्वितीयचतुर्थपादयोरादिमध्यान्तयमकमेव मध्यमयमकभूमिका
मवगाहते । अत्रापिवृत्तौचितीगवेषणीया । तदेतद्विवरणेव्यक्तमे
वेति ॥ ७ ॥ नाकवनिताःस्वर्गस्त्रियस्ताभिःसहितंयतोनितम्बेस्व
च्छन्दविहरणोचितेरुचिरंमनोज्ञं सुनिनदैःशोभनशब्दैर्महाफणवान्
वासुकिरवतोरक्षतोरसपरारसनीयेषुश्रेष्ठा । परास्तवसुधात्यक्तभूभा
या सुधापीयूषम् । अत्रप्रतिपादन्नितन्नितमित्यादिकमव्यवेतम् ।
सन्धिषुचविरतिपाठेचिरञ्चिरमित्यादिव्यवेतंप्रतीयते । तत्रसन्दंशे
क्रियमाणेव्यवेतन्निवर्त्तते । अव्यवेतन्तुमध्ययमकमवतिष्ठतएव । त
तस्सर्वमिदमव्यवेतमेवजायते । अत्रापिवृत्तौचितीपूर्ववदेवशरणमि
त्युपसंहारेदर्शयति । उभयमपिचैतदिति । स्थूलसूक्ष्मभावेनसन्धिष

देस्थूलव्यपेतंयथा। अखिद्यतासन्नमुदग्रतापंरविन्द
धानेप्यरविन्दधाने॥भृङ्गावलिर्यस्यतटेनिपीतरसान
मत्तामरसानमत्ता। अत्रमाभूदव्यपेतप्रसङ्गइत्येकमे
वाक्षरंविहायस्थूलावृत्तिद्वयेनश्लोकपादयोर्व्याप्तत्वा
दादिमध्यान्तंनसम्भवन्तीत्यस्यानयमकमिदंस्थूल
व्यपेतमुच्यते॥९॥ पादएवसूक्ष्मंयथा। करेणुःप्रस्थि
तानेकोरेणुर्घण्टाःसहस्रशः। करेणुःशीकरोजज्ञेरेणु
स्तेनशमंययौ।अत्रविषमपादयोःकरेणुःकरेणुरित्या
दावावृत्तम्। समपादयोस्तुरेणुरेणुरितितत्तुस्वापे
क्षयानमध्यमन्यापेक्षयानादिरित्यस्यानयमकमिदंसू
क्ष्मव्यपेतमुच्यते॥१०॥श्लोकेस्थूलव्यपेतंयथा।जयन्ति
तेसदादेहन्तमस्यन्तिजयन्तिते। भवान्यतोनमस्य

---

मकमुभयम्॥८॥ यस्यागिरेस्तटेरविसादित्यमुदग्रतापन्दधानेपिभृङ्गाव
लिर्भ्रमरमालानाखिद्यत। यतोऽरविन्दधानेपद्मानान्निधानभूतेनि
पीतरसाआस्वादितमकरन्दा अतएवमत्ता नमान्तितामरसानियस्याः
सकाशात्सातथा। भ्रमन्मितपद्मकुहरप्रवेशान्मधुरससेवयाचभ्रम
रमालयाखेदोनाधिगतः। अत्रद्वितीयचतुर्थपादयोरविन्दधानेरवि
न्दधानेइति रसानमत्तारसानमत्तेतिद्वाभ्यामेवावृत्तिभ्यां व्याप्तत्वादा
द्यादिविभागासम्भवेअस्यानयमकमेवेदं व्यवेतन्तुकथम्भवतीत्यतआ
ह। माभूदिति॥९॥ करेणुर्हस्तीप्रस्थितस्खलितस्तेनघण्टारेणुरशब्दाय
न्त। सहस्रशइतिक्रियाविशेषणम्। करेस्थूलहस्तेऽणुःसीत्कारविकी
र्णतयापरमाणुसाङ्कृतस्तेनशीकरेण। ननुविषमपादयोराद्यन्तरविनाऽ
करणेनमध्येसमपादयोःपुनरादावेवरेणुरित्यावृत्तिरस्तितत्कथमस्यान
यमकमिदमित्यतआह। तत्त्विति। अन्तोवृत्तैरसम्भावितत्वादादौम
ध्येवासावाच्या। नचेयमपिसम्भवति। रेणुरेणुरितिशब्दभागमपेक्ष्यप्रवृ
त्तायामावृत्तौतद्विरहात्॥१०॥हेजयन्तियेतवदेहंदुर्गोतारादिरूपेणप्रप

न्तिसदादेहम्भवान्यतः । अत्रस्थूलव्यपेतावृत्तिश्चतु
ष्टयेनश्लोकोऽपिव्याप्त इत्यादिमध्यान्ताभावादस्यान
यमकमिदंस्थूलव्यपेतमुच्यते ॥११॥ श्लोकएवसूक्ष्मव्य
पेतंयथा।यामानीतानीतायामालोकाधीराधीरालो
का । सेनाऽसन्नाऽसन्नासेनासारंहत्वाहत्वासारम् ।
अत्रयद्यपियामायामेत्यादौव्यपेतमाद्यन्तयमकन्नी
तानीतेत्यादौचमध्ययमकमव्यपेतं विद्यते तथापि

---

स्वमानान्मूर्तिंसदानमस्यन्तितेजयन्तिसर्वोत्कर्षेणवर्तन्ते । यतस्तएव
भवान्संसारसरणिमस्यन्तिक्षिपन्ति । भवात्परमेश्वरादन्यतामिदस्तेनो
नमतःश्रेयसआदानङ्ग्रहणंयत्रतादृशीईहाचेष्टायत्रेतिद्वयमसनक्रियावि
शेषणम्। अत्रजयन्तितइतिप्रथमद्वितीययोराद्यन्तौसदादेहमितिप्रथ
मचतुर्थयोरन्त्यादीनमस्यन्तीति द्वितीयतृतीययोर्भवान्यतइतिचतृती
यचतुर्थयोराद्यन्तौचस्थूलावृत्त्याव्याप्तावितिअनावृत्तभागाभावाच्छ्लो
केस्थूलव्यपेतमस्थानयमकमिदम् ॥११॥ मानिभिरितासङ्गता । यद्वायामे
नप्रहरमात्रेणानीताप्रापिताशत्रून्जित्वेत्यर्थः। आनीतःप्रापितआया
मोवृद्धिर्यस्याःसातथा । पालनेनलोकानामाधिमीरयतिक्षिपतीतिलो
काधीराधीरैरप्राप्तसमरसन्नैरालोक्यतइतिधीरालोकाःसहइनासे
नान्यावर्ततइतिसेनाअसन्नाअवसादरहिताएवम्भूतायासेनासाआस
न्नानिकटवर्तिनीसतीआरमरिसमूहंहत्वास्वांस्वांसारङ्कार्यसिद्धिञ्च
वीति । ननुयामामायामालोकालोकेत्यादिकमाद्यन्तयोर्नीतानीतेत्या
दिकन्तुपदचतुष्टयस्यापिमध्यइति व्यपेतमाद्यन्तव्यपेतयमकन्तुमध्य
यमकमितिस्थानयमकमेवेदंसङ्करोऽपिनपृथग्यमकताम्प्रयोजयतीत्य
तआह । अत्रयद्यपीति । यामेत्यादिकमादावनुसन्धायपर्वचतुष्टय
वधिनापादान्तेनुसन्धीयमानम्माण्डूकप्लुतिम्प्रयोजयतीतिमतयासोल्ले
खम् । यामानीतेत्यादिस्थूलचतुष्कप्रत्यागतेननीतायामेत्यादिनात्य
न्तमुद्भटेनयमकच्छायातिरोधीयतइतिचनसोल्लेखम् । मध्यादिकम
व्यपेतंसोल्लेखमित्यपिनवाच्यम् । यामानीतेत्यादिबन्धच्छायापकर्षति

मण्डूकप्लुत्यागतप्रत्यागतेर्यतेश्चनैतदुल्लिखति । अ
पितुश्लोकोपिद्वाभ्यांद्वाभ्यामक्षराभ्यांसूक्ष्मवृत्याव्या
प्रइवलक्ष्यते । तेनास्थानयमकमिदमादिमध्यान्ता
नामभावात्सूक्ष्मावृत्तेःसूक्ष्मव्यपेतमुच्यते ॥ १२ ॥ पा
दसंधौस्थूलव्यपेतंयथा । हठपीतमहाराष्ट्रीदशनच्छ
दपाटला । पाटलाकलिकानेकैरेकैकालिलिह्यालि
भिः । अत्रापिप्राग्वदेवयतिविच्छेदात्पूर्वोत्तरार्द्धयो
रसंहितायाम्पाटलापाटलेत्यावृत्तेर्नाऽव्यपेतयमकत्व
म् । नचैतत्पादयोरादावन्तेवाशक्यतेवक्तुम् । अ
पित्वेकस्यादावन्यस्यवान्त्यस्यानेयमकमिदं स्थूला
वृत्तेःस्थूलव्यपेतमुच्यते । नचैतद्वाच्यमुपोढरागेत्या
दौकाञ्चीयमकेप्ययमन्यायइति । तस्यैवतथाभूत
लक्षणत्वात्॥१३॥ काञ्चीयमकएवाव्यपेतास्थानयम
मेकदेसूक्ष्मव्यपेतंयथा । धराधराकारधराधराभुजा
भुजामहीपातुमहीनविक्रमाः । क्रमात्सहन्तेसहसा
हतारयोरयोद्धुरायानधुरावलम्बनः । अत्रान्त्य
पादेधुराधुरेतिसूक्ष्मव्यपेतंवर्तते॥१४॥ स्वभेदान्यभेद
योःस्थूलंसूक्ष्मञ्चयथा । सालंवहन्तीसुरतापनीयं

---

करणेनानुल्लेखत्वात् । श्लोकस्तुद्वाभ्यान्द्वाभ्यामावृत्तिभ्यांव्यामइतिसमु
दायस्योल्लेखतैव।तदिदमुक्तम्मण्डूकप्लुत्यागतप्रत्यागतेर्यतेश्चेति। मध्ये
यतिकृतोव्यवायोबोद्धव्यः।अत्रापिवृत्तौचित्यमनुसरणीयम्॥१२॥ हठया
नेनताम्बूलरागोनिःशेषितस्तेनप्राप्तपरभागसहजरागोत्कर्षः। व्यवधाय
कशब्दाभावेकथमिदंव्यवेतमित्यतआह । अत्रप्राग्वदिति । ननूपोढ
रागेत्यादौ पूर्वोदाहृतेपियतिविच्छेदादस्तिव्यवधानात्कोस्यविशेषइ
त्याशङ्क्याह।नचैति॥१३॥धराधरःशेषोमहीम्पातुंसहतइत्यन्वयः॥१४॥सा

सालंतडिद्भासुरतापनीयम् । रक्षोभरक्षोभसत्रि
कूटालङ्काकलङ्काऽकलिकाद्रिकूटा । अत्रसालंसाल
मितिस्वभेदेसुरतापनीयंसुरतापनीयमिति स्थूलः । र
क्षोभरक्षोभलङ्काकलङ्केतिअन्यभेदे कूटाकूटेति सु
क्ष्मव्यपेतभेदोवर्त्तते तदिदमस्यानयमकं स्थूलसूक्ष्म
मुच्यते ॥५१॥ यत्सूक्ष्मम्भागम्बह्वावृत्तितदपिस्थू
लसूक्ष्ममेव । यथा । मधुरयामधुबोधितमाधवीम
धुसमृद्धिसमेधितमेधया । मधुकराङ्गनयामुहुरुन्म
दध्वनिभृतानिभृताक्षरमुज्जिगे ॥१६॥ स्थानास्थान
विभागोयमव्यपेतव्यपेतयोः । क्रमेणोक्तस्तयोरेव
पादभेदोथकथ्यते ॥१॥ तत्रव्यपेतभेदेषुप्रथमपाद
योरावृत्तिर्यथा । नमन्दयावर्जितमानसात्मयानम
न्दयावर्जितमानसात्मया । उरस्युपास्तीर्णपयोधर
द्वयम्मयासमालिङ्ग्यतजीवितेश्वरः॥१॥ तत्रैवद्विती
यतृतीययोर्यथा । द्वयस्त्वयायम्पुरतःपयस्वाना
नाकलालीरुचिरेणनेत्रा । नानाकलालीरुचिरेणनेत्रा

---

लः प्राकारः सुराणान्तापनं सन्तापजननन्तस्मैहितमलमत्यर्थं सालङ्का।
तपनीयंसुवर्णन्तापनीयञ्चतद्भास्वरञ्चेतिकर्मधारयः । रक्षसाम्भरःस
मूहस्तस्यक्षोभः प्रकर्षजः कोलाहलः । त्रिकूटः सुवेलोकलङ्कादोषरहि
ताश्चकलिकानिकलिरहितानिअद्रिकूटानिसुवेलशिखराणियस्यांसात
था ॥१५॥ यत्सूक्ष्मभागमिति । भागशोविविच्यमानं सूक्ष्ममेववृत्तिभूय
स्त्वात्तुस्थूलमिवप्रथतइतिसूक्ष्मेधिकयाभिधानम् ॥१६॥ क्रमप्राप्तमिदा
नीम्पादयमकमुदाहर्तुमित्याह ॥ स्थानास्थानेति ॥१॥ मन्दयातल्का
लोचिते प्रतिपत्तिविधुरयाआवर्जितोमानईर्ष्यारोषलक्षणोयया सा
तथा । सात्माआत्मवतीअनयोःकर्मधारयः । नमन्पादान्तेलुठन्नपि

देवीयदस्मादजनिस्वयंस्त्री:॥२॥ एवंतृतीयचतुर्थयोर
पियथा । स्मरानलोमानविवर्द्धितोयःसनिर्वृतिन्ते
किमपाकरोति । समन्ततस्तामरसेक्षणेनसमन्तत
स्तामरसेक्षणेन॥३॥ व्यपेतभेदेषुप्रथमतृतीययोर्यथा।
सभासुराणामवलाविभूषितागुणैस्तवारोहिमृणाल
निर्मलैः॥ सभासुराणामबलाविभूषिताविहारयन्नि
र्विशसम्पदःपुराम्॥४॥ तत्रैवप्रथमचतुर्थयोर्यथा।क
लङ्कमुक्तन्तनुमध्यनायिकास्तनद्वयीञ्च त्वद्धृतेनह
न्त्यतः । नयातिभूतङ्गणनेभवन्मुखेकलङ्कमुक्तन्तनु
मध्यनायिका ॥५॥ एवन्द्वितीयचतुर्थयोरपियथा।
याविभर्तिकलवल्लकी गुणस्वानमानमतिकालिमाल

---

दयावर्जितौमानसात्मानौयस्याइतिबहुव्रीहिर्डाप्॥२॥ आनाकंस्वर्गाव
धिललनमुल्लासस्तच्चीलोकचिरेणमनोहरेणनेत्रानायकेननानाकलाना
न्धातुःषष्टिकीनामालीपरम्परा । एणनेत्राहरिणलोचना । द्वयमपि
श्रीविशेषणम् ॥३॥ समंसमकालंक्षणेनततोविस्तीर्णस्तामनुभवैकसाक्षि
चिन्तानुवृत्तिलक्षणान्निर्वृत्तिमरत्सेइतिसोपालम्भसम्बोधनम् । सम
न्ततःसर्वतस्तामरसेक्षणेकमलनेत्रेनकिमपाकरोतीतिपूर्वेणसम्बन्धः ।
अबला । बलाख्येनदानवेनरहिताविभुनाशक्रेणाध्यासिता सुराणान्दे
वानांसभामृणालनिर्मलैस्तवगुणैरारोहियतोऽतःसत्वम्पुण्यंबलाविभू
षिताश्रियोलङ्कृताविहारयन् भासुराणांसतां सम्पदोनिर्वशेत्या
शंसा॥४॥ कलम्मधुराव्यक्तम्भाषितम् । तनोर्मध्यस्यभरेणानामिकास्तन
द्वयीञ्च [illegible] विहायकन्नायकन्नहन्त वशीकरोति । अतोजितेन्द्रिये
षु [illegible] गणनीयेत्वयिसतिकलङ्कमुक्तन्निर्दोषन्तनुमधिशरीरमधिकृ
त्यभूतमनासिकाकुलीनयातिपरस्यत्वत्सदृशस्याभावात् । निर्दोषोहि
लोकेकर्ध्वाङ्गुल्यानिर्दिश्यते॥५॥वल्लकीगुणस्वानोवीणाशब्दस्तस्यमानं
याबिभर्त्तिकालिमःश्यामतायाआलया । कज्जलप्रभृतीनतीत्यवर्णप्र

या।नात्रकान्तमुपगीतयातयास्वानमानमतिकालि
मालया ॥६॥ अर्द्धाभ्यासःसमुद्गःस्यात्तस्यभेदास्त्रयोम
ताः।व्यपेतश्चाव्यपेतश्चउभयात्माचसूरिभिः॥१॥तेषु
व्यपेतोयथा। अनेकपादभ्रमदभ्रसालम्मान्येहृशा
भीरुपतत्रिकूटम्। अनेकपादभ्रमदभ्रसालम्मान्येदृ
शाभीरुपतत्रिकूटम्॥१॥अव्यपेतोयथा। घनंविदा
र्यार्जुनबाणपूगंघनंविदार्यार्जुनबाणपूगम्। स
सारबाणोयुगलोचनस्यससारबाणोयुगलोचनस्य।
२॥ व्यपेताव्यपेतोयथा। कलापिनांचारुतयोपया
न्तिवृन्दानिलापोढघनागमानाम्। वृन्दानिलापो

कर्षणायास्थितातया गातुमुपक्रान्तयाभ्रमरमालयाहेतुभूतयाकानामात्र
पर्वतेकान्तन्ननमतिनप्रणमतीतिनसुखेननाम्यतेइति अस्वानमायाप्रा
गासीत्साप्युद्दीपनप्रकर्षेनिःशेषितमानानमतीत्यर्थः॥६॥१॥अनेकेषुपा
देषुप्रत्यन्तपर्वतेषुभ्रमन्त्यभ्राणिमेघाएवसालोवरणःप्राकारोमान्यःपू
ज्यार्हाईदृशायथादृश्यंतथैवमनोहारिणोऽभीरवोभयरहिताः पतत्रि
कूटाः पक्षिसङ्घाअनेकपाहस्तिनस्तेषामदस्त्वउत्कटोमदस्तम्भरन्तिधा
रयन्तीतिमूलविभुजादित्वात्कप्रत्ययेअनेकपादभ्रमदभ्राःसालावृक्षा
यत्र। मान्येभीरिवितिसम्बोधनद्वयम्। मानःशृङ्गारभावस्तद्दृशा
त्रिकूटम्पर्वतमालोकयेति।विदारीकन्दभेदः॥१॥ अर्जुनःककुभोबाणोगु
ल्मविशेषोपूगोगुवाकोवृक्षद्वन्द्वत्वात्पाक्षिकएकवद्भावः। अर्जुनःपार्थ
स्तस्यबाणपूगंशरसमूहस्तंविदार्यभित्वा। अयुगलोचनस्त्रिनेत्रःकिरा
तरूपधरस्तस्यससारगतः सारबाणउत्कृष्टशब्दस्तेनसहितोऽयुगद्वि
तीयोऽलोचनस्यदुर्ज्ञानस्य ॥२॥ केपानीयेलपनशीलाहंसास्तेषांवृन्दा
निचारुतयामनोज्ञभावेनोपयान्तिसङ्गच्छन्ते।लापेनपरस्परसंलापमात्रे
णोढःप्राप्तोघनोनिरन्तरआगमआगमनंयेषां वृन्दानिलोवायुस्तेना
पोढोनिराकृतोघनागमोमेघदुर्दिनङ्कलापिनोमयूराआरुतयःसमन्त

ढघनागमानाकुलापिनाचारुतयोऽपयान्ति । पाद
त्रयाभ्यासस्तुनातिसुन्दरइतितद्भेदानोदाह्रियन्ते ॥
३॥ एकाकारचतुष्पादम्महायमकमुच्यते । श्लोका
भ्यासस्तत्राद्यम्पुनरभ्यासमर्हति ॥ १॥ तत्राव्यपेतभे
देमहायमकंयथा । सभासमानासहसापरागात्सभा
समानासहसापरागात् । सभासमानासहसापरागा
त्सभासमानासहसापरागात् ॥ १॥ व्यपेतभेदेद्वितीयं
महायमकंयथा । प्रवणमदभ्रमदचलद्विपराजितमूढ
विमलमहिततरङ्गम् । विरसंसदातिमिश्रितमच्युत

---

तः केकयितानिश्रपयान्तितिरोभवन्ति । एकश्लोकेपादत्रयाभ्यासस्यास
म्भवाच् श्लोकान्तरेचतयासौन्दर्याभावात्पादत्रयाभ्यासोनचिन्तनीयइ
त्यतआहपादत्रयेति ॥ ३ ॥ इदानीमुक्तसमग्रामम्महायमकंलक्षयन्नाह ।
एकाकारेति । द्विविधमेकाकारंभवति । एकमावृत्तिचतुष्केणापरमा
वृत्त्यष्टकेनतदिदमुक्तमाद्यम्पुनरनावृत्तमिति।प्रतिपादमवान्तरावृत्ति
भेदेनैवाष्टकनिर्वाहात्॥१॥भासःकान्तिर्मानश्चित्तसमुन्नतिःपूजावाआ
सःशत्रुविधूननंहसःस्मेरता । एतैःसहवर्त्ततेइतिसभासमानासहसा ।
यतोऽपरागश्चित्तकालुष्यमस्ति । भासमानैःशोभमानैःसहवर्त्तते । स
भासमाना । सहसामार्गशीर्षेणहेतुनाप्रावृड्विच्छेदप्रादुर्भूतान्परा
गान्रजःकणानततिप्राप्नोतिपरागात् । भाकान्तिस्तयासमानासरूपा
स्तैःसहवर्त्ततइतिसभासमाना।षोन्तकर्मणि।स्यन्तिपरानितितेसास्तै
सहवर्त्ततइति सहसाएवम्भूताअसमाना अनुपमासभाजनसमवायो
ऽपरागादपरस्मात्पर्वतात्सहसाशीघ्रम्मन्दरागात्परागतेति॥१॥ प्रवणम्प्र
कृष्टतरवनंप्रनिरन्तःशरेत्यादिनाणत्वम् । अदभ्रेणमहतामदेनद
र्पेणाचलन्तोयेवयःपक्षिणस्तैःपराजितामूढवयोबालाः पक्षिणोयत्रतम
लमत्यर्थंस्पूर्वोक्तरूपानमूढान्वीन्पक्षिणोमलसेधारयतीतिवा । अ
हिततरगम्भुजङ्गव्याप्तावर्तस्थानं विरसमतलस्पर्शन्तयाभूभागरहितंस
दासर्वकालन्निमिभिर्महामत्स्यैः श्रितमाश्रितमच्युतस्यभगवतो नारा

धामप्रतीतशिखिचरितवनम् । प्रवणमदभ्रमदचल
द्विपराजितमूढविमलमहिततरङ्गम् ॥ विरसंसदाति
भिश्रितमच्युतध्यामप्रतीतशिखिचरितवनम् ॥ २ ॥
अव्यपेतभेदे आद्यस्यपुनरभ्यासोयथा । समानया
समानयासमानयासमानया । समानयासमाऽनया
समानायाऽसमानया ॥३ ॥ एकरूपेणवाक्येन द्वयो
र्भणनमर्थयोः । तन्त्रेणयत्सशब्दज्ञैः श्लेषइत्यभिश
ब्दितः ॥ १ ॥ प्रकृतिप्रत्ययोत्थौद्वौ विभक्तिवचना
श्रयौ । पदभाषोद्भवौचेतिशब्दश्लेषाभवन्तिषट् ॥२॥

यशस्धामविश्रान्तिस्थानंप्रतीतःप्रख्यातःशखीवडवानलस्तेनचरित
वनमभिहितजलोत्पीडमितिप्रथमश्लोकार्थः । प्रवणमदाःमदायसद
र्पाः सततनिस्यन्दमानमदजलाश्चभ्रमन्तोयेमैनाकप्रभृतयोऽचलाद्वि
पाःकरिमकराश्चतैःशोभितम् । ऊढाविमलास्वभावनिर्मलाःमहि
ताःपूजिताःतरङ्गायेनतम । विरसंक्षारम् । सतीभिःशोभनाभि
रातिभिः पक्षिविशेषैःमिश्रितङ्करम्बितमच्युतध्यामतेजोयस्यतम्प्रती
ताःप्रत्यायिताःशिखिनोमयूरास्तैश्चरितवनम्भ्रान्ततीरकाननं समुद्रम्प
श्येतिवाक्यान्तरवर्त्तिक्रिययासम्बन्धइतिद्वितीयश्लोकार्थः॥२॥ समान
येति । हेसमानसखेयाऽसमानयाअविनयवतीनान्धुरिगणनीयया
अनयोःसमानयासमानयायासःप्रयत्नोमानईर्ष्यारोषस्तौसमानौयस्या
स्तयातथासयानयाचित्तानुस्मृतिसारूप्यमजमानयापूजासहितयाअ
समानयाअनुपमयासत्वंसामांसमानयसङ्गमयेतिमन्मथोन्माथाविष्ट
स्यकस्यचिद्दूयस्यप्रार्थना ॥ ३ ॥ यन्धावृत्तिसामान्याद्यमकानन्तरं
श्लेषंलक्षयति । एकरूपेणेति । अर्थभेदेनशब्दाभिद्यन्तइति मये
कथमेकेनवाक्येनद्वयोरुक्तिरित्यतआह । तन्त्रेणेति । श्लेषोहिसम्भे
दलक्षणः सचात्रभिन्नानामपिशब्दानामुच्चारणसाम्येनप्रवर्त्तते । अ
नेकसम्बन्धानामैकरूप्येणावर्त्तनंतन्त्रमित्युच्यते ॥१॥द्वयोरितिसङ्ख्या
नविवक्षिता । त्रिप्रभृतीनामपिश्लेषसम्भवात् । विभागवाक्येविभक्ती

तेषुप्रकृतिश्लेषोयथा। आत्मनश्चपरेषाञ्चप्रतापस्त
वकीर्तिनुत् । भयकृद्भूपतेर्बाहुर्द्विषाञ्चसुहृदाञ्च
ते । अत्रकीर्तिनुदित्यत्रनौतिनुदत्योर्भयकृदित्यत्र
करोतिकृन्तत्योःप्रकृत्योःक्विपितुल्यंरूपमितिप्रकृति
श्लेषोयम् ॥ १ ॥ लिङ्गश्लेषोपिप्रकृतिश्लेषएवतद्यथा ।
कुवलयदलद्युतासौदृशाचवपुषाचकन्तदर्शयते । अ
धरीकृतप्रवालश्रियाङ्घ्रिणास्येनचनतभ्रूः । अत्रदृग्वपु
षोरास्यचरणयोश्चकुवलयद्युतेत्यधरीकृतप्रवालश्रि
येतिच लिङ्गभेदेपितुल्यरूपेविशेषणेइति लिङ्गश्लेषो
यम् ॥ २ ॥ प्रत्ययश्लेषः सोद्भेदोनिरुद्भेदश्च। तयोराद्यो

---

नांसाक्षादुपादानात्प्रत्ययपदन्तदन्यपरं विशेषशोभाकरत्वञ्चविशेषो
पादानप्रयोजनम् ॥ २ ॥ आत्मनःकीर्त्तिन्नौतिस्तौतीपरेषांशत्रूणाञ्चनुद
तिक्षिपति द्विषाञ्चभयङ्करोतिजनयतिसुहृदाञ्चभिनत्तीतिधातुरूपप्रकृ
तिभेदादेवार्थभेदःक्विप्प्रत्ययस्यसाधारण्यात् ॥ १ ॥ ननुवर्णपदलिङ्गभाषा
प्रकृतिप्रत्ययविभक्तिवचनानामितिकैश्चित्परिसङ्ख्यातन्ततश्चाष्टधा
श्लेषोभविष्यतीत्यतआह ॥ लिङ्गश्लेषोपीति । तदिदमुदाहरणीयमि
त्याह । सयथेति । दर्शयतइत्यात्मनेपदेनतटस्थमपिकान्तं हठाद्दर्शना
यप्रेरयतितीव्यज्यते । अधरीकृताजिताऽधरत्वमापादिताच । ननु
चकुवलयदलद्युतेतितश्चधरीकृतप्रवालश्रियेतिचप्रकृतिभागोनभिद्यते ।
तत्कथमयम्प्रकृतिश्लेषइति । नैतत् । आविष्टलिङ्गद्वयविशेष्यलिङ्ग
द्वयसन्निधानादनाविष्टलिङ्गंविशेषणमवश्यमुभयलिङ्गग्राहिवाच्यम् ।
पञ्चकप्रातिपदिकार्थपक्षेविभक्तिर्द्योतिकैव तथाच लिङ्गभेदइतिवि
भिन्नेविशेषणप्रकृतीमिथः संश्लिष्टेइति । अत्रेत्यादि ॥ २ ॥ तद्वाक्यस्थश
ब्दान्तरप्रकाशितःसोद्भेदो तथाभूतोनिरुद्भेदः । सत्वर्थीयेनिप्रत्ययेहा
रवन्तौहारिणौ । अवश्यकार्येणिनिप्रत्ययेसहृदयानाम्मनोहरतइति
हारिणौआनन्दघनरसचर्वणारूपोविस्मयोऽद्भुतञ्च। अपिशब्देनविरोध

यथा । तस्याविनापिहारेणनिसर्गादेवहारिणौ । ज नयामासतुःकस्यविस्मयन्नपयोधरौ । अत्रहारिणा वितिइनिणिनिप्रत्यययोरेकरूपत्वाद्विनाऽपिहारेणे तिचमत्वर्थीयोद्भेदात्सोद्भेदप्रत्ययश्लेषोऽयम् ॥ ३ ॥ द्वितीयोयथा।त्वदुद्धृतामयस्यानरूढव्रणाङ्किणाकृतिः विभातिहरिणीभूताशशिनोलाञ्छनच्छविः । अत्र हरिणीभूतेतिच्वेर्ङीपश्चतुल्यरूपतातान्तदुद्भेदोना स्तीत्यनुद्भेदःप्रत्ययश्लेषोऽयम् ॥४॥ विभक्तिश्लेषोद्वि धा । भिन्नजातीययोरभिन्नजातीययोश्च । तयो राद्योयथा । विषंनिजगलेयेनयभ्रेचभुजगप्रभुः । देहेयेनाङ्गजोदध्रेजायाचसजयत्यजः । अत्रयेनावि षन्निजगले भुजगराजश्चनिजगलेयभ्रेऽङ्गजोदेहेजा याचदेहेदध्रेइतितिङ्सुब्विभक्त्योः लिडात्मनेपदप्र थमपुरुषैकवचनसप्तम्येकवचनान्तयोरेकरूपत्वाद्वि

द्योतकेनहारश्चानयोरपिहारसम्बन्धोविस्मयरसार्पकइति मत्वर्थीयो न्मुद्रणात्सोद्भेदः । प्रत्ययश्लेषस्तुकथम्भवतीत्यतआह । णिनिप्रत्य ययोरिति॥३॥व्रणरूढिस्थानंयस्यामस्त्यवतीतिलाञ्छनच्छायाभूताकीदृशी हरिणीहरिता [ वर्णादनुदात्तात्तोपधात्तोन ] इतिङीपिनादेशेच रूपम् । सेयम्प्रतीयमानगुणामोत्प्रेक्षा । अहरिणारूपापिव्यवहा रारूढहरिणतामापन्नेति च्विप्रत्ययेचहरिणीभूतेरूपम् । अत्रङीपश्च्वे र्वानकिञ्चिदुद्भेदकन्निबद्धमितिनिरुद्भेदःप्रत्ययश्लेषोयम्।हरितहरिण रूपेप्रकृतीअपिसम्भिन्नेएव । संकरस्यादूषणत्वात् । एवम्पूर्वोदा हरणेपि ॥४॥ निजगलइतिगिरतेःकर्मणिलिटिरूपम् । येनविषङ्काल कूटाख्यन्निगीर्णन्निजेचगलेकण्ठेभुजगराजोधृतोदेहइतिदहतेस्तत्रैवरू पम् । अङ्गजःकामोयेनदग्धःनिजेचदेहेशरीरेजायापार्वतीधृतासज यतीति ।विवरणग्रन्थःसुबोधएव॥५॥धातुर्जगन्निर्मातुरपिपूर्वइत्यनेना

भिन्नार्थकत्वाद्भिन्नजातीयसुप्तिङ्विभक्तिश्लेषोयम् ॥ ५॥ द्वितीयो यथा। त्वमेव धातुः पूर्वोसि त्वमेव प्रत्ययः परः। अनाख्यातन्न ते किञ्चिन्नार्थकेनोपमीयसे। अत्र धातुरिति प्रथमान्तस्य षष्ठ्यन्तस्य चैकरूपत्वाद्भिन्नार्थकत्वाच्चाभिन्नजातीयसुविभक्तिश्लेषोयम् ॥ ६ ॥ वचनश्लेषो द्विधा। सोद्भेदो निरुद्भेदश्च। तयोः सोद्भेदो यथा ॥ प्राज्यप्रभावः प्रभवो धर्मस्यास्तरजस्तमाः ॥ मुक्तात्मानः शिवं नेमिरन्येपि ददतां जिनाः ॥ अत्र नेमिरित्यन्येपीति एकवचनबहुवचनाभ्यां ददतामित्यत्र तिङन्ते प्राज्यप्रभावः प्रभव इत्यादिषु च सुबन्तेष्वेकवचनबहुवचनयोरुद्भेद इत्ययं सोद्भेदो नाम वचनश्लेषः ॥ ७ ॥ निरुद्भेदो यथा। तत्वरमणीयस्य मध्यस्य च भुजस्य च। अभवन्नितरां तस्या वलयः कान्तिवृद्धये। अत्राभवन्निति वलय इति पद

---

नादित्वमुक्तम्। परः प्रत्ययः कारणत्रयरूपं न किञ्चिदनाख्यातम्। श्रुतिस्मृतीतिहासपुराणेषु प्रसिद्धावदानत्वात्। द्वितीयस्याभावान्न केनचिदुपमानम्। अर्थान्तरे तु धातुः क्रियावचनशब्दरूपः पूर्व एव प्रकृतित्वात्तः परः प्रत्ययः तिङादिरतः सर्वमाख्यातमेव पदं निष्पद्यते तेन च कथमुपमानं हि तिङन्तेनोपमानमस्ति भिन्नार्थत्वाच्चेति शब्दभेददृढीकरणार्थमुक्तम्। एवं तिङामपि सम्भेद उदाहरणीयो यथा। माद्यन्तु नामकवयस्तथापि विदितश्रमाः ॥ वेद विद्यापतिर्वाचामहं वाचो रिवान्तरम्। अत्र वेदेति प्रथमोत्तमयोः पुरुषयोरेकवचने श्लिष्येते ॥ ६ ॥ अत्र नेमिरिति। एकवचनबहुवचनाभ्यां विशेषणेषु सम्बन्धयोग्यताक्षेपात्तिङ्वचनेषु सुब्वचनेषु च यथायथमर्थद्वयोन्मीलनाच्छब्दरूपद्वयोद्भेदः। एकवचनेन वलयः कङ्कणं बहुवचनेन च मध्यरेखा इति सुबन्तपदे। एतदौचित्येति

योस्तिङन्तसुबन्तयोरेकवचनबहुवचने अनुद्भिन्ने ए
वाप्येतेइत्यय स्थान्निरुद्धभेदो नामवचनश्लेषः ॥ ८ ॥
पदश्लेषोयथा । अरिमेदःपलाशश्च बाहुःकल्पद्रुमश्च
ते । बलेवोद्यानमालेयं सालकाननशोभिनी । अत्र
प्रकृतिप्रत्ययविभक्तिवचनानाम्पृथगभिधानादभि
धानमालोक्तानिप्रातिपदिकान्येवपदशब्देनोच्यन्ते।
तेनपूर्वार्द्धेशत्रुमेदोमांसादस्तेबाहुरित्यर्थेनारिमेदप
लाशाख्यवृक्षनाम्नीश्लिष्येते । उत्तरार्द्धेचसालाना
ङ्काननेनशोभतइत्येवंशीलेयमुद्यानमालेवद्यर्थेनसा
लकेनाननेनशोभत इत्येवंशीलाबालेत्युपमानार्थः
श्लिष्यते। सएषपदश्लेषोनमशब्दश्लेषः ॥ ९॥ वर्णश्ले
षोपिपदश्लेषएव । सयथा । त्वमेवदेवपातालमा
शानात्वंन्निबन्धनम् । त्वञ्चामरमरुद्भूमिरेकोलो

---

डन्तपदेचाभवन्निति वचनद्वयलाभः । नचानयोःकिञ्चिदुद्भेदकन्निबद्ध
मितिनिरुद्धभेदोऽयन्तदेतदाह । अत्रेत्यादि॥७॥८॥ अरीणाम्मेदः शरीरधा
तुभेदःपलम्मांसमश्नातियःसतथाचकारउत्तरवाक्यापेक्षया । अरिमे
दोविट्खदिरःपलाशःकिंशुकः सालास्तरुविशेषास्तेषाङ्काननमलकाश्चू
र्णकुन्तलाःसत्सहितमाननञ्च । पूर्वोत्तरार्द्धयोर्नैकवाक्यत्वमुदाहरण
त्वात् । ननुविभक्त्यन्तान्यत्पदन्तत्रपूर्वभागेनप्रकृतिश्लेषउत्तरभा
गेनचप्रत्ययश्लेषउद्दिष्टएवतत्कोन्यःपदश्लेषइत्यतआह । अत्रेति ।
प्रकृतिप्रत्ययभावविवक्षाविरहेनाममालोक्तानि प्रातिपदिकान्येवाव
शिष्यन्तइत्यर्थः ॥९॥ "अलङ्कारःशङ्काकरनरकपालम्परिजनोविशीर्णा
ङ्गोभृङ्गीवसुचवृषएकोबहुवयाः । अवस्थेयंस्थाणोरपिभवतिसर्वामर
गुरोर्विधौवक्रेमूर्ध्निस्थितवतिवयंकेपुनरमी । इतिवर्णश्लेषःकाश्मीर
कैःपृथगुदाहृतअतआह । वर्णश्लेषोपीति । अवयवाभेदेसमुदाय
भेदासम्भवादवयवभेदेचसमुदायभेदध्रौव्यात्पदश्लेषव्यवस्थितौ तत्रैवा

कत्रयात्मकः । अत्रत्वमेवपातालमित्यकारःपाश्चा
त्येत्वञ्चअमर मरुद्भूमिरिति चकारःपौरस्त्येऽक्षरे
श्लिष्टःपातालाञ्चामरेइतिचपदंरचयति । सोयंप
दश्लेषएववर्णश्लेषइत्युच्यते॥१०॥भाषाश्लेषोयथा।
कुरुलालसभूलेहेमहिमोहहरेतुहारिविच्छिन्ने। हरि
णारिसारदेहेवरेवरंहरउमेभावम्। अत्रध्यानानीता
ञ्चरुद्राणीङ्गौरीञ्चपुरतःस्थिताम् । रणेच्छुःकश्चि
दानर्चदिव्यप्राकृतयागिरा। तत्ररुद्राणीपक्षे। हेउमे
हरेभवेवरंश्रेष्ठम्भावङ्कुरु किम्भूते। लालसभूलेहेला
लसभूःकामस्तंलेढियस्तस्मिन्तथामहिम्नाप्रभावेणो
हंवितर्कमपहरतियस्तस्मिन्महिमोहहरेमहेश्वरसन्नि
धौहिसर्वज्ञाभिभवइतिश्रूयते । अतएवतोहन्तिअ
र्द्दयन्तिअरयस्तैर्विच्छिन्नेविरहिते। अपरमप्यरीणां

---

स्यन्तभावोयुक्तइतिभावः । अलमत्यर्थम्पातारक्षिता आशानाम्नि
वन्धनम्मनोरथसफलीकरणबीजमाशानान्दिशां संश्लेषस्थानञ्चामरम
रुद्भूमिः स्वर्लोकोऽमराणामिन्द्रादीनाम्भूमिरमरावत्यादिर्मरुताञ्च
विवहादीनाम्भूतिर्वैमानिकपथश्चामरमरुद्भूमिश्चामरभवमरु ताना
श्रयश्च । कथमत्रवर्णश्लेषइत्यतआह । अत्रेत्यादि । पतिधातुरस्या
मालजृइतिपतेरालच्प्रत्ययेपातालमितिरूपंसिद्धावाकारएवमध्यवर्त्ति
वर्णस्तत्रैवपुनरेकदेशप्रतिसन्धानेपातालमित्याकारश्च प्रतीयते । अ
त्रचैकः पूर्वपरयोरितिवचनादाकारएव श्रूयतेतेनोत्तरः पौरस्त्येनसं
भिन्नः। एवञ्चकारस्योत्तरसम्भेदोव्याख्येयः॥१०॥दिव्यासंस्कृतिसाप्राकृ
तामहाराष्ट्री भावश्चेतसोलयोलालसइच्छा तस्माद्भवतीतिलालसभूः
सङ्कल्पयोनित्वात्कामस्तंलेढीतिकर्मण्यण् । ऊहस्तर्कःसंशयपृष्ठभा
वीविपरीतप्रत्ययविशेषः । कथन्तंहरतीत्यतआह । महेश्वरसन्नि
धाविति । सन्निधिःसाक्षात्काररूपःसर्वज्ञानानिसंस्कारप्रवर्त्तकानि ।

विच्छेदकारणमाह। हरिणारिसारदेहे। हरिणारिःसिं
हस्तस्य सारो बलं स देहो यस्य तस्मिन्वरे परिणेतरीति।
उमाया एव इमानि सम्बोधनविशेषणानि। कान्ता
पक्षे तु। हे कान्ते तव योऽयं हरिनार्याः श्रियाः सार उत्कृ
ष्टो देहस्तत्र यद्वरं श्रेष्ठं विलोचनाननस्तनजघनादि त
न्मे भावमभिलाषं हरतु कामान्पूरयत्वित्यर्थः। किम्भू
ते देहे कुटिलालसभ्रूलेखे महिमोहहरे गृहे हारिणि वि
च्छिन्ने च तनुमध्यत्वादिभिरिति॥११॥ यथा वा। रुचि
रचिरतारिहेतिज्ञुननमितसामकायमकलङ्कम्। सत
ममितवचमानयकमलासनमभिविराजन्तम्। भूतसं
स्कृतभाषाभ्यां द्विर्नमस्कृत्य माधवम्। जगाम समरङ्को
पिकस्य श्रेयसि तूप्रयः। तत्र भूतभाषायां यथा। रुचिरम्म
नोहराज्ञुतारिहेतिम्भग्नसपत्नायुधं जनैर्नमितं श्या

---

तुहिर् अर्दने तोहतीति इगुपधत्वात्कप्रत्यये तुहा अरयो द्विधा आन्त
रा बाह्याश्च। आन्तरा मदमानादयः षट्। बाह्याः क्षेत्रापहारकादयः।
तत्र पूर्वविच्छेदे च हरिणारिसारदेहत्वं हेतुरुक्तो हरिणारिसारश्च सारो
यस्येत्युत्तरपदलोपे हरिणारिसारो देहो यस्येति विग्रहवाक्यमवसेयम्।
यथाश्रुत्यर्थकथनसाम्यमुमाया एवेत्यत्र लालसभूलेह इत्यच्प्रत्यये व्या
ख्येयम्। तुशब्दस्त्वर्थे। [तुतुवतुम्हतुब्भतुब्भाइस] इति सूत्रणात्।
हरिनारी लक्ष्मीस्तस्याः सकाशात्सारः प्रकर्षशाली देहः। पञ्चमीति यो
गविभागात्समासः। कुटिला भ्रूर्णा कुन्तलाः। महीशब्देन भूगोलवर्त्ति
नः प्राणिनोऽभिमतास्तेषां मोहगृह इति व्याख्येयम्। विच्छिन्नो विभक्ताव
यवः॥११॥ एवम्पैशाचादिभिरपि संस्कृतस्य प्राकृतादेश्च परस्परसम्भेदना
च्छ्लेषो गवेषणीय इत्याशयवानाह। यथा वेति। अकलङ्कं दोषरहित
म्मानयेति धात्वर्थस्य भाव्यत्वेनान्वयात्पूजाङ्कुर्वित्यर्थः। ब्रह्माणमभि
लक्षीकृत्येति। रुचयश्चात्मीया अरा विद्यन्ते यस्य तद् रिचक्रं हेतयः कि

मकायमकलङ्कतद्रूपममितमनन्तञ्चसमुच्चये । कम
लासनम्ब्रह्माणमभिलक्ष्मी कृत्यविराजन्तंशोभमान
म्मानयपूजयेति। संस्कृतभाषायांयथा। रुचिभीरञ्जि
ताहेतयश्चक्रेदीप्तयोयेनतं जननैर्दशभिरवतारैर्मितम्
परिच्छिन्नंसामानिकायतिगायतियःससामकायस्तं
नविद्यते कलायस्यसोकलस्तङ्कसन्तम्ब्रह्माणंसन्तमं
विष्णुमितङ्गतमभिविराजन्तङ्करुत्मन्तमभिमन्तन्त
म्प्रसिद्धङ्कमलासनंश्रियासंसक्तम्मानयमाम्प्रापयेति॥
१२॥आवृत्तिर्यातुवर्णानान्नातिदूरान्तरस्थिता।अल
ङ्कारःसावुद्धद्भिरनुप्रासःप्रदर्श्यते ॥ १ ॥ श्रुतिभिर्वृत्ति
भिर्वर्णैःपदैर्नामद्भिरुक्तिभिः । लाटानामुक्तिभिश्चायं
षट्प्रकारःप्रकाशते ॥ २ ॥ प्रायेणश्रुत्यनुप्रासस्तेष्वनु

---

रणाजननञ्जन्म सामानिकायतिकीर्त्तयतीति अपवादविषयेक्वचिदु
त्सर्गःप्रवर्त्ततइतिकर्मण्यण् । कलाअवयवाःप्रसिद्धौ । वीनाम्पक्षिणां
राजागरुडस्तमभिद्रुतङ्गतङ्कमलालक्ष्मीस्तस्या आसनमधिष्ठानम्मामा
नयेति ॥ अनुद्भटावृत्तेश्चित्रादुद्भटावृत्तिमनुप्रासंपूर्वंलक्षयति । आ
वृत्तिरिति । वर्णानामिति । वचनमतन्त्रम् । सारःसारस्वतीमूर्त्तिरि
त्यादावेकवर्णावृत्तेरप्यनुप्रासत्वात् । तेनयमकव्यतिरिक्तावर्णावृत्ति
रनुप्रासइतिलक्षणमुक्तम्भवति । नचश्लेषेतिप्रसङ्गः । तन्त्राञ्च्यांविशे
षात् । पूर्वजातिप्रतिविम्बनेनबन्धच्छायार्थकतयानुप्रासोलङ्कारपद
वीमध्यास्ते । नचनिर्निमित्तमेवप्रतिबिम्बनमतआह । नातिदूरेति ।
अस्तिकश्चिदुच्चारणस्य ज्ञानस्यवाविशेषोयःशीघ्रमेवसंस्कारमुद्बोधय
तीतितद्वतीवर्णावृत्तिरभिप्रेता । अतएवप्राचीनवर्णजात्यनुगतःसहृ
दयावर्जकतयाप्रकृष्टश्चवर्णानामनुप्रासइतिकाश्मीरिकानिरुक्तिः ॥१॥
एवंस्थितेसामान्यलक्षणविभागमाह । श्रुतिभिरिति । आवृत्तिर्द्विधा ।
वर्णमात्रावलम्बिनी समुदायगोचराच । आद्यापिद्वयी । सामान्य

प्रासनायकः । सनाथैवहिवैदर्भीभातितेनविचित्रिता ॥ ३ ॥ निवेशयतिवाग्देवीप्रतिभानवतःकवेः । पुण्यैरमुमनुप्राससमाधिनिचेतसि ॥ ४ ॥ सत्रिधा । ग्राम्योनागरउपनागरश्च । तेषुग्राम्यश्चतुर्धा । मसृणोवर्णमसृणोवर्णोत्कटोवर्णानुत्कटश्च । तेषाम्मसृणोयथा। एषराजादयालक्ष्मीप्राप्तवान्ब्राह्मणप्रियः। तदाप्रभृतिधर्मस्यलोकेस्मिन्नुत्सवोभवत् । अत्रस्थानतःसमानश्रुतीनाम्मूर्द्धन्यतालव्यदन्त्यौष्ठ्यकण्ठ्यव

---

तोरूपतश्च । सामान्यमपिद्विधा । स्थानतोव्यापारतश्च । तत्रस्थानङ्कण्ठादिलक्षणंसैवश्रुतिः । श्रूयतेहितयाभिव्यक्तोवर्णोव्यापारोभिव्यञ्जनरूपःसस्वरसविषयेवर्त्तनंवृत्तिरुच्यते । श्रुतिभिरित्यादौ [ इत्यम्भूतलक्षणे ] तृतीया प्रायेणेति॥२॥श्रुत्यनुप्रासोहिश्लेषघटकः श्लेषश्चगुणान्तरसनक्रततयाऽवतिष्ठमानोवैदर्भीम्प्रयोजयति । अनुप्रासान्तरन्तुमाधुर्यंवामाधुर्यंवाप्रकर्षयतीति नतथानुकूल्यङ्कविशक्तिवशात्तुक्वचित्तदपिप्रयोजयतीतिप्रायपदेनसूचितम् । स्थितिप्रयोजकोलोकेनायकइत्युच्यतेतेषुनायकइत्येववक्तव्येपुनरनुप्रासपदमनुप्रासान्तरसाधारण्येनैवशब्दालङ्कारत्वंदर्शयितुमभिसमाधेयम् । विचित्रिताश्चालेख्यमिवलेखयाचमत्कारकारित्वमानीता॥३॥कथम्पुनरस्यानुप्रासस्यपृथक्प्रयत्नानुसन्धेयस्यापिरसप्रकाशसामग्र्यामन्तर्भावइत्यतआह । निवेशयतीति । अक्लिष्टपदवाक्यार्थस्फुरणम्प्रतिभानन्तदेवकथमित्यतआह । ससमाधिनीति । पुण्यैरिति । तेनरसवत्त्वव्यवस्थितस्यकवेरहम्पूर्विकाकृष्टोनुप्रासोनपृथक्प्रयत्ननिर्वर्त्यइतितात्पर्यम् । ग्राम्यादिभेदोग्रेविवरिष्यते ॥ ४ ॥ एकपदप्रतिभासमात्रानुमेयोमसृणः । रूपसाजात्येपिमसृणतान्यग्भूतोवर्णमसृणः । उद्भटरूपसाजात्यानुविद्धोवर्णोत्कटः । अनुद्भटसाजात्यानुरोधेनकिञ्चिदभिभूतमसृणभावोवर्णानुत्कटः । एषराजेत्यादावुदाहरणेषकाररेफौमूर्द्धन्यौ । जकारय

र्णानाम्प्रथमतृतीयपादयोर्निरन्तराद्वितीयचतुर्थयो
श्चसान्तरापाठ इत्युद्दाम्नीवर्णप्रदानान्मसृणैवा
वृत्तिः। सोयंश्रुत्यनुप्रासोमसृणइत्युच्यते ॥१॥ वर्ण
मसृणोयथा। स्थिताःक्षणम्पक्ष्मसुताडिताधराःप
योधरोत्सेधनिपातचूर्णिताः। वलीषुतस्याःस्खलि
ताःप्रपेदिरेचिरेणनाभिम्प्रथमोदबिन्दवः। अत्रद
न्त्यौमूर्द्धन्यावोष्ठ्यौ डलोरैक्येनदन्त्यपञ्चकम्मूर्द्धन्य
इत्यादिनाक्रमेणयद्यपिपूर्ववत्स्थानतःसमानश्रुति
तयामसृणैवावृत्तिस्तथापिचित्रपटइवमाल्यग्रथनइ
ववायोयंक्षणम्पक्ष्मसुताडिताधराःपयोधरोवलीस्ख
लिताःप्रपेदिरेचिरेणनाभिम्प्रथमोदबिन्दवइतिना
नावर्णात्मकःसूत्रान्तरस्येवपुष्पान्तरस्येववास्थानभे
देनमसृणमेवानिवेशस्तेनैषश्रुत्यनुप्रासो वर्णमसृणइ
त्युच्यते ॥ २॥ वर्णोत्कटोयथा। विमुच्यसाहारमहा

---

कारौतालव्यौदकारलकारौदन्त्याविति प्रथमपादे तकारदकारौद
न्त्यौपकारमकारावोष्ठ्यौतकारधकारौदन्त्याविति तृतीयपादेचनिर
न्तरन्द्वितीयपादेरेफणकारौमूर्द्धन्यौ चतुर्थपादेलकारसकारौदन्त्यादि
विनाक्रमेणसान्तरमावर्त्तनतद्रूपसाजात्यञ्च क्वचिदुल्लिखतीतितस्य
याएवायम्॥१॥अचित्रतन्तुमयःपटः।एकजातीयकुसुमग्रथनात्माकृस्थि
ताइत्यादि। अत्रथकारतकारौदन्त्यौ। षकारणकारौमूर्द्धन्यौ। पका
रमकारावोष्ठ्यौ। ताडितेत्यत्रडकारेलकारकल्पनया। सनलतधाः
पञ्चदन्त्याश्च रेफोमूर्द्धन्य इतिप्रथमपादे। द्वितीयपादेचधकारस
कारौनकारतकारौदन्त्यावित्यादिनाक्रमेणसान्तरानिरन्तराचश्रुतित
एववर्णावृत्तिःपूर्ववदुपलभ्यते। किन्तुतकारादीनांरूपलोपिस्थाने
स्थानेपूर्वंसदृशतान्यभूतैवावृत्तिस्तेनायंवर्णमसृणःश्रुतिसाजात्यञ्च
नक्वचिद्विघटते। अत्रैवनिदर्शनद्वयम्। विमुच्येति। हारोचित सन्नि

र्यनिश्वयाविलोलदृष्टिः प्रविलुप्तचन्दना । अवन्धवा
लारुणबभ्रुवल्कलम्पयोधरोत्सेधविशीर्णसंहति। अ
त्रसर्वम्पूर्ववत्किन्तु तृतीयपादेअबन्धवालारुणबभ्रु
वल्कलमितिवर्णाधिक्ययोगः । सोयंवर्णोत्कटोना
मश्रुत्यनुप्रासः ॥ ३ ॥ वर्णानुत्कटोयथा । ततःप्र
भृत्युन्मदनापितुर्गृहेललाटिकाचन्दनधूसरालका ।
नजातुबालालभतेस्मनिर्वृतिन्तुषारसङ्घातशिला
तलेष्वपि । अत्रदन्त्यवर्णप्रावल्ययातिमसृणत्वेशि
लातलेष्वितिदन्त्यवर्णाभ्यामेववर्णस्तोमोदत्तःसोयं
वर्णानुत्कटोनामश्रुत्यनुप्रासः । तेमीचत्वारोप्यति
प्रसिद्धतयाग्राम्याउच्यन्ते ॥ ४ ॥ ग्राम्यवैपरीत्ये
ननातिप्रसिद्धोनागरः । यथोच्यते । एकत्वबुद्धि

---

वेशयोरपिस्तनयोरनुचितवल्कलबन्धसंभावनेहेतुरहार्यनिश्चयेति ।
अतएवनामाङ्कोपियारयेदितिकातरताप्रादुर्भावादितस्ततोविलोलदृ
ष्टिः। अत्रभकारमकारावोष्ठ्यौ। चकारयकारौतालव्यावित्यादिनाक
मेणमसृणाहकारादीनां रूपसाजात्येपिमसृणताप्राधान्याद्वर्णमसृणा
घावृत्तिरित्याह । अत्रसर्वमिति । वर्णोत्कटत्वंव्याचष्टे । वर्णाधि
क्ययोगइति । उद्भटंहिरूपसाजात्यंवर्णोत्कटत्वम् । तच्चसरूपवर्णा
वृत्त्याधिक्येनेतीत्यर्थः ॥३॥ ततःप्रभृतीति । तापोद्रेकाद्दत्तन्दत्तमेवच
न्दनमाश्यानभावेनरेणुभिरलकच्छटासुविशीर्यतइति द्वितीयकामाये
ग्रोध्वनितः । अत्रतकारनकारौदकारनकारावित्यादिनाक्रमेणश्लोक
समाप्तिं यावद्वद्वयोदन्त्यास्तेनैकश्रुतिव्याप्तस्य सन्दर्भस्यमसृणतायाम
तिशयः । शिलातलेति रूपसाजात्येनलकारावुद्भूतश्रुतिकौनचाधि
कावृत्तिरत्रास्तीत्यनुत्कटता । मचश्रुतेरुद्भवेपिमसृणतानप्रकृष्यत
इतिवर्णानुत्कटोयम् । ग्राम्यत्वंव्याचष्टे । तेमीचत्वारोपीति । श्रु
तिसाजात्यस्यशब्दानुप्रासनेपिप्रसिद्धेरतिप्रसिद्धत्वम्॥४॥ ग्राम्यवैपरी

भेदेपितत्त्वेप्येकत्वनिह्नवः । यस्यवर्णस्यतंप्राहुरनुप्रासस्यजीवितम् । तत्रभेदेप्येकत्वबुध्यासमानस्थानयोर्यथा। हरेर्लङ्घितघर्मांशुध्योम्निदीर्घेणरंहसा। बलिबन्धनघोरोङ्घ्रिरंहःसङ्घन्निहन्तुवः । अत्रहकारस्यतुल्यस्यातुल्यस्यानेनघकारेणसहभेदेप्येकत्वबुद्धेस्तुल्यश्रुतित्वमितिभेदेप्येकत्वबुध्यानागरानुप्रासोयम् ॥ ५ ॥ तथैवासमानस्थानयोर्यथा । उच्छलन्मत्स्यपुच्छाग्रदण्डपाताहताम्भसि । जगदुद्यानमम्भोधावुन्ममज्जममज्जच । अत्रोच्छलन्मत्स्यपुच्छाग्रेत्यत्रच्छकारयोरिवत्स्यकारस्यापितुल्यश्रुतित्वमित्त्यसमानस्थानत्वेनभेदेप्येकत्वबुध्यानागरानुप्रासोयम् ॥६॥ तत्वेप्येकानिह्नवेनडकारवकारय

स्येनेति । ग्राम्यविरुद्धस्वभावोहिलोकेनागरइत्युच्यते । अतिप्रसिद्धेरभावोविरोधस्तेनालङ्कारसमयोपजीविपञ्चषप्रसिद्धिरनतिप्रसिद्धिरित्युक्तम्भवति । एतदेवपूर्वाचार्यमतेनविशदयति । यथोच्यतइति। एकश्रुतिकतयाभानंहिश्रुतिसाजात्यमभिमतम् । श्रुतिश्चवास्तवीप्रतिपादनमात्रारूढावेति नकश्चिद्विशेषस्ततोभेदेप्येकत्व बुध्यानुप्राससिद्धिः । तत्त्वेएकत्वे । आपाततःसाजात्यानवभासेपिसहृदयप्रणिधानेनावभासनंश्रुत्यनुप्रासप्रयोजकमेव । अनुप्रासस्य । अनुप्रासवतःसन्दर्भस्येत्यर्थः । विजातीययोरेकजात्यप्रतिबिम्बनन्द्विधाभवति । स्थानसाम्येतदसाम्येचतयोराद्यमुदाहरति । तत्रेति । दीर्घेणरंहसेति । घोरोङ्घ्रिरिति । रंहःसङ्घमितिघकारहकारयोःस्थानसाम्येपिवैजात्यमस्त्येव । तथापठितौतुल्यवच्छ्रुतिःप्रतिभातीतिसहृदयहृदयसाक्षिकोयमर्थः॥५॥ अत्रत्स्यच्छकारयोरिति। चच्छौतालव्यौतसौदन्त्याविति स्थानभेदःप्रकाशएव । तथापिपिण्डीभूतात्स्याच्छत्वम्बीभूतमध्यपतितौ तसौसमानश्रुतिकाविति पठितौ सौभाग्यमर्प

कारणांयथा । क्रोडेमाडिम्भमादायचाडिडपीडयव
क्षसा । कर्णेब्रूहिवयस्यायायुवायदयमुच्यते । अ
त्रडकारादीनामीषत्स्पृष्टतादिभिरेकत्वेपि भेदाव
भासइतितत्वेप्येकत्वनिह्नवेननागरानुप्रासोयम्॥७॥
तथैवढकारवकारलकाराणांयथा । नवोढेत्वंकुचा
ढ्यापिनोपगूढायढौकसे । वहन्वाहुलतेह्रीणोवरःपु
लकलङ्घिते । अत्रढकारादीनामीषत्स्पृष्टतादिभी
रेकत्वेपिभेदावभासइति तत्वेप्येकत्वनिह्नवेननाग
रानुप्रासोयम् ॥ ८ ॥ उभयगुणयोगान्नाप्रसिद्धउप
नागरः।यथोच्यते॥ डलयोरैक्यमित्यादिवाक्यैर्यस्या
नुमीयते। समानश्रुतितान्योन्यंसोनुप्रासःप्रशस्यते॥
सडलयोरैक्येनयथा । शयनेयस्यशेषाहिःसनीडेत्रड

---

यतस्तेनायमसमानस्थानयोरेकत्वबुद्ध्यानागरानुप्रासइति ॥६॥ तत्वे
पीति । द्रुतादौवृत्तिमात्रम्भिद्यतेनतुरूपमितिमहाभाष्यकारोक्तदिशा
येषामेकस्थानत्वेपीषत्स्पृष्टतरत्वादिकृताभेदप्रथातेडकारादयः कति
पयेस्यविषयास्तानुद्दिश्यक्रमेणोदाहरति । क्रोडइत्यादि । अङ्कगत
स्यबालकस्यवक्षसापीडनंसङ्क्रान्तकनालिङ्गनमामनन्ति । अनेनकि
लप्रच्छन्नप्रियगोचरोगाढालिङ्गनमनोरथःप्रकटितोभवति । कर्णयो
रुपांशुयदभिधीयतेतेनतुल्यमिदमिति विदग्धसहचरीपरिहासोक्ति
रियम् । अत्रचक्रोडडिम्भेत्यादौडकारवकारयकाराणामीषत्स्पृष्टतर
त्वादिभेदःश्रुतिसाजात्यञ्चसुप्रसिद्धमेवेति ॥ ७ ॥ ढकारवकारलका
राणामिति । वकारोदाहरणन्दत्तमपिवर्णान्तरसरलतयापुनर्दीयते ।
उपगूढमालिङ्गनम् । अपिशब्दोभिन्नक्रमः । उपगूढायापिनढौकसे
दूरेपततः कचग्रहादिकेलिषुप्रवृत्तिर्लङ्घनेनसर्वाङ्गीणः पुलकोद्भेदोव
र्हिर्व्यावर्त्तनमन्तरनुवर्त्तनञ्चमुग्धाङ्गनाजातिः । अत्रापिढकारादीना
मीषत्स्पृष्टतादिभेदःसुबोधएव ॥८॥ उभयगुणयोगादिति । प्रसिद्ध

वानलः । सहासाहसिनामग्र्यन्तमीडेजडशायिनम् । सोयमुपनागरःश्रुत्यनुप्रासः॥९॥ नणयोरैक्येन यथा । बाणैःक्षुरणेषुसैन्येषुत्वयादेवरणाङ्गणे।हतशेषाःशयन्तीमेशून्यारण्यानिविद्विषः॥अत्रक्षुरणेषुसैन्येषुशून्यारण्यानीतिनकारणकारयोःस्वल्पश्रुतित्वमेकत्वंवाभासतइतिउपनागरोयंश्रुत्यनुप्रासः ॥१०॥ रलयोरैक्येनयथा॥विभिन्नवर्णागरुडाग्रजेनसूर्यस्यरथ्याःपरितःस्फुरन्त्या।रत्नैःपुनर्यत्ररुचारुचंस्वामानिन्यिरेवंशकरीरनीलैः॥ अत्रकरीरनीलैरितिरेफलकारयोरैक्येनतुल्यश्रुत्याचतुर्ष्वपिपादेष्वनुप्रासनिर्वहणमित्युपनागरोयंश्रुत्यनुप्रासः॥११॥ दन्त्यतालव्यानामैक्येनयथा। विद्यास्यन्दोवाग्विदांयःप्रसन्नःपुण्यांवा

सिद्धोद्धीगुणौ । प्रत्यक्षानुमानरूपोपायभेदादविरोधस्तदेतदन्यमतेनविवृणोति। डलयोरैक्यमिति। सनीडःसमीपञ्जलमज्जनशेषाहि वडवानलानामनर्थनिदानतयाप्रख्यातानामपिसेवयामहासाहसिकानामग्र्यता। अत्रडकारलकारयोर्भिन्नश्रुतिताप्रत्यक्षतएव । श्रुतिसाम्यस्पुनरनुमानात् प्रतीयते। एवमुत्तरोदाहरणेष्वपिबोद्धव्यम् ॥९॥ क्षुरणेषुसैन्येष्विति । ग्रन्थिमहिम्नानकारणकारयोःसाम्यप्रतिभासः। रणाङ्गणइति। मध्यवर्त्तिनांसंयोगेनसाम्योन्मुद्रणम् । अङ्गणशब्दोधिकरणल्युडन्तः। पृषोदरादित्वाणत्वव्युत्पादनमनार्षम्।एवंशून्यारण्यानीत्यत्रव्याख्येयम्। आद्यन्तव्याख्यानमुपलक्षणमवसेयम् ॥१०॥ निरन्तररेफग्रथनालीढस्यैवलकारस्यश्रुतिसाजात्यमुल्लिखतीतितदिदमाह। अत्रकरीरनीलैरिति। एतदनुप्रासिध्याचतुर्ष्वपिपादेषुरेफानुप्रासनिर्वहणमपि कविशक्तिव्युत्पत्तिव्यञ्जकमुपपन्नम्भवतीतित्याह। चतुर्ष्वपीति ॥११॥ विद्यास्यन्दःसारस्वतप्रवाहःसैववाग्देवताशब्दब्रह्मरूपातच्चिन्तयापरब्रह्माधिगमनिःश्रेणीभूतया । शोकस्यह

चन्द्रेत्रतान्तानमामः । यामत्रह्लागःश्विन्तयन्तीत्रि शोकाःसानोदेयाःसूनृतासूनृतानि । अत्रदन्त्यता लव्यानामैक्येनतुल्यश्रुतिनेत्युपनागरीयंश्रुत्यानुप्रा सः । सर्वेपिचानुप्रासाःप्रायेणाविसदृशवर्णान्तरिता एवस्वदन्ते इत्यौष्ठ्यकण्ठ्यादीनामिहानुप्रवेशोभव ति ॥१२॥ यथाज्योत्स्नाचन्द्रमसंयथालावण्यमङ्गना म् । अनुप्रासस्तथाकाव्यमलङ्कर्तुमयंक्षमः ॥ १ ॥ अनुप्रासःकविगिरांपदवर्णमयोपियः । सोप्यने नस्तबकितःश्रियङ्कामपिपुष्यति ॥ २ ॥ मुहुरावर्त्य मानेषुयःस्ववर्ग्येषुवर्त्तते । काव्यव्यापीससन्दर्भोवृ त्तिरित्यभिधीयते ॥ ३॥ कार्णाटीकौन्तलीकौङ्कीको

---

दृष्टानिजखेदस्यविच्छेदः । अत्रस्यन्दःप्रसन्नइतिदन्त्यौसकारौत्रह्ला गश्चेतयन्तोविशोकाइत्यादेशानादेशौशकारौतालव्यौ । पुनरन्तेसासू नृतानीतित्रयोदन्त्याः सर्वेषांसम्भूयपाठे तुल्यश्रुतितैवप्रतिभासतइ ति । ननुसजातीयानान्निरन्तरमावापेक्षत्वेकिमितिविजातीयव्यव हितैरावृत्तिरुदाह्रियतइतिअतआह । सर्वेचेति ॥१२॥ श्लेषनिर्वाहकत याश्रुत्यनुप्रासोलङ्कारइत्युक्तन्तत्रसन्दर्भव्यापकतयैवनिर्वहतीत्याह। यथेति । ज्योत्स्नालावण्ययोःसर्वाङ्गीणाश्लेषसुभगयोरेवालङ्कारताप्रसि द्धिः ॥१॥ नन्वेवमनुप्रासान्तरविषयेपिश्रुत्यनुप्रासःप्रसक्तस्तत्रचकिम नेनकरिष्यतइत्यतआह । अनुप्रासःकविगिरामिति । उक्तंहि"नघट नामन्तरेणकाव्यभावः । नचकाव्यसपहायवर्णानुप्रासादीनामात्मला भ,,इति ॥२॥ स्ववर्ग्येष्विति । स्वशब्दआत्मीयवचनःस्ववर्गेभवाःस्वव र्ग्याःकचटतपान्तस्थोष्मोपलक्षिताःसप्तवर्गाःस्ववर्ग्येषुवर्त्ततइत्यर्थक थनम् । माणिक्यस्तबकितहारलतावदन्योन्योलम्बनेनपरभागलाभइ त्यभिप्रायतयाचकाव्यव्यापकत्वेनैवसन्दर्भेण निरूप्यमाणावर्ण्यावृत्तिर्वृ त्त्यनुप्रासइतिपर्यवसितोर्थः । वर्णानुप्रासाङ्गेदोवक्ष्यते ॥३॥ कर्णाटा

ङ्कणी बाणवासिका । द्राविडी माथुरी मात्सी मागधी ताम्रलिप्तिका ॥ ४ ॥ औण्ड्री पौण्ड्रीति विद्वद्भिः सा द्वादशविधेष्यते । अथ लक्षणमेतासां सोदाहरणमुच्यते ॥ ५ ॥ तासु वर्णानुप्रासवती कार्णाटी यथा । कान्ते कुटिलमालोक्य कर्णकण्डूयनेन किम् । कामङ्कथय कल्याणि किङ्करः करवाणि किम् ॥ १ ॥ चवर्गानुप्रासवती कौन्तली यथा । ज्वलज्जटिलदीप्तार्चिरञ्जनोच्चयचारवः । चम्पकेषु चकोराक्षि चञ्चरीकाश्चकासति ॥ २ ॥ टवर्गानुप्रासवती कौङ्की यथा । कुम्भकूटाट्टकुट्टाककुटिलोत्कटपाणिरुट् । हरिः करटिपेटेन न द्रष्टुमपि चेष्टते ॥ ३ ॥ तवर्गानुप्रासवती कौङ्कणी यथा । मधुर्मधूनि गान्धर्वमन्द्रिरम्मादिरेक्षणा । इन्दुरैन्दीवरन्दामकाममानन्दयन्निलनः ॥ ४ ॥ पवर्गानुप्रासवती बाणवासिका यथा । प्रियाप्रगल्भाताम्बूलपरिस्रुत्फुल्लमुत्पलम् । पृषत्काः पञ्चबाणस्य पञ्चमः पञ्चमध्वनिः ॥ ५ ॥ अन्तःस्थानुप्रासवती द्राविडी यथा । प्रियालवलीतालतमालैलावनावली । भ्रान्तिपत्रलहिन्तालकृतपुण्ड्रा

---

द्विप्रभवकविहेवाकगोचराः कार्णाटीप्रभृतयो न तु वृत्तीनां देशैः कश्चिदुपकारः । बाणवासनामा दक्षिणापथे रत्नाभगवतीचिह्नितो देशः । त्रपधातोरिति । विधमितिइतिपरायणम् ॥ ४ ॥ ५ ॥ अवहित्थप्रस्तावे कर्णकण्डूयितमोट्टायिताख्यः शृङ्गारभावजो विकारः ॥ १ ॥ २ ॥ कुम्भकूटकुम्भाग्रन्तदेवअट्टोट्टालकः । रुषहिंसायां यथोक्तेन पाणिना रुषतीति क्विप् । पेटः समूहः ॥ ३ ॥ मधुर्वसन्तो गान्धर्वङ्गीतम् । अत्र धकारदकारानुप्रासैरास्वादिनिर्वहणम् ॥ ४ ॥ परिस्रुन्मदिरा । पृषत्का बाणाः पञ्चमः स्वरविशेषस्तद्भूयिष्ठो ध्वनिः पञ्चमध्वनिः ॥ ५ ॥ पत्रलाः सान्द्रपत्राः सिध्यादेराकृ

वधूरिव॥६॥ऊष्मानुप्रासवतीमाथुरीयथा।पुष्णती
पुष्पधनुषम्मुष्णतीप्लोषविप्लुषः।क्षिपन्तीनिर्निमेषे
णचक्षुषामानुषीनसा॥७॥द्वित्रिवर्गानुप्रासवतीला
टसीयथा।कोकिलालापवाचालोमामेतिमलयानि
लः।उच्छलच्छीकराच्छाच्छनिर्झराम्भःकणोक्षितः
॥८॥द्वाभ्यांविदर्भितैकवर्ग्यामागधीयथा।अघौघघ्नो
नृसिंहस्यघनाघनघनध्वनिः।हन्याद्घुरुघुराघोरःसु
दीर्घोघोरघर्घरः॥९॥स्वान्त्यसंयोगिवर्ग्यातामलिप्ति
कायथा।सिञ्जानमञ्जुमञ्जीराश्चारुकाञ्चनकाञ्चयः।
कङ्कणाङ्कभुजाभान्तिजितानङ्गतवाङ्गनाः॥१०॥सरूपसं
योगिग्रथितौण्ड्रीयथा।सल्लतापल्लवोल्लासीचित्तवित्त
हरोनृणाम्।मज्जतीज्जलसज्जासुनदीपुमलयानि

---

तिगणत्वाल्लच्। पुण्ड्रन्तिलकः। अत्रलकारवकारानुप्रासान्यांसन्दर्भेनि
वाहः॥६॥ प्लोषोविरहदाहस्तस्यविप्रुषःकणाभागास्तेषांसमुदाय
वृत्त्यनुप्रासाः॥७॥ सङ्कीर्णाःपुनरन्येपञ्चभवन्ति। तत्रसङ्करोद्विधा।
विजातीयसंवलनान्मिथःसम्भेदेनसंयोगरूपताच। कोकिलालापेत्या
दौकवर्गान्तस्यचवर्गानुप्रासाःस्फुटाएव। संयोगस्तुविद्यमानोपिनवि
वक्षितः॥८॥ विदर्भितःस्वान्तरायेसवैदर्भीप्रपञ्चशोभामानीतः। घु
रुघुरेत्यव्यक्तानुकरणम्। अत्रासमासिकवर्गानुप्रासस्तवर्गान्तस्यानु
प्रासान्यांविदर्भितः। एवमन्यत्रापिवैदर्भीगवेषणीया॥९॥ संयोगोद्वि
विधःसजातीयेनान्येनच। आद्यस्त्रिविधःस्ववर्ग्यान्तसरूपतदन्यसं
योगभेदात्। एतेयथाक्रमंवृत्तित्रयम्प्रयोजयन्तीत्याह। स्वान्तेत्यादि।
शिञ्जानामधुरंशब्दायमानामञ्जीरानूपुराः। अत्रापूर्वार्द्धेस्वान्त्यसं
योगिनौचवर्गौ। उत्तरार्द्धेतुकवर्गाविति॥१०॥ सन्तःकमनीयालता
नांपल्लवास्तदुल्लासनमात्रप्रवीणतयातीव्रताव्यतिरेकः। अतएवनृणां
विदग्धमिथुनानाञ्चित्तमेवसर्वस्वभूतंहरतीति। उज्जलानिपुलास्तैः

लः ॥११॥ असरूपसंयोगग्रथितापौण्ड्रीयथा। अस्तमस्त
कपर्यस्तसमस्तार्कांशुसंस्तरा। पीनस्तनस्थितातामक
मूत्रस्त्रेवबारुणी ॥१२॥ अकठोराक्षरादानन्नातिनिर्वह
णैषिणः। अशैथिल्यञ्चसत्कर्तुंवृत्त्यनुप्रासमीशते ॥१॥
क्वचिदस्तिक्वचिन्नास्तिक्वचिदस्तिनचास्तिच। वर्णा
नुप्रासएषातुसर्वतोस्तीतिभिद्यते ॥ २ ॥ अन्येपुनर
थावृत्तिंव्याचक्षते। स्पर्शादीनामसम्बन्धःसम्बन्धो
वापियोमिथः। स्फुटादिबन्धसंसिध्यैसेहवृत्तिर्नि
गद्यते ॥१॥ काव्यव्यापीचसन्दर्भोवृत्तिरित्यभिधीय
ते। सौकुमार्यमथप्रौढिर्मध्यमत्वञ्चतद्गुणाः ॥२॥

---

सज्जाःसन्नद्धा निचुलनिकुञ्जसन्नद्धनदीमज्जनेनशीतलत्वमुन्मीलित
म् ॥११॥ अस्तोस्ताचलःकम्रङ्कमनीयम् ॥१२॥ वृत्त्यनुप्रासरसिकस्यक
वेःप्रसजमानन्दोषमपाकर्तुंशिक्षामाह। अकठोरेति। तदुक्तम्। प
रुषाभिधायिवचनादनुकरणाद्वापरत्रनोपरुषम्। रचयेद्यथागतिःस्या
त्त्रापिह्लादयोर्द्वेषाः। अतिनिर्वाहेव्यक्तमेववैरस्यन्तदुक्तंसर्वएवानु
प्रासाःप्रायेणेत्यादि। कोमलमात्रवर्ग्यनिर्वहणेतुशैथिल्यसम्भावनमि
ति ॥१॥ नन्वनुप्रासाद्वृत्तीनाङ्कोविशेषइत्यतआह। क्वचिदिति। क्व
चिद्वृत्तिभागेचरणाद्यात्मकेभवत्येवक्वचित्पुनरंशभेदेनभवतिनभवति
च। तावतैवतस्यालङ्कारत्वंवृत्तिशरीरव्यापकतयानिरूप्यमाणस्तुव
र्णोक्तोन्यएवायंवर्णानुप्रासाद्वृत्त्यनुप्रासइत्यर्थः ॥२॥ अन्येपुनरिति।
वर्णानांवर्तनंवर्तनाधिष्ठानञ्चवर्त्तिपदेनाभिमतमाद्यंसङ्घटनविघटना
भ्यान्द्विधा। समस्तव्यस्तभेदेनसङ्घटनविघटनेद्विधा। कादयोमाव
साना:स्पर्शाः। आदिग्रहणादन्तस्थोष्मणोःसङ्घटनबहुलःसन्दर्भः। प्र
स्फुटःविघटनबहुलःकोमलउभयबहुलउन्मिश्रः ॥१॥ द्वितीयंवृत्तिशब्दा
र्थमाह। काव्यव्यापीचेति। अत्रापिदोषप्रसङ्गापाकरणार्थमाह। सौ
कुमार्यमिति। अतएवगुणाः। शैथिल्यपरुषत्वेतुदोषावित्यर्थः ॥२॥३॥

गम्भीरौजस्विनीप्रौढामधुरानिष्ठुरास्तथा । कठोरा कोमलामिश्रापरुषाललितामिता ॥ ३ ॥ इतिद्वादशधाभिन्नाकविभिःपरिपठ्यते । कारणम्पुनरुत्पत्तेस्तएवासांविजानते ॥ ४ ॥ तासुगम्भीराय था । अप्फुन्दन्तेणणहम्महिउच्चतडिउड्डमाविब्भादिसेण । दन्दुहिगम्भीररवन्दुन्दुभिअंअम्बुवाहेण । सैषाप्रायस्तवर्गपवर्गयोस्तृतीयचतुर्थानाम्पकारफकारयोश्चस्वसंयोगबिन्दुयोगाभ्यांजायते ॥ १ ॥ ओजस्विनीयथा । पत्ताअसीभराहअघाउच्छलाच्छलाणिसग्गरइअजलअम् । सज्जंओज्जुरपहसिददरिमुहिअयउलमइरामोदम् । सेयम्मूर्द्धन्यानाम्प्रथमचतुर्थपञ्चमद्वित्रैस्तदावृत्त्याचप्रायोजायन्ते॥२॥प्रौढायथा।कृत्वापुंवत्पातमुच्चैर्भृगुभ्योमूर्द्धिग्रावणाजर्ज

योगासंयोगयोः प्रतियोगित्वव्यवस्थाविरहात्कथन्द्वादशप्रकारतात्वव्यवस्थितिरित्याशयवानाह । कारणम्पुनरिति॥४॥दूषणप्रतिपत्तिसौकर्यात्तत्प्रसिद्धैवपृथगुदाहियतइत्याह । तास्विति । अस्फुन्दन्तेणव्यापवता । उड्डमाइअंस्थाप्तम् । दुन्दुभिरन्तर्गतकांस्यभाजनोनिःस्वानविशेषोदुण्डहिअंशब्दापितम् । दकारधकारौतवर्गस्यबकारभकारौपवर्गस्यतृतीयचतुर्थौ॥१॥ सततशीकरसिच्यमानगैरिकशिलातललुण्ठनेनजलदानांरञ्जनम् । विशीर्यपतनेनात्यन्तधवलानिउर्झराएवहासोयस्यतादृशेनदरीमुखेनान्तःप्ररूढबकुलकुसुमामोदनिःसरणरञ्जितजलधरप्रतिबिम्बभूतताम्रनयनोन्मुद्रणात् । हासबकुलामोदाव्याप्तीवतारोपरूपालसासोर्विकार्ध्वन्यतइत्याराध्याः । ओज्जुरोर्झरोणिर्झरस्ताहिअन्तिःसृतम् ॥२॥ भृगवस्तटाभृगुपातस्य मुरकीसकुमःफलम् । अत्रकुर्वन्स्वर्लोकनिर्वर्त्येतेषुमूर्द्धन्यानामन्तःस्थसंयोगाकृच्चैःशब्दइत्यादौस्वभावगुरूणामपिपूर्वरूपसंयोगसन्निधौढायाविशेषोभवतीत्याहुः

रानिर्भ्ररौघाः । कुर्वन्तिद्यामुत्पतन्तःस्मरार्त्तस्वर्लोक स्त्रीगात्रनिर्वाणमत्र । सैषाप्रायेणमूर्द्धन्यानामन्तः नांसंयोगात्पूर्वगुरुत्वेनजायते ॥ ३ ॥ मधुरायथा । किञ्जल्कसङ्गिसिञ्जानभृङ्गलाञ्छितचम्पकः । अयमा धुरुपैतित्वाञ्चर्याप्रौढपङ्कजदन्तुरः । सैषाप्रायोनुस्वा रपुरोवर्त्तिस्पर्शतयाजायते ॥४॥ निष्ठुरायथा । स्वा ङ्गश्लिष्टाद्रिजन्मानलनेत्रार्चिःप्लुष्टमन्मथम् । स्तौमित्र्य क्षंद्युषज्ज्येष्ठंदैत्यघ्नं स्यर्चिताङ्घ्रिकम् । सैषाप्रायः सं योगभूयस्त्वेनोत्पद्यते ॥ ५ ॥ श्लथायथा । दयित जनविरह विगलितनयनोदकपोतहरिणमदतिलक म् । वदनमपगतमृगमदशशिकरणिंवहतिलोलदृशः । सेयम्प्रायोव्यञ्जननामसंयोगेनजन्यते ॥६॥ कठोरा यथा । निसर्गनिर्गतानर्घघर्घरध्वनिहास्तिकम् । चक्रे चक्रंयुधिक्रामन्नलर्कःकर्कशार्करुक् । सैषाप्रायःकराठरा रेफादिसंयोगादुत्पद्यते ॥ ७ ॥ कोमलायथा । दारु णरणेरणन्तङ्करिदारणकारणंकृपाणन्ते । रमणकृते रणरणकीपश्यतितरुणीजनोदिव्यः । सेयंरेफणका राद्यसंयुक्तकोमलवर्णविरचनयानिष्पद्यते ॥ ८ ॥

---

केचित् ॥३॥ अनुस्वारपुरोवर्त्तीति । अनुस्वारस्वरूपतदादेशावनुस्वारप देनगृह्यते । तेनशमितहासेत्यादावनुस्वाराभावेपिनलक्षणमुदाहरणा म् ॥४॥ स्वाङ्गेति । दिविसीदन्तीतिद्युषदोदेवाःसुषामादित्वात्षत्वम् । अत्रैकान्तरिताःसंयोगाःसन्दर्भव्यापकाःप्रतीयन्ते । सोयमस्याः संयु ज्यमानाविशेषेपिवृत्त्यन्तराद्विशेषोनिष्ठुराद्वैपरीत्येनश्लेषोदाहरणंसुग मम् ॥५॥ करणिःसादृश्यम् ॥६॥ सैषाप्रायःकराठ्येतिकराठ्यरेफयोःक्वचिदन्य स्याप्यादिपदोपात्तस्यसंयोगोवसेयः ॥७॥८॥ बाहुल्यादिभिरिति । बाहुल्या

मिश्रा यथा । पिनष्टीवतरङ्गाग्रैरुदधिः फेनचन्दनम् । तदादाय करैरिन्दुर्लिम्पतीव दिगङ्गनाः । सैषा प्रायः कठोराणामोष्ठ्यकण्ठ्यमूर्द्धन्यानामल्पाहुल्यादिभिरुपलभ्यते ॥ ९ ॥ परुषा यथा । जह्रे निह्रादिह्रादो सौ कह्लाराह्लादितह्रदः । प्रसह्य मह्यां गर्ह्यत्वमर्हणार्हः शरन्मरुत् । सैषा प्रायेणोष्मणामन्तःस्थादिसंयोगैरवस्थाप्यते ॥ १० ॥ ललिता यथा । द्राविडीनां भ्रुवं लीलारेचितभ्रूलते मुखे । आसज्य राज्यभारं स्वं सुखं स्वपिति मन्मथः । सैषा प्रायेण दन्त्यौष्ठ्यतालव्यानामध्येन्तःस्थादिसंयोगैः स्थाप्यते ॥ ११ ॥ अमिता यथा । बकुलकलिकाललामनि कलकण्ठीकलकलाकुले काले । कलया कलावतोपि हि कलयति कलिताब्रनुतां मदनः । सेयममितयोरेव ककारलकारयोर्बन्धयोरनुप्रासेन प्रसूयते ॥ १२ ॥ इति द्वादशधा वृत्तिः कैश्चिद्या कथितेह सा । न गुणेभ्यो न वृत्तिभ्यः पृथक्त्वेनावभासते ॥ १ ॥ श्रुत्यनुप्रासवर्णानुप्रासयोरपि दुष्कराः । क्वचिद्भेदाः पृथक्कार्त्स्न्यमस्यास्तेनेह नेष्यते ॥ २ ॥ यथाम्लातकपुष्पादिस्रगादेर्वर्ण उच्यते । वर्णावृत्तिस्तथा वाचां

---

ल्पत्वमिश्रणैः प्रादेशिकैरित्यर्थः ॥ ९ ॥ १० ॥ द्राविडीनामिति । किञ्चिदुन्नमनं रेचितम् । तेनाधिज्यकोदण्डक्रियाकारिभ्रूलतासनाथे दुःखराज्यभारारोपः । सुगममुदाहरणम् ॥ ११ ॥ १२ ॥ तदेतत्सर्वेषां मतं दूषयति । न गुणेभ्य इति । समतासौकुमार्यादिगुणेषु भारतीप्रभृतिषु च वृत्तिषु यथायथमन्तर्भावोवगन्तव्यः ॥ १ ॥ श्रुत्यनुप्रासवर्णानुप्रासयोरिति विषयसप्तमी । वर्णावृत्तेर्वृत्त्यनुप्राससाधारणत्वात् ॥ २ ॥ ततो वर्णानुप्रासं विशेषयन्नाह । यथा मालकेति । स्रगादेर्वर्णस्थानीया वर्णावृत्तिर्वर्णानुप्रासः । तत्रो

र्णानुप्रासउच्यते॥३॥ स तुस्तबकवान्स्थानीगर्भोविवृ
तसंवृतः।गृहीतमुक्तःक्रमवान्विपर्यस्तोथसम्पुटः॥४॥
मिथुनं वेणिकाचित्रोविचित्रश्चेतिवर्ण्यते।वर्णावृत्ति
प्रयोगेभ्यस्तेभ्यस्तेभ्योमनीषिभिः॥५॥ तेषुस्थाने स्था
नेनुप्रासविन्यासतःस्तबकवान्यथा। यस्यावासीकृ
तहिमगिरेर्गुञ्जतांकुञ्जराणामाघ्रिश्चक्रेवनगजमदाघ्रा
णघोरायितानि।दर्पोत्फुल्लस्फुरणविकटाकाण्डकण्डू
ल गण्डस्वेच्छाकाषव्राणित सरलानोकहस्कन्धगन्धः
अत्रगुञ्जताङ्कुञ्जराणामित्यादेर्वर्णस्तबकस्यस्थानेस्था
नेविन्यासादयंवर्णानुप्रासस्तबकवानित्युच्यते॥१॥
नियतविवक्षितस्थानविशेषःस्थानीयथा। बालेमा
लेयमुच्चैर्न भवतिगगनव्यापिनीनीरदानाङ्किंत्वंपक्ष्मा
न्तरालैर्मलिनयसिसुधावक्त्रमश्रुप्रवाहैः।एषाप्रोद्वृ
त्तमत्तद्विपकटकषणक्षुण्णविन्ध्योपलाभादावाग्नेर्व्यो
मलग्नामलिनयतिदिशाम्मण्डलंधूमलेखा। अत्रप्र
थमत्रिभागस्थानेषुबालेमालेय मित्यादिनियमेनवृ

---

पमानभूतवर्णविवरणांसमानजातीयकुसुमादिविरचितमालापटप्रभृ
तिषुयदन्तरान्तराविजातीयाम्रातकुसुमादिसन्निवेशनन्तद्वर्णइत्युच्य
ते। तद्वत्यावाचावर्णावृत्तिः। सावर्णानुप्रासइतिसूत्रार्थः। सद्वि
धा। संयुक्तासंयुक्तवर्णनिरूप्यत्वात्।यथायथमेतदुभयप्रपञ्चनम्॥३॥
स्तबकवदादयोद्वादशप्रकारास्तेषुक्वचित्क्वचित्संयोगावृत्तिःस्तबकवा
न्। अनुप्रासविन्यासादितिसंयोगानुप्रासविन्यासतः॥४॥ गुञ्जताकु
ञ्जराणामकाण्डकण्डूल गण्डस्कन्धगन्धइत्यत्रावृत्तिचतुष्केणस्तबकानि
र्वाहः। स्थानीति॥१॥ श्लोकपादेपिप्रथमादिभागकल्पनयास्थाननिय
मविवक्षा। तथाहि। बालेमालेयमिति प्रथमोभागोनीनीद्वतिप्रति

त्रिः । सोऽयंवर्णानुप्रासः स्थानीउच्यते ॥ २ ॥ आवृ
त्तेर्वर्णान्तरायेगगर्भो यथा । कालङ्कपालमालाङ्कमेकम
न्धकसूदनम् । वन्देवरदमीशानंशासनम्पुष्पधन्वनः ।
अत्रकालङ्कपालमालेत्यङ्कमेक मितिवन्दे वरदमीशानं
शासनमित्यादिषु पकाररेफककारगर्भाधानादयंवर्णा
नुप्रासोगर्भइत्युच्यते ॥ ३ ॥ स्थाने स्थाने विकास
सङ्कोचाभ्यांविवृतसंवृतोयथा । नमालतीदामविम
र्दयोग्यन्नप्रेमनव्यंसहतेपराधान् । म्लानापिनम्ला
यतिकेसरस्रग्देवीनखराडप्रणयाकथञ्चित् । अत्रप्रथ
मपादेनमालतीदामेत्यादिभिर्विकासोद्वितीयपादेप्रे
मेत्याकारावृत्यासङ्कोचस्तृतीयपादेम्लानापिनम्ला
यतीत्येताभ्यामुच्चाविकासश्चतुर्थेनेतिसङ्कोचः सोयंव
र्णानुप्रासोविवृतसंवृत इत्युच्यते ॥४॥ चक्रवालवद्धा
नोपादानाभ्यांगृहीतमुक्तो यथा । लोलल्लवङ्गलवली

---

भासारूढस्तृतीयादिषु प्रथमपादे । एवम्पक्ष्मान्तरालनलिनसुधामशुप्र
भृतीनान्द्वितीयादिपादेषु प्रथमादिभागकल्पनाऽवसेया ॥२॥ कालङ्काल
स्वरूपंएकमद्वितीयम् । कालङ्कपालेत्यत्रलकारावृत्तिःककारेणव्यव
धानेप्रकृतेकपालेत्यत्रपकारोवर्णान्तरगर्भायमाणउपलभ्यते । एव
म्मालाङ्कमित्यादौलकारादिगर्भीकरणमवसेयम् । विवृतसंवृतौनिग
दे नैवव्याख्यातप्राय ॥३॥ नमालतीदामेत्यादौप्रथमपादेमकारावृत्तिद्व
येनविवरणन्द्वितीयपादेसकृत्प्रयोगेणतस्यैवसंवृतिस्तृतीयपादेनकार
सकारयोरावृत्याविवृतिश्चतुर्थेतुनेतिसंवरणम् । तदिहभूयोविकाशकि
ञ्चित्सङ्कोचकिञ्चिद्विकाशसर्वथासङ्कोचपरिपाट्यासन्दर्भनिर्वहणंशो
भाकरमितिव्याचष्टे । अत्रेति ॥४॥ लोलदिति । कपिञ्जलोगौरतित्तिरिः ।
अपरान्तोदेशविशेषः पूर्ववलनेनोत्तरग्रहणञ्चक्रवालम् । व्यञ्जनमात्र

वलयानिकुञ्जकूजत्कपिञ्जलकुलामुकुलावनद्धाः। अ
ध्यूषिरेकनकचम्पकराजिकान्तायेनापरातंत्रिजयेज
लधेरुपातः।अत्रचक्रवालक्रमःसुव्यक्तएव।सोयंवर्णा
नुप्रासोगृहीतमुक्तइत्युच्यते ॥५॥क्रमेणद्वित्राणांत्रिच
तुराणां वर्णानामसंयोगस्वरवर्णानामावृत्तिः क्रमवा
न्यथा। नितम्बगुर्वीगुरुणाप्रयुक्तावधूर्विधातृप्रतिमे
वतेन। चकारसामन्त्रचकोरनेत्रा लज्जावतीलाजवि
मोकमग्नौ । अत्रगुर्वीगुरुणाप्रयुक्तेतिवधूर्विधातृइ
तिचकारचकोरेतिलज्जावतीलाजेतिविमोकमितिद्व
योस्त्रयाणाञ्च स्वरसंयोगवर्णानाङ्क्रमेणावृत्तिःसो
यंवर्णानुप्रासःक्रमवानित्युच्यते॥६॥ क्रमवतांविपर्य
योपन्यासाद्विपर्ययोयथा। प्रणवःप्रवणेयत्रप्रथमःप्र
मथेषुयः । रणवान्वारणमुखःसवःपातुविनायकः।
अत्रव्युत्क्रमोव्यक्तएवसोयंवर्णानुप्रासोविपर्ययइत्यु
च्यते ॥७॥ स्वाद्यवर्णवर्त्तिनास्वरेणसहपादमध्यान्त
योरनुप्रासःसम्पुटंयथा । स्थिरापायःकायःप्रणयि

---

वलनमभिप्रेतन्तेनवलीवलेत्यत्रापिचक्रवालसिद्धिः ॥५॥ एवमुत्तरत्र ।
क्रमेणेति । द्वावारभ्यैवक्रमसम्भव ऊर्ध्वन्तुत्रयोविरमायते । तेनप
ञ्चषाणामित्यादिनोक्तमसंयोगस्वराणामित्यविवक्षित संयोगस्वराणा
म्। गुरुणेत्यनुल्लङ्घनीयाज्ञता । तयाचलम्प्रयुक्त्यादुर्वहनितम्बभारा
लसायाअपिकथञ्चित्पदविन्यासेनकान्तिविशेषोध्वन्यते। स्वभावता
स्त्रयोरपिनेत्रयोस्तत्कालेधूमाश्लेषाद्द्विगुणोरागइति उपमानेनतपद
पोषः पूर्वार्द्धेद्वयोर्द्वयोरुत्तरार्द्धेत्रयाणामनुल्लङ्घितक्रमाणामेवव्यञ्जना
नामावृत्तिरितिस्फुटंविवरणम् ॥ ६ ॥ क्रमवतामुपक्रान्तङ्किञ्चिक्रमा
णामावृत्तौतत्क्रमविपर्यासोव्युत्क्रमः॥७॥ स्वाद्येति। आवर्त्तनीयोवर्णः

षुसुखंस्थैर्यविमुखम्महारोगाभोगःकुवलयदृशःसर्पसदृशः। गृहावेशःक्लेशःप्रकृतिचपलाश्रीरपिखलायमःस्वैरीवैरीतदपिनहितङ्कर्मविहितम्। तदेतल्लक्षणेनैवव्याख्यातम्।सोयंवर्णानुप्रासस्सम्पुटइत्युच्यते॥८॥ अन्तपादमुपसंहारोपक्रयोर्विवक्षितः। सस्वरानुप्रासोमिथुनंयथा। त्यजमनसिसदाहेहेस्मरस्थानमास्मिन्ननुकिरसिशरीरेरेकिमन्दोमयूखान्।अपिपरिहरवायोयोगमङ्गैर्मदीयैःप्रणयिनिसमवेतेतेभवन्तःसखायः। तदेतन्निगदेनैवव्याख्यातम्। सोयंवर्णानुप्रासोमिथुनमित्युच्यते॥९॥ आवाक्यपरिसमाप्तेर्वर्णानुप्रासनिर्वाहोवेणिकायथा।विद्राणेरुद्रवृन्देसवितरितरलेवज्रिणिध्वस्तवज्रेजाताशङ्केशशाङ्केविरमतिमरुतित्यक्तवैरेकुबेरे।वैकुण्ठेकुण्ठितास्त्रेमहिषमतिरुषम्पौरुषोपघ्ननिघ्नन्निर्विघ्नन्निघ्नतीवःशमयतुदुरितंभूरिभावाभवानी। तदेतन्नातिदुर्बोधंसोयंवर्णानुप्रासोवेणिकेत्युच्यते॥१०॥उक्तलक्षणभ्योन्यश्चित्रोयथा।

स्वपदेनाभिमतस्तस्यपूर्वोयोवर्णस्तद्वृत्तिर्नास्वरेणसहतस्यावृत्तिः। पादमध्यान्तयोरेवेति। मध्यसंश्लिष्टोपरितनभागघटितसमुद्गकतुल्यतयासम्पुटोनुप्रासः॥८॥ अन्तपादमिति। वृत्तौचितीवशाद्द्विखण्डलब्धशोभाविशेषेषुपादेषुमिथुनसिद्धिरवसेया। तदिदमुक्तमुपक्रमोपसंहारयोरिति। मिथुनन्द्वन्द्वम्॥९॥विद्राणइति। उपघ्नआश्रयोनिघ्नःपरवशः। अनुप्रासजातेरासमाप्तिनिर्वाहोभिमतः। व्यक्तयःपुनरन्याअन्याएवाभिमतास्तेनवृत्त्यनुप्रासाङ्केदोतएववेणीतुल्यता। तत्रहिकिलकेशग्रथनानिव्यूढैवभक्तिःपुनरन्यान्येति॥१०॥ उक्तलक्षणेभ्यइति। पूर्वोक्तवर्णानुप्रासेभ्यइति। तथाहिप्रकृतोदाहरणेस्थाने

नीतेनिर्व्याजदीर्घामघवतिमघवद्द्विड्निद्रानिदानेनि
द्राद्रागेवदेवद्विषिमुषितरुषःसंस्मरन्त्यास्वभावम्।दे
व्यादृग्भ्यःस्रुतिसृभ्यस्त्रयइवगलितारागयोरक्तताया
क्षन्तुत्वांत्रिशूलक्षतिकुहरभुवोलोहिताम्भःसमुद्राः।
एवमन्येपिद्रष्टव्याः ॥११॥ एकवर्णावृत्तेर्वृत्त्यनुप्रासस्य
वर्णान्तरवैचित्र्येणविचित्रोयथा। चञ्चत्काञ्चनका
ञ्चयोलयचलच्चोलञ्चलैर्वञ्चिताश्चारीसञ्चरणेकाच
रुचरणाःसिञ्चन्तिचित्तंमम। लीलाचञ्चुरचञ्चरी
करुचिभिश्च्लालकैश्चर्चिताः किञ्चिच्चन्दनचन्द्रच
म्पकरुचाञ्चौर्यामृगीलोचनाः ॥१२॥ अन्येपुनरन्य
थाचित्रविचित्रयोर्लक्षणंव्याचक्षते । तत्रयमकच्छा
यानुकारीचित्रः। सएववर्णानुप्रासवान्विचित्रइति।
तत्रचित्रोयथा। सर्वाशारुधिदग्धवीरुधिसदासारङ्ग

स्थानेस्तबकाविवक्षायान्तस्तबकवान् विभागपरिहारेणानस्थानीवर्णा
न्तरायानुपपत्तौनगर्भःसङ्कोचविकाशाभावेननविवृतसंवृतश्चक्रवाल
क्रमाभावेननगृहीतमुक्तः। एवङ्क्रमविपर्यस्तमिथुनवहिर्भावोवगन्त
व्यः। असमाप्तिनिर्वहणाभावेवेणीभेदःस्फुटएव॥११॥ एकवर्णावृत्तेरि
ति। वर्ग्यावृत्तौहिक्कदाचिदेकवर्णावृत्तिरपिसन्दर्भव्यापिनीसम्भाव्य
ते। तस्यामतीयमानायामेवान्तरान्तरानानाजातीयेवर्णावृत्तिश्चित्र
शोभादायिनीविचित्रानुप्रासइत्युच्यते। तथाहि। प्रकृतोदाहरणेस
न्दर्भसमाप्तिं यावदावर्त्तमानेएवचकारेकाञ्चनकाकाञ्चेतिलयचलदि
त्यादिषु ककारलकाराद्यनुप्रासोऽङ्गभावेनैववर्णावृत्तेर्न्येभावइवप्रका
शते। चारीसञ्चरणप्रकारोभौमीआकाशीच। चञ्चुरोमनोहरःचञ्च
रीकोभ्रमरः॥१२॥अन्येपुनरिति। विभिन्नार्थैकरूपत्वंस्थानविभागाल
म्बनंव्यवेताव्यवेतभावश्चयमकच्छायावर्णानुप्रासवानिति। अतिशा
यनेमतुप्॥सर्वाशारुधीत्यादौविप्रभृतीनांविभिन्नार्थैकरूपाणांव्यवेता

बद्धुङ्क्तुधिक्षामक्ष्मारुहिमन्दमुन्मधुलिहिस्वच्छन्दक
न्दद्रुहि।शुष्यत्स्रोतसितप्रभूरिरजसिज्वालायमाना
म्भसि ज्येष्ठेमासिखरार्कतेजसिकथम्पान्थव्रजञ्जीव
सि॥१॥विचित्रोयथा।उद्यद्बर्हिषिदर्दुराय्यरवपुषिप्रक्षी
णपान्थायुषिच्योतद्विप्रुषिचन्द्ररुङ्मुषिसखेहंसद्विषि
प्रावृषि। मामुच्चोच्चकुचान्तसन्नतगलद्बाष्पाकुलां
बालिङ्ग्यालेकालकरालनीलजलदव्यालुप्तभास्वत्त्वि
षि॥२॥ वर्णावृत्तिरनुप्रासइतियःकृतलक्षणः॥सोयन्द्वा
दशधाभेदैःप्रविभज्यप्रदर्शितः॥१॥समग्रमसमग्रंवाय
स्मिन्नावर्ततेपदम्॥ पदाश्रयेणसप्रायःपदानुप्रासउ
च्यते॥२॥ विसर्गबिन्दुसंयोगस्वरस्थानाविवक्षया।
आनिर्वाहाच्चसप्रायोयमकेभ्योविभिद्यते॥३॥ मसृणो
दन्तुरःश्लक्ष्णःसम्पुटःसम्पुटावली। खिन्नस्तबकचा
न्स्थानीमिथुनम्मिथुनावली॥४॥ग्रहीतमुक्तनामान्य
स्ततोन्यःपुनरुक्तिमान्। इतिद्वादशभेदोयम्मनी
षिभिरिहेष्यते॥ ५ ॥ तेषुमसृणोयथा। सरणेवार

---

नामेवपादमध्यान्तयोरवस्थितिः। एवमव्यवेतमप्युक्तेयम्। नात्रव
र्णानुप्रासउत्कटइतिविचित्राख्योभेदः॥१॥ अतएवोत्तरत्रस्फुटवर्णानुप्रासमु
दाहरति॥२॥ तेमीशुद्धवर्णावृत्तिप्रकाराःषट्त्रिंशल्लक्षिताःसाम्प्रतंद्वाद
शतापन्नवर्णावृत्तयोलक्ष्यन्तइत्याह। वर्णावृत्तिरनुप्रासइति। द्वादश
धेति।वीप्साद्वष्टव्या॥१॥ समग्रमिति। पदालम्बनोऽनुप्रासःपदानुप्रा
सस्तेनपदावयवमालालम्बनोपिपदालम्बनएव। तदिदमाह। पदा
श्रयेणेति॥२॥ ननुयदिपदावृत्तिरभिन्नार्थातदापुनरुक्तिरेवभिन्नार्थाचे
द्यमकान्नभिद्यतइत्यतआह। विसर्गेति। बिन्दुरनुस्वारःस्थानङ्कण्ठा
दिकम्। वृत्तेःपादादियमकताभावोनिर्वाहःप्रायोनिर्वाहइतियोज

णास्यस्यदर्शनेशनिसन्निभे। चकारवलयाकारम्भु
जम्भुजगभीषणम्। सोयमसंयुक्तवर्णवृत्तेः पदानु
प्रासोमसृणइत्युच्यते॥१॥ दन्तुरोयथा। सनैषधस्या
र्थपतेः सुतायामुत्पादयामासनिषिद्धशत्रुः। अनून
सारान्निषधान्नरेन्द्रात्पुत्रं यमाहुर्निषधाख्यमेव।
अत्रनिषिद्धशत्रुपदेसंयोगाधिक्येनदन्तुरता। सोयं
पदानुप्रासोदन्तुरइत्युच्यते॥३॥ श्लक्ष्णोयथा। अ
प्येहिकान्तेवैदेहिदेहिप्रतिवचोमम। अरविन्दाक्षि
दाक्षिण्यमलङ्काराोहियोषिताम्। अत्रस्वरेणसहा
वृत्तेःश्लक्ष्णतासोयमपदानुप्रासःश्लक्ष्णइत्युच्यते॥२॥
सम्पुटंयथा। सदर्पइवकन्दर्पस्तरलामादृशाम्मतिः।
असारइवसंसारः कुरुष्वमदनुग्रहम्। अत्रेवशब्द
स्यापवादत्वेनाव्यवधायकत्वादनुप्रासोयंसम्पुटइ
त्युच्यते॥४॥सम्पुटावलीयथा। करोतिकिङ्किरातो
पिसमाकृष्यशिलीमुखान्। शिलीमुखान्समाकृष्य
किङ्किरातःकरोतियत्॥ अत्रकरोतिकरोतीत्येकं
सम्पुटङ्किङ्किरातःकिङ्किरातइति द्वितीयंसमाकृष्य

---

ना॥३॥४॥५॥वारणारथ्योविनायकः। अत्ररणेरणेतिशनेशनीतिकारङ्कार
मितिभुजम्भुजेतिपदंतदेकदेशावृत्तिःस्फुटमुपलभ्यते। मसृणातुकथ
मित्यतआह। सोयमिति॥१॥ सनैषधेत्यादौनिषधरूपोवर्णसमुदायः
पदैकदेशतामापन्नःसाधारणएव। तदत्रदन्तुरताकीदृशीत्यतआह।
अत्रनिषिद्धेति॥२॥३॥सम्पुटवदेकरूपस्यैवखण्डस्यनिरन्तरमावर्त्तनंसम्
पुटम्। तत्कथमिवकंसंशब्दैरन्तरायेसम्पद्यतइत्यतआह। अत्रेवशब्द
स्येति॥४॥करोतिकिङ्किरातोयमित्यादौमध्येशिलीमुखाञ्छिलीमुखानि
तिप्रथमंसम्पुटम्। तस्यबहिरावरणभूतंसमाकृष्यसमाकृष्येतिद्वितीय

समाकृष्येतितृतीयंशिलीमुखाञ्किञ्चीमुखानिति च
तुर्थंसोयम्पदानुप्रासःसम्पुटावलीत्युच्यते ॥ ५॥ खि
न्नोयथा । कुलजातिसमाकुलीकृतानांसुखदसुखा
शयमूढचेतनानाम् । अभवविभवलाभलोलुभाना
नाम्भवभयबन्धविभेदनायभूयः । अत्ररीतेरनिर्वा
हात्खिन्नतासोयंपदानुप्रासःखिन्नइत्युच्यते ॥ ६ ॥
स्तबकवान्यथा । भासयत्यपिभासादौकविवर्गेजग
त्त्रयीम् । केनयान्तिनिबन्धारःकालिदासस्यदासता
म् । सोयंवर्णानुप्रासवत्पदानुप्रासोपिस्थानेस्था
नेत्रिनिवेशात्स्तबकवानित्युच्यते॥ ७॥स्थानीयथा ।
मरञ्जोह्लाउह्लागरलसरिसोचन्दणरसोखदक्खरोहा
रोमलअपवणादेहतवणा। मुणालीवाणालीजलदित्र
जलद्दातणुलदावरिठ्ठाजन्दिठ्ठा कमलनअणासा
सुवअणा । सोयम्पदानुप्रासःस्थाननियमात्स्था
नीत्युच्यते ॥ ८ ॥ मिथुनंयथा । पुरःपारापारातट

---

न्तस्यापिकिङ्किरातः किङ्किरातेतितृतीयन्तस्यापिकरोतिकरोतीतिच
तुर्थम् । तदेतद्विपरीतव्याख्ययाव्यञ्जयन्नाह । अत्रकरोतीत्यादि॥५॥
कुलेति । अत्रप्रथमपादेकुलेतिअविवक्षितस्वरादिवर्णयुग्ममक्षरचतु
ष्टयव्यवधानेनकुलीत्यावृत्तंद्वितीयतृतीयपादयोस्तुसुखदसुखेतिअभ
वविभवेतिचैकवर्णव्यवधानेनावृत्तिश्चतुर्थपादेतुभवभवेतिरीतिभङ्गो
नचदोषः।प्रतीत्यव्यवधानान्॥६॥ वैचित्रीविशेषेणालङ्कारभावीभासय
तीत्यादावाद्यन्तयोर्दूरान्तरितैवावृत्तिः।स्थाननियमस्तुनविवक्षितः।त
दिदमुक्तंस्थानेस्थानइति॥७॥जोण्हाउण्हारिसोरसोइत्यादिकंप्रतिपा
दस्मध्यन्तस्थाननियमेनावृत्तिः । चलोर्मिंतःक्षारःजलार्द्रांजलार्द्रंवस्त्रे
॥पारापाराभिधानानदी । अपारापाररंहता । सिन्धुर्नदीसिन्धुनामा ।

भुविविहारःपुरवरन्ततःसिन्धुःसिन्धुःफणिपतिवन पावनमतः । तदग्रेतदग्रोगिरिरिरितिगिरिस्तस्यपुर तोविशालाशालाभिर्ललितललनाभिर्विजयते । त देतत्प्रतिपादंद्वयोर्द्वयोः पादानुप्रासयोर्विन्यासान् मिथुनम् ॥९॥ मिथुनावलीयथा । शिरसिशरभः क्रोडेक्रोडःकरीकरटेरटन्नुरसिचरुरुर्मर्मण्येणःशिखी मुखरीमुखे । कविरपिहृदिहृद्दीदूराद्गुरिर्द्विपजिद्गु तोधनुषिलघुतालङ्घ्येपूर्वीजयोस्ययशस्विनः । से यंद्वयोः पादयोर्निरन्तरमावृत्तिर्मिथुनावलीत्युच्य ते॥१०॥गृहीतमुक्तोयथा । पुन्नागनागकेसरकेसरप रिवासवासनासुरभिः । सुरभिर्मधुरमधुप्रियषट्चर णाचरणत्रान्प्राप्तः । सोयञ्चक्रवालवदनुप्रासोगृ

---

विशालाउज्जयिनी । शालाभिरितीत्थम्भूतलक्षणेतृतीया । अत्रपारा पारेतिसिन्धुसिन्धुरिति । दग्रे दग्र इतिशालाशालेतिक्रमेणप्रथमा दिपादेषुद्वयोरेवानुप्रासयोर्विन्यासः । यद्यपितृतीयपादेगिरिगिरी तिद्वितीयमपिमिथुनंसम्भवतितथापिवर्णद्वयव्यवधानादनुल्लेखीत्युपे क्षितवान्॥८॥शिरसीति । शरभोष्टापदःक्रोडोवराहोरुरुर्वङ्कुशृङ्गोमृगो हरिःसिंहः । स्वरभागाविवक्षायांव्यञ्जनयुगलावृत्तिर्मिथुनम् । तदे वावृत्तिभूम्नामिथुनावली । शरशरेतिक्रोडक्रोडेतिकरकरेतिदवदवे त्यादिनाक्रमेणसुप्रत्ययभिन्नानैव॥१०॥गृहीतमुक्तोयथेति । पुन्नागःपुङ्ग जइतिप्रसिद्धःकेसरोबकुलोभावना वासनासुरभिर्वसन्तोनानामधुपान लालसानामितस्ततःषट्चरणानाञ्चरणम्भ्रमणम् । अत्रचक्रवालक्रमो व्यक्तएव । आवृत्त्याधिक्याभावाद्गृहीतमात्रस्यैवमोचनम्॥११॥पुनरु क्तिमानिति । वाच्याभेदात्पुनरुक्तिःसायस्मिन्नावृत्तिलक्षणेनानुप्रासे सपुनरुक्तिमान् । तात्पर्यभेदान्नचदोषः । धूमज्वलनरसनानामाकाश देशव्यापितयाधनुःप्रकर्षद्वारेणरामभद्रगतोत्साहशक्तिध्वननात्प्रकृत

हीतमुक्तइत्युच्यते ११॥पुनरुक्तिमान्यथा। धूमाइधूमकलुसे जलइजलन्ताअहन्तजीआवन्धे। पडिरअपडिऊस्यदिसेरसइरसन्तिसिहरेधणुमिणहअलम्।
अत्रधूमादीनाम्पुनर्वचनात्पदानुप्रासोयम्पुनरुक्तिमानुच्यते ॥ १२ ॥ वर्णावृत्तिरनुप्रासःपादेषुचपदेषुच ॥ पूर्वानुभवसंस्कारबोधिनीयद्यदूरता ॥१॥
लाटानुप्रासवर्गस्ययावद्वावलक्ष्यतेगतिः । पदानुप्रासवर्गोपितावद्वैवप्रपञ्च्यते ॥ २॥ स्वभावतश्च गौण्याचवीप्साभीक्ष्ण्यादिभिश्चसा। नाम्नाद्विरुक्तिभिर्वाक्येतदनुप्रासउच्यते॥३॥सास्वभावतोयथा।
कुर्वन्तोमीकलकलम्मारुतेनचलाचलाः। प्रातर्गुलुगु

---

धीररसपोषः। अत्रधूमधूमेत्यादिनावाच्यभेदः॥१२॥ ननुवर्णावृत्तिरनुप्राससामान्यलक्षणमुक्तानचासौपदाद्यावृत्तावस्तीत्यतआह । वर्णावृत्तिरिति। समुदायावृत्तिरपिवर्णावृत्तिरेव । नहिवर्णातिरिक्तःसमुदायोनाम। इयांस्तुविशेषोयत्पूर्वजातीयस्तानुसन्धानमलङ्कारताम्प्रयोजयति।तत्रचकार्यानुमेयःसमयसन्निकर्षविशेषएवप्रयोजकइति। तदिदन्दिङ्मात्रमुक्तम् ॥१॥ अन्येपिपदानुप्रासप्रकाराःस्वयमुत्प्रेक्षितव्याइत्याह।लाटेति। गतिःप्रकारः॥२॥क्रमप्राप्तमाम्रेडितमित्यनुप्रासंविभजते। स्वभावतइति । यद्यपिपदानुप्रासादीनामाम्रेडितरतिव्यापिकातथाप्यर्थापत्तेपोपनिपातिनीसहविवक्षिता। अर्थोद्विविधः। आभिधानिकउपाधिश्च। आद्योगौणमुख्यभेदेनद्विप्रकारोद्वितीयोपिवीप्साभीक्ष्ण्यादिरनेकविधोद्विरुक्तिरपिनामशरीरसम्पादिकानाम्नःसतश्चेतिद्वयीबोद्धव्या। अतएवद्विरुक्तस्यैवाभिधाशक्तियोगात्स्वभावतइत्युक्तम् ॥३॥ कुर्वन्तइति। चलाचलाश्चञ्चलाः। चलतेरच्प्रत्ययेऽभ्यासस्याकिरूपम्। गुलुइत्यव्यक्तानुकरणस्यडाचिद्विर्वचनेचगुलुगुलेतिनामसिद्धिः। अत्रकलकलादिपदानामर्थवशायातद्विरुक्तिशरीरा

लायन्ते गजाइवघनाघनाः । अत्रकलकलमित्या
दिषुस्वाभाविकीपुनरुक्तिरुपदिश्यते ॥१॥ गौण्या
यथा । अमृतममृतञ्चन्द्रश्चन्द्रस्तथाम्बुजमम्बुजं
रतिररतिःकामःकामोमधूनिमधून्यपि । इतिन
भजतेवस्तुप्रायःपरस्परसङ्करन्तदियमबलाकान्ति
न्धत्तेकुतःसकलात्मिकाम् । अत्रामृतममृतमित्या
दिष्वभेदेपिभेदोपचारेणविशेषणविशेष्यभावः सा
मान्यविशेषभावाद्भवन्पुनरुक्तिवद्भासते॥२॥ वीप्सा

---

णांस्वभावतएवयथोक्तरूपव्यवस्थितिः॥१॥अमृतमिति । अत्रद्वितीया
नाममृतादिपदानान्द्विरुक्तिदोषेणतात्पर्यापर्यवसानादमृतादिगुणपर
त्वेकल्पनीयेपिनिकृष्टगुणपराणांसामानाधिकरण्यानुपपत्तेस्तत्तदसा
धारणगुणोपबृंहितामृतादिनिष्ठानामाद्यपदोपात्तसामान्यापेक्षोवि
शेष्यभावश्चविशेषणत्वञ्चनिर्वहति । नचपर्यायनिवेशेर्थान्तरसङ्क्रमि
तवाच्यतासम्भवतीतिपूर्वाचार्याः । सेयङ्गौणार्थपरवशानामद्विरु
क्तिः ॥२॥ वीप्सेति । नानार्थानांयुगपदेकैकेनपदेनकेनचिद्व्याप्तुमि
च्छाविवक्षावीप्सा । साप्रयोक्तृधर्माद्विरुक्त्याभिव्यज्यते । अतएवया
काचिदर्थसामर्थ्याकृष्टाद्विरुक्तिःसासप्तवर्णादिवत्क्रामद्विरुक्तिसमाख्य
याप्रतिपाद्यते । शैलेशैलइति।अत्रकिञ्चिदेकमसाधारणगुणाश्रयविव
क्षन् तदितरस्यतज्जातीयस्यगुणसंस्पर्शमसहमानोऽप्रस्तुतमेवशैला
दिकप्रस्तुतवान् । रोहणादिव्यतिरिक्तासुव्यक्तिषुमाणिक्याद्यभाव
गुणव्याप्तिर्युगपदेवविवक्षिता । शब्दादुपसर्जनतयाप्रतीयमानःसिद्ध
स्वभावःपदार्थोगुणइत्युच्यते । एवंक्रिययापिव्याप्तिरवसेया । सेयन्द्र
व्यवीप्सेति । शैलादीनान्द्रव्याणामेकेनगुणादिनाव्याप्तुमिच्छेत्यर्थः ॥
३॥ प्रकारेगुणवचनस्येति । प्रकारःसादृश्यन्तत्पूर्णगुणेनन्यूनगुणस्यसा
धारणगुणान्वयेभवति । एवञ्चास्तिसमानशब्दाभिधेयत्वञ्चव्याप्तिः ।
इयांस्तुविशेषोयदेकत्रासिद्धस्यान्यत्रप्रतिबिम्बनंसादृश्यंशुद्धवीप्सायां

यथा ॥ शैलेशैलेनमाणिक्यम्मौक्तिकन्नगजेगजे । दे
शेदेशेनविद्वांसश्चन्दनन्नवनेवने । सेयन्द्रव्यवीप्सा
नामद्विरुक्तिः। एवंगुणजातिक्रियावीप्सायामपिद्रष्ट
व्यम् । प्रकारेगुणवचनस्येत्यादिरपिवीप्साप्रकार
एव । यथा । मानिनीजनविलोचनपातानुष्णबाष्प
कलुषान्प्रतिगृह्णन् । मन्दमन्दमुदितःप्रययौखंभी
तभीतइवशीतमयूखः ॥४॥ आभीक्ष्ण्येनयथा । श्ले
षंश्लेषम्मृगदृशादत्तमाननपङ्कजम् । मयामुकुलि
ताक्षेणपायम्पायमरम्यत । सोयमाभीक्ष्ण्येणमुल्स
चानुप्रयुज्यतइतिपुनरुक्तिः ॥ ५ ॥ क्रियापदाभी
क्ष्ण्याद्विरुक्तौतुपुनरुक्तेरपिपुनरुक्तिर्यथा । जयति

---

न्तुगपद्नेकस्यनानापदार्थसम्बन्धइति । सायवीप्साप्रकारशब्दार्थः ।
अतएवप्रकारेगुणवचनस्येतिपृथक्सूत्रितम् । इहतुवीप्सापदेनैवाय
मर्थउपग्राह्यइत्यभिप्रायः । मन्दम्मन्दमित्योदितइतिक्रियाविशेषणमु
पमितमेव भीतभीतइतिकर्तृविशेषणमपितादृश्यलक्षणगुणोत्प्रेक्षाया
मिवशब्दः॥४॥आभीक्ष्ण्येनेति । नित्यवीप्सयोरित्यनेननित्यत्वमाभी
क्ष्ण्यमुक्तम् । याङ्किलक्रियाङ्कर्ताप्राधान्येनानुपरत्याचकर्तुमिच्छति
तद्रूपमाभीक्ष्ण्यमतएवतिङव्ययकृताञ्चद्विरुक्तिरियमसाधारणी ।
उभयत्रैवक्रियाप्राधान्यप्रतीतेः । सिद्धेहिवस्तुनिपौनःपुन्यप्रतीतिः
क्रियोपाधितएवनस्वरूपेण । ननुणमुलैवाभीक्ष्ण्याभिधानात्किन्द्वि
रुक्तिःकरिष्यतइत्यतआह । सेयमिति । नचाभीक्ष्ण्यंणमुलोवाच्यम् ।
स्वार्थेतस्याभिधानात् । द्विरुक्तिसहितस्यैवतस्यानुपरतिव्यञ्जकत्वा
त् । स्वरूपार्थान्यानन्तरतमशब्दद्वयरूपआदेशोवाद्विरुच्चारणंवाद्वि
रुक्तिशब्दार्थः ॥५॥ नचावश्यन्द्वावेवशब्दौप्रयोक्तव्यौकिन्तुयावद्भिर
भिमतोर्थःप्रतीयतेतावन्तअभीक्ष्ण्यशब्दाप्रयोक्तव्यास्तेनाव्ययकृदनुद
श्यन्तेकिन्तुतिङ्पदेष्वेवेत्याह । क्रियापदेति । यद्यप्येकैकवाक्यार्थ

जयतिदेवःश्यामकण्ठःपिनाकीजयतिजयतिदेवी
लोकमाताभवानी । जयतिजयतिधन्यःसोपिभक्त
स्तयोर्यःकिमपरमिहधन्यंवर्ण्यतेतद्देव॥६॥आदि
ग्रहणेननिमूलसम्भ्रमादयःपरिगृह्यन्ते । तेषुनिमू
लादिर्यथा । निमूलकाषङ्कषतिस्वान्तमन्तःस्मरज्व
रे । लाजस्फोटंस्फुटन्त्याशुहृदयेहारयष्टयः ॥ ७॥
सम्भ्रमेणयथा । अस्थीन्यस्थीन्यजिनमजिनम्भस्म
भस्मेन्दुरिन्दुर्गङ्गागङ्गोरगउरगइत्याकुलाःसम्भ्रमेण
भूषावेषोपकरणगणप्रापणव्यापृतानान्नृत्यारम्भप्र
णयिनिशिवेपान्तुवश्चोगणानाम् ॥८॥ हर्षावेशवि
स्मयादयोपिसम्भ्रमस्योपाधयोभवन्ति । तेषुहर्षस
म्भ्रमेणयथा । रुरुधुःकौतुकोत्तालास्ततस्तामभरा
वतीम् । क्वार्ज्जुनःक्वार्ज्जुनइतिब्रुवन्त्योनाकयो

---

सङ्गत्याक्रियापदस्यद्वयमेवोच्चारणंतथाभिकाव्यापेक्षयाबाहुल्यमवसेय
म्॥६॥आदिग्रहणेनेति । ततदितरप्रकरणप्रतिपन्नानान्द्विरुक्तिप्रकारा
णामादिपदेनोपग्रहोविधेयः । तद्यथा । अर्वागर्वाग्वलवदुपलग्र
न्थयःशैलाद्दूरेदूरेमणिमयदृषन्मेखलोरत्नसानुः । आराद्दारान्निधि
रयमपायंद्वीयोद्वीयान्दुग्धाम्भोधिस्तदयमसदृक्छिल्पएवादिशि
ल्पी । अत्रानुपूर्व्येद्विभवतइतिद्विरुक्तिः । एवंस्वार्थेवधार्यमाणेइत्या
दयोपिद्विरुक्तिप्रकाराःस्वयमवसेयाइत्याशयवानुपलक्षणतयाकिञ्चि
दुदाहरति । निमूलकाषमिति । कषादिषुयथाविध्यनुप्रयोगइतिस
स्मन्नेवप्रयुक्तेद्विरुक्तिसिद्धिः॥७॥सम्भ्रमेणेति । भयसंवेगादरात्मकःस
म्भ्रमःसंवेगस्त्वरा । सैवप्रकृतोदाहरणेद्विरुक्तिम्प्रयोजयति॥८॥ ननुह
र्षादिनामहाकविप्रबन्धेषुद्विरुक्तिरुपलभ्यते । साकथमुपग्राह्येत्य
तआह । हर्षेति । हर्षादयोपिसम्भ्रमप्रयोजकास्तैरसाधारणतामा
पन्नैरवच्छिद्यमानःसम्भ्रमोन्योन्योभवतिनचसम्भ्रमताञ्जहातीतिस

षितः ॥९॥ आवेगसम्भ्रमेण यथा । कञ्चुकं कञ्चुकं मुञ्च हारं हारं परित्यज । हा हा दहति दावाग्निर्वं स्त्वं त्वमपाकुरु । अत्र मुञ्च परित्यज दहति अपाकुरु इति क्रियापदेष्वावेगसम्भ्रमान्नाद्विरुक्तिः । तथा ह्यरण्यानीप्रवेशे विजिगीषु द्विषां योषिद्दावाग्निसम्भ्रमावेगात्कयाप्येवमुच्यते । तत्र प्रथमं कञ्चुक एवावेगसम्भ्रमः सह्यागले दावाग्नावुत्तारयितुमशक्यस्ततस्तद्धासङ्गहेतौ हारे ऽनन्तरं परापतितदावाग्निर्दीप्ते वाससीति ॥१०॥ विस्मयसम्भ्रमेण यथा । अहो रूपमहो रूपमहो मुखमहो मुखम् । अहो मध्यमहो मध्यमस्याः सारङ्गचक्षुषः । एतेषु समस्तेष्वपि सम्भ्रमेषु यावद्बोधमिति द्विरुक्तिः ॥११॥ एवं त्रिरुक्तिरपि द्रष्टव्या यथा । जय जय जय श्रीमन्प्रभाता विभावरी वद वद वद श्रव्यं विद्वन्निदं ह्यवधीयते । शृणु शृणु शृणु त्वद्वत्सूर्यो ऽनुरज्यति मण्डलं न हि न हि न हि क्ष्मामार्तण्डः क्षणे न विरज्यते ॥१२॥ क्रियासमभिहारश्च क्रियाभ्यासश्च यः पुरा॥ युक्तावुदाहृतः सोपि नामानुप्रास इष्यते॥१॥ जायते न च दोषाय काव्ये ऽलङ्कारसङ्करः ॥ विभूषय

---

त्त्वमद्विरुक्तिप्रकार एवायमित्यर्थः॥९॥ निगूढगम्भीर उद्वेग आवेगः । ननु कञ्चुकं कञ्चुकमिति वन्मुञ्चेत्यादिकमावेगसम्भ्रमप्रभवमेव तत्कथन्न द्विरुच्यत इत्यत आह । अत्रेति । कञ्चुकस्य हारेण हारस्योत्तरीयवाससा व्यासङ्गसम्भावना सम्भ्रमहेतुः ॥ १० ॥ ११ ॥ सम्भ्रमेयावद्बोधमिति यावच्छब्दार्थमाविष्कुर्वाणः पूर्वोक्तमभिप्रेत्याह । एवं त्रिरुक्तिरपीति । उपलक्षणञ्चेदम् । चतुरादिद्विरुक्तिरदण्डवारितैव ॥ १२ ॥ समभिहारो ऽनृशंस्यम ॥ १ ॥ ननु वाक्यार्थप्रयुक्त्यैव काव्यस्य स

तिहारोपिस्तनौग्रीवाम्मृगीदृशाम् ॥ २ ॥ अर्थाभेदे पदावृत्तिः प्रवृत्याभिन्नयेहयाससूरिभिरनुप्रासोला टीयइतिगीयते ॥ ३ ॥ सचाव्यवहितोव्यस्तःसम स्तउभयःपुनः ॥ उभयश्चक्रवालश्चगर्भश्चैवाभिधी यते ॥ ४ ॥ यस्त्वव्यवहितोनामनैयतातस्यशक्यतं ॥ कर्तुमेकादिगुणनापदवृत्त्यादिभङ्गिभिः ॥५॥ तेष्वव्य वहितभेदेषुव्यस्तोयथा । उअहिरुसजसउसणिज धीरंधीरेणगरुइआईविगरुअम् । रामोठिईअ विठिइम्भणइरवेणअरवंससमुप्फुन्दन्तो । अत्रा

माथीकरणात्किमनुप्रासेनेत्यतआह । जायतेनचेति । उदाहरणेना लङ्कार्यसङ्करवदलङ्कारसङ्करोपिलोकप्रसिद्धएवशोभाहेतुरित्यभिम तमिति॥२॥क्रमप्राप्तंलाटानुप्रासंलक्षयति । अर्थाभेदेइति । लाटजनव ल्लभोनुप्रासोलाटानुप्रासः । अर्थाभेदेकथंनपुनरुक्तिदोषइत्यतउक्तम् प्रवृत्त्याभिन्नयेति। तात्पर्यभेदेनेत्यर्थः । अतएवयमकाद्भेदः॥३॥सचेत्य नुक्तव्यवहितसमुच्चयेचकारः । लाटानुप्रासःसामान्यतोद्विधा । अव्य वहितोव्यवहितश्च । अनावृत्तशब्दान्तरितोऽव्यवहितस्तदन्तरित श्चव्यवहितः । तयोरव्यवहितःषोढाभवति । व्यस्तःसमस्तोद्वावुभया विति तावच्चत्वारस्तत्रोभयद्वयन्द्विप्रकारकमितिसामान्यविशेषभावा न्यांषड्उदाहार्याःव्येयाः । उभयःपुनरिति । पुनःशब्दोव्यावृत्तौपूर्वस्मा दन्यएवायमेकशब्दाभिलप्यइत्यर्थःआद्योभयद्वयमग्रेवक्ष्यते॥४॥द्विती यन्तुचक्रवालगर्भश्चेत्युक्तमव्यवहितस्यतर्हिकियन्तोभेदाःतत्राहयस्त्वम् रित्विति । तेनअनुभावावान्तरविशेषतयानायंसमशीर्षिकयागणित इत्यर्थः॥५॥तेष्विति । द्विरुक्तशब्दरूपेषुपूर्वपरयोर्नैकमपिसमासान्तर्ग तमितिव्यस्तः । एतेनसमस्तादयोव्याख्याताःधैर्यगुरुतास्थितिगाम्भी र्यानुनिष्पादीवागनुभावोरस पूर्णकुम्भोच्छलनन्यायेनसाक्षादिवतत्त त्प्रकर्षमर्पयन्शोभाविकाशहेतुः । समुप्फुन्दन्तो । समभिकाभन् ।

व्ययानांद्योतकादित्वादिवादिभिर्व्यवधानन्ना स्त्री
यते । नहीवादेःप्रकृतेपिपृथक्पदत्वमस्ति । यद्येव
मिदमिहोदाहरणंयुज्यते । त्वन्मुखन्त्वन्मुखमिव
त्वद्दृशौत्वद्दृशाविव । त्वन्मूर्तिरिवमूर्तिस्तेत्वमिव
त्वद्कृशोदरि इति । अस्त्यवैतत्किन्तुयथा । अ
मृतममृतञ्चन्द्रश्चन्द्रइत्यादिकमभेदेपिभेदोपचा
रान्नामद्विरुक्तिस्तथेयमित्युत्प्रेक्ष्यते॥१॥ समस्तोय
था । अपहस्तितान्यकिसलयाकिसलयशोभंविली
कयाशोकम् । सखित्रिजितापरसुमनःसुमनःसुभ
गञ्चमधुतिलकम् । अत्रकिसलयकिसलयइतिसु
मनःसुमनइतिचसमस्तानामेवाव्यवधानादयंलाटी
योनुप्रासोऽव्यवहितसमस्तः पूर्वःपुनरव्यवहितव्य
स्तइत्युच्यते॥२॥ उभयस्तुद्विधाप्रथमोऽसमस्तोऽपरो

---

ननुजलेणाधीरेणगुरुइआइविद्धवरवेणाआइलि यद्पञ्चकेविभक्त्यास
दुत्तरयोश्चकारद्वयेनचव्यवधानात्कथमव्यवहितभेदउदाहियतइत्या
ह । अत्रेति । अव्ययानामित्युपलक्षणम् । द्योतकत्वादितिविभक्ति
साधारणोहेतुः । पञ्चकप्रातियदिकार्थत्वपदेविभक्तिर्द्योतिकैवशाक
ल्योपीति । अव्ययवाचकत्ववादीसोप्यसत्वार्थानामिवादीनांस्वात
न्त्र्येणवाचकत्वन्नमन्यते । यतोनपृथक्पदत्वमनुशिष्टवान् । तथाच
द्योतकानाम्परशक्तिसहकारित्वेनतदनुप्रवेशात्स्वाङ्गमव्यवधायकमि
तिन्यात् । ननुकिमत्रक्लिष्टकल्पनया । अव्यव्यवहितोदाहरणमप्यन्य
दपीतिशङ्कते । यद्येवमिति । अत्रपूर्वार्द्धवर्तिद्वयमुदाहरणमुत्तरा
र्द्धवर्तिनोद्वयस्यपूर्वतुल्यत्वात् । परिहरति । अस्तीति । अनन्वय
मात्रमत्रोदाहरणम् । तत्रचायमभेदकल्पनयाविशेषणविशेष्यभावो
वाच्यस्तथाचगौणीनामद्विरुक्तिःस्यादितिसङ्करशङ्कयानोदाहृतमिति
सिद्धान्ततात्पर्यसंक्षेपः । पूर्वःपुनरिति । समस्तानन्तरंव्यस्तविवर

व्यस्तोव्यस्तोपरः समस्तइतिच । तयोःप्रथमोय था । जितलाटाङ्गनावक्त्रं वक्त्रन्तस्यामृगीदृशः । कस्यनक्षोभजनकञ्जनकम्पुष्पधन्वनः । तादृदल क्षणेनचव्याख्यातम् ॥३॥ द्वितीयोयथा । नलिनी नलिनीनाथ करसन्ततिसङ्गमात् । विकचाविकचा स्यानाक्रान्तानांहरतिश्रियम् । अस्यापिलक्षणेनै वोक्तोर्थः॥४॥ स्वापेक्षयाव्यस्तोन्यापेक्षयाचसमस्तः द्वितीयोव्यस्तस्समस्तइति सद्वितीयोभयशब्दवा च्यः । सोपिद्विधा । प्रतिपादमन्ताद्योर्गर्भश्चानु प्रासविन्यासात् । तयोःप्रथमश्चक्रवालंयथा । जयतिक्षुण्णतिमिरस्तिमिरान्धैकवल्लभः । वल्लभी कृतपूर्वाशः पूर्वाशातिलकोरविः । अत्रतिमिरवल्ल भपूर्वाशेतिशब्दास्तिमिरादिशब्दापेक्षयाव्यस्ताः । यथास्वपूर्वोत्तरपदापेक्षयाचसमस्ताः पदान्ताद्यो विनिवेशिताइतियथोक्तलक्षणानुगमाल्लाटीयानुप्रा सोयमव्यवहितोव्यस्तसमस्तश्चक्रवालेत्युच्यते ॥५॥ एतेनपादमध्येनुप्रासविन्यासाद्गर्भोपिव्याख्यातो यथा । समाधवामाधवदन्नदृष्टिस्सकौतुकाकौतु कमन्दिरेस्तात् । सविभ्रमाविभ्रमदायिनीवः सप ङ्कजापङ्कजलोचनाश्रीः ॥६॥ व्यवहितभेदेषुव्यस्तो यथा । प्रकाशोयशसादेवःप्रकाशोमहसारविः । दुस्सहोविद्विषांस्वामीदुःसहस्तमसाञ्चसः । तदेत न्नातिदुर्बोधमितिनव्याक्रियते॥७॥ सोयमेकगुणो व्यस्तश्चलाटीयानुप्रासोव्यवहितइत्युच्यते । व्यस्त

वानेकगुणोयथा । किञ्चिद्वचिमनवचिनवचिमयदि वा किंवचिमवचमीदृशन्दृश्यन्ते नअवाद्दृशेषुपतिषु स्वेषामशोषेदमाः । तेकिंसन्तिनसन्तिसन्तियदि वाकेवनितसन्तीदृशाः सर्वस्तेषुगुणैर्गृहीतहृदयो लोकःकृतोवर्तते । अत्रवचमीतिसन्तीत्येतयोरने कगुणावृत्तिः ॥८॥ समस्तएकगुणोयथा । चन्द्रान नचन्द्रदिनमृगलोचनमृगशिरश्चनक्षत्रम् । तिथि रतिथिप्रियदशमीपरतस्त्वेकादशीप्रहरात् । न न्विहतिथिरित्यसमस्तन्नकेवलमसमस्तमभिन्नार्थंत यालाटीयानुप्रासेपिनसङ्गच्छते । सङ्गतेचकेनचित्प दानुप्रासेन । नचलाटीयानुप्रासोवानामानुप्रासो वापदानुप्रासाद्भिद्यतइति ॥ ९ ॥ समस्तोनेकगुणो यथा । ब्रह्माण्डच्छत्रदण्डः शतधृतिभुवनाम्भोरु

---

णस्प्रतिपत्तिसौकर्यार्थम्॥७॥द्वितीयमुभयंविवेचयति। स्वापेक्षयेति॥५॥ तिमिरान्धाश्चक्रवाकाः । यथाश्रुतिद्विरुक्तः पूर्वःपूर्वेणोत्तरश्चोत्तरेणास मस्तइतिपूर्वस्माद्विशेषः । सकौतुकाकृतकङ्कणबन्धादिपरिणयमङ्ग ला॥६॥अनङ्गगुणइति । आवृत्तिद्विगुण्यादिनानेकगुणस्यकचगुणानाया मियत्तावधारणकारणमस्तीत्यभिसन्धायतस्यैयत्तानशक्यतेकर्तुमिति पूर्वमुक्तम्॥७॥स्वेषामात्मीयानाम्मध्येयःकश्चिददोषस्तत्रदमादयष्टप्रका रानदृश्यन्तइति॥८॥यद्यप्येकपरिहाराकारोदाहरणद्वयमुचितमेवतथा पिकञ्चिद्विशेषंविवक्षन्नाक्षिप्यसमाधत्तेनन्विति । माभूदत्रासमासो न्यथापिनेदमुदाहरणमिहसङ्गतमित्याह । नकेवलमिति । तत्किम नुप्रासएवायन्नभवतीतिपृच्छति । केनतर्हीति । उत्तरम्पदानुप्रासेने ति । पदानुप्रासेनार्थभेदाभेदौविवक्षितौ । किन्तुपदाश्रयेणावृत्तिमा त्रम्पदानुप्रासावृत्तिश्चलाटानुप्रासेप्यस्तीतिसङ्गत्यात्रेदमुदाहृतमित्य र्थः॥८॥शतधृतिर्ब्रह्मा । तस्यभवनभूतमम्भोरुहपद्मङ्कपोगुणसूत्रःदश

होनालदण्डः क्षोणीनौकूपदण्डःक्षरदमरसरित्पट्टिकाकेतुदण्डः । ज्योतिश्चक्राक्षदण्डस्त्रिभुवनभवनस्तम्भदण्डोङ्घ्रिदण्डःश्रेयस्त्रैविक्रमस्तेवितरतुविबुधद्वेषिणांकालदण्डः । अत्रानेकशोदण्डइत्यस्यावृत्तिः । आभ्यांव्यस्तसमस्तभेदोपिव्याख्यातः ॥ १० ॥ यथा । दशरश्मिशतोपमद्युतिंयशसादिक्षुदशस्वपिश्रुतम् । दशपूर्वरथंयमाख्ययादशकण्ठारिगुरुंविदुर्बुधाः । अत्रानेकधादशशब्दश्रावर्तते ॥ ११ ॥ अव्यवहितेपिद्वैगुण्यादेर्नविरोधः । यथा । वक्त्रायन्तेनदीनांसितकुसुमधराःशक्रसङ्काशकाशाःकाशाभाभान्तितासान्नवपुलिनचराश्चानदीहंसहंसाः । हंसाभाम्भोदमुक्तस्फुरदमृतरुचिर्मेदिनीचन्द्रचन्द्रश्चन्द्राङ्कःशारदस्तेजयकृदुपनतोविद्विषाङ्कालकालः॥१२॥व्यवहिताव्यवहितभेदोपिदृश्यते । यथा । धनैर्दुष्कुलीनाःकुलीनाःक्रियन्तेधनैरेवपापात्पुनर्निस्तरन्ति । धनेभ्योहिकश्चित्सुहृन्ना-

स्तित्येकोदशशब्दोन्यावृत्तोन्येत्रयःसमस्ताः ॥११॥ ननुअव्यवहितएवकिङ्गुणनादिभेदोनेत्याह । अव्यवहितेपीति । वक्त्रायन्तइत्यादौकाशपदपरम्परयोदाहरणम् । तत्रहिप्रथमःकाशशब्दोभिन्नार्थएव ॥१२॥यत्रव्यवहिताव्यवहितयोरेकवाक्यानुप्रवेशोस्ति तत्रापिगुणनाभेदउदाहरणीयः । दृश्यतइत्यनेनयःद्व्यवहितेभूयसीगुणनामहाकविप्रबन्धेषुप्रतीयतेनतद्वदव्यवहितेपीतिपूर्वंव्यवहितमात्रेगुणनादिकमुपन्यस्तमितितात्पर्यम् । धनैरिति । अत्रधनपदं व्यवधानेनबहूकृत्वानामवलम्बमानमेवचतुर्थपादेत्वव्यवहितात्वनुप्रासेपिप्रविष्टमितिभवतिव्यवहिताव्यवहितभेदता । सोयम्पदाभ्यासोदर्शितः ॥१३॥ एवंश्लोकार्द्धा

स्तिलोकेधनान्यर्जयध्वंधनान्यर्जयध्वम्॥१३॥योऽप
चार्द्धाभ्यासःसोपिव्यवहिताव्यवहितभेदएवयथा।
यैस्त्वंसाक्षात्कृतोनाथतेषाङ्कामेषुकोग्रहः। यैस्त्वं
साक्षात्कृतोनाथतेषाङ्कामेषुकोग्रहः। अत्रपादापे
क्षयाव्यवहितत्वमर्द्धापेक्षयापुनरव्यवहितत्वम्भव
ति॥१४॥द्विभागाभ्यासस्तुव्यवहितएवस्वदते।यथा।
अद्वायतौयदिस्यातामेधयाकिम्प्रयोजनम्। तावु
भौयदिनस्यातामेधयाकिम्प्रयोजनम्॥१५॥पदाभ्या
सःपुनरव्यवहितोव्यवहितश्चदृश्यते। तयोरव्यवहि
तोयथा। सन्तःशृणुध्वंहृदयेनिदध्वमुत्क्षिप्यबाहुम्प
रिराटीमि। नसुभ्रुवान्तुल्यमिहास्तिरम्यंनसुभ्रुवा
न्तुल्यमिहास्तिरम्यम्॥१६॥व्यवहितोयथा।मुखेनल
क्ष्मीर्जयतिफुल्लपङ्कजचारुणा।दक्षिणेनकरेणापिफुल्ल
पङ्कजचारुणा॥१७॥इवाद्यावृत्तयोपिचात्रैवद्रष्टव्याः।
यथा।लीनेवप्रतिबिम्बितेवलिखितेवोत्कीर्णरूपेव
चप्रत्युप्तेवचवज्रलेपघटितेवान्तर्निखातेवच।सानश्चे
तसिकीलितेवविशिखैश्चेतोभुवःपञ्चभिश्चिन्तासन्त
तितन्तुजालनिबिडस्यूतेवलग्नाप्रिया॥१८॥ यमका

---

न्यासोव्यवहिताव्यवहितभेदएवभवतीत्याह। योपीति॥१४॥अद्वायतावि
विति। अत्रयदिस्यातामितिपादभागेनसहपादावृत्तिर्द्विभागावृत्तिर्भ
वति॥१५॥१६॥मुखेनेति। फुल्लपङ्कजमिवचारुफुल्लेनपङ्कजेनचारुरितिय
द्यपिवृत्त्यर्थोभिद्यतेतथापिपदानामभिन्नार्थत्वादुदाहरणता॥१७॥ अ
र्थोभेदइतिनार्थशब्दोभिधेयवचनःकिन्तुशब्दप्रतिपाद्यमात्रवचनइत्या
शयवानाह। इवादीति॥१८॥ नन्वन्येपिपदावृत्तिप्रकाराःकिमितिनो
दाहृताइत्यतआह। यमकानांचेति। भेदभक्तयोवान्तरप्रकारविच्छि

नांहियावन्त्योवर्ण्यन्तेभेदभक्तय: ॥ अनुप्रासस्यलाटानाम्भिदास्तावन्त्यएवहि ॥ १ ॥ उपमादिवियुक्तापिराजतेकाव्यपद्धति: ॥ यद्यनुप्रासलेशोपिहन्ततत्रनिवेश्यते ॥ २ ॥ कुण्डलादिवियुक्तापिकान्ताकिमपिशोभते । कुङ्कुमेनाङ्गरागश्चेत्सर्वाङ्गीण:प्रयुज्यते ॥ ३ ॥ श्रुतिवर्णानुप्रासावेकविधौकुन्तलेषुगौडेषु । पदयोर्निरनुप्रासोद्वेधात्रेधाचलाटेषु ॥ ४ ॥ ॥ १५ ॥ वर्णस्थानस्वराकारगतिबन्धान्प्रतीहय: । नियमस्तद्बुधै:षोढाचित्रमित्यभिधीयते ॥ १ ॥ वर्णशब्देनचात्रस्वराणाम्पृथङ्निर्देशाद्व्यञ्जनान्येवप्रगृह्यन्ते । तत्रवर्णचित्रेषुचतुर्व्यञ्जनंयथा । जजौजो

---

अथ:स्थानास्थानपादभेदलक्षणा:श्लोकावृत्ति:परमत्रनास्तीतियमकादपकर्ष:॥१॥प्रकरणान्तेनुप्रासस्युत्पादनप्रयोजनमाह। उपमादीति । अनुप्रासलेशोपीति । वर्णाद्यनुप्रास: ॥२॥ श्रुतिवृत्त्यनुप्रासौतुसन्दर्भव्यापकावेवप्रशस्तावित्युदाहरणव्याजेनाह । कुण्डलादीति ॥३॥ एतदेवखण्डसरस्वतीषुकविषुनतथाकाव्यसिद्धिरितिदर्शयन्द्रढयति ॥ श्रुतिवर्णानुप्रासाविति॥४॥ क्रमप्राप्तञ्चित्रलक्षणमवतारयति । वर्णेति । चित्रमालेख्यन्तदिवजीवितस्थानीयध्वनिरहितञ्चित्रमितिकाश्मीरका: । तदसत् । ध्वने:प्राधान्यानङ्गीकारात्प्रतीयमानमात्राभावस्यक्वचिदप्यसम्भवात् । यद्वाआकृतिविशेषयुक्तञ्चित्रमिति तदपिन । अव्यापकत्वात् । अतोवर्णादिनियमेनप्रवृत्तमाश्चर्यकारितयाचित्रमित्येवयुक्तम् । वर्णाव्यञ्जनानि । स्थानङ्कण्ठादि:स्वराअकारादय: । आकार:पद्माद्याकृत्युन्मुद्रणम् । गति:पठितिभङ्गिविशेष: । बन्धोविच्छित्तिप्रभृति: ॥१॥ पञ्चप्रभृतिनियमेनतथाशक्तिव्युत्पत्त्योरुत्कर्षइतिचतुरादिग्रहणाति । तत्रेति । अवश्यंयोद्धाजाजी । जजेर्युद्धार्थादावश्यकेणिनि: । जजायुद्धशौण्डा: । तेषामोजसाजातायाऽऽजि:संग्रामस्त

जाजिजिज्जाजीतन्ततोतिततातितुत्। भाभीभाभा भिभूभाभूरारारिररिरीररः ॥१॥ त्रिव्यञ्जनं यथा। देवानान्नन्दनोदेवोनोदनोवेदनिन्दिनाम्। दिवन्दु दावनादेनदानेदानवनन्दिनः ॥ २ ॥ द्विव्यञ्जनं यथा। भूरिभिर्भारिभिर्भीराभूभारैरभिरेभिरे। भेरीरेभिभिरभ्राभैरभीरुभिरिभैरिभाः ॥ ३ ॥ एकव्यञ्जनं यथा। ननोननुन्नोनुन्नेनोनानानानाननानानु।

---

ञ्जयतीतिक्विप्। तंवेणुदारिणन्ततोनन्तरंअतितातान्। चतुरङ्गबले नप्रामविस्तारान्। आतिनःसततगमनशीलान्। तुदतीतिक्विप्। भानान्दीप्ततारानुरूपाणांशुक्रबृहस्पत्यादीनामाभेवाभाकान्तिर्यस्ये त्युपमानपूर्वपदबहुव्रीहौउत्तरपदलोपे चभाभः अभियोभयशून्यानिभा नभिभवतीतिक्विप्। अभीभाभिभूस्तादृशीयाभातेजस्तस्याभूराश्रयश्चा रजगामअरिःशत्रुःबलभद्रइत्यर्थः। अरीणांरीःसञ्चरणंरीङ्गताविति धात्वनुसारात्। तस्याईरोधूननंरातिददातिअरिररः॥१॥ देवःसृष्टिस्थिति संहारक्रीडारतःदानवनन्दीहिरण्यकशिपुस्तस्यदानेखण्डनेयोनादोव तः कपाटपाटनकटकटाशब्दस्तेनदिवंस्वर्गन्दुदायकिमेतदित्याकस्मि कसम्भ्रमेणोपतापयामास। जगत्कण्टकनिराकरणाद्देवानामानन्दनश्चा नन्दकृत्। वेदनिन्दिनाञ्चनोदनःप्रतिक्षेपकः। सामान्याभिप्रायेणै कवचनम् ॥ २ ॥ भूरिभिर्बहुभिर्भारिभिःप्रकृतिसारभारवद्भिरति प्रमाणकायतयाभुवोभारभूतैरन्तःकांस्यभाजनोनिःस्वानोभेरीतद्वद्रेभि भिः। रेभृशब्देइतिधात्वनुसारात्। अभ्राभैःप्रथमोन्नतमेघकान्तिभि रिभैर्हस्तिभिर्भियंराति प्रयच्छन्तीतिभीराइभाःप्रतिद्विपा अभिरेभिरे अभियुक्ताः ॥ ३ ॥ ननो। नानानना विविधाकारवदनागणा ऊनेनहीनेननुन्नोजितो नानन पुरुषःस्तथानन्नुन्नः प्रभुर्यस्य सोप्यात्मनिजीवतिपुरुषोऽपुरुषएव। यतोननुन्नेनोऽजितप्रभुर्नुन्नो प्यनुन्नएव। तथानुन्ननुन्नःजितइवक्लीबतयापराभूतइतिप्रकारे

नुन्नोनुन्नोननुन्नो नोनानेनानुन्ननुन्ननुत् ॥ ४ ॥
क्रमस्थसर्वव्यञ्जनं यथा । कः खगौघाङचिच्छौजाझा
ञ्ज्ञोऽटौठीडडंढणः । तथोदधीन्पफर्बाभीर्मयोऽरि
ल्वाशिषां सहः ॥ ५ ॥ छन्दोक्षरव्यञ्जनं यथा । स
रत्सुराराति भयाय जाग्रतो जलत्यलं स्तौतृजनस्य जा
यताम् । स्मितं स्मरारेर्गिरिजास्यनीरजे समेतने
त्रत्रितयस्य भूतये ॥ ६ ॥ षड्जादिस्वरव्यञ्जनं यथा ।
साममारिधमनीनिधानिनीसामधामधानिधामसा

---

गुणवचनस्येति द्विरुक्तिः । तमपि योऽनुदति स नानेनाननिष्पापः बन्ध
च्छायापेक्षान्यवर्णगुरुत्वोन्मेषमात्रप्रयोजकस्तकारो नवृत्तिशरीरान्तर्ग
तइति द्विव्यञ्जनता नाशङ्कनीया॥४॥ क्रमस्थेति । वर्णसमाम्नाये येनक्र
मेणाकादयो मावसानाः पठितास्तेन क्रमेण व्यञ्जननिवेशः । कः खगौघ
मनल्पसिद्धाबदानपक्षिसमूहं नयतीति क्विनिसंयोगान्तलोपे कृते च
खगौघाङिति रूपम् । चितं संविदं छ्यति छिनत्तीति चिच्छं यदोजस्तदा
स्ति यस्यासावचिच्छौजाः । झमुञ्चदने अस्मात्क्विप् । अनुनासिकस्य
क्विझलोः क्ङितीत्युपधादीर्घो मोनो धातोरिति नकारइति झान् परवल
भक्षकोऽज्ञः पण्डितस्तोः श्चुनाश्चुरिति नकारस्य ञकारः । अटाः सङ्ग्रामाङ्ग
णपर्यटनशीलाः सुभटास्तानोठते बाधतइति क्विप् । उठगताविति धा
तोरूपम् । तेषामीडीश्वरः । अडवढणो ऽचपलः डवढवाङ्न्यस्युन्पञ्च
च्चपलवाचिप्रातिपदिकम् । तथाऽभीर्भयरहितः । एवंविधः कोना
मायमुदधीन्पफर्बं । पूरयामासेति प्रश्नः । उत्तरमरीन् लुनन्ति याऽऽ
शिष...स्तां सहः तमोऽनयोर्दैत्यराजइति॥५॥ छन्दोक्षरेति । म्यरस्तजभ
नगालान्ताश्छन्दो विचितिर्वेदिभिः । दशैव वर्णा निर्णीताश्छन्दोरूपप्र
सिद्धये । तन्मात्रव्यञ्जननिबद्धञ्छन्दोक्षरव्यञ्जनम् । सुबोधमुदाहरण
म् ॥६॥ षड्जादीति । सरिगामपधानिश्चवर्णाः सप्तस्वरादयः । षड्जा
दिकृतसङ्केता दृष्टा गान्धर्ववेदिभिः । तन्मात्रव्यञ्जनमयं षड्जादिव्य

धिनी । मानिनीसगरिमापपापपासाऽऽपगासमस
मागमासमा ॥ ७ ॥ मुरजाक्षरव्यञ्जनं यथा । ख
रगरकलितकण्ठप्रमथितगदमकरकेतुमरणकरम् ।
ताडदितिरुरुमुण्डहरंहरमन्तरहंदधेघोरम्॥८॥चतुः
स्थानचित्रेषुनिष्कण्ठं यथा । भूरिभूतिम्पृथुप्रीति
मुरुमूर्त्तिंपुरुस्थितिम् । विरिञ्चिंसूचिरुचिर्धीःशुचि
भिर्नुतिभिर्धिनु॥९॥निस्तालव्यंयथा । स्फुरत्कुण्ड
लरत्नौघमघवद्धनुकर्बुरः । मेघनादोऽथमन्द्रंमेप्रावृ
ड्कालवद्बभौ ॥१०॥ निर्दन्त्यंयथा । पद्मापहारी
रणकर्मशौण्डश्चण्डीशमिश्रोममचक्रपाणिः । भू

---

ञ्जनम् । सहस्रनविष्णुनावर्त्तत इतिसालक्ष्मीः अरीन्धमतितापयती
तिधमतेर्ल्युटिबहुलवचनमन्यत्रापीतिधमादेशः । एवंविधासम्भूया
दितिशेषः । निधानिनीपद्मादिनिधानवती । सान्नःसान्द्रस्यधा
मगृहम् । धनिनाम्धामसाधनी तेजःप्रसाधिका । मानिनीपूजा
वतीसगरिमागौरववतीअपपापानिष्कलुषान्पातीत्यपपापपा । से
तिप्रसिद्धविभवाआपगानदीतत्तुल्यःसमाविसर्पिभङ्गुरःसमागमोयस्याः
सातथा । असमाअनुपमा॥७॥मुरजेति । पाठाक्षराणिमुरजेलहकारौ
तथदधाश्चभौरेफः । नणकखगघङाश्चेत्यंषोडशभरतादिकथितानि ।
तन्मात्रविरचितम्मुरजाक्षरव्यञ्जनम् । सुबोधमुदाहरणम् ॥८॥वर्णो
स्थानेष्वपिचतुरादिनियमेनचित्रम् । यद्यपिचाष्टौस्थानानिवर्णानामु
रःकण्ठःशिरस्तथा । जिह्वामूलञ्चदन्ताश्चनासिकोष्ठौचतालुचेति ।
तथापिजिह्वामूलीयस्यस्वरत्वादुरस्यनासिक्ययोःकाव्यप्रवेशाभावादु
रोनासिकाजिह्वामूलपर्युदासेनस्थानपञ्चकेचतुरादिनिरूपणम् । हेसू
चिरुचिधीःशुचिभिःशुद्धाभिर्नुतिभिःस्तुतिभिर्यथोक्तविशेषणंविरिञ्च
म्ब्रह्माणन्धिनुप्रीणयेति । अकुहविसर्जनीयाःकण्ठ्याः॥९॥कुण्डलरत्नौ
घस्यमघवतोधनुस्तेनकर्बुरोमेघनादनामाराक्षसः । [illegible]

याचूस्त्रियापश्रमपेक्ष्यमाणोमोक्षायमुख्यामरपूगपू
ज्यः॥ ११॥ निरोष्ठ्यं यथा। नयनानन्दजननेनक्षत्रगण
शालिनि। अघनेगगनेदृष्टिरङ्गनेदीयतांसकृत्॥ १२॥
निर्मूर्द्धन्यं यथा। शलभाइवधावन्तःसायकास्तस्य
भूभुजः। निपेतुःसायकच्छिन्नास्तेनसंयुगसीमनि
॥ १३॥ त्रिस्थानचित्रेषुनिरोष्ठ्यदन्त्यं यथा। जीयाज्ज
गज्ज्येष्ठगरिष्ठचारुश्लाकार्चिषाकृष्णकडारकायः। ह
रिर्हिरण्याक्षशरीरहारीखगेशगःश्रीश्रयणीयशाव्यः
॥१४॥ निरोष्ठ्यमूर्द्धन्यं यथा। अलिनीलालकलतङ्कान्तह
न्तिघनस्तनि। आननन्नलिनच्छायंनयनंशशिका
न्तिते॥ १५॥ द्विस्थानचित्रेषुदन्त्यकण्ठ्यं यथा। अनङ्ग
लङ्घनालग्ननानातङ्कासदङ्गना। सदानघसदानन्द
नताङ्गासङ्गसङ्गत॥१६॥ एकस्थानचित्रेषुकण्ठ्यं यथा।

---

स्याः॥१०॥ चण्डीशमिश्रः परमेश्वरेणैकशरीरतामापन्नोमुख्यामराब्रह्माद
यः। तुलसादन्त्याः॥११॥ अघनइति। शरत्कालशोभयादृश्यतमे। उ
पूपध्मानीयाश्चोष्ठ्याः॥१२॥ तेनकपिलेनराज्ञातस्यकोसलाधिपस्यप्रसेन
जितः। कटुरषामूर्द्धन्याः॥१३॥ निरोष्ठ्यन्दन्त्यमिति। अनेनैवद्विकान्तर
परिहारेणालोष्ठ्यमस्तावोगवेषणीयः॥१४॥ तथोत्तरत्रापि॥१५॥ सदानघस्त्र
नवद्य। सदैवप्रियालाभेनानन्दयुक्त। नताङ्ग्याःकस्याश्चिदन्यस्याः
सङ्गेसङ्गतेतवशोभनाङ्गनाकामाक्रमणाप्रा नानारूपतयावर्त्तते। अत
स्त्वामनुकम्पस्वेतिसोपालम्भप्रार्थनावाक्यार्थः॥१६॥ गाङ्गकङ्कासम्ब
न्धिजलंतस्याकःकुटिलागतिः। अकअगकुटिलायाङ्गताविति। तस्या
ङ्कस्यतन्मध्यस्यगाहकोविलोलकःकुत्सितमघम्पापमघकंसएवकाक
स्तंहतवानघकाकहा। अन्येतु विसर्गान्तम्पठन्ति। तदाजहाते
र्विच्विरूपम्। एवंविधस्त्वङ्गांस्वर्गंअगाःयायाइति। आशंसायाम्भूत
प्रत्ययः। कीदृशःसन्हानंहाःनहाअहास्तान्जिहीतेप्राप्नोतीति आह

अगागाङ्गाङ्गकाकाकङ्गाहकाघककाकहा। अहाहाङ्ग
खगाङ्कागगकङ्कागखगाङ्ककग॥१७॥ स्वरचित्रे पुह्रस्वैक
स्वरं यथा। उरुगुं द्युगुरुं युत्सु चुक्रुशुः स्तुष्टुवुः पुरु।
लुलुभुः पुपुषुर्मुत्सु मुमुहुर्नु मुहुर्मुहुः॥१८॥ दीर्घैकस्वरं य
था। वैधैरैनरैशैरैद्धैरजैरलैर्जैनैः सैद्धैः। मैत्रैर्नैकैद्धै
र्यैर्वैरैर्दैस्वैस्वैरैः दैवैस्तैस्तैः॥१९॥ ह्रस्वद्विस्वरं यथा। क्षि
तिस्थितिमितिक्षिप्तिविधिविन्निधिसिद्धिलिट्। म
मत्यक्षनमद्दक्षहरस्मरहरस्मर॥२०॥ दीर्घद्विस्वरं यथा।
श्रीदीप्तीह्रीकीर्तीधीनीतीगीप्रीती। एधेते द्वे द्वे ते ये

---

हृत्वा दृशमङ्कं यस्य स खगो गरुडः सूर्यो वा सोऽङ्कश्चिह्नभूतो यस्य तादृशो गो
ऽर्योन्मेरुस्तद्वर्तिनः कङ्काख्या अगखगा वृक्षनिवासिनः पक्षिणस्तेऽपि
आकाकङ्कागमनस्पृहयालवो यस्य स तथा आरतान्तावदन्यैः पतत्रिभिरपि
अभिनन्दितगमन इत्यर्थः॥१७॥ स्वरचित्रेष्वेकादिक्रमेणोपन्यासो ग्रन्थ
वैचित्र्यार्थः। उरुगुं विस्तीर्णवाचम्। द्युगुरुं स्वर्वासिनामाचार्यम्। यु
त्सु युद्धार्थं निमित्तात्कर्मयोग इति सप्तमी। गीर्वाणभटाश्चुक्रुशुरार्ताः
शरणं ययाचिरे। अत एव पुरु बहु धातु तुष्टुवुः। युद्धप्रयोजनमाह। मु
त्सु हर्षेषु लुलुभुः पुपुषुः पुष्टा बभूवुः नु वितर्के। मुहुर्मुहुर्वारंवारम् किन्तु
मुमुहुर्मोहमासादितवन्तः। यतः क्रोशनादीनामव्यवस्थेति भावः॥१८॥ वि
धिर्विरिञ्चिः। ईर्लक्ष्मीस्तस्या इनः प्रभुर्विष्णुरीशो महादेव इन्द्रो वा
सर्वईजः कामो लक्ष्मीपुत्रत्वात्। इला पृथ्वी। जिनो बुद्धः सिद्धा देववि
शेषा मित्रः सूर्यो रैदो धनदः कुबेरो देवा उक्तव्यतिरिक्ता मरुदादयः। ए
षां सम्बन्धिभिर्धैर्यैर्धृतिभिः स्वैर्वित्तैश्चानेकैरनेकविधैस्तैस्तैः प्रसिद्धरूपैर
हं स्वै रैः सुष्ठु आसमन्तात्समृद्धो भवानीत्याशंसा वैवाक्यालङ्कारे॥१९॥ क्षि
तिः पृथ्वी तस्याः स्थितिः पालनं मितिर्मानं क्षिप्तिः संहारस्तद्विधिं वेत्ति।
निधिसिद्धी लिढीति क्विप्। नमन् भग्नतेजा दक्षो यस्मात्। स्मरहरका
मदहन। त्र्यक्ष त्रिनयन हर महादेव मम स्मर। अधीगर्थयोगे कर्मत्वविव

नेमेदेवेशे॥२१॥त्रिस्वरेषुहृस्वात्रिस्वरंयथा। क्षितिवि जितिस्थितिविहितिव्रतरतयःपरगतयः। उरुरुरुधुर्गुरुदुधुवुःस्वमरिकुलंयुधिकुरवः॥२२॥चतुःस्वरेषुदीर्घस्वरंयथा। आम्नायानामाहान्त्यावाग्गीतीरीतीःप्रीतीभीतीः। भोगोरोगोमोदोमोहोध्येयेवेच्छेद्देशेक्षेमे देशे॥२३॥प्रतिव्यञ्जनविन्यस्तस्वरंयथा। तापेनोग्रोस्तुदेहेनोह्येयेविल्लोभिनिन्दिना। जायाग्रेहिगुणिप्रेष्ठेहिताक्षेपोमृतोक्षिणि॥२४॥तदेवापास्तसमस्तस्वरं यथा। तपनग्रस्तदहनहयवल्लभनन्दन। जयग्रहग णप्रष्ठहतक्षपमतक्षण ॥ २५ ॥ १६ ॥

---

ष्टी। श्रीदीप्तीलक्ष्मीतेजसी। ह्रीकीर्त्तीलज्जायशसी। धीनीतीबुद्धिनयौ। गीःप्रीतीवाक्प्रमोदौ। इमेयेदेवेशेपिनस्तस्तेह्वेतवएवैतेवर्त्तेते॥२१॥ क्षितेर्विजितिर्विजयःस्थितेर्वर्णाश्रममर्यादालक्षणायाविहितिर्विधानन्तदेवव्रतन्तत्ररतिर्येषाम्पराश्रेष्ठागतिर्ज्ञानंयेषान्तेतथाएवंविधाःकुरवःस्वद्विषांकुलमुरुविस्तीर्णंरुरुधुस्तदेवगुरुमहृद्दुधुवुःकम्पयामासुः॥२२॥ आम्नायानांवेदानामन्त्यावागुपनिषत्साहिताहितमतिपादनपराक्रिमाह। यागीतयस्ताईतयउपसर्गायाः प्रीतयस्ताभीतयोभयानि योभोगःसरोगोयोमोदोहर्षःसमोहोनपरमेवमाहकिन्तु यावच्चीयेध्यातव्येदेमेक्लेशरहितेदेशेविषयेमोक्षलक्षणेवेच्छेदिच्छाङ्कुर्यादिति। वाशब्दःसमुच्चये। अन्येचकारमेवपठन्ति ॥ २३ ॥ ह्येयेज्ञातव्येवस्तुनियाविल्लाभोविद्लृलाभइतिधात्वनुसारात्। तत्रयेलोभिनोलोभवन्तस्तन्निन्दनशीलेनतापेनतेजसार्थादुग्रश्चण्डरश्मिःसमम देहेऽस्तु तेजस्वीभवानीतियावत्। किमित्येवमाशास्यतइत्यतआह। अमृतस्यन्दिनि कान्ताग्रेगुणिनाप्रियतमोऽक्षेपोऽविलम्बस्तद्वहितोऽर्थतःसनरस्य॥ इतिदत्वाशिषंकोपिस्वसैकार्मुककर्मणे। जगामसमरंकर्तुंमरिलक्ष्मीस्वयंवरम्॥२४॥ ग्रस्तदहनअभिभूतपावकहं

आकारचित्रे ष्टदलं यथा ॥ याश्रितापावनतयायात नच्छिदनीचया । याचनीयाधियामायायामायासंस्तु ताश्रिया ॥ अत्र । कर्णिकायान्न्यसेदेकन्द्वंद्वंदिक्षुविदिक्षुच । प्रवेशनिर्गमौदिक्षुकुर्यादष्टदलाम्बुजे ॥ १ ॥

प्रथमाष्टदलकमलबन्धः ।




द्वितीयमष्टदलं यथा । चरस्फारवरक्षारवरकारगरज्वर । चलस्फालबलक्षालयलकालगलज्वल ॥ अष्टधा

यवल्लभोरेवन्तः सततयोयस्य हतदपअपहतरात्रेमतदणसम्मतोत्सव ॥ २५ ॥ ॥ १६ ॥ याश्रितेत्यादिकमुदाहरणम्प्रागेवव्याख्यातमतःपरं हारिहरीव्याख्यासाप्यत्रैवलिख्यते । तद्यथा । यादेवीपावनत्वेनाश्रिताअनीचयातुङ्गयावुध्या मायामस्याविद्याविस्तारस्यायासङ्ग्लानिं विच्छेदंयाचनीयायतोयातनन्नरकानुभवनीयन्दुःखंच्छिनत्तिश्रियास्तु ता॥अस्यन्यासमाह।कर्णिकायामिति। आद्योयावर्णःकर्णिकायांश्रितेति पावेतिक्रमेणद्विकन्द्विकमष्टपत्रेषु । याश्रिताश्रियेत्यादौदिग्दलेषुप्रवेश निर्गमौ॥१॥चरस्फारेत्यादि।सञ्चरणशीलःस्फारोयोवरस्तंक्षरतिददाती ति।वराङ्गंच्छान्किरतिदिपतिकरणोंतहिनस्तिवेतिकर्मणयण्। गरःकालकूटस्तस्यज्वरोज्वरणात्। तावडवारम्भेचलाःस्फाला।यस्यबलत्तधवल

कर्णिकावर्णः पत्रेष्वष्टौ तथापरे । तेषां सन्धिषु चाप्य ष्टावष्टपत्रसरोरुहे ॥ २ ॥ ॥

द्वितीयाष्टपत्रबन्धः ।



तृतीयमष्टपत्रं यथा । नशशीशनवेभावेनमत्कामनतव्रत । नमामिमाननमननन्नुत्वानुनयन्नयम् । अत्र । प्राक्कर्णिकाम्पुनः पर्णम्पर्णाग्रम्पर्णकर्णिके । प्रतिपर्णं व्रजेद्वीमानिहत्वष्टदलाम्बुजे ॥ एवञ्चतुष्पत्रषोडशपत्रेष्वपिद्रष्टव्ये ॥ ३ ॥

देहोलबलप्राप्तशक्ते कालगलनीलकण्ठज्वल दीप्यमानोभव ॥ न्यासमाह । अष्टधेति । अत्रप्रथमार्द्धे एकएव रेफो ऽष्टधा कर्णिकायाम् । अपरार्द्धस्यान्ये ऽष्टौलकारवर्जन्दलेषु तेषां सन्धिष्वन्ये ऽष्टौलकाराः ॥२॥ नशशीशेत्यादि । शशीशे चन्द्रे नवेभावेभक्तौ स्थित इति शेषः । त्वामहन्नमामिकाक्कान स्येव । ननन्भग्नः कामो यस्मान्नतनुपनतंव्रतं यस्य स्वंयासि धीरै यत्वा न्मा ननमनंशत्रूणामुन्नतिनाशनंनन्विति पूजासम्बोधने । त्वामितित्वामनुनयन्विनयङ्कुर्वाणोयम् । न्यासमाह । प्राक्कर्णिकामिति । पूर्वङ्कर्णिकाया मध्योनकारोग्राह्यस्ततः शेतिपर्णमध्ये शीतिपर्णाग्रे परावृत्त्यपर्णकर्णिकयोः शकारनकारौपुनः कर्णिकातोदलाग्रगमागमेपि । अयमेवक्रमश्च

### तृतीयाष्टपत्रबन्धः ॥




तयोश्चतुष्पत्रंयथा । सासवात्वासुमनसासानतापी
वरोरसा । सारधामैतिसहसासाहसर्द्धंसुवाससा ।
कर्णिकातोनयेदूर्ध्वम्पत्राकाराक्षरावलीम् । प्रवेश
येत्कर्णिकायाम्पद्ममेतच्चतुर्दलम् ॥ १ ॥

---

### चतुष्पत्रकमलबन्धः ॥




तुर्द्दलपद्मे॥३॥सासवेत्यादि। सासवाआस्वादितमदिरा।पीवरेणस्तना
द्ध्येनोरसानता । सारधामाउत्कृष्टकान्तिःसहसासहास्या अकस्मा
द्वाशृङ्गारोद्दीपनस्वभावेनमार्गशीर्षंणहेतुनाशोभनेनवाससाचलक्षिता
हेसाहसर्द्धसर्वनिशीथाभिसरणसाहसरसिकत्वामेतिउपगच्छतीति ।

षोडशपत्रंयथा ॥ नमस्तेमाहिमघ्नेमनमस्याऽमति महम। शामसोमनमत्कामधामभीमसमक्षम॥ गोमू त्रिकाक्रमेणस्युर्वर्णाः सर्वेसमाःसमाः। मध्येमवर्णवि न्यासात्पद्मोयंषोडशच्छदः ॥ ५ ॥

षोडशपत्रकमलबन्धः



अष्टपत्रमेवकविनामाङ्कंयथा। रतावद्याधिराज्या विसररसविद्याजवाकूक्ष्मापकारारोकापक्ष्माभशे षानयननयनस्वाखयास्तव्यमारा। रामाध्यस्त

न्यासमाह। कर्णिकेति।सुबोधमेतदिति॥४॥षोडशपत्रमाह।नमस्त इत्या दि। महिमनिघ्ने मायस्यतन्नमस्यअमलिमतोदास्यतीतिअमतिमहम। शामःकलामात्रेणचूडासङ्गतःसोमोयस्य। नमन्भग्नःकामोयस्मात्। धाम्नातेजसाभीमभयानकसमासकलव्युत्थानहेतुसाधारणीनमायस्य अस्यैतानिसम्बोधनविशेषणानितेतुभ्यंनमस्कुरुतेकश्चिदिति। न्या समाह। गोमूत्रिकेति। वर्णासकारव्यतिरिक्ताःसमाःसकारसहिताः समास्समाइतिवीप्साप्रतिवर्णस्मकारसाहित्यबोधनार्था॥५॥ अष्टपत्र

स्थिरत्वात्तुहिननननहितुःस्त्रीकरक्षारघाराराघारक्षा स्तुमह्यंशिवममम्वशिव्यालविद्यावतारा ॥ निवि ष्टाष्टदलन्यासमिदम्पादार्द्धभक्तिभिः । अस्पृष्टकर्णि कक्कोणैःकविनामाङ्कमम्बुजम् । तत्राङ्कोराजशेखरक मल । एतेनचक्रमपिव्याख्यातम् ॥ ६ ॥

अष्टदलकमलबन्धः ॥



सेवकविनामाङ्कमाह । रातावद्धेति । गीर्वाणसुभटः कश्चिद्युयुत्सु र्दैत्यसेनया । तत्कालकृतसान्निध्याम्मायादेवीमपूजयत् । तथाहि । आजोमायासैववाग्रूपा आजशब्दोपपदंवागभिधानंयस्याःसामह्यंरक्षा स्त्वितिसम्बन्धः । रातन्दत्तमवद्यन्दोषबहुलमाधिराज्यमवद्यामाधयो यत्र तादृशंवा राज्यं यया विशिष्टंसरणं विसरस्तंराति प्रयच्छतियो

चक्रंयथा । सत्वमानविशिष्टमाजिरभसादालम्बय
भव्यः पुरोलब्धाघक्षयशुद्धिरुद्धुरतरश्रीवत्सभूमिर्मु
दा । मुक्त्वाकाममपास्तभीःपरमृगव्याधःसनादंहरे
रेकौघैःसमकालमभ्रमुदयीरोपैस्तदालस्तरे ॥ पुरःपु
रोलिखेत्पादानत्रत्रीन्षडरीकृतान् । तुर्यन्तुभ्रमयेन्ते
मौनामाङ्कस्तक्रसंविधिः । अत्राङ्कः । माघकाव्यमि
दंशिशुपालवधः ॥ ७ ॥

रसोर्थाद्वीरस्तंवेत्तिविन्दन्तिवा या क्ष्मायाःपृथिव्यामपकारःपुत्रकल
त्रादिरूपोयस्याःसकाशादितिगमकत्वाद्बहुव्रीहिः । राकापूर्णिमाद्वा
दशवर्षदेशीयकन्यारूपावा । पद्मनाभःशरीरसंलग्नःशेषःसर्पोयस्यान
यनश्रीतिस्तान्नयतीतियन्नयनन्दृष्टिज्ञानमितियावत् । तदेवमस्मा
त्मायस्याःखेव्योम्नियातीतिखयास्तक्ष्मोमारोमारशङ्कामोवायस्याःसारा
मारमणीयास्त्रीरूपावाव्यस्तंविनाशितंस्थिरत्वंयया तुहिनमयतिप्रा
पयतीतिनयतेर्डप्रत्ययेतुहिननश्चन्द्रस्तस्यनर्हितुर्जटाजूटेबन्धयितुः प
रमेश्वरस्यश्रीःशक्तिरूपान्ह्यतिबध्नातीतिनहेर्विंचिनहंन्तुतिमासादय
तीतिसर्वप्रातिपदिकेभ्यः क्विब्वक्तव्यइतिक्विपितृजन्तस्यरूपम् कं
सुखंरातिददातीतिकरस्तस्यसारभूताद्भवस्तेषाङ्कृष्णादिधारेवधारा
स्वेत्री राधेतिदेव्याःपौराणिकन्नाम समेत्यव्ययस्थाप्रधानंशिवेस
मत्वमान्तिपरिच्छिन्दन्तियेवशिनोयोगिनस्तेषामपिव्यालविद्याक्षुद्र
विद्यामवतारयतियासातया । न्यासमाह । निविष्टेति ॥ अरिभिःपा
दार्द्धैरष्टदलविरचना । यद्वर्णाष्टकंनाम्नोत्तिष्ठतिलिदाह । राजशे
खरकमल । कविकाव्यनामलाभाद्विभक्तिकत्वमप्यदोषः एतेनेति॥
नामाङ्कपद्मकथनेनचक्रमपिनामाङ्कमवसेयम् ॥ ६॥ सत्वमित्यादि । ह
रेर्नादंसिंहनादंरोपैर्बाणैराजिरभसात्सङ्ग्रामहर्षाद्दुर्द्धरतरश्रीवत्सभूमि
स्तन्नतहृदयःसत्वमालम्ब्यमानेनविशिष्टमितितद्विशेषणम् । प्राप्तपाप
विनाशोमुदाहर्षेणअपगतभीः शत्रुर्हरिणव्याधोऽत्रमाकाशम्पिदधेत
दातस्मिन्कालेसिंहनादम्मुक्त्वाइतिसम्बन्धः। न्यासमाह॥ पुरइति।पु

षडरचक्रबन्धः ॥



एवञ्चतुरङ्कमपियथा ॥ शुद्धम्बद्धसुरास्थिसारविष मत्वंरुग्जयातिस्थिरभ्रष्टोद्धर्मरजःपदङ्गविगवाक्षीणे नचञ्चद्भुवा । तथ्यञ्चिन्तितगुप्तिरस्तविधिदिग्भेदन्नचक्रंशुचाचारोप्रांशुरद्भ्रमुग्रतनुमेरम्योभवानी रुचा । अत्राङ्कः । शुभ्रतरवाचाबद्धाबातिचक्रराज गुरुणेदंसादरमवादि ॥ ८ ॥

---

रःपुरोलिखित्वाऽन्यानग्रेलिखेद्यथाषडराःसम्पद्यन्ते ॥ ७ ॥ यथा वाशुद्धमित्यादिचक्रस्येमम गविवाचिशुद्धमकलुषन्धर्मादुत्क्रान्तमुद्धर्मं सीदृशंयद्वजोराजसभावस्तस्यपदंस्थानन्तद्भ्रष्टंविनष्टंयस्मादस्ताविधिदिग्दैवपारतन्त्र्यंयत्रतथाविधं शुचाशोकेनचनवक्रीकृतमनपहृतंम

## द्वितीयषडरचक्रबन्धः ॥




गतिश्चित्रेषुगतप्रत्यागतंयथा । वारणागगभीरासा
साराभीगगणारवा । कारितारिवधासेनानासेधाव

द्दत्रमुपचितंयद्वद्दंकल्याणन्तत्तनुविस्तारयेतिप्रार्थना । बद्धैरलङ्कारीकृतैः सुराणाम्ब्रह्मादीनांसारंशिरस्तदस्थिभिर्बद्धमुण्डमालाभिर्भयानक । रुजांरोगाणाञ्जयेनातिस्थिर । अक्षीणेनोपचितेनचन्द्रद्दत्त्र वा साह्लादेनगवावृषेणलक्षित । तथ्यमितिक्रियाविशेषणम् । चिन्तितागुम्भिर्भूतानांरक्षायेन । धारोरमणीयः । उग्रोमहादेवस्त्वमप्रांशुः सर्वस्मादुच्चैःपदेस्थितोभवानीरुचावामार्द्धस्थितपार्वतीकान्त्यारम्यस्तन्वितिसम्बन्धः । अत्रपूर्ववदेवन्यासः । अङ्कास्तुचत्वारइतिविशेषः ॥८॥ इदानीङ्गतिचित्रप्रस्तावः । वारणेत्यादि । वारणाएवअगाःप

रितारिका ॥ अत्रायुक्पादयोर्गतिर्युक्पादयोःप्रत्या गतिः ॥९॥ तदक्षरगतंयथा । निशितासिरतोभीको न्येजतेमरणारुचा । चारुणारमतेजन्येकोभीतोरसि ताशिनि ॥ अत्रगतप्रत्यागताभ्यांसएवश्लोकः ॥१०॥ श्लोकान्तरं यथा । वाहनाजनिमानासेसाराजाव नमाततः । मत्तसारगराजेभेभारीहावज्जनध्वनि ॥ अत्रप्रातिलोम्येनापरःश्लोकोभवतियथा । निध्वन ज्जवहारीभाभेजेरागरसात्तमः । ततमानवजारासा

वैतास्तैर्गभीरादुरयगाद्दासाराश्रेष्ठाभियंयेनयान्तितादृशानाङ्कखानामा रवोयत्र । सारेणाभीगगणारवोयत्र । कारितःकृतोरीणांवधोययां । स्वार्थेणच् । आसेधःपरैःप्रतिषेधस्तेनहीना । वारिताःसुभटैर्युद्धार्थ माहूताअरयोयस्यांसातथा । वरईप्सायामितिधातोःक्तप्रत्ययेवरिते तिरूपसिद्धिः । अत्रायुक्पादयोःप्रथमतृतीययोरानुलोम्येनवर्णाव लीकृहीत्वातत्प्रतिलोमरूपौयुक्पादौद्वितीयचतुर्थौगृह्येते । पठितेर्व र्णाद्वर्णान्तरसञ्चारोगतिस्तन्नियमनेनचित्रकृतिचित्रंसचात्रयथोक्तरू पस्य ॥ ९॥ हेऽमरणामरणरहितानिशितखड्गरतोभयशून्यश्चरुचातेज सान्येजतेनकम्पते । यांहिभीतःसकथंशब्दायमानाशनशीलरक्षःपिशा चादिसङ्कुलेजन्येसंग्रामेदारुणाकारतुरगादिनारमतेनकथञ्चिदित्य र्थः ॥ अत्रसन्दर्भसमाप्तिपर्यन्तंयावर्णमालागृहीतासैवसमाप्तेरारभ्यप्र त्यागत्यायावदारम्भंसमाप्यतइतिपूर्ववत्वद्वैनैवमिति॥१०॥वाहनेति । ततोनन्तरंवाहनावेनाऽनमानतिशून्याऽजनिजाता । साराजावुत्क हसङ्ग्रामेपरमानासेपरमानदेपकेमत्ताःसारगाःसोत्कर्षगतिशालिनो राजेभाराजदन्तिनोयत्र । भारिणःस्वामिनार्पितसमरभराः । अतए वयथोचितचेष्टावन्तस्तेषाज्जनानान्ध्वनिःसिंहनादोयत्रेति क्रियावि शेषणमित्यनुलोमश्लोकार्थः । निःस्वनन्तस्तनन्तोजवेनवेगेनहारिणव भायत्र । ततोविस्तीर्णोमानवजारासःसैनिककृतआरावःकोलाहलोय

सेनामानिजनाहवा ॥ ११ ॥ भाषान्तरगतंयथा । इहरेबहलालासेआलाराहुमलीमसा । सालकारस लीलासातुङ्गाएलालिकलारत ॥ अत्रप्रातिलोम्येनाप रःप्राकृतश्लोकोभवति। यथा । तरलाकलिलागातुंसा लालीसरकालसा । सामालीमहुरालावासेलालाहब रेहइ ॥ १२ ॥ तदर्थानुगतंयथा । विदितेदिविकेनी केतंयान्तन्निजिताजिनि । विगदंगविरोद्धारोयोद्धा योनातिमेतिन। अत्रप्रातिलोम्येनसएवपदार्थः ॥१३॥

---

त्र । मानिजनानांसाहङ्काराणांवीराणामाहवोद्वन्द्वयुद्धंयत्र । ईदृशी सेनारागरसात्वरलक्ष्मीहरवाराखेनतमोमेजेकोपवयापेतिप्रतिलोमश्लो कार्थः ॥ ११ ॥ इहरेइत्यादि । लासेनृत्येबहलाअसङ्कुचितारासुम लीमसा श्यामा सालका भ्रूकर्णादिपरभागार्पकचूर्णकुन्तलवतीर साच्छृङ्गाराज्ञीलायस्याःसातथा तुङ्गाउच्चव्यवहारा एवंविधा सावाला हेबतु.पष्टिकलारतअलालिलालितास्त्वयेतिसंस्कृतश्लोकार्थः । कला गीतवाद्यनृत्यानांसङ्करीसहिताकरणपटीयसीगातुन्तरलात्वरितासा लालीमानावृक्षपङ्क्तिस्तदीयेनसरकेणमधुनाअलसा । श्यामाःमधुरा लापा सेलाउन्तमानारी“सेलास्यादुत्तमानारीतिदेशीकोशे„सहइरया माद्रियावर्ततेसेलावारलयोरेकत्वस्मरणादितिकेचित् । तन्निन्त्यम् । अलाभूषयित्री । हवधवेतिसम्बोधनम् । रेहइराजतेप्राकृतश्लोकार्थः । एवम्भाषान्तराणामपिगतप्रत्यागतीबोद्धव्ये ॥१२॥ विदितइत्यादि । विदिते स्वर्वासिनामपि प्रसिद्धेनिर्जिताः परेषामाजयोयुद्धानि येन तादृश्यनीकेसमरे प्राप्तङ्कविपराह्वानरूपायां वाचिविगदं हृदयज्वरर हितंकेनामभटायोद्धारोमकेपिसन्तीत्यर्थः । तङ्कंयोयोद्धासन्कथम पिनातिवक्रतामेतिनयाति।अत्रतदर्थकएवप्रतिलोमश्लोकः। सयथा । नतिमेतिनयोद्धायोरोद्धारोविगदंगवि । निजिताजिनितंयातङ्कनीके विदितेदिवि ॥१३॥ बालेत्यादि । बालाषोडशवर्षदेशीयाशोभनकण्ठ

तुरङ्गपदंयथा। बालासुकालबालाकाकान्तिलालक
लालिता। सस्वासुतवतीसारादर्पिकाव्रतगर्द्धित ॥ क्र
मात्पादचतुष्कस्यपङ्क्तिश:परिलेखिते । तुरङ्गपद
यातेनश्लोकोन्यउपजायते। यथा। बाललिततो
व्रस्वासुकलारागतर्पिका। सुदन्तिकावर्द्धितावासा
कालातललासका ॥ १७ ॥

तुरङ्गपदबन्धः ।

| | | | | | | | |
|---|---|---|---|---|---|---|---|
| बा १ | ला३० | सु ९ | का२० | ल३ | वा२४ | ला११ | का२६ |
| का१६ | न्ति१९ | ला२ | ल२८ | क१० | ला२७ | लि४ | ता२३ |
| स३१ | स्वा८ | सु१७ | त१४ | व२१ | ती ६ | सा२५ | रा१२ |
| द१८ | र्पि१५ | का३२ | व्र ७ | त२८ | ग १३ | र्द्धि२२ | त ५ |

श्राहुरर्द्धभ्रमन्नामश्लोकार्द्धभ्रमणंयदि। तादृष्टंसर्वतोभ
द्रंसर्वतोभ्रमणंयदि ॥ तयोरर्द्धभ्रमंयथा। ससत्वरतिदे
नित्यंसदरामर्षनाशिनि। त्वराधिककसन्नादेरमक

केशीकान्तिप्रदचूर्णकुन्तलशोभितासस्वाश्रात्मसम्प्रयुक्तासुतवतीपुत्र
युक्तावत्कृष्टाभिमानात्मकशृङ्गारवतीअभिलषितस्वविवाहादिव्रताका
ङ्क्षाअतस्त्वमजस्वेति हृदयेइतिशेषः। न्यासमाह। क्रमादिति। ललि
तोमनोज्ञस्तीव्रःप्रवीणःस्वआत्मायस्याःरागेणप्रेम्णातर्पयतियाशोभन
दन्तयुक्ता वर्द्धितावासा सम्पूर्णीकृतसकलस्थाना कालोमृषाख्याहा
रस्तेनसहवर्ततेया तलेलासकानर्त्तकायस्याःसातथाभूता अधःकृतस
कलनर्त्तकलोकेत्यर्थः । एवम्भूतासाबालात्वयोपभुक्तेतिवाक्यार्थः
॥१४॥ ससत्वेति। सदराःसभयास्त्वराधिकानाङ्कसान्नितस्ततःसञ्चरन्ना
दोयत्रातएववीरान्प्रतिरमकत्वमकर्षति ॥१५॥ कनीदीप्तौ। देवानाक

त्वमकर्षति ॥ १५ ॥ सर्वतोभद्रंयथा । देवाकानिनि
कावादेवाहिकास्वस्वकाहिवा । काकारेभभरेकाका
निस्वभव्यव्यभस्वनि ॥ १६ ॥ बन्धचक्रेषुद्विचतुष्कच
क्रबन्धोयथा । जयदेवनरेन्द्रादेलम्बोदरविनायक ।
जगदेधनचन्द्राभालङ्घिदन्तविभायते ॥ इहशिख
रसन्धिमालांविभृयादर्द्धंसमाश्रितैर्वर्णैः । द्विचतुष्क
चक्रबन्धेनेमिविधौचापरम्भ्रमयेत् ॥ १७ ॥

द्विचतुष्कचक्रबन्धः ॥




नितुंग्रीजंयस्यर्द्दषद्वादोयत्रकस्यमस्तकस्य सन्नासङ्कताश्रादाग्रहणांयत्रेति
वा वाहिका पर्यायवहनम् । पर्यायार्हणोत्पत्तिश्चितिएवच् । स्वस्वं
वित्तभूतायेषामेवंविधायेस्वकाश्रात्मपक्षीयाः ना जहीतेश्चतिविच्
कस्मदजलमाकिरतिइतिकाकारस्तादृशइभभरोऽस्तिकंयत्रहेऽकाकाः
सात्विकाइतिसम्बोधनम् । काकाःसङ्ग्रामलोलभावाश्चित्कर्संयाप
घञ् । निःस्वानिरात्मानोभव्याश्राधेयगुणास्तान पव्ययन्तिस्वबले
नोपवृंहयन्तियेतेनिस्वभव्यव्यास्तेषाम्भस्वनिभर्त्सनशीले"भ्रसभर्त्से
न,,इत्यतःक्वनिप् ॥ १६ ॥ जयदइत्यादि । नताइन्द्रादयोयस्मैसत
थाजगतामेधनवर्द्धनचन्द्राभालङ्घिनीचन्द्रकान्तिविजयिनीदन्तप्रभाणा

द्विश्रृङ्गाटकबन्धो यथा । करासङ्गवशोशङ्कगौरवस्यक लारसम् । सन्धाय वलयांशङ्काम गौरीम्मेवनात्मक । शृङ्गाद्ग्रन्थिम्पुनःशृङ्ग ग्रन्थिंशृङ्गंव्रजेदिति । द्विश्रृङ्गा टकबन्धेस्मिन्नेमिःशेषाङ्कैर्भवेत् । अत्राङ्कः । राजशे खरस्य ॥ १८ ॥

द्विशृङ्गाटकचक्रबन्धः ॥



मायतिर्यस्यसतथा । न्यासमाह । द्वेइति । शिखरमालांसन्धिमाला ञ्चपूर्वार्द्धवर्णैःक्रमेणाभिमुख्यात्पूरयेत् । नेमिविधौचाऽपरमुत्तरार्द्धम्भ्र मयेत् । द्वेशृङ्गाटकेमिथोवैपरीत्येनयत्र शिखरंद्विश्रृङ्गाटकम् ॥ १७ ॥ क रैः किरणैरासज्जयतीतिकरासङ्गः खेद्योस्निगौरवंयस्यसतथावनात्म कजलंवत्सरूपचन्द्रकलासुरसमनुरागंसन्धायकृत्वा अन्तःस्वच्छतयाद् श्यनभोजागनेमिमण्डलयाकारोल्लेखिनीस्वेममाऽगौरींश्यामांशङ्काम पनय । स्वइतिक्रियापदम् । पूर्णोभवेतियावत् । वशेशमायत्तशङ्क रमितिक्रियाविशेषणम् । न्यासमाह । शृङ्गादिति । शेषाक्षरैरिति । आ द्यात्ककारादारभ्ययावत्समाप्तिशेषाण्यक्षराणितैर्नेमिरितिन्यासः । अ त्रग्रन्थिवर्णैरेव राजशेखरस्यइतिनामाङ्कवर्णावलीलभ्यते ॥ १८ ॥

विविडितबन्धोयथा । सासतीजयतादत्रसरन्तीय मितात्रसा।सारम्परंसचजयीशमिताऽस्यन्दनेनसा॥ शिखरादन्यतमाद्वैप्रतिपर्वभ्रमतिरेखयाद्यर्द्धम् । नेमीतदितरमर्द्धं विविडितचक्राभिधेबन्धे ॥ १९ ॥

विविडितचक्रबन्धः ॥



शरयन्त्रबन्धोयथा । नमस्तेजगताङ्गात्रसदानवकुल

विविडितबन्धस्तुपञ्चशृङ्गचक्रम् । तद्देवलाम्नायेदर्शितम् । कर्पूरकुन्दगौरीन्तनुमतनुकार्मुकञ्जूकाम् । वरदानसुन्दरकरांविविडितचक्रस्थितांवन्दे । सेति । प्रसिद्धानुभावा सतीगौरी सरन्तीनिरर्गलप्रसरानत्रस्यतीत्यत्रसा अस्यन्दनेनस्थिरेणएनसाकल्मषेणशमिताविक्लवीभूतारहितेतियावत्।शमवैक्लव्ये।अत्रजगतिपरंसारंयम्भगवन्तमितासङ्गता। सचजयीमहेश्वरोजयतादिति।न्यासमाह।शिखरादिति।अन्यतमाद्वाइतिपाठः॥अन्यतमस्मादितिपाठेतुसर्वनामत्वञ्चिन्त्यम् । केचित्तुकिंयत्तदेकान्येभ्यइतिपठित्वाडतमट्प्रत्ययान्तानांसर्वनामतामाहुः।गणेचान्यतरशब्दंकपठन्ति।अव्युत्पन्नमात्रञ्चेदमनिर्द्धारितैकाभिधायकस्त्वन्यतमशब्दः॥१९॥ नमस्तइत्यादि । जगतान्नामरूपप्रपञ्चस्यगात्रभूतदानवकुलक्षयेषस

क्षय । समस्तेजसतान्नात्रमुदामवनलक्षय ॥ चतुर्ष्वपिच पादेषु पङ्क्तिशो लिखितेष्विह । आदेरादेस्तुरङ्गस्यपादैः पादः समाप्यते ॥ २० ॥

शरयन्त्रबन्धः ॥

| न | म | स्ते | ज | ग | तां | गा | त्र |
|---|---|---|---|---|---|---|---|
| स | दा | न | व | कु | ल | क्ष | य |
| स | म | स्ते | ज | स | तां | ना | त्र |
| मु | दा | म | व | न | ल | क्ष | य |

व्योमबन्धोयथा । कमलावलिहारिविकासविशेषवहञ्जनकाङ्क्षनगामिकरान्दिवि सारमनारमणञ्जरतान्न । तमसाम्बलहानिविलासवशेनवरञ्जनकान्तननमामिचिरंसवितारमनादिमहञ्जगताब्न । अष्टादशशिखरचरीङ्गोमूत्रिकयाचतुष्पदीम्पश्येत् । यत्राद्यन्तैर्दृष्टांसञ्ज्ञेयोव्योमबन्धइति ॥ २१ ॥

हित मुदांहर्षाणांरक्षक अजविष्णो अत्रजगति सताम्मध्ये नकोपि ते तव समस्तलीलक्षय दृक्पातेनानुगृहाण मामितिशेषः । न्यासमाह । चतुर्ष्वपीति । शेषंसुबोधम् ॥२०॥ कमलावलिषुपद्मखण्डेषुप्रशस्तेषुहारीमनोज्ञोयोविकाशस्तस्यबोढारंजनैर्लोकैस्तुत्यन्तदीयङ्कं शिरस्तत्राङ्कचिह्नभूतननगामिकराङ्किन्तुविसृत्वरकिरणमेवदिविवैमानिकपथेसारभूतञ्जरताम्परिणतानामनारमणंनकिन्तुप्रीतिकरमेवतमसाम्बलहानौयोविलासवशःसन्तलोव्यापारस्तेनवरमुत्कृष्टञ्जनकान्तलोकहृदयङ्गमजगतामनादिन्तकिन्त्वादिमेवएवंविधम्भगवन्तंसवितारमहन्ननमामिकिन्तुनमास्येव । न्यासमाह । अष्टादशेति ॥ आद्यन्तैर्हष्टामिति । पादाद्यन्तवर्णयोरैक्यादितिबोध्यम् ॥ २१ ॥

## ॥ व्योमबन्धः ॥



मुरजबन्धो यथा । सासेनागमनारम्भेरसेनासी
दनारता । तारनादजनामत्तधीरनागमनामया ।
अत्रपादचतुष्केपिक्रमशः परिलेखितेश्लोकपादक्रमे
णस्याद्रेखासुमुरजत्रयी ॥ २२ ॥

---

अनारताअविच्छिन्नप्रहरणव्यापाराआसीत् । मत्तधीरनागमितिक्रि
याविशेषणम् । रसेनवीरेण । महामात्यप्रब्धजना । अत्रन्यासमाह । अ
त्रपादेति । अत्रपुटचतुष्ककल्पनयामुरजत्रयोन्मेषः ॥ २२ ॥

## ॥ मुरजबन्धः ॥




एकाक्षरमुरजबन्धोयथा । सुराननत्वाननहान नष्टयेपुनस्तुवेनर्घघनप्लवाननम् । मनस्यनूनप्रध नप्रधूननंसकाननस्याननदीननर्दनम् । श्लोकस्यैत स्यपादेषुलिखितेषुचतुर्ष्वपि । त्रिमृदङ्गकरीहस्याच्च तुरेकाक्षरावली ॥ २३ ॥

सुराणान्देवानामाननम्मुखन्तद्भूतवन्हे । हाननष्टये हानिनाशायत्वा न्नस्तुवे । किन्तुस्तौम्येव । पुनरितिदेवतान्तरव्यावृत्तौस्तुत्यावृत्तौवा । अनर्घेघनौघप्राणनेयस्मात् । अनप्राणनइतिधात्वनुसारात् । प्रण तानात्मनसि यदूनमनादिभवपरम्परानुपातिव्यसनन्तस्यधूननम्प्रति क्षेपकंसकाननेषुवनगहनेषुस्थानेषुनदीनस्यपयोराशेरिव नर्दनङ्कोला हलोयस्येति । न्यासमाह । श्लोकस्यैतस्येति । प्रथमपादस्यादक्षरा दारभ्यचतुर्थपादस्यमक्षरंयावदेकजातीयाक्षरचतुष्कावलीङ्गृहीत्वा प रावृत्य तज्जातीयानामेव चतुष्टयी गृह्यते । तेनैकमुरजोन्मुद्रणामपर त्राप्यनेनैव प्रकारेणात्रोऽदाहरणे एकाक्षरमुरजत्रयी भवतीति न्या सार्थः ॥ २३ ॥

॥ एकाक्षरमुरजबन्धः ॥




मुरजप्रस्तारोयथा । तालसारप्रभाराकातारका पतिदंसिता । मारधाम रमाधीतावलयामासमा गरम् । क्रमेणैवास्यपादेषुप्रसृतेषुचतुर्ष्वपि । तुर्या न्मुरजमार्गेणश्लोकोयमुपजायते । वरकारप्रदन्धीर

तालतरोर्यत्सारंखाद्यभागस्तत्प्रभेवावदाताप्रभायस्याः । राकापूर्णि मातारापतिनाचन्द्रेणदंशिताकवलिता । मारस्यकामस्यधामस्थानं यत्र । रमयालक्ष्म्याअधीताऽभ्यस्तासलक्ष्मीकेत्यर्थः । वलयामास चालितवती । वलवन्तंवाचकार । विभ्मतोर्लुगित्यनुशासनात् । क्रमेणैवेति । तुर्याच्चपादप्रथमाक्षरादुपक्रम्येयेनयेनमार्गेणमुरजाकृति र्लभ्यते । तेनायमपरःश्लोकोभवति । वरस्यईप्सितस्यवस्तुनःकारः कारणन्तत्प्रदन्तारन्दीप्रन्यामकान्तिर्यस्याः । असमाअनन्यसाधारणी आसिकास्थितिर्यस्याःसा नायिकालतामालयासङ्केतलतामण्डपेनअ मासाद्धंआपप्राप्तवती । तारारोहिणीप्रभृतिस्तदात्मा । तारैर्निर्मल मौक्तिकैर्वाभातिया । अतिशयितेनरसेनपूर्णाउपगतासङ्कता । प्रकृतो दाहरणेऽष्टाक्षरप्रस्तावान्तःपाती यः प्रकारस्तदन्तःपाती मुरजाक्षरै र्लभ्यते ॥ २४ ॥

न्तारधामासमासिका। सालतामालयामापतारा भा तिरसागला ॥ २४ ॥

॥ मुरजप्रस्तारः ॥



उदाहरणमात्रञ्चैतत्तेनगतिचित्रादिगोमूत्रिकादयो न्येपिचित्रप्रकाराभवन्ति। गतिरुज्वावचायत्रमार्गेमू त्रस्यगोरिव। गोमूत्रिकेतितत्प्राहुर्दुष्करञ्चित्रवेदि नः।तेषुपादेगोमूत्रिकायथा।काङ्क्षन्पुलोमतनयास्त नपीडितानिवक्षस्थलोच्चकृतरयाञ्चनपीडितानि। पायादपायभयतोनमुचिप्रहारीमायामपास्यभवतो म्बुमुचाम्प्रसारी। सेयमयुग्मतःपादगोमूत्रिका॥२५॥

ननुयावदुदाहृतमेवकिङ्गत्यादिचित्रन्तथासति किङ्गोमूत्रिकादीनाम्पृ थग्भागविभागव्याघातः स्यादित्यत आह। उदाहरणमात्रञ्चैतदिति। गतिःपठितिसञ्चारोवर्णानामुच्चावचंवोर्ध्वाधःपर्यायेणप्रवृत्ता। मायां संसारबन्धमपास्यदुःखभयात्पायादितिसम्बन्धः। न्यासोयथा। अ युग्मतःप्रथमात्तृतीयाच्चोपक्रम्य द्वितीयचतुर्थपादसन्दंशेनगोमूत्रिक या प्रथमद्वितीययोस्तृतीयचतुर्थयोश्चपरस्परमुन्मेषणमितीयमयुग्मा द्गोमूत्रिका ॥ २५ ॥

॥ पादगोमूत्रिकाबन्धः ॥

कां न्पु म न स्त पी त
ह्व ली त या न डि नि
व स्य च्छि र ञ्च पी ता

युग्मतोयथा । देवःशशाङ्कशकलाभरणःपिनाकी
देयःशमैकविकलेभरणःसनागः । चित्तेमहासुरजने
नशुभंविधत्ताञ्चित्तम्महासुरजनानतभङ्गधन्वा २६॥
अर्द्धश्लोकगोमूत्रिकायथा । चूडाप्रोतेन्दुभागद्युति
दलिततमस्कन्दलीचक्रवालोदेवोदेयादुदारंश्रममर
जनतानन्दनोनन्यधामा । क्रीडाधूतेशभामाद्युसद
नतनिमच्छेदनीचभूत्रानोदेहेदेवीदुरीरन्दममरतन
तातन्दिनोमान्यधामा ॥ २७ ॥ श्लोकगोमूत्रिका
याम्प्रथमश्लोकोयथा । पायाद्वश्चन्द्रधारीसकलसुर
शिरोलीढपादारविन्दोदेव्यारुद्धाङ्गभागःपुरदनुजद्र
वस्त्यानसंविन्निधानम् । कन्दर्पक्रोददक्षःसरससुर
वधूमण्डलीगीतगर्वोदैत्याधीशान्धकेनानतचरणन
खःशङ्करोभव्यभाव्यः ॥१॥ द्वितीयोयथा । देयान्नश्च

महासुरजनेनत्रस्तादिनाचित्तेदेयोधारणीयःशमेनैकेनविकलीकृतइभर
णोगजासुरयुद्धंयेनशुभङ्कल्मषरहितञ्चित्तंविधत्तामविशेषेणसंसारिणा
मेव । अत्रपूर्ववत्समपदस्रुपक्रमस्यविषमपादसन्दंशेनसमाप्तिरितिविशे
षस्तेनेयंयुक्यादगोमूत्रिका॥२६॥ इन्दोर्भागःखण्डंशकल्याणंत्रमरजनता
देवसमूहोनास्त्यन्यद्धामस्थानंयस्यसोनन्यधामा । स्वात्मारामइत्यर्थः॥
२७॥नपरन्देवोदेवीच। नु वात्रू क्षेपेणदुरीरन्दुरपनयन्नोस्माकन्देहेदम
न्देयादितिसम्बन्धः । धूतेशभामाप्रणयेनापहृतपरमेश्वरप्रणयरोषा ।

खडधामासलिलहरकरोरूढकन्दारविन्दोदेहेरुग्भङ्ग
रागःसुरमनुजदमन्त्यागसम्पन्निधाम। भन्दन्दिक्षो
भदश्रीःसदसदरवधूखण्डनागीरगम्योदैत्यैर्धी बन्ध
हानाततततरयनयःशम्परोदिव्यसेव्यः॥२०॥ विपरीत
गोमूत्रिकाय। प्रथमश्लोकोयथा। विनायकन्दानसुग
न्धिवक्त्रस्मिताननम्मन्दचरङ्कथासु । नमामिविघ्ना
वलिहारिसारंसतीसुतंशङ्करवल्लभञ्च। विपरीतश्लो
कोयथा। चलल्लतालब्धशमंसुभासंसारिहारम्बहुवि
प्रमान्यम् । सुधाकरञ्चन्द्रमसन्नतोस्मिसवर्णगर्भं
न्नवकम्बुनाढ्यम् ॥ २१ ॥ भिन्नच्छन्दोगोमूत्रिका

भामक्रोधेइतिधात्वनुसारात् । द्युसदनादेवाः । अरतमविश्रान्तम् ।
नन्दिनानताउमागौरीअपूर्वन्धामतेजोयस्याः । पुराव्यदानवस्यदवो
दावाग्निःस्त्यानायाःघनायाःसंविदोनिदानम् । दैत्याधीशेनान्धके
नानतचरणोभव्यानामुत्तमानाम्भाव्योध्येयः । रूढकन्दान्यरविन्दानि
यस्मात्प्रणतानांरुगनुरागोयस्यसुराणाम्मनुजानाञ्चदमन्त्यूस्तान्दम
तीतिवा । त्यागसम्पदोनिधानमाश्रयोदिशांक्षोभदायिकाश्रीर्यस्यस
देउपवनेसदराभयायावधूस्तदीयानाङ्खण्डनगिरांनिर्भर्त्सनवचसाम
विषयः । अदैत्यैधीनदैत्यवर्द्धनःसंसारबन्धविच्छित्तयेविस्तीर्णरयोन
योयस्यशंसुखम्पिपर्तिपूरयतीतिशम्परोदिव्यःसेव्यश्चेतिएवंविधश्चखण्ड
धामारविर्नोस्माकन्देहेभन्दङ्कल्याणन्देयादित्यर्थः ॥२८॥ मन्दचरम्मदा
लसगमनङ्कथासुभक्तदेवानांवार्त्तासुमहाशयतयास्मेराननम् । विघ्नपर
म्पराहारिणाञ्चसारमुत्कृष्टम् । चलन्तीनांलतानामारब्धसान्त्वनंयेन
बहुविप्रमान्यन्द्विजराजशेखरत्वात् । समानवर्णमध्यगम् । नवेनकंबु
नाढ्यमुपचितम् । आद्यश्लोकस्याधस्ताद्विपरीतोद्वितीयश्लोकोलेख्यः ।
ततःक्रमगोमूत्रिकयापरस्परोल्लेखः॥२९॥ अभाग्यस्यरदंविलेखकन्नाशक
मितियावत् । समितौसङ्ग्रामेरावणस्यकैलासोद्धरणभग्नशक्तिकता ।

यास्प्रथमश्लोकोयथा । नमतचन्द्रकलामयमण्डन
न्नगसुताभुजसङ्गतकन्धरम् । हरममाग्यरदंस्तवसा
दरंसमितिराबगशासनविक्रमम् । द्वितीयश्लोकोय
था । कामदंचण्डकम्रंमदामर्दिनन्नागदन्ताज्य
जप्यङ्गदाकर्बुरम् । धीरशोभाभरव्यस्तकंसासुरं
नौमिनारायणस्यासमंविभ्रमम् ॥ ३० ॥ संस्कृत
प्राकृतगोमूत्रिकायां संस्कृतश्लोकोयथा । स्कन्दो
रुन्दार्द्धिमिष्टांवितरतुसरलोदारितारातिवर्गः सस्य
न्दोमन्दसज्जोभवभयकलनेसङ्करेकेलिकारी। सन्दो
होल्लाघलासीजनइहबलिहाचण्डतामूरखर्वो देवौ
जोराजर्द्धेहेमहिमनिनिरतोविक्रमाडम्बरेण । प्राकृ
तश्लोकोयथा । चन्दोकन्दप्पमित्तंविहरणसहलो
हारितारापबन्धोसच्छन्दोवन्दणिज्जोकुवलयदल
नेसङ्करेमेलिकारी । कन्दोहोल्लासलालीजणइसि

शासनविक्रमगतिराज्ञापौरुषेयेनतवाञ्छितप्रदञ्चण्डमुग्रङ्कम्रङ्कमनी
यञ्चपरेषान्दर्पमर्द्दनशीलन्नागस्यकालियाख्यस्यदंष्ट्राभिःकुवलयापी
डाख्यस्यहस्तिनोवाविषाणाभ्यांयाश्चाजिःसंग्रामःतत्राजय्यञ्जेतुमश
क्यम् । गदयानानारत्नखचितयाकर्बुरञ्चित्रमितियावत् । स्कन्दःका
र्त्तिकेयः । रुन्दांविपुलान्दारितेशत्रुसमूहेसस्पन्दःस्फुरद्रूपोमन्दःस्व
स्थचित्तःभवभयस्यसंसारत्रासस्यकलनेक्षेपणेइहजनेमर्त्यलोकेसन्दोहे
नयउल्लाघःसामर्थ्यम् । नीरोगत्वात्तेनलसनंशीलःबलिनांहन्ता । च
ण्डतायास्तैक्ष्ण्यस्यभूरास्रयोखर्वःसर्वेषामुपरिवर्त्तमानःदेवौजसांराज्ञां
खण्डयित्रीईहाचेष्टायत्रतादृशेमहिम्निनिरतोविहरणेसञ्चरणेसफलः।
उद्भूतःशुभाशुभसूचकत्वात् । मेलिकारीसङ्गमकारीचूडामणित्वात् ।
ऐक्यकारीवातन्मूर्त्तित्वात् । कन्दोदङ्कुमुदमिहाभिमतऋद्धिकारोनच

वसिहामगडलीभूअखगडो देन्तोजोंह्लाजलोहेवि
हिअगिअरईविब्भमागक्खलेण ॥ ३१ ॥ सम
संस्कृतेनगोमूत्रिकायथा । बालाविलासावलिहारि
हासालेल्लामलाभावसहासहावा । देहंहरन्तीसरसा
सुरामागेहङ्चरन्तीसहसाभिरामा ॥ ३२ ॥ अर्द्धं
गोमूत्रिकाप्रस्तारोयथा । नमोदिवसपूरायसुताम
रसभासिनें । नतभव्यारिदारायसुसारलयभाविने ।
अत्रगोमूत्रिकाश्लोकोयमुत्तिष्ठति । नतादिव्यासदा
रायसुसामलसभासिनें । नमोभवारिपूरायसुताररय
भाविने ॥३३ ॥

॥ अर्द्धगोमूत्रिका बन्ध ॥

न मो दि व स पू रा य सु ता म र स भा सि ने
त भ व्या रि दा य र ल य भा वि

लनशीलोज्योत्स्नाजलौघान्ददत् । विभ्रमाणाम्बलेनविहितानिजे
आत्मनिरतिर्येनसतथा । विलासावलिषुहारीविकाशोयस्याःलीलाच
लाश्चमलानिर्मलाभावाननेकविधान्यासहतेसाभावरुहा । हावःक्रीडा
विशेषोदिवसान्पूरयतीतिदिवसपूरातस्मैसुष्ठुतामरसेषुभासनशीला
या । नताभव्यायस्मैअरीन्दारयतीत्यरिदारः । ततःकर्मधारयः । न
तानांभव्यानामरिदारेतिवा । नताभव्याअरिदारायस्मिन्नितिवा । सु
ष्ठुसारोलयस्तत्रलयनन्तम्भावयतियस्तस्मै । नतादिव्यादेवायस्मै ।
असदविद्यमानमरिचक्रंयस्य । ततःकर्मधारयःशोभनानांसाम्नांलस
नेनभासनशीलायभानिनक्षत्राणयावरितुंशीलंयस्येतिभवारिआकाशम्पू
रयतिव्याप्नोतिएवम्भूताय । सुष्ठतारउच्चितोयोरयोवेगोगमनन्तेन
भाविने । ३३ ॥

गोमूत्रिकाधेनुर्यथा ॥ ममरस्फुरतुचिद्गतःसततचिन्त्यरक्तामतिः समस्तरविचित्रितस्तुतरुचिःस्मरक्षेमकृत् । समर्द्धिरतचित्तितःकृतविचित्ररत्यामयो नमस्करणचिह्नितस्मितरुचिर्हरःसामरः । चतुर्णामपि पादानाङ्क्रमेणाप्युत्क्रमेणच । इयङ्गोमूत्रिकाधेनुर्वैपरीत्यवशेनच ॥ ३४ ॥

| ॥ प्रथम भेदः ॥ | | | |
|---|---|---|---|
| म | स | स | न |
| म | म | म | म |
| स्फु | स्त | र्द्धि | स्क |
| र | र | र | र |
| तु | वि | त | ण |
| चि | चि | चि | चि |
| द्ग | त्रि | त्ति | ह्नि |
| तः | त | तः | त |
| स | स्तु | कृ | स्मि |
| त | त | त | त |
| त | रु | वि | रु |
| चि | चिः | चि | चि |
| न्त्य | स्म | त्र | र्ह |
| र | र | र | रः |
| क्ता | क्षे | त्या | सा |
| म | म | म | म |
| तिः | कृत् | यो | रः |

॥ द्वितीय भेदः ॥

| | | | |
|---|---|---|---|
| १ ममरस्फु | २ समस्त | ३ समर्धि | ४ नमस्क |
| २ समस्त | ३ समर्धि | ४ नमस्क | १ ममरस्फु |
| ३ समर्धि | ४ नमस्क | १ ममरस्फु | २ समस्त |
| १ ममरस्फु | ३ समर्धि | २ समस्त | ४ नमस्क |
| १ ममस्फु | ४ नमस्क | २ समस्त | ३ समर्द्धि |
| २ समस्त | ४ नमस्क | १ ममरस्फु | ३ समर्द्धि |
| ४ नमस्क | ३ समर्द्धि | २ समस्त | १ ममरस्फु |
| ३ समर्द्धि | २ समस्त | १ ममरस्फु | ४ नमस्क |
| २ समस्त | १ ममस्फु | ४ नमस्क | ३ समर्द्धि |
| ४ नमस्क | २ समस्त | ३ समर्द्धि | १ ममस्फु |
| ४ नमस्क | १ ममस्फु | ३ समर्द्धि | २ समस्त |
| ३ समर्द्धि | १ ममस्फु | ४ नमस्क | २ समस्त |

॥ तृतीयभेदः ॥

| | | | |
|---|---|---|---|
| ममस्फु | नमस्क | समस्त | समर्धि |
| नमस्क | समस्त | समर्धि | ममस्फु |
| समस्त | समर्धि | ममस्फु | नमस्क |
| समर्धि | ममस्फु | नमस्क | समस्त |

॥ चतुर्थभेदः ॥

| | | | |
|---|---|---|---|
| ममस्फु | समस्त | समर्द्धि | नमस्क |
| समस्त | समर्द्धि | नमस्क | ममस्फु |
| समर्द्धि | नमस्क | ममस्फु | समस्त |
| नमस्क | ममस्फु | समस्त | समर्द्धि |

॥ पञ्चमभेदः ॥

| ममस्फु | समर्धि | समस्त | नमस्क |
|---|---|---|---|
| समर्धि | समस्त | नमस्क | ममस्फु |
| समस्त | नमस्क | ममस्फु | समर्धि |
| नमस्क | ममस्फु | समर्धि | समस्त |

॥ षष्ठः ॥

| ममस्फु | नमस्क | समस्त | समर्धि |
|---|---|---|---|
| नमस्क | समस्त | समर्धि | ममस्फु |
| समस्त | समर्धि | ममस्फु | नमस्क |
| समर्धि | ममस्फु | नमस्क | समस्त |

॥ सप्तमभेदः ॥

| समस्त | समर्धि | ममस्फु | नमस्क |
|---|---|---|---|
| समर्धि | ममस्फु | नमस्क | समस्त |
| ममस्फु | नमस्क | समस्त | समर्धि |
| नमस्क | समस्त | समर्धि | ममस्फु |

॥ अष्टमभेदः ॥

| नमस्क | ममस्फु | समस्त | समर्धि |
|---|---|---|---|
| ममस्फु | समस्त | समर्धि | नमस्क |
| समस्त | समर्धि | नमस्क | ममस्फु |
| समर्धि | नमस्क | ममस्फु | समस्त |

नवमः

| समर्धि | नमस्क | ममस्फु | समस्त |
|---|---|---|---|
| नमस्क | ममस्फु | समस्त | समर्धि |
| ममस्फु | समस्त | समर्धि | नमस्क |
| समस्त | समर्धि | नमस्क | ममस्फु |

दशमः

| समर्धि | ममस्फु | समस्त | नमस्क |
|---|---|---|---|
| ममस्फु | समस्त | नमस्क | समर्धि |
| समस्त | नमस्क | समर्धि | ममस्फु |
| नमस्क | समर्धि | ममस्फु | समस्त |

॥ एकादशः ॥

| | | | | |
|---|---|---|---|---|
| ममस्फु | समस्त | समर्धि | नमस्क | ५ |
| समस्त | समर्धि | नमस्क | ममस्फु | ६ |
| समर्धि | नमस्क | ममस्फु | समस्त | ७ |
| नमस्क | ममस्फु | समस्त | समर्धि | ८ |

| | | | | | | | | | | | |
|---|---|---|---|---|---|---|---|---|---|---|---|
| १ | २ | ३ | ४ | २ | १ | ३ | ४ | १ | २ | ४ | ३ |
| २ | ३ | ४ | १ | ३ | २ | ४ | १ | २ | ३ | १ | ४ |
| ३ | ४ | १ | २ | ४ | ३ | १ | २ | ३ | ४ | २ | १ |
| १ | ३ | २ | ४ | ३ | १ | २ | ४ | १ | ३ | ४ | २ |
| १ | ४ | २ | ३ | ४ | १ | २ | ४ | १ | ४ | ३ | २ |
| २ | ४ | १ | ३ | ४ | २ | १ | ३ | २ | ४ | ३ | १ |
| ४ | ३ | २ | १ | ३ | ४ | २ | १ | ४ | ३ | १ | २ |
| ३ | २ | १ | ४ | २ | ३ | १ | ४ | ३ | २ | ४ | १ |
| २ | १ | ४ | ३ | १ | २ | ४ | ३ | २ | १ | ३ | ४ |
| ४ | २ | ३ | १ | २ | ४ | ३ | १ | ४ | २ | १ | ३ |
| ४ | १ | ३ | २ | १ | ४ | ३ | २ | ४ | १ | २ | ३ |
| ३ | १ | ४ | २ | १ | ३ | ४ | २ | ३ | १ | २ | ४ |

| | | | | | | | | | | | |
|---|---|---|---|---|---|---|---|---|---|---|---|
| १ | १ | १ | २ | २ | २ | ३ | ३ | ३ | ४ | ४ | ४ |
| २ | ३ | ४ | ३ | ४ | १ | ४ | १ | २ | १ | २ | ३ |

म तिः स कृत् स यो न रः

म

स्फु ला स्त छे द्धिं त्वा स्क सा

र

तु न्त्व वि स्म त त्र ण र्हं

चि

द्ध त त्रि रु न्ति वि ह्नि रु

तः

स स्तु कृ स्मि

स कृत् स रः न यो स तिः
म
स्फु छे ह्निं सा स्क त्वा स्त ला
र
तु स्म त हं ग त्र वि न्त्य
चि
द्र र कि न्त द्विं वि त्रि त
तः
स्म
कृ
स्क
स

स
स्क
कृ
स्म
तः
द्र र न्ति क्ष द्वि वि त्रि त
चि
तु स्म त हं ग त्र वि न्त्य
र
स्फु छे र्धि ला स्क त्वा स्त ला
म
स कृत् स रः न यो स तिः

समस्फुरत्त्विति । सनचिन्द्रतोमहीयांसंविद्रमारूढः सासरःसदेवोहरः स्फुरतु । सततञ्चिन्तनीयरसायांनतिःसततञ्चिन्तनीयेरसामतीवाय स्य ।समस्तैर्द्वादशभिरपिरविभिरादित्यैर्विचित्रिताश्चालेख्यीकृतास्तुता प्रशस्ताहार्चिःकान्तिर्यस्य । स्मरस्यदेहमङ्कुशलङ्कृन्ततिच्छिनत्तीतिस्मर देहकृत् । सकलशब्दःसर्वपर्यायोगणेपठ्यते । सर्वासुक्रियासादिनत्त्रिपुर तैश्चिन्तितःप्रसमस्थ्यालःपतिवियोगाद्विच्छिन्नायारतेरामयाःकृतार्थेनम नस्कारेणचिन्हिताप्रसादपूर्वकभाविनीप्रसादजन्मास्तित्वप्रसादस्य । स तथा । अस्यान्यासमाह । चतुर्णामिति । क्रमेणपादानामेतेषांप्रथम द्वितीयाभ्याम्द्वितीयतृतीयाभ्यान्तृतीयचतुर्थाभ्यामितित्रयःक्रमभेदाः । व्युत्क्रमेणपादान्तरायेणप्रथमतृतीयाभ्यांप्रथमचतुर्थाभ्यांद्वितीयच तुर्थाभ्यामितिव्युत्क्रमभेदाःक्रमयोर्वैपरीत्यवशेनचतुर्थादितःप्रथमंपाद योजनेनात्रापिक्रमव्युत्क्रमाभ्यांषट्प्रकाराः । तेनोद्वादशभेदाःशुद्धाः । एषांव्यतिकरजन्मानःपुनरन्येचतुर्विंशतिर्भवन्ति ।तद्यथाप्रथमतृतीया भ्याञ्चप्रथमद्वितीयाभ्याम्प्रथमचतुर्थाभ्याञ्चद्वितीयतृतीयाभ्याञ्चप्र थमचतुर्थाभ्याञ्चतृतीयचतुर्थाभ्याञ्चप्रथमतृतीयाभ्याञ्चेतिद्रष्टव्यम् । तदेवमेकएवगोमूत्रिकाश्लोकोयथोक्तरीत्याषट्त्रिंशद्गोमूत्रिकातर्णकाप्र सूतइतीयङ्गोमूत्रिकाधेनुः ॥ ३४ ॥

॥ शतधेनुर्यथा ॥

वन्द्यादेवीपर्वतपुत्रीनित्यम्मधुमधुरकमलवदनापुरन्ध्र्यधिदेवता । देवैःस्तुत्याकिन्नरगेयाभक्त्यावरचरितमहिषमथनीजगत्त्रयनायिका । सिद्धैर्ध्येयाकेसरियानाकाम्यारण चतुररसिकहृदयात्रिलोचनवल्लभा । धीरैःपूज्यादर्पणपाणिर्नूनङ्गुणिनिलयलटभललितासतीषुधुरन्धरा । यतिविच्छेदिनीह्येषाश्लोकधेनुरनुत्तमा । छन्दोभेदाच्छतमियम्प्रसूतेश्लोकतर्णकान् ॥ ३५ ॥

लब्धम् ॥

| | | | | | | |
|---|---|---|---|---|---|---|
| ७ | ६ | ५ | ४ | ३ | २ | १ |
| १ | २ | ३ | ४ | ५ | ६ | ७ |
| ७ | २१ | ३५ | ३५ | २१ | ७ | १ |

| | | | |
|---|---|---|---|
| वन्द्या | देवैः | सिद्धैः | धीरैः |
| देवी | स्तुत्या | ध्येया | पूज्या |
| पर्वतपुत्री | किन्नरगेया | केसरियाना | दर्पणपाणिः |
| नित्यं | भक्त्या | काम्या | नूनं |
| मधुमधुर | वरचरित | रणचतुर | गुणिनिलय |
| कमलवदना | महिषमथनी | रसिकहृदया | लटभललिता |
| पुरंध्र्यधिदेवता | जगत्त्रयनायिका | त्रिलोचनवल्लभा | सतीषुधुरंधरा |

| | | | | | | | |
|---|---|---|---|---|---|---|---|
| ८ | वंदे | ४० | पमक | ७२ | देकपुवं | ४ | देमकपुवं |
| ९ | वंप | ४१ | पकपु | ७३ | देपुवंदे | ५ | पनिमकपु |
| १० | वंनि | ४२ | पपुवं | ७४ | पनिमक | ६ | पमकपुवं |
| ११ | वंम | ४३ | पवंदे | ७५ | पमकपु | ७ | पपुवंदेप |
| १२ | वंक | ४४ | निमक | ७६ | पकपुवं | ८ | निमकपुवं |
| १३ | वंपु | ४५ | निकपु | ७७ | पपुवंदे | ९ | निकपुवंदे |
| १४ | देप | ४६ | निपुवं | ७८ | पवंदेप | १० | निपुवंदेप |
| १५ | देनि | ४७ | निवंदे | ७९ | निमकपु | ११ | मकपुवंदे |
| १६ | देम | ४८ | निदेप | ८० | निकपुवं | १२ | मपुवंदेप |
| १७ | देक | ४९ | मकपु | ८१ | निपुवंदे | १३ | मवंदेपनि |
| १८ | देपु | ५० | मपुवं | ८२ | निवंदेप | १४ | कपुवंदेप |
| १९ | पनि | ५१ | मवंदे | ८३ | निदेपनि | १५ | कवंदेपनि |
| २० | पम | ५२ | मदेप | ८४ | मकपुवं | १६ | कदेपनिम |
| २१ | पक | ५३ | मपनि | ८५ | मपुवंदे | १७ | पुवंदेपनि |
| २२ | पपु | ५४ | कपुवं | ८६ | मवंदेप | १८ | पुदेपनिम |
| २३ | निम | ५५ | कवंदे | ८७ | मपनिम | १९ | पुपनिमक |
| २४ | निक | ५६ | कदेप | ८८ | मपुदेनि | २० | वंदेपनिमक |
| २५ | निपु | ५७ | कपनि | ८९ | कपुवंदे | २१ | पुवंदेपनिम |
| २६ | पक | ५८ | कनिम | ९० | कवंदेप | २२ | कपवंदेपनि |
| २७ | मपु | ५९ | पुवंदे | ९१ | कदेपनि | २३ | मकपुवंदेप |
| २८ | कपु | ६० | पुदेप | ९२ | कपनिम | २४ | निमकपुवंदे |
| २९ | वंदेप | ६१ | पुपनि | ९३ | कनिमक | २५ | पनिमकपुवं |
| ३० | वंपनि | ६२ | पुनिम | ९४ | पुवंदेप | २६ | देपनिमकपु |
| ३१ | वंनिम | ६३ | पुमक | ९५ | पुदेपनि | २७ | वंदेपनिमकपु |
| ३२ | वंमक | ६४ | वंदेपनि | ९६ | पुपनिम | | |
| ३३ | वंकपु | ६५ | वंपनिम | ९७ | पुनिमक | | |
| ३४ | देपनि | ६६ | वंनिमक | ९८ | पुमकपु | | |
| ३५ | देनिम | ६७ | वंमकपु | ९९ | वंदेपनिम | | |
| ३६ | देमक | ६८ | वंकपुवं | १०० | वपनिमक | | |
| ३७ | देकपु | ६९ | देपनिम | १ | वंनिमकपु | | |
| ३८ | देपुवं | ७० | देनिमक | २ | देपनिमक | | |
| ३९ | पनिम | ७१ | देमकपु | ३ | देनिमकपु | | |

वन्द्येति वरेण्यदेवताप्रसादेनचरितोनिरर्गलप्रसरोगुणानामाश्रयोल
टभस्मनोज्ज्वलललितंविलासोयस्याःसातथायतिविच्छेदीति । अत्रक
रणम् । * प्रतिलोमंविनिक्षिप्यमनुलोममधःक्षिपेत् स्थितेनागन्तुकं
हन्यादीप्सितेनविभाजयेत् । स्थितम्प्रतिलोममागन्तुकङ्क्रमविन्य
स्तमीप्सितंहिप्रतिलोमस्यक्रमेण फलङ्गुणकारस्तथैवानुलोमम्भागहा
रः । अनेनक्रमेणैकैकयतियोजनेसप्तश्लोकाः । यतिद्विकयोजनेचैक
विंशतिः । यतित्रिकयोजनेचपञ्चत्रिंशत् । यतिचतुष्कयोजनेपिताव
न्तएव । यतिपञ्चकयोजनेपुनरेकविंशतिः । षड्यतियोजनेसप्तसप्तय
तियोजनेत्वेकःसर्वमेलनेनचसप्तविंशत्यधिकंशतम् । अत्रचक्रियाही
नत्वेनकारकविहीनत्वेनचपदावयवतयापादावयवमात्रत्वेनचनिर
र्थकान् षड्विंशतिमपास्यधेनुश्लोकएकएववृत्तभेदेनशतंश्लोकतर्णका
न्प्रसूते । तथाहि । प्रथमद्वितीयचतुर्थीभिर्यतिभिरत्युक्ताजातिः ।
तृतीयपञ्चमीभ्यांसुप्रतिष्ठा । षष्ठ्यागायत्री । सप्तम्याचोष्णिगिति ।
एकगणनायांवृत्तभेदः । एवन्द्विकादिगणनेपिगवेषणीयम् ॥ ३५ ॥

## ॥ सहस्रधेनुर्यथा ॥

नखमुखपाणिकण्ठचिकुरैर्गतिभिःसहसास्मितेन
ललितेसुदृशा । मणिशशिपद्मकम्बुचमराःकरिणः
सुतनोःसुधाचहसिताहरिणाः । फणिगणसिद्धसा
ध्यदयितानसमाःसकलास्त्वयाचखभुवच्छलिताः ।
तवबलदर्पकर्पविजितानितरांविबुधाश्चिरायचतुरा
श्चरितैः पदविच्छेदिनीह्येषाश्लोकधेनुरनुत्तमा । छ
न्दोभेदाद्दशशतीम्प्रसूतेश्लोकतर्णकान् ॥ ३६ ॥

नखेति । हेललितेगौरितवशोभनयादृशासुतनोःशोभनस्यशरीर
स्य । साध्यादेवविशेषाःखभुवोग्रहताराद्याःराप्यतइतिराप्यम् ।
आसुवपिरपित्रपिचमश्चेतिरापतिभाषितमित्यर्थः । दर्पेतिपाठेनवा

॥ अयुतधेनुर्यथा ॥

क्रियेजयसिजृम्भसेसृजसिजायसेत्रायसेस्तुपेमृष सिमृष्यसेहपसिपीयसेप्रीवसे । स्तुपेमृडसिहोडसे कुटसिगल्लसेक्लीवसेन्हुपेहरसिरज्यसे रजसिराजसे भ्राजसे। एषातुपदविच्छेदिन्येवधेनुःक्रियापदैः । सम्बोधनाग्रगैर्दृष्टास्माभिःश्लोकायुतप्रसूः ॥ ३७॥

॥ लक्षधेनुर्यथा ॥

दुर्गेभद्रेसुभद्रेदितिसुरभिदितेसैंहिकेगौरिपद्मेनि त्येह्येवरेण्येकलिकमलिकलेकालिकेचण्डिचण्डे । घन्येपुण्येशरण्येशचिशबरिशिवेभैरवेराज्ञिसन्ध्येच्छा येमायेमनोज्ञेऽवनिजननिजयेमङ्गलेधेहिशन्तः । सम्बोधनैरियन्धेनुःकृष्णैकक्रियापदैः । लक्षत्रयं सहस्राणिषट्श्लोकान्प्रसूयते । एषान्त्यपदभेदे नसम्भ्रमादिद्विरुक्तिभिः । यावद्बोधम्पुनःसूते प्रयुतश्लोकतर्णकान् ॥ ३८ ॥

---

योजनीयम् । पदविच्छेदिनीति । पाशान्यत्रप्रतिपादंसुधाकल शाभिधानेच्छन्दसिषड्विभज्यन्ते । यद्यपिद्वितीयतृतीयपादयोश्च काराज्याऩकारेणचतुर्थपादेलवेतिपदाधिक्यन्तथाप्याद्यपादार्थानुरो धेनसमुच्चीयमानलिपिच्छमालार्थानुरञ्जकत्वेनसम्बोध्यमानार्थानुघा थितयाचकारनकारयोस्त्ववेतिचतत्पादावयवरूपास्त्वेतितदसत्कल्पमे व । तथाचषड्भ्यःपदत्रयपादीयमानेसप्तदशाक्षरायाञ्जातौयथास ङ्ख्यानुरोधेनाद्येद्वैप्रस्तारचनाक्रमेणदशविकल्पाः तृतीयचतुर्थयोश्च पादयोस्तावन्तस्तावन्तएवेति । दशभिराहतैर्दशभिःशतम् । शतेन चाहतैर्दशभिःसहस्रन्तर्णकाःश्लोकाःसमुत्पद्यन्तइतीयंसहस्रधेनुःक्रिये इति । हेक्रियेकर्म्मन्सिपस्पद्धायाम्। पीङ्पाने मृडसुखने तुदादौ।

होड्ग्नादरे । कुडसंहारे । रज्यसेत्रासजसि । रजसिमत्स रयसि । राजसेशोभसे । भ्राजसेजाज्वल्यसे । एषेति । इहपृथ्वी नामनिच्छन्दसि । षड्न्यः सम्बोधनानुगेपदचतुष्टयेउपादीयमानेएका दशाक्षरायाञ्जातौ प्रस्तारालपत्वेनयदिवाच्छन्दोभेदस्यशब्देनाप्रति पादितत्वात्तद्भेदोप्युदाहरणीयइतितस्यामेवरथोद्धताभिधानेच्छन्द सिदशसुविकल्पेषुप्रतिपादस्भवत्सुदशभिःशतंशतेनसहस्रंसहस्रेणच दशसहस्राणितर्णकाःश्लोकाःसमुत्पद्यन्तेइतीयमयुतधेनुः । दुर्गइति सम्बोधनैरिति । अत्रहिस्रग्धराभिधानेछन्दसिपादत्रयपदानुरोधेना न्त्यपादद्वयेनैकैकमेवपदन्तुर्यपादेपरिकल्प्यमितिसर्वत्रनवसुपदेषुस्थि तेषुपदचतुष्टयेपदपञ्चकेचोपादीयमाने प्रथमेआपातलिकायाम्पञ्च विंशतौद्वितीयेएकयाप्राच्यवृत्यासहवैतालीयकेयदिवापञ्चभिः प्राच्य वृत्तिभिः सममौपच्छन्दसिकेचतुर्विंशतौतृतीयवैतालीयएवचतुर्विंश तौचतुर्थचपादेप्राच्यवृत्तिद्वयेसममापातलिकायांषोडशभिरेकयाप्राच्य वृत्यावैतालीयप्राच्यवृत्यासहवैतालीयैःषड्भिस्तथैवौपच्छन्दसिकेद्वा व्यामितिचतुर्विंशतौविकल्पेषुप्रभवत्सुपञ्चविंशत्याहतेषुचतुर्विंशतौ शतानिषट् । षड्भिश्शतैराहतेषुपञ्चविंशतौसहस्राणि । पञ्चदश । तैराहतेषुचतुर्विंशतौलक्षाणित्रीणिसहस्राणिचषष्टिःतर्णकाःश्लोकाःस मुत्पद्यन्तइतीयंलक्षधेनुः । एषेति तथाह्यत्रपादत्रयेनवसुतुर्यपादेचद शसु । त्रयेपदचतुष्केपदपञ्चकेचोपादीयमानेप्रथमऔपच्छन्दसिकए कस्यपदस्यद्विरुक्त्याविंशतौयदिवाआपातलिकायान्दश । वैतालीये पञ्चदशसुऔपच्छन्दसिकेउदीच्यवृत्तिद्वयेनयद्वैतालीयेचतसृभिरु दीच्यवृत्तिभिःसममेकोनविंशतिरितिचपञ्चविंशतौतृतीयस्मिन्नौपच्छ न्दसिकेपञ्चभिःप्राच्यवृतिभिःसममेकादश । वैतालीयेतथैवचतुर्द शऔपच्छन्दसिकेतिसृभिःप्राच्यवृत्तिभिःसहषडितिविंशतौतृतीयस्मि न्नौपच्छन्दसिकेतिसृभिरुदीच्यवृत्तिभिःसमम्पञ्चविंशतौचतुर्थेत्वापा तलिकायामेकएव । द्विरुक्त्यादिनाषोडशभिःप्राच्यवृत्तिभिःसममशी तौविकल्पेषुप्रभवत्सुविंशत्याहतपञ्चविंशतौपञ्चविंशत्याद्वाविंशतौ पंचशताधिकानिद्वादशसहस्राणितैरप्याहतेषुअशीतौदशलक्षाणितर्ण कश्लोकाःसमुत्पद्यन्तइतीयमयुतधेनुः ।

॥ कोटिधेनुर्यथा ॥

स्थूलन्दत्सेसूक्ष्मन्धत्सेभुविभवासिनमसिरमसेरमे
दिविमोदसे । छिंत्सेंबाढम्भिंत्सेगाढंरुपिमिषासिध
नुषिमनुषेजयेयुधिविजृम्भसे । सम्बोधनैर्द्वितीया
न्तैःसप्तम्यन्तैःक्रियापदैः । श्लोककोटीरियन्तिस्त्रः
सार्द्धाधेनुःप्रसूयते । यदातुसम्भ्रमादिभ्यो भवन्त्य
स्याद्विरुक्तयः । स्थूलादीनान्तदाचैषादशकोटीः
प्रसूयते ॥३१॥ कामधेनुर्यथा । यागीःश्रीःस्त्रीर्ह्रीस्त्री
ह्रीभीर्जूर्मूस्तूस्सूस्भूर्द्रूःपूर्भूर्म्लुक्स्रग्युग्भुग्रुक्भुक्
तृट्द्विट्युत्क्रुत्चिद्विन्मुग्दग्धूः । क्रुत्कृद्रुत्कृत्वामा
मृत्क्रुद्वामामुत्क्षुत्कामाद्वाद्यौर्गौः सामायामावेधावे
धानामातेत्वम्मेनौः ।

---

स्थूलमिति । प्रेषइतिइषगलावित्यस्यचितिचैतन्येगृधुगार्ध्ये । सच
सेवचसेरमेजयेचलरुचेइतिदेव्याःसम्बोधनपदानि । सम्बोधनैरिति ।
अत्रभुजङ्गविजृम्भितेछन्दसिएकादशभ्यःपदेभ्यः पञ्चसुषट्सुचपदेषु
उपादीयमानेषुजगतीजातौ प्रसिद्धाप्सरोज्वलाजलधरमालानवमालि
नीछन्दस्सुसप्तती । द्वितीयेपूर्वेषु । चन्द्रवर्त्मद्रुतविलम्बितमणिमा
लाप्रभवत्सुचशतेतृतीयेस्मिन्प्रथमपादच्छन्दस्येवपञ्चाशतिचतुर्थपा
देद्वितीयपादच्छन्दस्येवशतेषुविकल्पेषुप्रभवत्सुसप्तत्याहतेषुशतेषुसप्त
तिसहस्राणिशतैराहतायांसप्ततिलक्षाणिसप्ततिसहस्रैराहतेषुपञ्चाश
ल्लक्षाणित्रीणिसहस्राणिचपञ्चाशतैराहतेशतेकोट्यस्तिस्रःसार्द्धास्तावं
ताःश्लोकाःसम्पद्यन्तइतीयङ्कोटिधेनुः । यदात्विति । तथाहिपदत्र
येपदचतुष्केपदपञ्चकेचोपादीयमाने पूर्वस्यामेवजातौप्रथमद्वितीयच
तुर्थेषुपादेषुप्रत्येकञ्जलधरमाला प्रभाछन्दसोरेकस्यद्वयोर्द्विरुक्त्याशते
तृतीयस्मिंश्चपूर्वयोर्मणिमालोज्वलानवमालिनी तामरसेषुछन्दस्सुत
थैवशतेविकल्पेषुप्रभवत्सुशतेनाहतेशतेदशसहस्राणितैश्चाहतेशतेदश

पदग्रहाद्यथाकामङ्कामधेनुरियन्तुनः । परार्द्धा नाम्परार्द्धानि प्रसूतेश्लोकतर्णकान् । एकाक्षरा दिच्छन्दोभि र्गतिबन्धादिभेदतः । उक्तानुक्ता नि चित्राणि सर्वाण्येषाप्रसूयते । सकृदुच्चारणेचा स्यागच्छत्येकाविनाडिका । तत्षष्ठ्यानाडिका ताभिः षष्ट्याहोरात्रमृच्छति ॥ प्रणवादिनमोन्ता नि पदान्यस्याजपन्तिये । सर्वाभाषासुवाक्तेषाम विच्छिन्नाप्रवर्तते । सिद्धैर्मंत्रपदैःसेयं शास्त्राण्या लोच्यनिर्मिता । जपताञ्जुहूतान्देवी सर्वान्कामा न्प्रयच्छति ॥ स्थितेनागन्तुकंहन्यादीप्सितेनविभा जयेत् । तद्भेदास्तेभवन्त्येवमन्येष्वपिहियोजयेत् ॥ यानंयातीतियाकाचिच्चया । गिरणंगृणतीतिवाक् चगीः । शरणंशीःशृणातीतिशीः । श्रयतीतिशो भालक्ष्मीश्चश्रीः । ध्यानन्ध्यायतीतिबुद्धिर्धीः । स्त्र्येवस्तृणातिमन्त्राक्षरंस्त्री । ह्रीच्छतीतिमाया लज्जाचह्रीः । विभेतीतिभयकामोभयंचभीः ।

---

लक्षाणितैरप्याहतेशतेकोट्यस्तर्णकाःश्लोकाःसम्पद्यन्तइतीयमेवदश कोटिधेनुः । यागीरिति । पदग्रहादिति । तथाहि।पञ्चदशभ्यःपदे भ्यःक्रमव्युत्क्रमाभ्यान्नवादिपदयोगेङ्गीक्रियमाणेबृहतीजातेरारभ्यप्र तिजातिपादेयेविकल्पास्तैरुत्तरोत्तरमाहन्यमानैर्यदिवासमस्तेपिश्लोके षष्टिपदेभ्यश्चतुर्विंशत्यष्टाविंशत्यादिपदयोजनायाङ्गायत्रीजातेरारभ्य प्रतिजातियेविकल्पास्तैःपरार्द्धेभ्यः परार्द्धानितर्णकश्लोकाःसमुत्पद्यन्त इतीयम्परार्द्धपरार्द्धधेनुः । एकाक्षरेतिअर्थत्रयप्रतिपादकत्वेनप्रतिपा दस्पदत्रयेपरिकल्प्यमानेऽनेकविधच्छन्दोभिरुक्तानि चतुर्व्यञ्जनादी न्यनुक्तानिखड्गप्रभृतीनिसर्वचित्राण्येषैवयथाकामम्प्रसूयतइत्यर्थः ।

ज्वरोगतिर्जराचजूः । मूर्च्छामोहस्समुच्छ्राययोर्बन्धनञ्चमूः । त्वराहिंसात्वरतेचतूः । सूयतेसवनंसुष्ठुउप्रसूः । अग्रेभागेभारन्धूर्वहतीतिधूः । पुरीपालनम्पूरणञ्चपूः । भूमिर्भवनंलोकश्चभूः । यज्ञपात्रंस्रवतीतिस्रवणंस्रुक् । पुष्पमालापङ्क्तिश्चसृज्यतइतिस्रक् । योगःसमाधिःसमश्चयुक् । भोजनम्पालनङ्कौटिल्यञ्चभुक् । रोगोदीप्तिर्भङ्गश्चरुक् । शोकःशुचित्वन्दीप्तिश्चशुक् । अभिलाषःपिपासाहिंसाचतृट् । द्वेषःशत्रुबलमभिलाषश्चद्विट् । शुद्धम्मिश्रणममिश्रणञ्चयुत् । क्रोधःक्रुध्यतीतिरुद्रशक्तिश्चक्रुत् । चेतनाचिनोतिचयनञ्चचित् । ज्ञानंसत्ताविमवलाभश्चवित् । मोक्षोमोहोमुञ्चतीतिमुक् । आशाअतिसर्गश्चोपदेशोदिक् । क्रीडाविजगीपाव्यवहारश्चदूः । श्रुतिवाक्यंविवेचनञ्चाहिंसाचऋक् । दृष्टिर्ज्ञानम्पश्यतीतिदृक् । गतिर्गन्धनंविकल्पश्चवा । लक्ष्मीर्मानंशब्दावयश्चमा । मृत्तिकामरणम्मृद्नातीतिमृत् ॥ कृन्ततिकरोतिकरणञ्चकृत् । दीप्तिर्भानम्भातीतिभा । शब्दःशब्दावयवश्चप्रातिषेधश्चमा । हर्षोमोदआमोदश्चमुत् । बुभुक्षाक्षुत्क्षोदश्चक्षुत् । प्रश्नःसुखङ्ज्ञानञ्चका । श्रमतीत्यमापीडार्थेलक्ष्मीशब्दावयवश्चअमा । द्वारन्द्वास्यउपायश्चद्वाः । स्वर्गआकाशोदेवनञ्चद्यौः । वाग्भूमिर्धेनुश्चगौः । सहएनअकारेणविष्णुनावर्ततइतिसालक्ष्मीःसा । सानन्तदोरूपञ्चसा । प्रतिदा

नशब्दावयवश्चसर्वनामचसा । इष्टाश्चयतइतिश
ब्दावयवश्चयाचन्द्रकलामहदर्थश्चमा । लक्ष्मीस
म्बोधनञ्चचतुर्थ्यन्तं षष्ठ्यन्तञ्चमे । धारणम्पोष
णंशब्दावयवश्चवे । धात्रीपोषयित्रीशब्दावयवश्च
धा । शब्दावयवौस्मदर्थौलक्ष्मीसम्बोधनञ्चमे ।
प्रतिषेधःपुरुषवाचीशब्दावयवश्चना । मिमीतेमा
तेतिशब्दावयवश्चमा । तदर्थो युष्मदर्थश्चलक्ष्मीस
म्बोधनञ्चते । युष्मदर्थो भावप्रत्ययः शब्दावयव
श्चत्वम् । शब्दावयवास्मदर्थौचमे । जलपानम् । न
विद्यतेद्वौर्द्विवचनंयस्यांसाअद्वितीयेत्यर्थः । शब्दाव
यवश्चनौः । दुष्करत्वात्कठोरत्वाद्दुर्बोधत्वाद्वि
नावधेः । दिङ्मात्रन्दर्शितञ्चित्रेशेषमूह्यम्महा
त्मभिः ॥ ४० ॥ १७ ॥ उक्तिप्रत्युक्तिमद्वाक्यं वा
कोवाक्यंविदुर्बुधाः । द्वयोर्वक्त्रोस्तदिच्छन्ति बहू
नामपिसङ्गमे ॥ १ ॥ ऋजूक्तिरथवक्रोक्तिर्वैयात्यो
क्तिस्तथैवच । गूढंप्रश्नोत्तरोक्तीचचित्रोक्तिश्चेति
तद्विदा ॥ २ ॥ सातुऋजूक्तिर्द्विधा । ग्राम्याउपना
गरिकाच । तत्रग्राम्यायथा । जन्तीमणुरुन्धुरुञ्चु
कुहुतुंडउण्णउकोविहंसण होमिमहोमिभारुञ्चुलंमे
ल्लासतोविकिणकुत्राण उंवाणउंउज्जुअवखुकहहिं
वाणउउज्जुमाइगहिल्लउअस्सविकोमलहणउवारिज्
जन्तुसाठाइकरइवलिवंउउवेकक्कारुमच्छलुअहिमुहं
हिन्तरुणिहिंग्रच्छासइदुष्करु । सेयमुभयतोपि
जुनैवमार्गेणोक्तिप्रत्युक्त्योःप्रवृत्तिरितिसेयमृजूक्ति

र्नामवाकोवाक्यम् ॥ १ ॥ सैवोपनागरिका यथा ।
बालेनाथविमुञ्चमानिनिरुषं रोषान्मया किङ्कृतं
खेदोस्मासु न मेपराध्यति भवान्सर्वे पराधा मयि । त
त्किं रोदिषि गद्गदेन वचसा कस्याग्रतो रुद्यते नन्वेत
न्मम का तवास्मि दयिता नास्मीत्यतो रुद्यते ॥ सेयमे
कतः काक्वाकुटिलेयति विषमेयमृजूक्तिर्नाम वाकोवा
क्यम् ॥ २ ॥ वक्रोक्तिर्द्विधा । निर्व्यूढा चानिर्व्यूढा
च तयोर्निर्व्यूढा यथा । किङ्गौरि मां प्रति रुषा ननु
गौरहं किङ्कुप्यामि कां प्रति मयीत्यनुमानतोहम् ।
जानामि सत्यमनुमानत एव सत्वमित्थङ्गिरो गिरिभु
वः कुटिला जयन्ति । सेयमा वाक्यपरिसमासेर्निर्वा
हान्निर्व्यूढेति वक्रोक्तिर्वाकोवाक्यम् ॥ ३ ॥ अनि
र्व्यूढा यथा । केयम्मूर्ध्नि अन्धकारे तिमिरम्मिह कुतः सु
भ्रु कान्तेन्दुयुक्ते कान्ताप्यत्रैव कामिन्ननुभवति मया
पृष्टमेतावदेव । नाहन्द्वन्द्वङ्करोमि व्यपनय शिरस
स्तूर्णमेनामिदानीमेवम्प्रोक्तो भवान्या प्रतिवचनज
डः पातु वो मन्मथारिः । सेयमनिर्वाहादनिर्व्यूढेति
वक्रोक्तिर्नाम वाकोवाक्यम् । ते इमे उभे अपि श्लेषव
क्रोक्ती नाम वाकोवाक्यम् ॥ ४ ॥ वैय्यात्योक्ति
र्द्विधा । स्वाभाविकी नैमित्तिकी चेति । तयोः स्वा
भाविकी यथा । नादेयङ्किमिदञ्जलं घटगतन्ना
देयमेवोच्यते सत्यन्नाम पिबामि कत्यपत्रपः पीतेन ना
म्नाभवन् । किं वर्णा अपि सन्ति नाम्नि रहितङ्कि
न्तैरलन्त्वङ्कुतो यस्मादेव भवान्भगिन्यसि ततस्ते

नैवमाम्बाधसे । अत्रस्वैरिण्याः सहजाद्वैयात्यात् स्वाभाविकीयंवैय्यात्योक्तिर्नामवाकोवाक्यम् ५ ॥ नैमित्तिकीयथा । कुशलंराधेसुखितोसिकंसकंसःक्क नुक्कसाराधा । इतिपारीप्रतिवचनैर्विलक्ष्यहासोह रिर्जयति । अत्रगोत्रस्खलितेविपक्षनाम्नैववैय्या त्येनोत्तरन्दत्तमितिनैमित्तिकीयंवैय्यात्योक्तिर्वाको वाक्यम् । गूढोक्तिर्द्विधा । मुख्यागौणीच । तयो र्मुख्यायथा । केशत्रयमुनातीरेंव्याहृतवानुषसिहं सिकाङ्क्षोद्य । कान्ताविरहभयातुरहृदयःप्रायःप्रिये हंसः । अत्रप्रियेहंसइत्यत्रावर्णलोपेप्रियेअहंसइ त्यर्थस्यमुख्ययैववृत्यागूढत्वादियम्मुख्यागूढोक्तिर्ना मवाकोवाक्यम् ॥७॥ गौणीयथा । निरर्थकञ्जन्मग तन्नलिन्याययानदृष्टन्तुहिनांशुबिम्बम् । उत्पत्तिरि न्दोरपिनिष्फलैवकृताविनिद्रानलिनीनयेन । ता विमौपूर्वोत्तरार्द्धयोरन्योन्योक्त्या गूढकामलेखावि तीयङ्गौणीगूढोक्तिर्नामवाकोवाक्यम् ॥८॥ प्रश्नोत्त रोक्तिर्द्विधा । अभिधीयमानहृद्याप्रतीयमानहृद्या च । तयोराद्यायथा । क्कप्रस्थितासिकरभोरुघनेनि शीथेप्राणेश्वरोवसतियत्रमनःप्रियोमे । एकाकिनीव दकथन्नबिभेषिबालेनन्वस्तिपुङ्खितशरोमदनःसहा यः सेयंहृद्गतप्रष्टव्यस्यैवस्पष्टमभिधायैवाभिधाना दभिधीयमानहृद्यानामप्रश्नोक्तिर्वाकोवाक्यम् ९ ॥ द्वितीयायथा । कियन्मात्रञ्जलंविप्रजानुदघ्नन्नरा धिप । तथापीयमवस्थातेनहिसर्वेभवादृशाः । से

यंशब्दविद्यावैशारद्यस्यहृद्यस्यप्रतीयमानत्वात्प्रती यमानहृद्यप्रश्नोत्तरोक्तिर्वाकोवाक्यम् ॥ १० ॥ चित्रोक्तिर्द्विधा । चित्राविचित्राच । तयोराद्यायथा लभ्यन्तेयदिवाविक्रुतानियमुनाभागीरथीसङ्गमे देवप्रेष्यजनस्तदेषमवतोभर्तव्यतांवाञ्छति । नन्वेतन्मरणेनकिन्तुमरणङ्कायान्मनो विच्युतिर्दीर्घञ्जीवमनस्तवाङ्घ्रिकमलेकायोत्रनस्तिष्ठति । तदिदं स्वकलिपतोक्तिप्रत्युक्तिभ्याञ्जीवतोपि जन्मान्तरावाप्तिसाधनेनाश्चर्यहेतुरिति चित्रानामचित्रोक्तिर्वाकोवाक्यम् ॥ ११ ॥ द्वितीयायथा । कोयम्भालिनिभूषणङ्कितवतेशोणः कथङ्कुङ्कुमात्कूर्पासान्तरितःप्रियेविनिमयःपश्यापरङ्कास्तिमे। पश्यामीत्यभिधायसान्द्रपुलकोमृद्नन्मृडान्यास्तनौहस्तेन प्रातिनिर्जितेन्दुरवताद्यूतेहसन्वोहरः । अत्रोक्तिप्रत्युक्त्योरनन्तरंस्तनमर्द्दनवैचित्र्यादिना परिसमाप्तेर्विचित्रसंज्ञमिदंवाकोवाक्यम् ॥ १२ ॥ १८ ॥ प्रहेलिकासकृत्प्रश्नःसापिषोढाच्युताक्षरा । दत्ताक्षराभयम्मुष्टिर्बिन्दुमत्यर्थवत्यपि ॥ १ ॥ क्रीडागोष्ठीविनोदेषुतज्ज्ञैराकीर्णमन्त्रणे । परव्यामोहनेचापिसोपयोगाःप्रहेलिकाः ॥ २ ॥ तासुच्युताक्षरा यथा । पयोधरभराक्रान्ता सन्नमन्तीपदेपदे । पदमेकन्नक्रायाति यदिहारेणवर्जिता ॥ अत्रवहङ्गिकाकाहारेणवर्जितानयातीति वक्तव्येहारेणवर्जितेत्युक्तम्। अतःकाइत्यक्षरस्यच्युतत्वाच्युताक्षरेयम्

दन्ताक्षरा यथा । कान्तायानुगतः कोयम्पीनस्कन्धो मदोद्धतः । मृगाणाम्पृष्ठतो याति शम्बरो रूढयौवनः ॥ अत्र शबर इति शम्बर इत्यनुस्वाराक्षरस्य दन्तत्वाद् दन्ताक्षरेयम् ॥ २ ॥ च्युतदन्ताक्षरा यथा । विदग्धः सरसो रागी नितम्बोपरि संस्थितः । तन्वङ्ग्यालिङ्गितः कण्ठे कलङ्कूजति कोविटः ॥ अत्र विट इत्यस्मिन्विकारे च्युते घकारे दत्ते घटः कूजतीति द्वितीयोर्थो भवतीति सेयञ्च्युतदन्ताक्षरा ॥ ३ ॥ अक्षरमुष्टिका यथा । अतिः अलिः अन्म अलम्प्रीद्यरद्यजद्यफद्य । मेला मेला मेलम्मे लम्फमफसफसफस । सेयमक्षराणाम्मुष्टिरित्यक्षरमुष्टिका । अत्र पादशश्चतुःपङ्क्तिलिखिता चतुर्भिर्मुरजबन्धैः श्लोकउत्तिष्ठति ॥ तद्यथा । अद्य मे सफला प्रीतिरद्य मे सफला रतिः । अद्य मे सफलञ्जन्म अद्य मे सफलम्फलम् ॥ ४ ॥ बिन्दुमती यथा । तवात्र वादः प्रत्यब्धि पताकाप्रतिसङ्करम् । फलम्प्रत्यद्भुतो पायं यशांसि न नु नक्कचित् । इत्यनेन श्लोकेनोक्तार्थस्य यथास्थितस्वरानुस्वारविसर्जनीयसंयोगस्य श्लोकान्तरस्य बिन्दुभिरेव सूचनात्क्रम इति बिन्दुमती । तद्यथा । निर्भेदः । उ०।०।।०उ०।०।।०।।०।।०ं०उ०ो० ं०उ०ो०।०।ः।।०।०ो०।।०।०ो०ङ्ग०ङ्गः०।०ो०।०। ०।०ङ्ग०ो०।०।ः ॥ उद्धावुद्धावाज्ञासंयुगे संयुगे जयः । साहसे साहसे सिद्धिः सर्वत्र तव कीर्तयः ॥ ५ ॥ अर्थप्रहेलिका यथा । उत्तप्तकाञ्चनाभासं सन्दष्टदशनच्छदम् सरसञ्च्युम्ब्यते हृष्टैर्वृद्धैरपि किमुज्ज्वलम् । सेयमपि

सूचितस्यैवपक्षस्यफलमित्यस्यह्यर्थपदप्रयोगेनावग
तेरर्थप्रहेलिका ॥ ६ ॥ क्रियाकारकसम्बन्धपदाभिप्रा
यवस्तुभिः । गोपितैःषड्विधम्प्राहुर्गूढङ्गूढार्थवेदि
नः । तेषुक्रियागुप्तंयथा । स्तनजघनभराभिराममम
न्दङ्गमनमिदम्मदिरारुणेक्षणायाः । कथमिवसहसा
विलोकयन्तीमदनशरज्वरजर्जरायुवानः । अत्रजघ
नभराभिराममन्दम्मदिरेक्षणायागमनमवलोकयन्तो
हेयुवानः कथमिवयूयम्मदनशरज्वरजर्जरानस्तेति
क्रियापदस्यस्तनशब्देनजघनसान्निध्याद्गोपितेनक्रि
यागूढमिदम् ॥ १ ॥ कारकगुप्तंयथा । पिबतस्तेशरा
वेणवारिकह्लारशीतलम् । केनेमौदुर्विदग्धेनहृदये
विनिवेशितौ । अत्रशराविति कर्मकारकस्यगूढत्वा
त्कारकगूढमिदम् ॥ २ ॥ सम्बन्धगूढंयथा । नमया
गोरसाभिज्ञञ्चेतःकस्मात्प्रकुप्यसि । अस्थानरुदितै
रेभिरलमालोहितेक्षणे ॥ अत्रनमेऽगोरसाभिज्ञञ्चे
तइतिसम्बन्धिपदस्यमयेतितृतीयाभ्रान्त्यागोपित
त्वादिदं सम्बन्धगूढम् । पादगूढंयथा । सुवियद्गामि
नीतारसंरावविहतश्रुतिः । हैमीषुमालाशुशुभेविद्यु
तामिवसंहतिः । अत्रपूर्वार्द्धस्थितैर्द्वितीयप्रथमसप्तम
पञ्चमैकादशनवमत्रयोदशषोडशाक्षरैश्चतुर्थपादोगू
ढस्तथाप्यः । यथाविद्युतामिवसंहतिरितीदम्पाद
गूढम् ॥ ४ ॥ अभिप्रायगूढंयथा ॥ जइदेअरेणभ
णिआखग्गइ्घेत्तूणराउलंवच्च । ताकींसवअवहुए
हसिऊणपलोइअंसअणम् । अत्रानिरीक्षितमनेना

अपुरुषायितलक्ष्मपादलाङ्क्षादिकन्तेननियुङ्क्तेमान्तु
कर्मणीत्यभिप्रायेणवध्वाःशयनावलोकनमित्यभिप्रा
यगूढम् ॥ ५ ॥ वस्तुगूढंयथा । पानीयम्पातुमिच्छा
मित्वत्तःकमललोचने । यदिदास्यसिनेच्छामिनदा
स्यसिपिबाम्यहम् ॥ अत्रदास्यसीतिदासीलक्षणस्य
वस्तुनोगूढत्वादिदंवस्तुगूढम् ॥ ६ ॥ २० ॥ यस्तुपर्य
नुयोगस्यनिर्भेदःक्रियतेपदैः । विदग्धगोष्ठ्यांवाक्यै
र्वातंहिप्रश्नोत्तरंविदुः ॥ १ ॥ अन्तःप्रश्नबहिःप्रश्नब
हिरन्तःसमाह्वयैः । जातिपृष्टोत्तराभिख्यैःप्रश्नैस्तद
पिषड्विधम् ॥ २ ॥ तेष्वन्तःप्रश्नंयथा । काहमस्मिगु
हावक्तिप्रश्नेमुष्मिन्किमुत्तरम् । कथमुक्तन्नजानासि
कदर्थयसियत्सखे ॥ अत्रकदर्थयसीतिपदङ्कथमुक्तं
रेफयकारयुक्तन्दर्यसीतिस्यादतोवाक्यान्तरंप्रश्नोत्त
रस्योक्तत्वादन्तःप्रश्नमिदम् ॥ १ ॥ बहिःप्रश्नंयथा ।
भद्रमाणवकाख्याहिकीदृशःखलुतेपिता । वेलान्दो
लितकल्लोलः कीदृशश्चमहोदधिः ॥ अत्रमज्जन्मक
रइत्यस्योत्तरस्यप्रश्नाद्बहिरुक्तत्वाद्बहिःप्रश्नमिद
म् ॥ २ ॥ बहिरन्तःप्रश्नंयथा । सुभद्राङ्कउपायंस्त
प्रश्नेमुष्मिन्यउत्तरः । सकीदृक्कापिमाचष्टेव्योम्निप
र्णस्थितिःकुतः । अत्रवायुतइत्युत्तरेणप्रश्नाद्बहिरु
क्तेनवायुतोनरोवानरोभवतीतिसुभद्रोपयन्ताप्युच्य
ते । तेनैतद्बहिरन्तःप्रश्नंभवति॥ ३ ॥जातिप्रश्नंयथा।
कीदृशाभूमिभागेन राजास्नातोनुमीयते। प्राङ्गणङ्कु
रुतेत्युक्ताःकिमाहुस्तदानिच्छवः । हैमेवारकराञ्ज

ता। नाजिरंकरवामहै। इत्युत्तराभ्याङ्कतोत्तराख्या
नप्रश्नोत्तरजातिरभिधीयते।जातिप्रश्नमिदम् ॥४॥
पृष्टप्रश्नंयथा।कोसोजोजणवाओकोदराड।णन्दुवेस
हस्साइं। काकालीकामधुराकिंशुकपृथुकाननच्छाय
म्।अत्रयएवप्रश्नःकःसयोजनपादःकःसयोदण्डाना
न्द्वेसहस्रेद्वेइत्यादयः । तएवक्रोशयोजनपादःकोद
राडानान्द्वेसहस्रेइत्यादीन्युत्तराणिभवन्ति।एवङ्काका
लीकामधुराकिंशुकपृथुकाननच्छायमित्युत्तरङ्गमभि
हितशेषस्यप्रष्टव्यमितिपृष्टप्रश्नम् ॥ ५॥ उत्तरप्रश्नंय
था । किंवसन्तसमयेवनमक्षःपृष्टवान्सपृथुलोमवि
लेखः । उत्तरञ्चकिमवापतुरेतोकाननादतिभिराद
पिकाली । अत्रप्रश्नस्यहेकाननादहोतिमिरादपिका
लीत्येतदेवोत्तरम्भवतीत्युत्तरप्रश्नमिदम् ६ २१ यद्वि
धौचनिषेधेचव्युत्पत्तेरेवकारणम्। तद्ध्येयंविदुस्तेन
लोकयात्राप्रवर्तते ॥ १ ॥ काव्यंशास्त्रेतिहासौचकाव्य
शास्त्रन्तथैवच।काव्येतिहासःशास्त्रेतिहासस्तदपिप
ड्विधम् ॥ २ ॥ तेषुकाव्यंयथा। यदिस्मरामितान्तन्वी
ञ्जीवितााशाकुतोमम। अथविस्मृत्यजीवामिजीवित
व्यसनेनकिम्। तदिदमुक्तिप्राधान्यात्काव्यमित्युच्य
ते ॥ ३॥ शास्त्रंयथा। स्निग्धोन्नताग्रतनुताम्रनखौकु
मार्याःपादौसमोपचितचारुनिगूढगुल्फौ। श्लिष्टाङ्
गुलीकमलकान्तितलौचयस्यास्तामुद्वहेद्यदिभुवोधि
पतित्वमिच्छेत्। अत्रस्निग्धत्वादेःशब्दस्यप्राधान्य
मितिशासनाच्छास्त्रमिदम् ॥ २ ॥ इतिहासोयथा।

हिरण्यकशिपुर्दैत्योयांयांस्मित्वाप्युदैक्षत। भयादूभ्रान्तैःसुरैश्चक्रेतस्यैतस्यैदिशेनमः। सोयमतीतार्थप्राधान्यादितिहासः। काव्यशास्त्रंयथा। नान्दीपदानिरतनाटकविघ्नशान्ता वाज्ञाक्षराणिपरम।थ्ययथवास्मरस्य। दृष्टेधरेप्रणयिनाविधुताग्रपाणिसीत्कारशुष्करुदितानिजयन्तिनार्याः। अत्रकाव्येनशास्त्रमभिहितमितीदङ्काव्यशास्त्रम् ॥४॥ काव्येतिहासोयथा। स सञ्चरिष्णुर्भुवनान्तरेषुयांयदृच्छयाशिश्रयदाश्रयःश्रियाम्। अकारितस्यैमुकुटोपलस्खलत्करैस्त्रिसन्ध्यंत्रिदशैर्दिशेनमः। अत्रप्रागुक्तस्यैवेतिहासार्थस्यकाव्येनाभिधानात्काव्येतिहासमिदम् ॥५॥ शास्त्रेतिहासोयथा। धर्मेचार्थेचकामेचमोक्षेचभरतर्षभ।यदिहास्तितदन्यत्रयन्नेहास्तिनतत्क्वचित्॥ अत्रधर्मार्थकाममोक्षाणामितिहासनिवेशितत्वादयंशास्त्रेतिहासः ॥६॥ श्रव्यन्तत्काव्यमाहुर्यन्नेक्ष्यतेनाभिधीयते। श्रोत्रयोरेवसुखदम्भवेत्तदपिषड्विधम् ॥१॥ आशीर्नान्दीनमस्कारोवस्तुनिर्देशइत्यपि। आक्षिप्तकाध्रुवाचेतिशेषोध्येयम्भविष्यति ॥२॥ तत्राशीर्यथा। भूयाद्वःश्रेयसेदेवःपार्वतीदयितोहरः।पातुवःपरमञ्ज्योतिरवाङ्मनसगोचरः। अत्राशंसायांलिङ्लोट्चतादिदंवाक्यद्वयमाशीः॥३॥नान्दीयथा। भद्दम्भोदुसरस्सईअकइणोणन्दन्तुवासाइणोअस्साणम्पिपरम्पअट्ठदुवरावाणीच्छइल्लपिआ। वच्छोमीतहमाअहीफुरदुणोसाकिंअपञ्चालिआरीदीओविलिहन्तुकव्वकुस

लाजोह्लंचओराविअ । सेयंरङ्गमङ्गलान्तःस्वस्त्यय
नव्नान्दी २॥ नमस्कृतिर्यथा। जयतिब्रह्मभूःशम्भुर्व
न्दे महिमहेश्वरम् । इदङ्गुरुभ्यःपूर्वेभ्योनमोवाकम्प्र
शास्महे । सेयंस्तुतिर्नमस्क्रियाचनमस्कृतिरेवभवति
॥३॥ वस्तुनिर्देशोयथा। अस्त्युद्दामजटाभारभ्रान्तग
ङ्गाम्बुशेखरः। आदिदेवोहरोनामसृष्टिसंहारकारण
म् । सोयङ्कथाशरीरव्यापिनोवस्तुनोनायकस्यनिर्दे
शोवस्तुनिर्देशः॥४॥ आक्षिप्तिकायथा। पअपीडि
अमहिसासुरदेहिहिभुअणभअन्धआरससिलेहहिम्।
सुरसुहदेत्तवलिअधवलच्छिहिअइमहासुरअणुम
हलच्छिहिम्। सेयमधिगतिसतरागविशेषप्रयोगमात्र
लवचनमाक्षिप्तिका॥५॥ ध्रुवायथा। मअवहाणिमत्त
गिगाअमइन्दसुणइगुहांणरऊण।लद्धावसरोगहिऊ
णमोत्तिआइङ्गओघाहो।सेयम्पात्रप्रवेशरसानुसन्धा
नादिप्रयोजनाध्रुवा॥६॥ २३॥ यदाङ्गिकैकनिर्वर्त्यमु
ज्झितंवाचिकादिभिः।नर्त्तकैरभिधीयतप्रेक्ष्यमाक्ष्वे
डिकादितत्॥१॥ तल्लास्यन्ताण्डवञ्चैवच्छलिकंस
म्पयासह।हल्लीसकञ्चरासञ्चषट्प्रकारम्प्रचक्षते॥२
तेषुलास्यंयथा। उल्लिउत्रालिपिअपन्थहिंजन्तउपे
क्खमिहत्थहोइजइलोअणवन्तउ। तदिदंश्रृङ्गाररसप्र
धानत्वाल्लास्यम्॥१॥ ताण्डवंयथा। सुअवधवइअ
रणिसुणिअदारुणरोसविरुद्धपहरस्राहिरारुणु। जलि
उणाहणहरिउसन्तावणु। अणलसरिच्छुजेहोइमहा
रणु। इदंवीररसप्रधानत्वात्ताण्डवम्॥२॥ छलिकंय

था।णिसुणिउपच्छान्तुरघ्ररउभुखिडहिंसिहसन्ति।णि
अकन्तडाढजुअलेहिम्पुणुपुणुणअणघलन्ति। इदन्तु
शृङ्गारवीररसप्रधानत्वाच्छलिकम्॥३॥ सम्पायथा।
थीहेमिहरिमुहिअउहोहिमङ्गलेलेहिसहम्।कन्दइवि
हासुरुमारिउकण्ठुवलिउणपइम्। तदिदञ्छलिकमेव
किन्नरविषयसम्पा॥४॥ हल्लीसकंयथा। चन्दणघूस
रङ्गआहुल्लिअलोअणअंहासपरम्मुहअंगीसासकिला
सिअअन्दुम्मणदुम्मणअंसङ्ग।मिअुमराडणअम्। मा
णिणिआणणअङ्किन्तुभूभङ्करठिअअम्। मण्डलेन
तुयास्त्रीणान्नृत्यंहल्लीसकन्तुतत्। तत्रनेताभवेदेको
गोपस्त्रीणांहरिर्यथा हल्लीसकमिदम्॥५॥ रासोयथा।
अइदुम्मणदुम्मणअअज्जकिणोपुच्छामितुमम्। ण
जिविज्जइजेणविणासोपलिहिज्जइकीसजणो। त
दिदंहल्लीसकमेवतालबन्धविशेषयुक्तंरासएवेत्युच्यते
॥६॥ अङ्गवाक्सत्वजाहार्यःसामान्यश्चित्रइत्यमी। ष
ट्चित्राभिनयास्तद्वदभिनेयंवचोविदुः॥१॥ तेष्वाङ्गि
काभिनयवद्यथा। दोर्दण्डाःक्वधृताङ्गदाःक्वचशिरान
द्धोभुजौद्वाविमौवक्त्राणिक्वनुकान्तिमन्तिवलिमरक्वे
दम्मैकम्मुखम्। वाचस्ताःक्वजितार्णवध्वनिघनाः
क्वायंवचःसंयमो हेलाकम्पितभूधरःक्वचरणन्यासः
क्वमन्दागतिः। अत्राङ्गिकाभिनयानांमरतिपादित
त्वादिदमाङ्गिकाभिनयम्॥१॥ वाचिकाभिनयवद्य
था। दुर्वारांमदनशरव्यथांवहन्त्यातन्वङ्ग्यायद
भिहितम्पुरःसखीनाम्। तद्भूयःशिशुशुकशारिका

भिरुक्तन्धन्यानांश्रवणपथातिथित्वमेति । अत्रवा
चिकाभिनयानाम्प्रतिपादनादिदंवाचिकाभिनयम्॥२
सात्विकाभिनयवद्यथा। वारंवारन्तिरयतिदृशोरुद्ग
मम्बाष्पपूरस्तत्सङ्कल्पोपाहितजडिमस्तम्भमभ्येति
गात्रम्। सद्यःस्विद्यन्नयमविरलोत्कम्पलोलाङ्गुली
कःपाणिर्लेखाविधुषुनिलरांवर्त्ततेकिङ्करोमि। अत्रवा
ष्पजाड्यस्तम्भस्वेदकम्पानाम्प्रतिपादितत्वादिदंसा
त्विकाभिनयम्॥३॥ आहार्याभिनयवद्यथा। चूडाचु
म्बितकङ्कपत्रमभितस्तूणी द्वयम्पृष्ठतोभस्मस्तोकप
वित्रलाञ्छनमुरोधत्तेत्वचंरौरवीम्। मौर्व्यामेखलया
नियंत्रितमधोवासश्चमाञ्जिष्ठकम्पाणौकार्मुकमक्षसू
त्रवलयेदण्डोपरःपैप्पलः। अत्राहार्याभिनयानाम्प्र
तिपादितत्वादिदमाहार्याभिनयम्॥४॥सामान्याभि
नयवद्यथा। राहोश्चन्द्रकलामिवाननचरीन्दैवात्स
मासाद्यमेदस्योरस्यकृपाणपातविपयादाच्छिन्दतः
प्रेयसीम्॥ आतङ्काद्विकलंद्रुतङ्करुणयाविक्षोभितंवि
स्मयात्क्रोधेनज्वलितम्मुदा विकसितञ्चेतःकथंवर्त्त
ताम्। अत्रचतुर्णामभिन यानाम्प्रयोगादिदंसामा
न्याभिनयम्॥५॥ चित्राभिनयवद्यथा। व्यतिकरइ
वभीमस्तामसोवैद्युतश्चक्षणमुपहतचक्षुर्वृत्तिरुद्भूय
शान्तः। कथमिहनवयस्यस्तत्किमेतत्किमन्यत्प्रभ
वतिहिमहिम्नास्वेनयोगेश्वरीयम्। अत्रहस्ताध्यायप
दाध्याययोःकथितत्वाच्चित्राभिनयमिदम्॥५॥ चत
स्रोविंशतिश्चैताःशब्दालङ्कारजातयः।शब्दसन्दर्भमा
त्रेणहृदयंहर्तुमीशते ॥ ६ ॥ इतिद्वितीयःपरिच्छेदः

## सटीके सरस्वतीकण्ठाभरणे तृतीयः परिच्छेदः ।

श्रीगणेशायनमः ॥

अलमर्थमलङ्कर्तुं येव्युत्पत्त्यादिवर्त्मना । ज्ञेया जात्यादयः प्राज्ञैस्तेऽर्थालङ्कारसंज्ञया ॥ १ ॥ जातिर्विभावनाहेतुरहेतुः सूक्ष्ममुत्तरम् । विरोधः सम्भवोऽन्योन्यं परिवृत्तिर्निदर्शनम् ॥ २ ॥ भेदः समाहि

---

धोमस्फुरितचूडेन्दुखण्डमकरविभ्रमाः ॥ तावडवाडम्बरेगम्भीरदृक्पाताः पुनन्तु वः ॥ १ ॥ विविच्यमानगम्भीरमूलग्रन्थाकुलान्प्रति ॥ वृत्तोप्यतः परंव्याख्यासंक्षेपेणनिगद्यते ॥ २ ॥ क्रमप्राप्तार्थालङ्कारलक्षणायपरिच्छेदारम्भः । तत्रविभागोपयुक्तंसामान्यलक्षणमाह । अलमर्थमिति । विशिष्टावुत्पत्तिर्व्युत्पत्तिर्जातिरवच्छेदकः प्रकारः । आदिशब्दाद्विविधशक्तिप्रतिबन्धादयोविभावनाद्यवच्छेदकायोविंशतिः । अर्थालङ्कारसंज्ञयेति । अर्थशोभानिवृत्तिहेतुर्विच्छित्तिरर्थालङ्कारइतिस्फुटलक्षणम् ॥ १ ॥ विभागन्दर्शयति । जातिरिति ॥ २ ॥ प्रत्यक्षानुमानोपमानशब्दार्थापत्त्यभावाख्यानिजैमिनेःप्रमाणानिषट् । तेनैवक्रमेणलक्षणान्याख्यातुमत्यक्षपूर्वाणीत्युक्तम् । साहित्यस्यसर्वपारिषद्यत्वान्नानादर्शनरीत्युपजीवनमुचितमेव ॥ ३ ॥ नात्स्येवासावर्थालङ्कारोयःस्वरूपमाश्रयतइतिप्राथम्यञ्जातेरेवेत्याह । नेति । कालकृतोविशेषोवस्था । तामधिकृत्यजायन्तेवस्तुस्वरूपव्यभिचारिणउत्पद्यन्ते । नन्वेवं"यएतेयज्वानःप्रथितमहसोयेप्यवनिपामृगाल्योयाश्चैताःकृतमपरसंसारकथया । अहोयेचाप्यन्येफलकुसुमनम्राविटपिनोजगत्येयंरूपातिलसतिमृदेषाभगवति,,इत्यादावपिजातित्वंस्यादित्यतआह । स्वेभ्यःस्वेभ्यइति । स्वभावभूतानीत्यर्थः । कविप्रतिभामात्रप्रकाशनीयरूपोदृक्कनञ्जातिरितिलक्षणम् । लौकिकविकल्पविषयोपिप्रतिभयाभासतएव । यदाह । रसानुगुणशब्दार्थचिन्तास्तिमितचेतसः । क्षणंविशेषस्पर्शोत्थोप्रज्ञैवप्रतिभाकवेः । सहि

तम्भ्रान्तिर्वितर्कोन्मीलितस्मृतिः ॥ भावमत्यक्षपू
र्वाणिप्रमाणानिचजैमिनेः ॥ ३ ॥ तेषु । नानाव
स्थासुजायन्तेयानिरूपाणिवस्तुनः । स्वेभ्यःस्वे
भ्योनिसर्गेभ्यस्तानिजातिंप्रचक्षते ॥ ४ ॥ अर्थ
व्यक्तेरियम्भेदमियतांप्रतिपद्यते । जायमानमियं
वक्तिरूपंसासार्वकालिकम् ॥ ५ ॥ स्वरूपमाश्रयो
हेतुरितितद्भेदहेतवः । तेसंस्थानादयस्तेषुसाविशे
षेणशोभते ॥ ६ ॥ तत्रस्वरूपंसंस्थानमवस्थान
न्तथैवच । वेषोव्यापारइत्याद्यैःप्रभेदैर्बहुधास्थि
तम् ॥ ७ ॥ मुग्धाङ्गनार्भकास्तिर्यञ्चीचपात्राणिचा
श्रयः । देशःकालश्चशक्तिश्चसाधनानिचहेतवः ८ ॥

चतुर्भंगचलस्तृतीयल्लिलिगीयते । येनसाक्षात्करोत्येषभावास्त्रैलोक्यव
र्त्तिनइति ॥ ४ ॥ उक्तमेवविशेषकमभिसन्धायाह । अर्थव्यक्तेरिति ।
वस्तुस्वरूपोल्लेखनरूपायंव्यक्तिरर्थगुणेषूक्ता । तत्रसार्वकालिकंरूपमु
पजनापायान्तरालव्यापकमित्यर्थः । अन्यत्तुजायमानमागन्तुनिमित्तं
समवधानप्रभवंव्यभिचरितमित्यर्थः । विच्छित्तिप्रकारयोरसङ्करात्पृथ
क्शोभार्पणाच्चयुक्तोव्यतिरेकस्तेनस्वभावोक्तिरेवार्थव्यक्तिरितियत्कैश्च
चिदुक्तन्तदपास्तम् ॥ अतएवजात्यन्तरप्रकाराणामपिपृथगलङ्कारता
स्यादितिनयुक्तमवान्तरवचसैवव्याघातात् । नहिसामान्यविशेषयो
र्विभागोभवति ॥ ५ ॥ स्वरूपमिति । आश्रयविशेषहेतुविशेषव्यतिरि
क्तोवच्छेदकप्रकारःस्वरूपम् । एतदेवविभजते । तेसंस्थानादयइति ।
ननुकिमनेनप्रपञ्चेनपूर्वाभिहितरूपमात्रस्यैवजातित्वादित्यतआह ।
तेषुसेति । विशेषेणशोभाहेतुरेवह्यलङ्कारोस्तिचात्रतथाभावइतिभा
वः ॥ ६ ॥ तत्रस्वरूपन्द्विधा । शरीरावयवसन्निवेशलक्षणमतादृशञ्च ।
आद्यमपिबुद्धिकारितमतथाभूतञ्च । तदेतदाह । तत्रस्वरूपमिति ।
आदिपदेनवृक्षादिस्वरूपपरिग्रहः ॥ ७ ॥ शक्तिःपदार्थानांसामर्थ्यं

॥ तेषुसंस्थानंयथा ॥ सदक्षिणापाङ्गनिविष्टमुष्टि
न्नतांसमाकुञ्चितसव्यपादम् । ददर्शचक्रीकृतचा
रुचापम्प्रहर्तुमभ्युद्यतमात्मयोनिम् ॥ अत्रधनु
र्धरेणैवमङ्गानिसम्यक्बुद्धिपूर्वकंस्थापनीयानीतिसं
स्थानमिदञ्जातिभेदः ॥ अवस्थानभेदेनयथा ।
पादावष्टम्भनम्रीकृतमहिषतनोरुल्लसद्बाहुमूलं शूल
म्प्रोल्लासयन्त्याःसवलितवपुषोमध्यभागस्यदेव्याः
विश्लिष्टस्पष्टदृष्टोन्नतविरलवलिव्यक्तगौरान्तराला
स्तिस्रोवःपान्तुलेखाक्रमवशविकसत्कञ्चुकप्रान्त
मुक्ताः । अत्रस्त्रियाःशूलप्रोल्लासनादौव्यापारेबुद्धि
कारितमपिशरीरावस्थानमीदृशञ्जायतइतीदम
वस्थानन्नामजातिभेदः ॥ २ ॥ वेषोयथा । छण
पिठ्ठधूसरत्थणिमहुमअअम्बच्छिकुवलआहरणे ।
कणकअचूअमञ्जरिपुत्तितुएमण्डिओगामो * अ
त्रवसन्तोत्सवेग्रामतरुणीनामयंवेषोजनमनःप्रमो

म् । साधमानिकर्त्रादीनिषट् ॥ ८ अत्रधनुर्द्धरेणेति । तदुक्तम् अ
पाङ्गेदक्षिणामुष्टिंवामंविन्यस्यलक्ष्यके । पादमाकुञ्चयेद्वामंलक्ष्येनिश्च
ललोचनइति । अत्रसर्वस्यैवधनुर्द्धरस्यैवंविधशरीरावयवसन्निवेशोभ
वतिनकामस्यैवेतिनात्रयविशेषोविवक्षितः । एवमुत्तरत्रापि ॥ १ ॥
पादावष्टम्भेति । उल्लसद्बाहुमूलमितिप्रोल्लसनक्रियाविशेषणम् । सं
वलितवपुषाइतिमध्यभागविशेषणम् । अतएववलीनांविश्लेषोमिथो
विभागः । उपरिशरीराकर्षणात्कञ्चुकप्रान्तापसरणम् । मुसलोल्लास
नादौदृष्टमिदमबुद्धिजमेवनारीणांरूपमितिभगवतीविषयेप्रतिबिम्ब
नमतिस्फुटमेव । तदाहआदाविति ॥ २॥ अत्रवसन्तोत्सवइति । य
द्यप्यत्रकालःपात्रंचास्तितथापि संवाल्लक्षणमतलिम्फविवरणराहहत्रम्बि

* चणपिष्टधूसरस्तनि मधुमदनाम्राक्षिकुवलयाभरणे ॥

दायजायतइतिवेषोनामायडजातिभेदः ॥ ३ ॥
व्यापारोयथा । अग्रगतेनवसतिम्परिगृह्यरम्यामा
पात्यसैनिकनिराकरणाकुलेन । यान्तोन्यतःप्लुतकृ
तस्वरमाशुदूराद्दुद्धाहुनाजुहुविरेमुहुरात्मवर्ग्याः । अ
त्रतादृशिव्यापारव्यापृतानामीदृशमेवस्वरूपडजाय
तइतिव्यापारनामायडजातिभेदः ॥ ४ ॥ आश्रये
षुमुग्धयुवतिर्यथा । सहिआहिंमणमाणाथणएल
ग्गडुकुसुम्भउप्फन्ति । मुद्धवहुआहसिज्जइपप्फो
डन्तीगहवइआइम् ॥ * अत्रमुग्धवध्वाश्रितक्रियास्व
रूपवर्णनादियम्मुग्धाङ्गनाश्रिताजातिः ॥ ५ ॥ अ
र्भकाश्रितायथा । आक्रोशन्नाह्वयन्नन्यानाधावन्
मण्डलंरुदन् । गाःकालयतिदण्डेनडिम्भःसस्या
वतारिणीः । अत्रार्भकाश्रितव्यापारस्वरूपोक्तेरि
यमर्भकाश्रिताजातिः ॥ ६ ॥ तिर्यगाश्रयायथा ।

---

रद्धजघालालङ्कुन् । शिथिलाश्वसंसवाग्ररम्भिसारेद्वरक्ताथि । य
त्वादीनवङ्करःकादाचित्कस्त्वसौगुणएव । वेपस्यकथंरञ्जकतेत्यपेक्षि
यते । तत्राह । जनकनःप्रकोठायेति । रुच्यर्थित्वमनुत्पत्तौभास्नाति
पतगतानामनुवक्तृत्वादितिभावः ॥ ३ ॥ अग्रेगतेनेति । अग्नीन्द्रानुमि
तियद्यप्यवस्थानमस्तितथापितत्परिहारेणोदाहरणमसङ्कीर्णम् । स
हिआहिंमणमाणाथणएलग्गडुकुसुम्भपुप्फम्मि । मुद्धवहुआहसिज्जइप
प्फोडन्तीगहवइआइम् ॥ इत्यत्रैकस्याःकदाचिद्विलक्षणेदमपिवाक्य
म्बहूनाम्तुनेतिबहुवचनस्वरसः । कुसुम्भकेसरास्तुस्तनेवारंवारमसौहि
श्रम्भविशतीतिसम्भावना । मुग्धाअपरिशीलिताभिमानिकसुखावधूः
प्रथमपरिणीता । प्रस्फोट्यमानमपित्वयानापसरतीत्युक्तेवसौकुमा
र्यमितिपाटुगर्भंहसितमतएवप्रियतयातस्यानुबन्धोवर्त्तमाननिर्देशेन

* सखीभिर्भण्यमानास्तनयोर्लग्नं कुसुम्भपुष्पन्ते ॥

लीढव्यस्तविपाण्डुराग्रनखयोराकर्णदीर्णम्मुखंविन्य
स्यायग्रिमयोगेचरणयोस्सद्योविभिन्नद्विपः । एत
स्मिन्मदगन्धवासितवटःसावज्ञतिर्यग्वलत्सृक्कान्ता
हतिधूतलोलमधुपःकुञ्जेषुशेतेहरिः ॥ अत्रसिंहस्व
रूपभणनादियन्तिर्यगाश्रयाजातिः ॥ ७॥ नीचाश्र
यायथा । भद्रन्तेसदृशंयदध्वगशतैःकीर्तिस्तवोद्घु
ष्यतेस्थानेरूपमनुत्तमंसुकृतिनादानेनकर्णोजितः ।
इत्यालोच्यचिरन्दृशाकरुणयाशीतातुरेणस्तुतः पा
न्थेनैकपलालमुष्टिरुचिनागर्वायतेहालिकः ॥ अत्र
हीनपात्रहालिकस्वरूपोक्तिरियन्नीचाश्रयाजातिः ॥
८ ॥ अथहेतवः । तेषुदेशोयथा । इमास्ताविन्ध्या
द्रेःशुकहरितवंशीवनघनाभुवःक्रीडालोलद्विरदरद
नारुग्णतरवः । लताकुञ्जेयासामुपनदिरतक्लान्त
शबरीकपोलस्वेदाम्भःपरिचयनुदोवान्तिमरुतः ।
अत्रविन्ध्याद्रेरीदृशेषुप्रदेशेषुइत्थम्भूतावायवोवा
न्तीतिहेतुत्वेनोक्तत्वाद्देशस्यदेशहेतुर्जातिरियम् १

---

च्यते । एतदपिसोदाहरणव्याख्यानेक्रियाव्यापारग्रहणमुपलक्षण
मतोनव्यापारसङ्करः । अन्येत्वाहुः । आश्रयावच्छेदेनबहिर्भावोत्रभे
दहेतुरिति ॥ ४ ॥ ५ ॥ ६ ॥ लीढेति । व्यस्तंविगलद्रुधिरम् । साव
ज्ञन्तिर्यक्वलन्तीयेसृक्किणीताभ्यामाहताइतिसम्बन्धः । यथैकत्रकुञ्जे
स्वपतःस्वरूपन्तथान्यत्रापीतिबहुवचनरहस्यम् । अतएवनदेशहेतुश
ङ्का । अत्रसिंहेति । मदवासनयाविशेषितत्वादितिभावः ॥ ७ ॥ भ
द्रन्तइति । करुणाकार्पण्यव्यञ्जकविशेषशालिनी । गर्वायतेअगर्वो
नेवगर्ववान्भवति । भृशादीलक्षत्वादेर्मत्वर्थलक्षणत्वात् ॥ ८ ॥ इमा
स्ताइति । देशविशेषमुद्दिश्यमरुतांविधानमुद्देश्यस्यचविधौहेतुभावः।

कालहेतुर्यथा। कम्पन्तेकपयोभृशञ्जलकृशङ्गोजावि कङ्ग्लायतिश्वाचुल्लीकुहरोदरंक्षणमपिक्षिप्रोपिनै वोज्झति। शीतार्तिव्यसनातुरःपुनरयन्दीनोजनः कूर्मवत्स्वान्यङ्गानिशरीरएवहिनिर्जनिह्नोतुमाकाङ्क्षति। अत्रहेमन्तहेतुकस्तिर्यगाद्याश्रयव्यापारस्वरूपोक्तेरियङ्कालहेतुर्नामजातिः॥ १० ॥ शक्तिर्यथा। बध्नन्नङ्गेषुरोमाञ्चङ्कुर्वन्मनसिनिर्वृतिम्। नेत्रेनिमीलयन्नेषप्रियास्पर्शःप्रवर्तते। अत्ररोमाञ्चबन्धादिषुप्रियास्पर्शप्रवृत्तेर्निमित्तस्योक्तत्वादियंशक्तिहेतुर्नामजातिः॥ ११॥ साधनहेतुर्यथा। उपनिहितहलीषासार्गलद्वारमारात्परिचकितपुरन्ध्रीसारिताभ्यर्णभाण्डम्। पवनरयतिरश्चीर्वारिधाराःप्रतीच्छन्विशतिवलितशृङ्गःपामरागारमुक्षा।अत्र जायमानक्रियाहेतुभूतयोःकर्तृकर्मणोःसाधनयोःस्वरूपवर्णनादयंसाधनहेतुर्नामजातिभेदः॥ १२॥

---

वंशीवनानान्दुष्प्रवेशतयाल्लताम्मन्दीभावोद्भिर दैस्तरुभङ्गादवकाशलाभेप्रगल्भत्वमतःक्रमस्वेदापनयनसामर्थ्यन्देतस्सर्वमाह। अत्रविन्ध्याद्रेरिति॥९॥ गोजाविकमिति। विभाषावृक्षमृगेत्यादिनापाक्षिकएकवद्भावः। अत्रहेमन्तेति। यद्यपितिर्यगाश्रयेयञ्जातिः। तथापिहेतोरधिकस्यप्रवेशात्पृथग्भावः। सङ्करस्तुनदुष्यति॥१०॥ रोमाञ्चबन्धादिष्विति। बध्नन्नित्यादौशतृप्रत्ययेनकर्त्ताभिधीयतेसचसामानाधिकरण्यात्स्पर्शएव। स्पर्शत्वाविशेषेतुशक्तिरेवप्रयोजिकावाच्येत्यर्थः॥ ११ ॥ उपनिहितेति। अगारद्वारस्यहलीशावरुद्धतयादुष्प्रवेशत्वमतएवबहिस्थिरंविलम्बात्। प्रत्येषणवेशनयोर्वर्त्तमानता। उपलक्षणञ्चैतत्तेनकरणादयोप्युदाहार्याः॥ १२ ॥ १ ॥ पक्षेस्वभावपर्यवसा

प्रसिद्धहेतुव्यावृत्यायत्किञ्चित्कारणान्तरम् । य
त्रस्वाभाविकंवापिविभाव्यंसाविभावना ॥ १ ॥
शुद्धाचित्राविचित्राचत्रिविधासानिगद्यते । शुद्धाय
त्रैकमुद्दिश्यहेतुरेकोनिवर्त्तते ॥ २ ॥ अनेकोयत्रसा
चित्राविचित्रायत्रतांप्रति । तयान्ययावागीर्भङ्ग्या
विशेषःकश्चिदुच्यते ॥ ३ ॥ तत्रकारणान्तरविभाव
नायांशुद्धायथा । अपीतक्षीबकादम्बमसम्मृष्टाम
लाम्बरम् । अप्रसादितसूक्ष्माम्बुजगदासीन्मनो
हरम् । अत्रैकैकङ्कादम्बादिकमुद्दिश्यक्षीबतादेःपी
तत्वादिरेकैकःप्रसिद्धहेतुर्व्यावर्त्यते । हेत्वन्तरञ्च
शरत्प्रभावोविभाव्यते । सेयंशुद्धानामकारणविभा
वनायांविभावना ॥ १ ॥ स्वाभाविकत्वविभावना

---

नसन्तीतिजातेःकिञ्चिदपकृष्टांविभावनांविभावयितुमाह । प्रसिद्धेति
प्रसिद्धस्पर्शहेतोर्विभाव्यतयाप्रसिद्धग्रहणान्नियमेनतद्भावापत्तिमूलत्व
स्यास्यात्तेननविरोधः । तथाहियमहमवहित्थतुङ्गमित्यादौवट्टनज
न्यमन्यदेवतुङ्गत्वमन्यच्च पारमेश्वरमाजानिकमितितयोरभेदाध्यवसा
यः । एतदेवाभिसन्धायकाश्मीरकैरतिशयोक्तिरस्यामूलमुक्ता । यदि
दितिनिपातोयत्रार्थे । यद्यपिकारणाभावेपिकार्योत्पत्तिरित्येवलक्षण
न्तथापिमहासंज्ञाकरणप्रयोजनङ्किमित्याशङ्कायान्द्वयंविभाव्यमाह ।
तद्द्वयमत्रसंक्षेपोयथोक्तातावद्विभावना । साद्वयी । कारणान्तरपर्यव
सितास्वभावपर्यवसिताचेति ॥ १ ॥ २ प्रत्येकञ्चशुद्धादिभेदात्षोढास
म्पद्यतइत्येतावतैवविभावनाशरीरनिष्पत्तेः । यथावर्णोवर्णेनकरम्बि
तश्चित्रस्तथाविभावनापिविभावनयातादृशीचित्रेत्याह । अनेकइति ।
यथाचस्वरूपसम्पादकातिरिक्तविशेषप्रवेशाद्विचित्राः स्रग्दामादयस्त
थेयमपीतिदर्शयति । विचित्रायत्रेति । तांविभावनाम् । तयाविभाव
नया । अन्ययेतिअलङ्कारान्तररूपया ॥ ३ ॥ पीतम्पानम् । सूक्ष्म

यांशुद्धायथा । अनञ्जितासितादृष्टिर्भ्रूरनावर्जिता नता । अरञ्जितारुणश्चायमधरस्तवसुन्दरि ॥ अत्रैकैकन्दृष्ट्यादिकमुद्दिश्यासितत्वादेरनञ्जितत्वादिरकैकोहेतुर्व्यावर्त्यते । स्वाभाविकत्वञ्चासितत्वादिदृष्ट्यादेर्विभाव्यते । सेयंशुद्धानामस्वाभाविकविभावनायांविभावना ॥ २ ॥ कारणान्तरविभावनायांचित्रायथा । असम्भृतम्मण्डनमङ्गयष्टेरनासवाख्यङ्करणम्मदस्य । कामस्यपुष्पव्यतिरिक्तमस्त्रं बाल्यात्परंसाथवयःप्रपेदे । अत्रैकमेववयोलक्षणम्पदार्थमुद्दिश्याप्यनेकोमण्डनादेःप्रसिद्धोहेतुःसम्भृतत्वादिर्व्यावर्त्यते । कारणान्तरञ्चस्तनोद्भेदधातूपचयलावण्यलक्ष्मीलाभादिर्विभाव्यते । सेयञ्चित्रानामकारणान्तरविभावना ॥ ३ ॥ सैवस्वाभाविकत्वविभावनायांयथा । णमहअविहिअतुङ्गंअविसारिअविरथअंअणोणअङ्गहिरम् । अप्पलहुअपरिरुह्लंअणाअपरमत्यपाअडम्महुमहणम् ॥ * अत्रै

निर्मलम् । भरतभावइति । प्रस्तावौचितीव्यामभिव्यक्तः ॥ १ २ ॥ असम्भृतमिति । ननुमण्डनस्यसम्भरणपूर्वकतयाप्रसिद्धेरस्तुविभावना । अनासवाख्यङ्करणम्मदस्यकामस्यपुष्पव्यतिरिक्तमस्त्रमित्यत्रतु कथम् । तथाहि । करणमितिकरणेभालेवाल्युट् । आद्येमदस्यकरणमासवोयपस्तुततोभिन्नमितिकदाचिद्व्यतिरेकःस्यान्नतुविभावना । द्वितीयेपिवयोमदस्यक्रियाआसवनाम्नीनभवतीतिनसङ्गतम् । एवम्पुष्पव्यतिरिक्तमस्त्रमित्यत्रापिविकल्पद्वयायायमन्दूषणंवाच्यं । तत्कथमेतत् । उच्यते । करणञ्क्रियाआसवमाख्यातीत्यासवाख्यम् । ख्यापयतस्प्रत्ययविधिः । भतथाभूतमनासवाख्यम् । हेतुतयानक्कचिदास

* नमत अतद्वितततङ्गमविसारित विरतत मन्यूनगभीरम् ॥

कमेत्रमधुमथनमुञ्चियद्वानेकस्तुङ्गत्वादेःप्रवृद्धत्वादिः प्रसिद्धोहेतुर्व्यावर्त्यते। स्वाभाविकत्वञ्चतम्प्रत्येषां विभाव्यते । सेयञ्चित्रानामस्वाभाविकत्वविभाव नायांविभावना ॥ ४ ॥ तथैवगीर्भङ्ग्याविचित्रा यथा । वक्त्रन्निसर्गसुरभिवपुरव्याजसुन्दरम् । अ कारणरिपुस्तस्यानिर्निमित्तंसुहृन्मे । अत्रोत्तर योर्विरहसमागमादिकारणान्तरविभावनयोः स्वा भाविकीभ्याम्प्राग्विभावनाभ्यां यथासङ्ख्यंविशेषउ क्तः । सेयंविभावनयैवविभावनायांविशेषोक्तेस्त यैवगीर्भङ्ग्याविचित्रानामविभावनाभवति५। सैवा न्ययागीर्भङ्ग्यायथा । वनेचराणांवनितासखाना न्दरीगृहोत्सङ्गनिषक्तभासः । भवन्तियत्रौषधयोर जन्यामतैलपूराःसुरतप्रदीपाः । अत्रातैलपूराःसुर तप्रदीपाइति स्वाभाविकत्वविभावनायांशेषपदा र्थैरविभावनारूपैर्विशेषउक्तः। सेयमन्ययागीर्भङ्ग्या विचित्रानामविभावनाभवति ॥ ६ ॥ क्रियायाःका णंहेतुःकारकोज्ञापकश्चमः । अभावश्चित्रहेतुश्चच तुर्विधइहेष्यते ॥ १ ॥ यःप्रवृत्तिन्निवृत्तिञ्चप्रयु

ववोधलक्षम् । तथाहेतुप्रतिषेधएवभङ्ग्यादर्शितोभवति। अस्त्रमपि क्रियारूपन्तत्पुष्पव्यतिरिक्तम्पुष्पच्युतंविनापुष्पेभ्यइतिपूर्ववन्नेयम् । स्तनोद्भेदेत्यादौनार्थसन्देहः ॥ ३ ॥ ४ ॥ वक्त्रन्निसर्गसुरभीति । तस्यायथोक्तेवक्त्रवपुषीममाकारणरिपुर्निर्निमित्तमसुहृन्मेत्यन्वयोवि वक्षितप्रतीतिलाभाच्चनार्थान्तरैकवाचकत्वलक्षणोदोषः । यथासङ् ख्यमिति । तयोरथैकैकम्प्रतिसम्पादनलक्षणविशेषार्पणक्षमत्वात् ५ शेषपदार्थैरितिवनितासखत्वादिभिःसुरताद्युपपादकैः ॥ ६ २ ॥ हे

त्कञ्चान्तराविशन् । उदासीनोपिवाकुर्यात्कारक
न्तत्प्रचक्षते ॥ २ ॥ तेषुप्रवर्तकःक्रियाविष्टोयथाय
अयमान्दोलितप्रौढचन्दनद्रुमपल्लवः । उत्पादय
तिसर्वस्यप्रीतिम्मलयमारुतः । सोयंयथोक्तोमलय
मारुतःप्रीत्युत्पादनक्रियासमावेशात्प्रवर्तकोनामका
रकहेतुभेदः ॥ १ ॥ सएवाक्रियानाविष्टोयथा ।
तस्यराज्ञःप्रभावेनतदुद्यानानिजज्ञिरे । आर्द्रांशुक
प्रवालानामास्पदंसुरशाखिनाम् । अत्रप्रभावःक्रि
यायामनिविशमानएवहेतौतृतीयाम्प्रवर्तयति नक
र्तरीतिक्रियायामनाविष्टकारकहेतुभेदः ॥ २ ॥ नि
वर्तकःक्रियाविष्टोयथा । चन्दनारण्यमाधूयस्पृष्ट्वा
मलयनिर्झरान् । पथिकानामभावायपवनोय
मुपस्थितः । अत्रैवंविधस्यपवनस्यपथिकप्रमाथ
साधनक्रियायाङ्कर्तृत्वेनावेशान्निवर्तकोनामायमा
विष्टक्रियःकारकहेतुभेदः ॥३॥ सएवाक्रियानावि

तुप्रतिषेधोविभावनायामुक्तोऽयहेतुरेवकइत्यपेक्षायांहेतुलक्षणमाह
क्रियायाःकारणंहेतुरिति । उपपत्तौक्रियायामेवसर्वस्यनिमित्तभावो
निरूप्यतइत्यभिसन्धायक्रियायाइत्युक्तमितिकश्चित्तदसत् । द्रव्यगुण
क्रियाविषयेहेतुः क्रियामात्रविषयश्चकारकमितिप्रकीर्णकवृत्तौविभा
गकरणात्क्रियाग्रहणञ्चेहनिष्फलंस्यात् । तस्मादत्रक्रियाम्प्रत्यवधि
भावोनिरूप्यतेतत्रद्वयीगतिर्निमित्तत्वमात्रविवक्षाकारकत्वविवक्षावा
आद्येप्याश्रितावधिभावस्यवस्त्वन्तरपरहेतु भावविवक्षाअवस्तुत्ववि
वक्षावाद्वितीयेपिकारकत्वक्रियानुबन्धिव्यापारत्वम् । प्रधानक्रियानु
कूलक्रियान्तरसमावेशइतियावत् । तद्विविधंशब्दाभिहितमसत्याभूत
ञ्चआद्यङ्कारकविभक्तेर्विषयोद्वितीयंहेतुविभक्तेः द्वयमपिचाक्रियावि

ष्टोयथा । प्रजागरात्खिलीभूतस्तस्याःस्वप्नसमाग
मः । बाष्पस्तुनददात्येनान्द्रष्टुंचित्रगतामपि ।
अत्रसमागमनिवृत्तावाविशमानः प्रजागरस्तृती
यार्थेपञ्चमींप्रयोजयति । बाष्पःपुनर्दानक्रियावे
शाद्दर्शनक्रियायामनाविशन्कर्मसम्बन्धान्नामप्रधा
नभावेनचोपगृह्णाति ॥४॥ प्रयोजकःक्रियाविष्टोय
था । तस्मिन्जीवतिदुर्द्धर्षे हतमप्यहतम्बलम् । ह
नूमत्युज्झितप्राणेजीवन्तोपिमृतावयम् । अत्रबल

षयमेव । षण्णामपिकारकाणांक्रियाघटितमूर्तित्वात् । अवस्तुभूतं
तुनिमित्तमभावात्मकतयानविक्रियते ॥ विकाराभावात्तुनक्रियाविशि
ष्टमतथाभावे । नचकारकमितितृतीयएवप्रकारः प्रसिद्धकार्यकारण
भावविपर्यासेनोपनिबध्यमानोहेतुराश्चर्यकारितया चित्रआरोपितम
पिचहेतुत्वंहेतुत्वमेवेतिभवतिचतुर्थःप्रकारोबहिरसम्भाव्यमानस्या
पिकविप्रतिभासंरम्भोत्थाप्यतयाचमत्कारविशेषार्पणाद्तुर्यैवालङ्का
लङ्कारता । यदाह । कोहिप्रतीतिमात्रकाव्येवस्तुस्थितिम्भावयेदि
ति । तदेतत्सर्वमभिसन्धायविभागमाह । कारकइत्यादि ॥१॥ अ
सतःसत्ताप्रवृत्तिः,सतोऽपगमोनिवृत्तिः,प्रवर्त्तमानस्यप्रवर्त्तनाप्रयुक्ति
र, स्तराविशन्नुपात्तक्रिय,उदासीनोऽतथाभूतः । तेनकारकस्यषट्
प्रकाराः ॥२॥१॥ तस्यराज्ञःप्रभावेनेत्यत्रसदपिकर्तृत्वमविवक्षि
तमतोहेतुमात्रविवक्षायाम्प्राप्तैवतृतीयाभवतीत्याह । हेतौतृ
तीयामिति । करणभावस्त्वसम्भावितएव । प्रभावमात्रस्यतत्क्रिया
व्यभिचारात् ॥२॥ प्रमाथसाधनक्रियायाङ्कर्तृत्वेनेतिनिष्ठाप्रत्ययेनोपा
त्तेनेतिभावः ॥३॥ खिलीभावोनिवृत्तिः । तृतीयार्थइति । हेता
ववधित्वाप्रतीतेरपादानभावेनसम्भावितः । दानक्रियेति । स्यादत्र
दर्शनक्रियासमावेशोयदिदानक्रियांवशःस्यात् । सएवतुनास्तिनञा
निषेधादित्यर्थः ॥४॥ तस्मिन्जीवतीति । जीवनमरणयोर्बलस्यै
वस्वातन्त्र्यंहनूमान्प्रयोजयतिप्रयोजकताचास्यतेएवजीवत्युज्झितप्रा

प्रत्युज्जीवनमरणक्रियया: सप्तमीवाच्यनैमित्तिका धिकरणकारकभावेन हनूमानाविशन्प्रयोजकोभव तीतिक्रियाविष्टोयम्प्रयोजकोनामकारकहेतुभेदः ॥ ५ ॥ सएवक्रियानाविष्टोयथा । मानयोग्याङ्करो मीतिप्रियस्थानस्थितांसखीम् । बालाभ्रूभङ्गजिह्मा क्षीपश्यतिस्फुरिताधरा ॥ अत्रमानाभ्यासक्रियाया भ्रूभङ्गजिह्माक्षिप्रेक्षणादिरूपायाआत्मन्येवात्मनः स मावेशोनभवतीतिक्रियानाविष्टोयमितिशब्दाभि धेयप्रयोजकोनामकारकहेतुभेदः ॥ ६ ॥ द्वितीया चतृतीयाचचतुर्थीसप्तमीत्रयम् । क्रियानाविष्टमा

---

भ्युदितपदाभ्यामुपात्त । कतमत्कारकमिदम्भवतीत्याह । सप्तमीवाच्ये ति । ननुचाङ्गुल्यग्रेमदकलघटान्दर्शयन्तीवघूनाङ्इत्यादौकाल्यनिका दावपिसप्तमीभावात्कारकतेत्यतआह । नैमित्तिकेति । अन्य स्यासम्भवादितिभावः ॥ ५ ॥ मानयोग्यामिति । भ्रूभङ्गजिह्माक्षिस्फु रिताधरादिप्रेक्षणरूपायाम्मानाभ्यासक्रियायासमीबालायाः स्वात न्त्यम् । तादृशींन्तुलामितिशब्दनिर्दिष्टश्योभिप्रायविशेषःप्रयुङ्क्तेतस्य तुनक्रियान्तरमुपात्तमुपात्तायास्तुमानक्रियायाः स्वात्मनिसमावेशोनु पपन्नः । अभिप्रायोपिहिव्यापारप्रचयरूपक्रियान्तर्भूतएव । यदाह महाभाष्यकारःयाकिञ्चित्तदभिसन्धिपूर्वकम्प्रेक्षणमध्येषणंवातत्सर्वस्य च्यर्थइति । स्मरणादिकञ्चास्यव्यापारःसम्भवतीत्यतोनाकारकत्वंवा च्यम् । तदेतदभिसन्धायाह । आत्मन्येवात्मनइति ॥ ६ ॥ इहपञ्चै वलक्षणेविभक्तयोविहितास्तथा अनुर्लक्षणेलक्षणेत्थम्भूतेत्यादिनास ञ्ज्ञांविधायकर्मप्रवचनीययुक्तइतिद्वितीया । येनाङ्गविकारइत्थम्भूतलक्षण इत्येताभ्यान्तृतीया । उत्पातेनज्ञापितेइतिचतुर्थीयस्यचभावेनभाव लक्षणमितिसप्तमी । षष्ठीचानादरइतिषष्ठीतदेतदाह । द्वितीयाचे ति । षष्ठीसग्रेवत्यतिषष्ठीचानादरइतिसूत्रेचकारस्यसमुच्चयतयान

चष्टेलक्षणंज्ञापकश्चय: ॥ ३ ॥ सद्वितीयावाच्योय
था । ताम्प्रत्यभिव्यक्तमनोरथानाम्महीपतीनाम्प्र
णयाग्रदूत्य: । प्रवालशोभाइवपादपानांश्शृङ्गारचे
ष्टाविविधाबभूवु: ॥ अत्रक्रियानाविष्टतयैवेन्दुम
त्याम्महीपतीनांश्शृङ्गारचेष्टाभवन्त्योलक्ष्यन्ते । सो
यंलक्षणहेतु:प्रतिनायोगेद्वितीयामुत्पादयति ॥ ७ ॥
तृतीयावाच्यमित्थम्भूतलक्षणंयथा । कण्ठेकाल:क
रस्थेनकपालेनेन्दुशेखर: । जटाभिःस्निग्धताम्राभि
राविरासीद्वृषध्वज: ॥ अत्रकण्ठेकालइत्यादीनि
क्रियायामनिविशमानान्येववृषध्वजंज्ञापयन्ति ।
यथाजटाभिस्तापसइति ॥ ८ ॥ तृतीयावाच्यएवा
ङ्गविकारलक्षणंयथा । सबालआसीद्वपुषाचतुर्भुजो

प्रधानासेतिनात्रतुल्यकक्षतयागणिता ॥ ३ ॥ क्रियानाविष्टंस्वव्यापा
रशून्यंतटस्थमेवयद्व्याप्रियते । तेनकारकाद्भेद: । अत्रहिक्रियानावि
ष्टस्यैवइन्दुमत्येतीन्दुमतीमालम्बनविभावीकृत्यमाना: शृङ्गारचेष्टा
स्तयैवावच्छिद्यन्ते । तदवस्थाएवचलक्ष्यन्तेततोभवतिहेतुत्वंलक्षण
त्वमवधित्वञ्चेति । ननुकथमत्रद्वितीया । यावताहेतुत्वात्तृतीयया
भवितव्यमित्यतआह । द्वितीयामिति । नाम्नायान्तृतीयायामियं
विधीयमानाबलवतीताम्बाधतइत्यर्थ: ॥ ७ ॥ अत्रकण्ठेकालइत्यादी
नीति । यद्यपिकपालेनजटाभिरित्येवोदाहरणन्तथापिप्रसङ्गादित
रद्व्याख्यानम् । ज्ञापकत्वसुभयत्रापितुल्यविभक्तिवाच्यतायान्तुविशे
ष: । तेनान्योप्येवञ्जातीयोलक्षणप्रकार:स्वयमूहनीयइत्युक्तम्भवति
यद्वक्ष्यति । उपलक्षणञ्चैतदित्यादिना । उक्तमेवस्फुटीदाहरणेनद्र
ढयति । यथाजटाभिरिति । यथाहीत्थम्भूतस्यतेनैवप्रकारेणप्रकारव
तोलक्षणञ्जटाभवन्तितथेहापिकपालादिकमितिभाव: । तृतीयावाच्य
एवेति । सूत्रेऽङ्गपदेनाङ्गीलक्ष्यते । तस्यचसम्बन्धिनियमादङ्गवाचि

मुखेनपूर्णेन्दुनिभस्त्रिलोचनः । युवाकराक्रान्तमही
भृदुच्चकैरसंशयंसम्प्रतितेजसारविः । अत्रवपुषा
चतुर्भुजोमुखेनात्रिलोचनस्तेजसारविरित्यङ्गविकारै
रङ्गिनांविकृतिर्लक्ष्यतेयथाक्ष्णाकाणइति ॥ १ ॥ च
तुर्थीवाच्यमुत्पातलक्षणंयथा । गोनासायनियोजि
तागदरजाःसर्पायबद्धौषधिः कण्ठस्थायविषायवी
र्यमहतेपाणौमणीन्बिभ्रती । भर्तुर्भूतगणायगोत्रज
रतीनिर्दिष्टमन्त्राक्षरारक्षत्वाद्रिसुताविवाहसमये
प्रीताचभीताचवः ॥ अत्रगौर्याविवाहमङ्गलानौचि
त्येनोत्पातरूपैरगदरजोनियोगादिभिर्भगवद्भूतागो
नासादयोज्ञाप्यन्ते । यथा । वातायकपिलाविद्युदि
ति । ततश्चोत्पातेनज्ञाप्यमानइतिसम्बन्धस्योभय
निष्ठत्वात्तादर्थ्यइवलक्ष्यवाचिनश्चतुर्थीलक्षणवा
चिनः । तृतीयाविषयापहारात् । एकयैवविभ

---

नस्तृतीयाभवति । अङ्गञ्चद्विविधमाजानिकमौपचारिकञ्चहृदयम
पीहविवक्षितंविकारादिकञ्चेत्थम्भूतलक्षणमेवेदम् ॥ अतएवसूत्रक
मीनादृतइत्याशयवान्व्याचष्टे । अत्रवपुषेति । विकृतिरवस्थान्तर
प्राप्तिः । गोनासायेति । ननूत्पातेनाविष्टेनयज्ज्ञाप्यतेतत्रचतुर्थीति
लक्षणमेवास्यावाच्यम्प्रतिभातिनैतत् । नैतल्लक्ष्यलक्षणभावोसाव
भिधीयतेनतुलक्ष्येलक्ष्यतोविधीयतेतस्यलक्षणीयतामर्थादितरस्य
लक्षणताम्बोधयतीति । अगदरजःप्रभृतयस्तुकथममङ्गलरूपाइत्य
वशिष्यतेतत्राह । अत्रगौर्याइत्यादि । ननुतथापिलक्षणवाचिनएव
चतुर्थीतिकथमवसितमित्यतआह । ततश्चेति । यथातादर्थ्यस्योभ
यनिष्ठत्वेपिकङ्कणायकनकमित्यत्रकार्यवाचिनएवचतुर्थीनतुकारणवा
चिनस्तथेहापिसम्बन्धस्योभयाश्रयत्वेपिलक्ष्यवाचिनएवचतुर्थीनतुल
क्षणवाचिनइत्यर्थः । तर्हि तृतीयाकथन्नभवतीत्यतआह । एकयैव

त्त्योभयगतस्यापिसम्बन्धस्यराज्ञःपुरुषइतिवदुक्त त्वात् तृतीयापिनभवति ॥१०॥ सप्तमीवाच्यम्भा वलक्षणंयथा । इतिशासतिसेनान्याङ्गच्छतस्तान नेकधा । निषिध्यहसताकिंचिचत्रस्थेतत्रान्धकारि णा । अत्रसेनान्यःपलायमानगणानुशासनक्रिया यामन्धकारैःस्वप्रकाशनक्रियालक्ष्यते । यथागोषु दुह्यमानासुगतइति । उपलक्षणञ्चैतत् । तेनान्य दपिभावलक्षणंशत्राद्यभिधेयमुपलक्ष्यते । यथात्रैव हसतातस्थइति ॥११॥ यथावा । यज्वभिःसम्भृतंह व्यंविततेष्वध्वरेषुसः । जातवेदोमुखान्मायीमिषता माच्छिनत्तिनः । इत्यानादरोपाधिकेभावलक्षणेष ष्ठ्यपिभवतीति ॥१२॥ अभावःप्रागभावादिभेदेने हचतुर्विधः । घटाभावादिभेदात्तु तस्यसङ्ख्यानविद्य ते ४। तेषुप्रागभावोयथा । अनभ्यासेनविद्यानाम संसर्गेणधीमताम्। अनिग्रहेणचाक्षाणांव्यसनञ्जा

चेति । सम्बन्धस्यसम्बन्धिनावेवविशेषत्तेनलक्षणमपिचतुर्थ्यैवप्रति पादयत्यहउक्तार्थत्वात्कथन्तृतीयाभवतीतिशुद्धप्रातिपदिकार्थाभि धानेप्रथमेतिभावः ॥ १० ॥ यस्यचभावेनभावलक्षणमित्यस्यसूत्रस्या र्थस्तुयस्यवस्तुनोभावेनक्रिययावस्त्वन्तरस्यभावः क्रियालक्ष्यतेतद्वच नात्सप्तमीत्यतआह । अत्रसेनान्यइति । हसतातस्थइतिलक्षणेशतृ विधिः । लक्षणहेत्वोःक्रियायाइतिसूत्रणात् ॥ ११ ॥ १२ ॥ अभावसा मान्यमभावप्रमाणनिरूपणप्रस्तावे“असत्तायाःपदार्थानामिति,, अने नवक्ष्यति । तेनात्रसामान्यलक्षणन्नकृतवान् । सद्द्विविधस्तादात्म्यप्र तियोगिकःसंसर्गप्रतियोगिकश्च । द्वितीयस्त्रिधा । प्रावप्रध्वंसात्य न्ताभावभेदात् । तदाह । प्रागभावादिरिति । ननुप्रागभावादिरे कोस्तिप्रतियोगिभेदेनभेदादित्यतआह । घटादीति । अनेनरूपेणास

यतेनृणाम् । अत्रविद्यानभ्यासादेःप्रागभावस्यव्य
सनादिकारणत्वम् ॥ १४ ॥ प्रध्वंसाभावोयथा ।
गतःकामकथोन्मादोगलितोयौवनज्वरः । गतोमो
हश्च्युतातृष्णाकृतम्पुण्याश्रमेमनः ॥ अत्रकामकथो
न्मादगमनादेःप्रध्वंसाभावस्यपुण्याश्रमानुसन्धान
कारणत्वम् ॥ इतरेतराभावोयथा । वनान्यमूनिन
गृहाण्येतानद्योनयोषितः । मृगाइमेनदायादास्त
न्मेनन्दतिमानसम् । अत्रवनानिअमूनिनगृहाणी
त्यादेरितराभावस्यमनःप्रमोदकारणत्वम् ॥ १५ ॥
अत्यन्ताभावोयथा । अत्यन्तमसदार्याणामनालो
चितचेष्टितम् । अतस्तेषुविवर्द्धन्तेनिर्विबन्धाविभू
तयः ॥ अत्रानालोचितचेष्टितस्यात्यन्ताभावोवि
भूतीनान्निर्विघ्नवृद्धिहेतुः ॥ १६ ॥ एतेनाभावाभा
वोपिव्याख्यातः । अत्रप्रागभावाभावोयथा । उ
द्यानसहकाराणामनुद्भिन्नानमञ्जरी । देयःपथिक

ङ्व्यानास्त्येवसामान्यन्तुप्रागभावत्वादिकमाश्रित्यचातुर्विध्यंसोयन्तु
शब्दस्यार्थः ॥ ४ ॥ अनभ्यासेनेति । यावद्विधानाभ्यस्यन्तितावन्न
धीमद्भिः संसृज्यन्तेयावच्चानाखिननिगृह्णन्तितावद्व्यसनंभितविवक्षि
तम् । तेननात्यन्ताभावसङ्करः । आराध्यास्त्वाहुः । शिक्षापरस्यास्य
श्लोकस्याप्यन्यप्रयोजनकतयानात्यन्ताभावसङ्करइति ॥ १३ ॥ १४ ॥
वनान्यमूनीति । इदमिदन्नभवतीतिप्रतीतिसाक्षिकएवान्योन्याभा
वः । वैधर्म्यन्तुभेदाख्यमलङ्कारान्तरङ्किञ्चिद्वर्ममात्रभेदेऽपिस्वरूपस्या
पिभेदव्यवहारपात्रता ॥ १५ ॥ १६ ॥ वस्तुनउत्पादइति । भावएवा
भावाभावव्यवहारभूमिः । अभावव्यवहारविषयमात्रस्यचविभागःकृ
तोस्तिचप्रागभावादेः प्रध्वंसादिरूपतेतिनन्यूनताविभागवाक्यस्याश

नारीणां[illegible]तिलःसलिलाञ्जलिः । अत्रवस्तुनउत्पादः
प्रागभावाभावउच्यते । तेनेहसहकारमञ्जरीणामुद्भे
दस्यपथिकनारीणाम्मरणैकारणत्वम् ॥ १७ ॥ प्र
ध्वंसाभावाभावोयथा । पीनश्रोणिगभीरनाभिनि
भृतम्मध्येभृशोच्चस्तनम्पायाद्वःपरिरब्धमब्धिदुहितुः
कान्तेनकान्तंवपुः । स्वावासानुपघातनिर्वृतम
नास्तत्कालमीलद्दृशेयस्मैसोच्युतनाभिपद्मवसति
र्वेधाःशिवन्ध्यायति । अत्रयथोक्तेनवपुषायोयमा
लिङ्गनेपिविधिनिवासनाभिपङ्कजानुपघातः सहव
स्तुनोऽवस्थानमेवप्रध्वंसाभावाभावउच्यते । सचेहा
च्युतनाभिपङ्कजनिवासिनोविधेर्मनोनिर्वाणकारण
म्भवति ॥ १८ ॥ विदूरकार्यःसहजःकार्यानन्तरज
स्तथा ॥ युक्तोनयुक्तइत्येवमसङ्ख्याश्चित्रहेतवः ॥५॥

---

ङ्गनीया । तेनेति । भूतभव्यसमुच्चारणेभूतस्याभ्यायेतिन्यायान्मञ्जरी
णामुद्भेदस्यकारकतालाभोऽन्यथावाक्यभेदेनकिञ्चित्स्यात् । प्रागभा
वात्प्रागभावाभावभङ्ग्याचसमस्तमञ्जरीसमुद्भेदेनवसन्तप्रौढिव्यञ्जना
त्प्रकृतविप्रलम्भःपोषः ॥१७॥ पीनश्रोणीति । निभृतन्दुर्लक्ष्यम् । अब्धि
दुहितापिसर्वाङ्गीणमाश्लेषमभिलषतिभगवानपीतिकान्तेनकान्तमित्ये
ताभ्यामभिव्यज्यते । उपलक्षणञ्चेदम् । तादात्म्यात्यन्ताभावाभावाव
प्युदाहरणीयौ । यथा । अवनिरुदकन्तेजोवायुर्नभःशशिभास्करौपुरुष
इतियत्कैश्चिद्भिन्नावदन्तितनूस्तव तदनघवचोवैचित्रीभिर्निरावरणा
स्यतेविदधतियःपूरोन्मीलन्मृणालिहिरोपमान् । अत्रभिन्न इत्यन्यो
न्याभावमुपन्यस्यनिरावरणस्यमृषेत्येताभ्यान्निषेधः । यथाच । नविद्य
तेयद्यपिसर्ववासनागुणानुबन्धिप्रतिभानमद्भुतम् । श्रुतेनयत्नेनचवा
गुपासिताध्रुवङ्करोत्येवकमप्यनुग्रहम् । अत्रनविद्यतइत्यत्यन्ताभावमु
पन्यस्यकमपीतिप्रतिभासत्ताभिधानेनप्रतिषेधः १८ विदूरकार्यइति ।

तेमीप्रयोगमार्गेषुगौणवृत्तिव्यपाश्रयाः । कार्याःका
व्येषुवैचित्र्यन्तथासेकर्त्तुमीशते ॥ ६ ॥ तेषुविदूर
कार्यौयथा । अनम्भुवानेनयुगोपमानमबध्यमौर्वी
किणलाञ्छनेन । अस्पृष्टखड्गत्सरुणापिचासीद्र
क्षावतीतस्यभुजेनभूमिः । सोयम्बाल्यएवनवयौव
नकार्यकरणाद्विदूरकार्योनामचित्रहेतुः ॥ १९ ॥
सहजोयथा । समसेवसमाक्रान्तन्द्वयन्द्विरदगामि
ना । तेनसिंहासनम्पित्र्यमखिलञ्चारिमण्डलम् ।
अत्रराज्याभिषेकारिमण्डलाक्रमणयोर्हेतुमद्भावेनस
त्यपिपौर्वापर्येशक्तिकारित्वात्तुल्यमेवकार्यकरणभा
वोविवक्षितः । तेनसहजोनामायंचित्रहेतुः ॥ २०
॥ कार्यानन्तरजोयथा । पश्चात्पर्यस्यकिरणानुदीर्ण
श्चन्द्रमण्डलम् । प्रागेवहरिणाक्षीणामुदीर्णोरांग
सागरः । अत्रचन्द्रोदयलक्षणाद्धेतोःपूर्वकालमेव
रागसागरउदीर्णइतिकार्यस्यउदयलाभः । सहह
गुणवृत्त्याश्रयणेहेतावतिशयउपपतीत्ययङ्कार्यान
न्तरजोनामचित्रहेतुः ॥ २१ ॥ युक्तोयथा । गुणा

---

कालान्तरभाव्यवस्थास्याःप्रागवस्थायांसतएवकार्यमुपजायमानन्दर्शि
यतेसविदूरकार्यःकस्मात्कार्यंप्रतिविदूरोवर्तीनास्तिवाल्येविभवातिशय
यत्वेनाद्भुतत्वेनैवसाक्षात्कृतेतिगौणवृत्तिव्यपाश्रयता । सहजःकार्यसहो
त्पत्तिकत्वात्सिद्धः ॥ कारणमपिकार्यकालमेवकार्यस्यप्रतिभास
तेतेनहेतुर्यात्मकार्याभिव्यक्तिरत्रमूलम् ॥ यदर्थेददातियथावाकर्तुमी
प्सतइतिस्यन्ननन्तरजेपि । किञ्चारणपूर्वमुत्कार्यमस्तिसएवव्यङ्ग्यः ।
युक्तेपिकारणगुणानुविधायिकार्यमसदेवारोप्यतेनप्रयुक्तमितितदेवविप
रीतमितिगौणवृत्त्याश्रयता॥५॥६॥१८॥२०॥२२॥२३॥ ननुव्यक्तिभेदे

नुरागमिश्रेणयशसातेप्रसर्पता । दिग्वधूनामुखे जातमकस्मादर्द्धकुङ्कुमम् ॥ अत्रदिग्वधूमुखेषुते गुणानुरागः कुङ्कुमंयशस्तुचन्दनमित्ययंयुक्तोना मगौणवृत्तिव्यपाश्रयश्चित्रहेतुः ॥ २२ ॥ नयुक्तोय था । नमीलयतिपद्मानिननभोप्यवगाहते । त्व न्मुखेन्दुर्ममासूनांहरणायैवयस्याति । अत्रमुखेन्दोः पद्मनिमीलादिनयुज्यतइतिनयुक्तोनामचित्रभेदः । २३ ॥ एवंशब्दस्यप्रकारवाचित्वाद्व्यधिकरणादयः प्रयुज्यन्तेयथा । साबालावयमप्रगल्भमनसःसास्त्री वयङ्कातराः सापीनोन्नतिमत्पयोधरयुगन्धत्तेसखे दावयम् । साक्रान्ताजघनस्थलेनगुरुणागन्तुन्नश क्तावयन्दोषैरन्यजनाश्रितैरपटवो जाताःस्मइत्यद् भुतम् । अत्राभिव्यक्तमेवव्यधिकरणत्वङ्कार्यकारण योःप्रतीयतइत्ययंव्यधिकरणोनामचित्रहेतुः ॥२४॥

पिहेतोरक्तव्यतार्थेद्विवक्षितापिमेवंशब्देनाधिकेनेत्यतआह । एवं शब्दस्येति । प्रकारत्वउपाधेरेवभेदोविवक्षितोनतुव्यक्तिमात्रस्येतिभा वः । साबालेति । बाल्यादीनांसामानाधिकरण्यएवप्रागल्भ्यादिप्राप्त तिहेतुभावःप्रतीतःसइहगौणवृत्तिव्यपाश्रयतयोपनिबध्यमानःकान्ति मावहति । तथाहिअन्यत्प्रागल्भ्यम्बालायाःसरलालोकितवाङ्मिश्र णाद्यसामर्थ्यलक्षणमन्यच्चनायकप्रकाण्डेकपक्षेपान्नियन्त्रणास्यादित्य नध्यवसायलक्षणन्तयोस्तद्भावपत्तिरत्रव्यक्तैव । एवङ्कातरत्वादौबो द्धव्यम् ॥ २४ ॥ आदिग्रहणेनस्वहेतुकलयाकार्यहेतुकलयाचोपनिब ध्यमानःसङ्कलितोभवति । हेतोरनन्तरन्तद्विपरीतमहेतुंलक्षयन्नाह । वस्तुनइति । हेतुतयाप्रतीतोपिकार्यन्नकरोतीत्यभिधीयमानोऽहेतुः सद्विविधःस्वरूपेणाकार्यव्यभिचारीव्यापारविरोधेनबालयाभूतोपिकार्य न्नकरोतितत्रद्वयन्निबन्धनंयद्रसङ्कार्यमुपजनयितव्यन्तस्यवस्तुनःस्व

३ ॥ वस्तुनोवास्वभावेनशक्तेर्वाहानिहेतुना ॥ अ
कृतात्मीयकार्यःस्यादहेतुर्व्याहततस्तुयः ॥ १ ॥ त
त्राकृतकार्योवस्तुस्वभावेनयथा । नविरचितालला
टतटलास्यकरीभ्रुकुटिर्नपरुषहुङ्कृतेन मधुरास्मित
मन्तरितम् । नतवनिशुम्भसम्भ्रमवशादपिदारुण
याभगवतिचेष्टयाकलुषितंवदनाम्बुरुहम् । अत्रनि
शुम्भसम्भ्रमस्यहेतोरनुत्पादित भ्रुकुट्यादिदारुणचे
ष्टाद्वारेणभगवतीमुखाम्बुरुहकालुष्यस्यकरणेयद
सामर्थ्यन्तत्रतन्मुखाख्यस्यवस्तुनःस्वभावोनिमित्त
मितिस्वभावादनुत्पादितकार्योयमहेतुः ॥ १ ॥ स
एवशक्तेर्हानिहेतुनायथा । अनुरागवतीसन्ध्या
दिवसःस्तत्पुरःसरः । अहोदैवगतिश्चित्रातथापिन
समागमः । अत्रानुरागवत्त्वतत्पुरःसरत्वयोःसमाग
महेत्वोःसामर्थ्यविघातेदैवगतिः कारणमितिशक्ते
र्हानिहेतुनायमकृतस्वकार्योनामाहेतुः ॥ २ ॥ व

---

भावःहेतुत्वाभिमतस्यशक्तिहानिर्वासापिद्विधाऽत्यन्तिकोऽभावः ॥
प्रतिबन्धमात्रंवा । तत्रवस्तुस्वभावेनशक्तेरत्यन्तासत्त्वेनचाद्विरूपस्व
रूपाव्यभिचारीकृतात्मीयकार्यइत्यनेनोक्तम् । वस्तुस्वभावेनशक्तिप्र
तिबन्धेनचद्विप्रकारोपिचव्यापाराद्व्यभिचारीव्याहतइत्यनेन । यद्य
पिशक्तेरत्यन्तासत्त्वेहेतुभावएवनभवति । तथापिगुणवृत्त्याहेतुभावा
ध्यासोबोद्धव्यः । साचगुणवृत्तिःश्लेषोपहितान्यादृशीभवति ॥ अ
त्रनिशुम्भेति ॥ १ ॥ ननुचात्रचेष्टायाहेतुत्वन्तृतीययाप्रतीयतइति
साहेतुत्वेनवक्तुमुचितेत्यतआह । भ्रुकुट्यादिदारुणचेष्टाद्वारेणेति
अन्यथानिशुम्भसम्भ्रमवशादितिपञ्चमीसङ्गतास्यादितिभावः ॥ १ ॥
अनुरागोलौहित्यम्प्रीतिश्च । पुरःसरोऽग्रेगमनशीलःसन्निधौस्थित

स्तुनःस्वभावेनव्याहतोयथा । नीवीबन्धोच्छ्वसन
शिथिलंयत्रयद्व्याङ्गनानांक्षौमंरागादनिभृतकरेष्वा
क्षिपत्सुप्रियेषु । अर्चिस्तुङ्गानभिमुखगतान्प्राप्यर
त्नप्रदीपान्ह्रीमूढानाम्भवतिविफलप्रेरणाचूर्णमुष्टिः
अत्ररत्नप्रदीपनिर्वापणेचूर्णमुष्टेरपरित्यक्तस्वरूप
स्यापिविघातैरत्नप्रदीपाख्यवस्तुस्वभावःकारणमि
त्ययंवस्तुस्वभावेनव्याहतोनामाहेतुभूतः । सएवश
क्तेर्हानिहेतुनायथा । शम्भोरुद्धृतनृत्यकर्मणिकरेक
ङ्कालमाद्यंहरेःसङ्घट्टस्फुटितेन्दुमण्डलगलत्पीयूष
सञ्जीवितम् । तत्कालप्रणतेमुरद्विषिनवेदृष्ट्वाविला
संश्रियःकुर्वन्कोपकषायितेनमनसामिथ्योत्प्लुतीः
पातुवः ॥ अत्रकोपकषायितमनसस्तस्योत्प्लुतिकर
णसमर्थस्यापीश्वरकरग्रहणान्मिथ्यापदाभिधीयमा
नःप्रतीतोव्याघातः । ततोयंशक्तेर्हानिहेतुनाव्या
हतोनामाहेतुभेदः ॥ ४ ॥ यस्तुकारणमालेतिहेतु
सन्तानउच्यते ॥ पृथक्पृथगसामर्थ्यात्सोप्यहेतोर्न
विद्यते ॥२॥ एकोभिधीयमानेषुहेतुत्वेषुभवेत्तयोः ।
प्रतीयमानेष्वपरःकारणत्वेषुजायते ॥ ३ ॥ तयोरा

द्य ॥ २ ॥ ३ ॥ अमृतसेकजीवितकङ्कालशक्तिप्रतिबन्धेकोहेतुरतआ
ह । ईश्वरकरग्रहणादिति । ननुकोपकषायितमनस्त्वमुत्पादितकार्य
मेन्वकथमन्यथाकुर्वदित्युच्यतेऽतआह । मिथ्यापदेति ॥ ४ ॥ इहकै
श्चित्कारणमालापृथगलङ्कारइत्युक्तम्पूर्वस्योत्तरोत्तरम्प्रतिहेतुभावो
क्तिस्तल्लक्षणम् । सद्विविधोऽभिधीयमानःप्रतीयमानोवा । उभयथापि
नाहेतोर्व्यतिरिच्यतइत्याह । यस्त्विति । यद्यपिपृथक्स्यपृथक्हेतु
भावोनिवृत्तएवतथाप्युत्तरस्यप्रथममुखनिरीक्षणप्रवृत्तस्योत्तरम्प्रतित

द्यो यथा । जितेन्द्रियत्त्वं विनयस्य कारणं गुणप्रक र्षो विनयादवाप्यते । गुणाधिके पुंसि जनोनुरज्यते जनानुरागप्रभवाश्च सम्पदः ॥ अत्र जितेन्द्रियत्वा दीनामुत्तरोत्तरम्प्रति हेतुभूतानामपि सम्पदुत्पत्तौ पूर्वपूर्वसव्यपेक्षायां समुदितानामेव कारणत्वं साध नादिपदैरभिधीयत इति सोयमभिधीयमानहेतुत्व ङ्कारणमालेत्यहेतुभेदः ५॥ द्वितीयो यथा । पीणत्तणदु ग्गेज्जं जस्स भुआअन्तणिठ्ठुरपरिग्गहिअम् । रिठ्ठ स्सविसमवलिअकण्ठन्दुक्खेण जीविअं वोलीनम् * अत्र जीवितदुःखातिक्रमणे कण्ठस्य वलनं वलनस्य निष्ठुरग्रहणन्निष्ठुरग्रहणस्यापि पीनत्वन्दुर्विगाह्य त्वं हेतुरिति प्रतीयमानकारणत्वङ्कारणमालेत्यहेतु भेदः ॥ ६ ॥ ४ ॥ इङ्गिताकारलक्ष्योर्थः सूक्ष्मः सूक्ष्म गुणात्तु सः ॥ सूक्ष्मात्प्रत्यक्षतः सूक्ष्मोप्रत्यक्ष इति भि द्यते ॥ १ ॥ वाच्यः प्रतीयमानश्च सूक्ष्मोत्राद्विविधो

भावोभिधीयते । नहि स्वतन्त्रस्यैव हेतुभावे कारणमालाभासते १॥२ तदिदमेकदेशद्वाराव्यञ्जयन्नाह । अत्र जितेन्द्रियत्वादीनीति । अत्र जीवितदुःखातिक्रमण इति । यद्यत्र हेतुमाला न स्यात्तदा परस्परानपे क्षाणामुपन्यासे वाक्यार्थपोषो न स्यादिति ॥ ५ ॥ ६ ॥ ४ ॥ लक्षणात्म कहेतुविशेषस्य साधर्म्यादनन्तरं सूक्ष्मं लक्षयति । इङ्गितेति । इङ्गि तमाकारश्च इङ्गिताकारौ चेत्यर्थः । शरीरावयवव्यापार इङ्गितम् । रू पादेरन्यथात्वमाकारः सूक्ष्मार्थदर्शनं सूक्ष्ममित्यर्थं गुणो युक्तस्तेन पौनरु क्त्यमाशङ्क्याह । सूक्ष्मगुणात्तु स इति । हृदयसंवादभागित्रिचतुरहृद यसंवेद्यस्य । अतएवातिसूक्ष्मार्थस्य प्रत्यक्षायमाणत्वात् सूक्ष्मनामार्थ गुणः । यथाहि कवेः प्रतिभा सूक्ष्मविशेषोल्लेखिनी तथा तन्मूलकः शब्दो

* पीनत्वदुर्ग्राह्यं यस्य भुजान्तर्निष्ठुरपरिगृहीतम ।

मतः । इङ्गिताकारलक्ष्यत्वं लक्ष्मसामान्यमेतयोः ॥ तत्रेङ्गितलक्ष्यमभिधीयमानसूक्ष्मंयथा । ताम्प्रत्य भिव्यक्तमनोरथानामिति । अत्रस्वयंवरमिलितानां राज्ञांराजपुत्रीम्प्रतिप्राप्तिलक्षणस्यमनोरथस्याभि धीयमानस्यशृङ्गारचेष्टात्मकेनेङ्गितेनव्यङ्ग्यत्वादय मिङ्गितलक्ष्योभिधीयमानःसूक्ष्मभेदः ॥ १ ॥ तदेवा कारलक्ष्यंयथा । सायूनितस्मिन्नभिलाषबन्धंशशा कशालीनतयानवक्तुम् । रोमाञ्चलक्ष्येणसगात्रय ष्टिम्भित्वानिराक्रामदरालकेश्याः ॥ अत्राभिलाष बन्धोरोमाञ्चलक्ष्येणगात्रयष्टिम्भित्वानिराक्रामदि त्यनेनाभिधीयमानआकारलक्ष्यः सूक्ष्मभेदोऽभिहि तः ॥ २ ॥ तदेवोभयलक्ष्यंयथा । त्वदर्पितदृश

---

पीतिस्फुटाभतयाप्रत्यक्षप्रमेयज्ञानमुत्पद्यते । तथाह्यन्योन्यसंवलि तेत्यादौदम्पत्योर्मिथोनुस्मृतिलक्षणस्यप्रेम्णः कतिपयसंवेद्यस्यापिश ब्दबलात्प्रत्यक्षायमाणत्वमनुभवसिद्धमेवतदेतदाह । सूक्ष्मात्प्रत्यक्षइ ति । सूक्ष्मालङ्कारेतुकविप्रतिभयालिङ्गविषयत्वाच्छब्दोपितद्विषयए व । लिङ्गाच्चप्रतीतिरुत्पद्यमानासामान्यपुरस्कारेणप्रवृत्तानप्रत्यक्ष वत्तद्विशेषोल्लेखक्षमेतिसूक्ष्मगुणवैधर्म्यंतदिदमुक्तम् । सूक्ष्मोप्रत्यक्षइ ति । अत्रकैश्चित्प्रतीयमानस्यसूक्ष्मस्यभावइतिसंज्ञांविधायालङ्कारा न्तरमुक्तन्तदसत् । सूक्ष्मसामान्यलक्षणेनक्रोडीकरणादित्याह । इ ङ्गिताकारलक्ष्यत्वमिति । एतेनलक्ष्यस्यपुनरुक्त्याशङ्कापरिहृता । अत्रस्वयंवरेति । नचशृङ्गारचेष्टाप्रत्यर्पितस्यमनोरथशब्देनाभिधान मर्थपुनरुक्तमितिवाच्यम् । नहियथानुरागानुभावेनचित्तवृत्तयःस्फु टाउपस्थाप्यन्तेतथास्वशब्देनेतिविस्तरेणप्रपञ्चमेववक्ष्यामः । स्वशब्द स्तुकिमर्थमित्यवशिष्यतेतत्रब्रूमः । स्वयंवरसमाजप्रवेशादिनायेषांसा मान्यतउत्कण्ठाप्रतीतिपथमवतीर्णासीत्तेषामिन्दुमतीसन्निधौतदनु

स्तस्यागीतगोष्ठ्यामवर्द्धत। उद्दामरागपिशुनाच्छाया कापिमुखाम्बुजे ॥ अत्रत्वदर्पितदृशइतिइङ्गितच्छाया कापिमुखाम्बुजइत्याकारस्ताभ्यामुद्दामरागपिशुनेत्यनेनाभिधीयमानस्याननरागस्य सूक्ष्मरूपतयालक्ष्यमाणत्वादयमभिधीयमानोभयलक्ष्यः सूक्ष्मभेदः ॥ ३ ॥ प्रतीयमानमिङ्गितलक्ष्यंयथा । वाहित्तापडिवअणंणदेइरूसेइएक्कमेक्कम्मि । अज्जाकज्जेणविणापइप्पमाणेणईकच्छे * । अत्रप्रतिवचनादानपरिजनप्रकोपाभ्याम्प्रदीप्यमानेनदीकच्छे इतिहेतुनाप्रत्याय्यमानःसङ्केतकुट्टङ्गदाहोद्भवधूमनस्तापोवाक्यार्थत्वेनलक्षितइतिअयमिङ्गितलक्ष्यःप्रतीयमानःसूक्ष्मभेदः ॥ ४ ॥ प्रतीयमानमेवाकारलक्ष्यंयथा । सामाइसामलीएअद्धच्छिपलोअमुहसोहा। जम्बूदलकअकण्णवअंसभमिरेहलिअउत्ते * ॥

भावबलेनासङ्ख्यसूक्ष्मविशेषवतीसैवाभिव्यक्तेति दृढानुबन्धलक्षणस्यप्रेम्णःप्रकर्षकाष्ठाम्पुष्णाति ॥ एवमन्यत्रापि ॥ १ ॥ २ ॥ ३ ॥ अत्र प्रतिवचनादानमिति । नहिप्रतिवचनप्रदानाभावमात्रमत्रचमत्कारितस्मादन्यदापिसम्भवादतःप्रतिवचनप्रदानाभिप्रायाविपरीतचित्तवृत्तिविशेषोन्नायिकासखीपदेशापसरणादिलक्षणा क्रियाकाचित्प्रतिवचनाप्रदानपदेनाभिमता । नचप्रकोपोप्यनुभवरूपतामनासादयन्स्वादनीयतामासादयतीतिनूनन्तेनापिभ्रूभङ्गादिरूपाक्रियैवाभिसंहितेत्याशयवतोक्तमिङ्गिताभ्यामिति । यद्येवन्तर्हि काव्यशोभानिर्वाहातिकमन्येनलक्षितेनेति । नहियथोक्तप्रतिवचनाद्यदानप्रकोपाभ्या

१ * प्रौढमहिलानांयद्यत्सुशिक्षितानांरतेसुखयति । यद्यदशिक्षितंतन्नवधूनांतत्तद्रतिंदत्ते ॥ १ ॥

* श्यामायतिश्यामलायाअर्द्धाक्षिपलोकनमुखशोभा ।

अत्राद्र्धाङ्क्रप्रलोकनमुखश्यामताभ्यामाकाराभ्या
ऽजम्बूदलकर्णपूतावतंस इत्यनेन प्रत्याय्यमानः सङ्के
तगमनभ्रंससम्भवः श्यामायामनस्तापो लक्ष्यत इत्य
यमाकारलक्ष्यः प्रतीयमानः सूक्ष्मभेदः ॥ ५ ॥ तदे
वोभयलक्ष्यं यथा । प्रयच्छतोच्चैः कुसुमानि मानिनी
विपक्षगोत्रं दयितेन लम्भिता । न किंचिदूचे चर
णेन केवलं लिलेख बाष्पाकुललोचना भुवम् । अत्र च
रणेन भूमिलेखनमिङ्गितं दृशोर्बाष्पाकुलत्वमाकार
स्ताभ्यां गोत्रस्खलनोद्भवो मानिन्या मनस्तापः प्रती
यमान इङ्गिताकारलक्ष्यः सूक्ष्मभेदः ॥ ६ ॥ ५ ॥ प
दार्थानां तु यः सारस्तदुत्तरमिहोच्यते । स धर्मधर्मरू
पाभ्यां व्यतिरेकाच्च भिद्यते ॥ १ ॥ तेषु धर्मस्वरूपं य
था । दानं वित्तादृतं वाचः कीर्तिधर्मौ तथायुषः । प
रोपकरणं कायादसारात्सारमुद्धरेत् ॥ अत्र दानसत्य
कीर्त्यादीनां वित्तादिवस्तुधर्माणां सारभूतानामुद्धा

ङ्क्ष्विद्विवक्षितार्थलाभ इति भावः ॥ ४ ॥ ५ ॥ ६ ॥ विभज्यमानस्य सरू
पतया सूक्ष्मानन्तरमुत्तरलक्षणमाह । पदार्थानां त्विति । सारः सर्व
स्यायमानमुत्कर्षशालि वस्तु । पदार्थानामिति निर्द्धारणे षष्ठी । उत्तर
मित्यन्वर्थं नाम । उत्कृष्टत्वमुद्दोऽर्थस्तत्रैव प्रकर्षे तरपः । धर्मधर्मिरू
पाभ्यामिति । व्यस्तसमस्ताभ्याम् ॥ धर्म उपसर्जनम्परप्रधानतया प्र
तीयमानं वस्तु । अतथाभूतं तु धर्मिरूपं तदयमर्थः । प्रसिद्धवस्तु म
ध्ये कस्यचिदुत्कर्षवत्तया निर्द्धारणमुत्तरम् । तत्त्रिधा । धर्मरूपं धर्मि
रूपमुभयं च । आद्ययोराद्ययोः प्रत्येकं प्रकारद्वयम् । निर्द्धार्यमाण
स्य शुद्धस्योपादानं निर्द्धार्येतरव्यतिरेकिधर्मवत्तया वा । तदिदमाह ।
व्यतिरेकाच्चेति । अन्त्यस्यापि सामान्यविशेषरूपतया रूपत्वमिति ष
ट्प्रकारमुत्तरमिति ॥ १ ॥ वित्तादिवस्तुधर्माणामिति । पञ्चम्यावि

रादयन्धर्मरूपःसारः ॥ १ ॥ धर्मिरूपोयथा । मधुविकचसितोत्पलावतंसंशशिकरपल्लवितञ्चहर्म्यंपृष्ठम् । मदनजनितविभ्रमाचकान्तासुखमिदमर्थवतांविभूतयोन्याः ॥ अत्रमधुप्रभृतीनांविभूतिभ्यःसारभूतानामुद्धरणादयन्धर्मिरूपःसारः ॥ २ ॥ अथव्यतिरेकेणधर्मरूपोयथा । पोढमहिलाणएजज्जंसुसिक्खिअन्तरएसुहावेइ । जज्जंअसिक्खिअंणवबहूणतन्तंरइन्देइ । अत्रप्रौढानांसुशिक्षितंसुखयतीतिकर्मान्तरलक्षणेभ्योधर्मेभ्यःसुशिक्षिताशिक्षितरतकर्मलक्षणाःस्त्रीधर्माव्यतिरेकेणप्रतिपाद्यन्तइतिधर्मव्यतिरेकरूपोयंसारः ॥ ३ ॥ व्यतिरेकेणधर्मिरूपोयथा। राज्येसारंवसुधावसुधायाम्पत्तनम्पुरेसौधम् । सौधेतल्पन्तल्पेवराङ्गनानङ्गसर्वस्वम् । अत्रवसुधादयोधर्मिणउत्तरोत्तरक्रमेणपूर्वतःपूर्वतोव्यतिरिच्यन्तइत्ययन्धर्मिव्यतिरेकःसारः ॥ ४ ॥ एतेनधर्मधर्मिस्वरूपोपिव्याख्यातः । स

---

भागःप्रत्यायितःसचसंश्लेषपूर्वकएवेतिदानादीनामुपसर्जनताप्रतीतिः ॥ १ ॥ विभूतिभ्यइति । विभूतयःपृथगनिर्दिष्टास्तेनपूर्ववन्नाभूषान्यार्मिभावेन प्रतीतिभावोस्तीतिविशिष्टमध्वादिरूपंवस्तुनाङ्गभावेनगम्यतइति ॥ २ ॥ अप्रौढस्त्रीणामिति । षष्ठ्याधर्मधर्मिभावोभिहितः । तर्हिनिर्द्धारणङ्कस्मादित्यतआह । कर्मान्तरेति । रतइत्यनेनसामान्यतउपादानात्प्रौढस्त्रीसम्बन्धिनोललितस्यसुशिक्षितत्वंविशेषमुपादायमुग्धस्त्रीसम्बन्धिनोऽसुशिक्षितत्वंव्यतिरेकीविशेषउपात्तः ॥ ३ ॥ अत्रवसुधादयइति । निर्द्धारिताद्वसुधामात्रात्पत्तनवतीवसुधाव्यतिरिच्यते । वसुधावत्पत्तनात्सौधवत्पत्तनवत् । सौधात्तल्प

द्विधा । सामान्यतोविशेषतश्च । तत्रसामान्यतोय
था । गीतशीतांशुताम्बूलकर्पूरवनितादिभिः । अ
सारोप्येषसंसारःसारवानिवलक्ष्यते । अत्रगीतादी
नाञ्जगतःसारभूतानामविशेषेणैव सर्वेषामुपादा
नाद्धेतुतृतीयान्तयाचसंसारसारवत्वेङ्गभावादयंसा
मान्यतोधर्मधर्मिरूपःसारः॥५॥ विशेषतोयथा ।अ
वैमिपूतमात्मानन्द्वयेनैवद्विजोत्तमाः। मूर्द्ध्निगङ्गा
प्रपातेनधौतपादाम्भसाचवः । अत्रगङ्गाप्रपातस
प्तर्षिपादोदकयोर्विशेषेणसारभूतयोरुपादानाद्धिम
वतःपूतत्वेचाङ्गभूतत्वादयंविशेषतोधर्मधर्मिरू
पःसारः ॥ ६ ॥ विरोधस्तुपदार्थानाम्परस्परमस
ङ्गतिः । असङ्गतिःप्रत्यनीकमाधिकंविषमश्चसः ॥
तेषुविरोधःशुद्धोग्रथितश्च । तयोराद्योयथा । क्व
युवतिमार्द्दवञ्चमहाहवदारुणताक्वचवलयीकरः
क्वकरिदन्तजमुष्टिरसिः । क्वचनवयौवनङ्कुसुमायु

---

वत्सौधात्तल्याद्वराङ्गनावदितितदिदमुक्तमुत्तरोत्तरक्रमेणेति ॥ ४ ॥
अत्रगीतादीनामिति । नह्यिगीतादौकश्चिद्विशेषउक्तः अतएवादिश
ब्दोपिसजीवस्तथापिदध्यादीनामङ्गभावःप्रतीयतइत्यतआह । तृ
तीतान्ततयाचेति । तृतीययाहिकारकत्वमुक्तङ्कारकञ्चक्रियोपसर्ज
नरूपमित्यर्थः । अत्रगङ्गाप्रपातेति । प्रपातपादोदकयोर्गङ्गायाः
सप्तर्षिभिश्चविशेषितत्वादङ्गतामुपपादयति । हिमवतःपूतत्वेचेति
व्यतिरेकोत्तरेविरुद्धधर्माक्रान्तिरस्तीतिसङ्गत्याविरोधलक्षणमाह ।
विरोधस्त्विति । परस्परसङ्गतिरसम्बन्धःसहानवस्थानमितियावत्।
तेनसहानवस्थाननियतयोःसहानवस्थानोक्तिर्विरोधइतितात्पर्यसंक्षे
पःसचप्ररूढोदोषः । अप्ररोहस्तुद्विधा । श्लेषोपधानेनान्यथाचाऽन्यथा
भावस्त्रिधा । सहानवस्थितयोःप्रयोदर्शनमात्रेणानैयत्यारोपः । यथा

धनिस्पृहतातवललनाविचेष्टितविरुद्धमहोललितम् । अत्रयुवतिमार्दवादीनाम्महाहवदारुणतादीनाञ्चशुद्धानामेत्रपरस्परमसंगतत्वादयंशुद्धविरोधः ॥ द्वितीयोयथा । दिग्वासायदितत्किमस्यधनुषासास्त्रस्यकिम्भस्मनाभस्माथास्यकिमङ्गनायदिचसाकामम्परिद्वेष्टिकिम् । इत्यन्योन्यविरुद्धचेष्टितमिदम्पश्यन्निजस्वामिनोभृङ्गीसान्द्रशिरावनद्धपरुषन्धत्तेस्थिशेषंवपुः । अत्रदिग्वासस्त्वादीनामुत्तरोत्तरग्रथनादन्योन्यासङ्गतादयङ्ग्रथितनामाविरोधभेदः ॥ २ ॥ असङ्गतिर्यथा । साउप्पण्डीगोठउहिणोक्खीकत्रिविसगण्ठिभिडिपच्छ्लिउसोमरइज्जस्सणलग्गइकण्ठ * ॥ अत्रायंविषग्रन्थिर्यस्यकण्ठेनलगतिसम्रियतइत्येतयोःपरस्परमसङ्गतेरयमसङ्गतिर्नामविरोधः ॥ ३ ॥ प्रत्यनीकंयथा । उत्कण्ठासन्तापोरणरक्षकोजागरस्तनोस्तनुना । फलमिदमहोम

"अयुवतिमार्दवमित्यादौ,, विरुद्धधर्मोक्तिविषयस्याचिन्त्यप्रभावातिशयत्वेनप्रसिद्धिर्वा । यथा"दिग्वासायदीत्यादौ,, विरोधस्यारोपमात्रेणसरूपतयाप्रतिपत्तिमात्रंवा । यथासाउप्पण्डीत्यादौ । सर्वश्चायंविरोधोभिधीयमानःप्रतीयमानश्च । अथादिशब्देनयोभिधीयतेसोभिधीयमानःप्रतीयमानस्तुतद्विनाकृतोययाभट्टबाणस्य । यत्रमातङ्गगामिन्यःशीलवन्त्यश्चगौर्योविभवरताश्चश्यामाः पद्मरागिण्यश्चधवलद्विजशुचिवदनामदिरामोदिश्वसनाःप्रमदाइति । इहान्यैरलङ्कारकारैरसङ्गतिप्रत्यनीकाधिकविषमाख्यमलङ्कारचतुष्टयंविरोधात्पृथग्लक्षितन्तल्लक्षणानि । सम्बन्धेयस्ययत्कार्यमतत्सम्बन्धेपितस्यतत् । नबाध्यतेचेत्तामाहुरलङ्कृतिमसङ्गतिम् । प्रत्यनीकमभिप्रेतङ्कार्यमप्राप्यतत्पुनः । विरुद्धकार्यसम्प्राप्तिर्भवेत्तेनैवहेतुना । परिमाणादियो

याप्तंसुखायमृगलोचनान्दृष्ट्वा ॥ अत्रमृगलोचना
दर्शनस्याकिलनिर्वृत्तिःफलम्भगातुतान्दृष्ट्वाऽन्तस्ता
पादिकम्प्रयाप्तमितिप्रत्यनीकफलत्वादयम्प्रत्यनी
काख्योविरोधः ॥ ४ ॥ अधिकोयथा । एकोदाश
रथिःकामंयातुधानाःसहस्रशः । तेतुयावन्तएवाजौ
तावद्धाददृशेसतैः ॥ अत्रैकस्यदाशरथेरनेकसङ्ख्यै
र्यातुधानैर्यत्समरकर्मतत्रतैरस्यतावद्धादृश्यमानत्वे
नैकसङ्ख्याविरुद्धमाधिक्यङ्गम्यतइत्ययमधिकाख्योवि
रोधः ॥ ५ ॥ विषमंयथा । दिशामलीकालकभङ्ग
ताङ्गतस्त्वयीवधूकर्णतमालपल्लवः । चकारयस्याध्व
रधूमसञ्चयोमलीमसःशुक्लतरम्भवद्यशः । अत्रम
लीमसाध्वरधूमसञ्चयेनयद्यशयःशुक्लीकरणन्तद्य
द्यादृशादेवजायतेतत्तादृगेवभवतीतिप्रसिद्धेर्वैषम्या

---

गेनव्यवस्थानमुपेयुषः । अव्यवस्थाभिधानंयदधिकन्तत्प्रचक्षते । का
रणेनविरूपंयत्कार्यमुक्तवदुच्यते । आश्चर्यकारितत्प्राहुर्विषमंशब्दवु
द्धयइति ।तदेतेषांलक्षणाभेदाद्विरोधएवान्तर्भावोनह्यन्यवान्तरभङ्गि
भेदमात्रेणसामान्यान्तर्भावोनभवतीत्याशयवानाह । असङ्गतिः प्र
त्यनीकमिति ॥ १ ॥ शुद्धानामेवेति । एकेनैवप्रतियोगिनासहानव
स्थानोक्तौविरोधनिर्वाहात् ॥ १ ॥ उत्तरोत्तरग्रथनादिति । यद्यप्ये
केनविरोधिनासहोक्तौविरोध्यन्तरेणापितथाभावमासादयन्नेवग्रथि
तस्तथाप्युत्तरग्रथनधाशोभाविशेषार्पकोभवतीत्यभिप्रायः ॥ २ ॥ गो
ठवह्नीति । गोष्ठे । गोक्वीअपूर्वा । काचिविसगाठ । कोपिविष
ग्रन्थिः । रोमाञ्चादपक्रियामितिस्त्रीलिङ्गता । पचेल्लिड । प्रत्यु
त । विषग्रन्थेः कण्ठसम्बन्धेनमारकत्वम्प्रतीतम् । वर्ण्यमानायारू
परयत्वतथाभूतस्यैवेतिव्यक्तोविरोधः ॥ ३ ॥ अत्रमृगलोचनादर्शनस्यै
वेति यद्यप्येकस्यविरुद्धकार्यकारित्वन्नविरुद्धन्तथापियथैवप्रवृत्याकि

त्परस्परमसङ्गतेरयंविषमाख्योविरोधः ॥ ६ ॥

॥ ७ ॥ प्रभूतकरणालोकात्स्यादेवमितिसम्भवः ।
सविधौवानिषेधेवाद्वयेवानद्वयेपिवा ॥ १ ॥ एषु
विधिविषयोयथा । त्वय्यादातुञ्जलमवनतेशार्ङ्गि
णोवर्णचौरेतस्याःसिन्धोःपृथुमपितनुदूरभावात्प्र
वाहम् । प्रेक्षिष्यन्तेगगनगतयोनूनमावर्ज्यदृष्टीरे
कम्मुक्तागुणमिवभुवःस्थूलमध्येन्द्रनीलम् । अत्र
त्वयिजलमादातुमवनतेसतितस्याःसरितःप्रवाहो
मध्यनिविष्टेन्द्रनीलमणिर्मुक्तागुणइवगगनगतिप्रे
क्षणीयोभविष्यतीतिविधेःसम्भाव्यमानत्वादयंवि
धिविषयःसम्भवः ॥ १ ॥ निषेधविषयोयथा ।
परस्यभूयान्विवरेभियोगंप्रसह्यसंरक्षणमात्मरन्ध्रे ।
भीष्मेप्यसम्भाव्यमिदङ्गुरौवानसम्भवत्येववनेचरे

---

न्चित्कार्यङ्कर्त्तुमुद्यतोनतयैवतदिरुद्धङ्करोतितदेतत्सुखःयेतिचतुर्ष्वा
द्योत्यते ॥ ४ ॥ ५ ॥ ६ ॥ ७ ॥ सामग्र्येकदेशसद्भावमात्रेणकार्यसद्भा
वेस्थितेविरोधच्छायामूलत्वमितितदनन्तरंसम्भवः प्राप्तावसरइत्या
ह । प्रभूतेति । भूयांसिकारणानिदृष्ट्वाकार्यमुत्पत्स्यतेनापिदैवात्क
दाचिन्नस्यादितिज्ञानसम्भवः । नचायंसंशयएव । नहिस्यान्नवेति
दोलायते नापिवितर्कः । व्याप्यारोपस्याभावात् । क्वतर्ह्ययमन्तर्भव
ति । नक्वचिज्ज्ञानान्तरस्यैवोच्यमानत्वात् । अनिश्चयरूपतामात्रेणात
त्रान्तर्भावेतिप्रसङ्गात् । नापिभ्रान्तिर्व्यंगभूतबाधपुरःसरत्वात् ।
भ्रान्तौतुसिद्धायाम्बाधोत्पत्तिरितिवक्ष्यते । सविधौवानिषेधेवेति ।
सम्भवोविषयनियतोविधिनिषेधोभयानुभयरूपश्चतुर्विधोविषयः अ
प्रवृत्तप्रवर्त्तनन्द्विरूपम् । प्रयोजकगतम्प्रयोज्यगतञ्च । आद्यम्प्रयुक्ता
ख्येशब्दालङ्कारेविधिद्वारेणेत्यनेनोक्तम् । द्वितीयन्तुभूतभवनलक्षणा
मिहोच्यते । सम्प्रसक्तस्याभावोनिषेधः । एतेनोभयानुभयरूपौव्या

षु ॥ अत्रेदम्भीष्मद्रोणयोरसम्भाव्यमानन्धनुर्वेद
कौशलमस्मिन्वनेचरेनसम्भवतीतिनिषेधविषयःसम्
भवः । विधिनिषेधविषयोयथा ॥ २ ॥ उत्पश्या
मिद्रुतमपिसखेयत्प्रियार्थंयियासोःकालक्षेपङ्ककुभ
सुरभौपर्वतेपर्वतेते । शुक्लापाङ्गैःसजलनयनैःस्वा
गतीकृत्यकेकाःप्रत्युद्यातःकथमपिभवान्गन्तुमाशु
व्यवस्येत् ॥ अत्रद्रुतमपियियासोःकालक्षेपन्तवो
त्पश्यामीतिविधिरूपःकथमपिनभवान्गन्तुमाशु
व्यवस्येदितिनिषेधरूपस्तदेवंविधिनिषेधयोरसम्
भाव्यमानत्वादयमुभयविषयःसम्भवः ॥ ३ ॥ अनु
भयविषयोयथा । तस्याःपातुंसुरगजइवव्योम्निपू
र्वार्द्धलम्बीत्वञ्चेदच्छस्फटिकविशदन्तर्कयेस्तिर्यग
म्भः । संसर्पन्त्याःसपदिभवतःस्रोतसिच्छाययासा
स्यादस्थानोपगतयमुनासङ्गमेनाभिरामा ॥ अत्र
यदित्वमेवङ्कुर्यास्तदेवंसास्यादितिविधिनिषेधयो

ख्यातौ ॥ १ ॥ अत्रत्वयिजलमिति । अप्रेक्षणीयस्यप्रेक्षणीयताभवनं
विधिः ॥ १ ॥ अस्मिन्वनेचरइति । परविवराभियोगेस्वविवररक्षारू
पबहुतरकारणालोकान्नायंवनेचरइतिनिषेधएवसम्भाव्यते ॥२॥ काल
क्षेपन्तवोत्पश्यामीतिउत्पश्यामिसम्भावयामिअकालक्षेपवतः कालक्षे
पभवनंविधिः । कथमिवेतिकाकूपस्थितोगमनाभावोनिषेधः । नच
वाच्यन्द्वावत्रसम्भवौतथाचनैकोप्युभयविषयइति । यतोयैवकालक्षे
पसामग्रीसैवशुक्लापाङ्गैरित्यादिकारणसह कृतानिषेधमपिविषयीकरो
तिअतःसम्भवभेदेनकिञ्चित्प्रमाणमिति ॥ ३ ॥ अत्रयदित्वमेवङ्कुर्या
इति । नतावदत्राभावःप्रतीयतेइतिननिषेधसम्भवः । विधिसम्भवो
पिनास्ति । योहिव्यवस्थितकारणदर्शनेनव्यवस्थितस्यैवभवनस्यसम्भ

योरनवगतेरयमनुभयविषयःसम्भवः ॥४॥ एतेनवि
धिषेधयोर्विकल्पविषयोपिव्याख्यातःयथा । यदि
भवतिमुखानांशाकृपदूनांसहस्रन्निरुपममवधान
ञ्जीवितञ्चातिदीर्घम् । कमलमुखितथापिक्ष्मापते
स्तस्यकर्तुं सकलगुणविचारःशक्यतेवानवेति । तदे
तन्निगदेनैवव्याख्यातम् ॥ ५ ॥ द्रोणस्यसम्भवः
खार्यांशतेपञ्चाशतोयथा । तथान्येसम्भवम्प्राहुः
सोनुमानान्नभिद्यते ॥ २ ॥ भिद्यतेतुयद्यनिश्चयः
स्यात् । यथा । रुद्धापाङ्गप्रसरमलकैरञ्जनस्नेहशून्य
म्प्रत्यादेशादपिचमधुनोविस्मृतभ्रूविलासम् । त्व
य्यासन्नेनयनमुपरिस्पन्दिशङ्केमृगाक्ष्यामीनक्षोभा

वःसविधिसम्भवशब्देनाभिधीयतेनचेहतथा । तदिदमुक्तमनवगतेरि
ति ॥ ४ ॥ तदेतन्निगदेनेति । परस्परव्यभिचारिणोरेकत्रसम्भाव्यमा
नत्वादितिव्यक्तौविकल्पइत्यर्थः ॥ ५ ॥ पूर्वेषांसम्भवलक्षणमुपन्यस्यदू
षयति । द्रोणस्येति । समुदायज्ञानादेकदेशज्ञानंसम्भवइतिप्राच्या
नामभिप्रायः । तथाचसमुदायस्यसमुदायिव्याप्तत्वादियङ्खारीद्रोणव
तीखारीत्वादितिसुलभमनुमानएवास्यान्तर्भावइत्यर्थः ॥ १ ॥ कथ
न्तर्हितवापिसम्भवोभिद्यतेसामग्रीकार्यव्याप्तेतितत्राप्यनुमानमेवभ
विष्यतीत्यतआह । भिद्यतइति । नहिसामग्रीदृष्टायतःकार्यमनुमी
यतेकिन्तुप्रभूतकारणदर्शनेनकार्यस्यज्ञानमन्यदेवोत्पद्यतइतिवक्तव्य
न्तथाचास्माकन्दर्शनेयुक्तःपृथग्भावः ॥ २ ॥ यस्तूदाहरणविशेषन्नप्र
तिसन्धत्तेतम्बोधयितुमुदाहरणान्तरमाह । रुद्धापाङ्गेत्यादि । एवं
विश्लेषदुःखेनकर्षितायथाऽचेतनानामप्यलकानाङ्करुणोत्पन्नैवलक्ष्य
ते । तस्मादियम्माजलधरन्द्राक्षीदितिनिसर्गचपलस्यापाङ्गस्यप्रसर
मवरुन्धन्ति । स्नेहपदेननयनाञ्जनयोरनुपधिरनुबन्धोव्यज्यते । ते
नमिथोमैत्रीयोग्यत्वम् । तेनतन्नयनादन्यत्रनाञ्जनङ्कान्तिमाप्नोतीति

कुलकुवलयश्रीतुलामेष्यतीति । अत्रयथाख्यायान्
द्रोणःशतेपञ्चाशदितिनियमोनैवंविप्रलम्भेऽलका
नामकल्पनमनङ्गनमक्ष्णोर्मधुनोवाप्रत्यादेशःसुहृदु
दन्तलाभारम्भेद्यानयनस्पन्दनानिसम्भाव्यतेचप्रभू
तकारणलोकादित्येषोपिविविधरूपएवसम्भवतीति ६
८ ॥ अन्योन्यमुपकारोयस्तदन्योन्यंत्रिधाचतत् ।
वाच्यम्प्रतीयमानञ्चतृतीयमुभयात्मकम् ॥ १ ॥
अन्योन्यचूलिकान्योन्यभ्रान्तिरन्योन्यमेकता । अ
न्योन्यालङ्कृतेरन्तस्त्रयमेतदिहेष्यते ॥ २ ॥ तेष्वभि
धीयमानमन्योन्यमिहयथा । कण्ठस्यतस्यस्तनव
न्धुरस्यमुक्ताकलापस्यचनिस्तलस्य । अन्योन्यशो
भाजननाद्बभूवसाधारणोभूषणभूष्यभावः ॥ अत्रा
न्योन्यशोभाजननेत्यादिनोपकार्योपकारकभावस्य
द्वयोरप्यभिहितत्वादभिधीयमानमिदमन्योन्यम् ।
प्रतीयमानंयथा । उद्धच्छोपिअइजलङ्गहजहाविर
लङ्गुलीचिरम्पहिओ । पाआवलिआवितहतहधा
रन्तणुअम्पितणुएई * ॥ अत्रपथिकप्रपापालिकयो

कोपिलावण्यप्रकर्षस्तयाभूतस्याप्यञ्जनस्यत्यागेयदेकतानतयानात्मा
नमपिप्रतिसन्धातुंसमर्थैतिव्यनक्ति । एवम्पदान्तरेष्वपिस्वरसोनुसन्धे
यःविपुलस्वरूपकारणालोकादलकाकल्पनादिकम्प्रियतमदूतप्रत्यास
त्तिलक्षणकारणालोकाद्वोपरिनयनस्पन्दनंसम्भाव्यत इतिसम्भवद्वयम
त्रेतिव्याख्यानेनस्फुटयति । अत्रयथाख्यायामिति ॥ ८ ॥ परस्परोप
कारकयोरेकस्यविशेषन्दृष्ट्वाऽपरस्यविशेषोज्ञायतइतिसम्भवसाम्यात्त
दनन्तरमन्योन्यलक्षणमाह । अन्योन्यमिति । विशेषार्पणमुपकारो
नचेयम्परिवृत्तिःस्थितस्यानपनयनात्दानप्रतिदानाभावाच्च । विशेष

* ऊर्ध्वाक्षःपिबतिजलंयथायथाविरलाङ्गुलिश्चिरंपथिकः ।

र्मिथोऽनुरागोयदेकस्य विरलाङ्गुलिनाकरेणपानीय पानमन्यस्याः सुतरांवारिधारातनूकरणन्तेनपरस्परमुपकार्योपकारकभावात्प्रतीयमानमिदमन्योन्यम् ॥ २ ॥ प्रतीयमानाभिधीयमानंयथा । गोलाविसमोआरच्छलेणअप्पाउरम्मिसेमुक्को । अणुअम्पाणिद्दोसन्तेणविसागाढमुअऊढा * । अत्रगोदावरीविषमावतारव्याजेनतयातस्योरसिआत्माक्षिप्तस्तेनापिअनुकम्पानिर्दोषंसागाढमुपगूढेत्यभिधीयमानःपरस्परमनुरागादुपकार्योपकारकभावःप्रतीयतेइत्युभयात्मकमिदमन्योन्यम् ॥ ३ ॥ अन्योन्यचूडिकायथा । शशिनाचनिशानिशयाचशशीशशिनानिशयाचयथागगनम् । भवताचसभासभयाच

---

स्तुनानारूपस्तद्वाक्यार्थीभूतरसानुगामितयातत्रतत्रोन्नीयते । विभागन्दर्शयति । त्रिधेति । अभिधीयमानंविशेषतःशब्देनोपात्तंसामान्यतःशब्देनविषयीकृतंविशेषतस्तुप्रतीयमानमेवेत्युभयात्मकम् । द्वाभ्यामन्यतोऽप्रतीयमानम् । अन्योन्यचूलिकादिलक्षणानिग्रन्थकारएवस्फुटीकरिष्यति ॥ १ ॥ २ ॥ कण्ठस्येति । बन्धुरोनम्रः । निस्तलोवर्त्तुलः ॥ १ ॥ अत्रपथिकेति । मिथोनुरागइत्यनेनपरस्परानुरागसंवर्द्धनमेवात्रविशेषार्पणमितिमतम् । तथाहिकरस्याविरलाङ्गुलिकरणेकथमहमेतांचिरायपश्यामीतिप्रपापालिकाभिप्रायएववर्द्धितोभवति । एवमपिवारिधारातनूकरणेबोद्धव्यम् । नचायमेवंविधोर्थःकेनापिशब्देनाभिहितइतिभवतिप्रतीयमानता ॥२॥ वक्तृप्रतिपाद्यादिविशेषपर्यालोचनेनैवध्वननमुन्मिषति । अत्रगोदावरीति । पूर्ववत्प्रतीयमानोपिपरस्परमुपकारस्यलेनानुकम्पानिर्दोषशब्दाभ्यामभिधयास्पृश्यतइत्युभयरूपम् । नचशब्दोपात्तेकिन्ध्वननेनेतिवाच्यम् । भिन्नविषयत्वात् ॥ ३ ॥ अत्रनिशाशशिनोरिति । चूडिकाशिखा । सायथाशरीर

---

* गोदाविषमोत्तारच्छलेनआत्माउरसितयामुक्तः ।

भवान्समयाभवताचतथाभुवनम् । अत्रनिशाशशिनोःसमाभवतोरपरस्परमुपकार्योपकारकभावेवर्तमानयोर्यदिदङ्गगनञ्जगतीचप्रसिद्धयोरुपकारकत्वञ्चूडिकेवोपर्युपरिलभ्यतेसेयमन्योन्यचूडिका ॥ ४ ॥ अन्योन्यभ्रान्तिर्यथा । जम्बूनाङ्कुसुमोत्करे नवमधुन्यारब्धपानोत्सवाःकीराःपक्वफलाशयामधुकरीश्चुम्बन्तिमुञ्चन्तिच । एतेषामपिनीलकिंशुकदलैरेभिःसमानत्विषाम्पुष्पभ्रान्तिभिरापतन्तिसहसाचञ्चूषुभृङ्गाङ्गनाः । अत्रजम्बूकुसुमस्थितमधुकरीषुशुकशकुन्तानांयापक्वजम्बूफलभ्रान्तिर्याचमधुकरीणांशुकचञ्चुषुकिंशुककुसुमभ्रान्तिःसेयमन्योन्यभ्रान्तिरन्योन्यस्मादपृथगेव ॥ ५ ॥ अन्योन्यात्मकतायथा । प्रफुल्लतापिच्छनिभैरभीषुभिःशुभैश्चसप्तच्छदपांसुपाण्डुभिः । परस्परेणच्छुरितामलच्छवीतदेकवर्णाविवतौबभूवतुः । अत्रश्यामपाण्डुत्वयोःपरस्परव्यतिकरेणैकवर्णकरणादन्योन्यमेकतानाम भ्रान्तिभेदोन्योन्यात्पृथगेव ॥ ६ ॥ १ ॥ व्यत्ययो

---

तदवयवेन्योभिन्नैवोपलक्ष्यतेतथात्रापिनिशाशशिनोःसभाभवतोःपरस्परमुपकारकत्वमभिसन्धायद्वयोर्द्वयोर्गगनजगतीप्रत्युपकारकत्वमन्यदेवाभिधीयते । नचैतावतैवविशेषेणापृथग्भावः । अन्योन्यालङ्कारकवलीकृतस्यैवतस्यसम्भवात् । ॥ ४ । अत्रजम्बूकुसुमेति । नह्यतैमिरिककेशप्रत्ययवद्भ्रान्तेरलङ्कारताऽपितुद्भूतसादृश्यमूलायाएवतथाचचमत्कारित्वस्यान्तरोपमापर्यवसायित्वमितिभ्रान्तिसंसर्गएवविशेषापेक्षउपकारः । अन्योन्यवचनेनपरस्परगामितातस्यतेनैवदर्शितेत्यन्योन्यलक्षणाश्लेषात्कथम्पृथग्भवतीत्येतेनान्योन्यैकताव्याख्याता ५

वस्तुनोयस्तुयोवाविनिमयोमिथः । परिवृत्तिरिहो
क्तासाकाव्यालङ्कारलक्षणे ॥ १ ॥ सात्रिधाव्यत्यय
वतीतथाविनिमयात्मिका । तृतीयाचोभयवतीनि
र्दिष्टाकाव्यसूरिभिः ॥ २ ॥ त्रिधापिचासौमुख्यामु
ख्यभेदात्त्रिधाभूयःषोढासम्पद्यते । तासुव्यत्ययव
तीमुख्यायथा । कुमुदवनमपश्रिश्रीमदम्भोजख
ण्डन्त्यजतिमदमुलूकःप्रीतिमांश्चक्रवाकः । उदय
महिमरश्मिर्यातिशीतांशुरस्तंहतविधिललितानां
हीविचित्रोविपाकः । अत्रयत्कुमुदवनादीनामप
श्रीकत्वादिकंयच्चाम्भोजखण्डादीनांश्रीमत्वादिक
म्मुख्यमेवप्रातरुपलभ्यते सेयंव्यत्ययवतीमुख्यानाम
परिवृत्तिः ॥ १ ॥ व्यत्ययवत्यमुख्यायथा । जो
तीअअहरराउरत्तिंउव्वासिओपिअअमेण । सोच्चि
अदीसइगोसेसवत्तिणअणेसुसङ्कन्तो * अत्रप्रियतमे
नरात्रावुद्वासितस्याधररागस्ययेयंसपत्नीलोचनेषु

॥ ६ ॥ ८ ॥ परस्परनिरूप्यतासाम्यात्क्रमप्राप्तांपरिवृत्तिन्निरूपयति ।
व्यत्ययइति । वस्तुस्थितिविपर्यासवचनम्परिवृत्तिरितिस्फुटमेवलक्ष
णम् ॥ १ सात्रिधा । एकस्थानस्थितस्यवस्तुनःस्थानान्तरप्राप्तिवचने
न,दानप्रतिदानवचनेन,उभयवचनेनवा । तदाह । सात्रिधेति ॥ २
सर्वत्रमुख्यवृत्त्यागौणवृत्त्यपाश्रयेणवातथाभावोक्तिरितिषट्प्रकार
त्वन्दर्शयति । त्रिधापिचासाविति । कुमुदवनमिति । कुमुदवनानुकू
लकाद्दिनरत्नेःश्रीमत्वस्नीलिरुदयस्वापसृतानिप्रमानिपुनरम्भोजख
ण्डचक्रवाकीहिमांशूनामितिव्यक्तोव्यत्ययः । मुख्यत्वञ्चान्यएवव्यक्त
म् ॥ १ ॥ अत्रप्रियतमेनेति । ताम्बूलादिहेतुकोन्यएवाधररागोन्यश्चमत्सर
हेतुकःकषायतालक्षणोनयनगामीतितयोरभेदाध्यवसायोयत्तत्पदाभ्या
म्प्रतीतइतिगौणीवृत्तिः । प्रकाशतेचशब्दवृत्त्याधरस्यानस्थितस्यनयन

* यत्तस्याअधररागोरात्रौउद्वासितःप्रियतमेन ।

सङ्क्रान्तिः ॥ २ ॥ विनिमयवतीमुख्या यथा । प्र
श्च्योतन्मदसुरभीणिनिम्नगायाः क्रीडन्तोगजपत
यःपयांसिकृत्वा । किञ्जल्कव्यवहितताम्रदानलेखै
रुत्तेरुःसरसिजगन्धिभिःकपोलैः । अत्रकरिकपोल
मदामोदस्याम्भोजरजःपरिमलस्यचसरित्सलिलद्वि
पकपोलपाल्योर्मुख्यत्वेनैवपरस्परोपकारकरणादि
यंविनिमयवतीमुख्यानामपरिवृत्तिः ॥ ३ ॥ वि
निमयवत्यमुख्यायथा । तस्यचप्रवयसोजटायुषः
स्वर्गिणःकिमिहशोच्यतेऽधुना । येनजर्जरकलेवरव्य
यात्क्रीतमिन्दुकिरणोज्ज्वलंयशः । अत्रजर्जरकले
वरन्दत्वाशशिकिरणशुभ्रंयशःक्रीतमित्यमुख्ययैववृ
त्त्याविनिमयोक्तेरमुख्येयंविनिमयवतीपरिवृत्तिः ॥
४ ॥ उभयवतीमुख्यायथा । लोचनाधरकृताहृत
रागावासिताननविशेषितगन्धा । वारुणीपरगुणा
त्मगुणानांव्यत्ययोविनिमयञ्चवितेने । अत्रवारु
ण्यायदधराद्रागोपहृत्यचक्षुषोर्निक्षिप्तस्तेनेयंव्यत्य
यवतीयच्चमुखामोदवासितयास्वामोदेनमुखामोदो
विशेषितस्तेनविनिमयवतीतदियमुभयथापिमुख्य

---

स्यानप्राप्तिरितितावतैवालङ्कारनिर्वाहः २ अत्रकरिकपोलेति।गजेन्द्रा
णाम्मदयासमचन्द्रकयोः स्वाश्रितयोर्नदीषुसङ्क्रामणान्नदीस्थितयोश्च
किञ्जल्काम्भोजपरिमलयोर्ग्रहणान्तेमदानप्रतिदानवत्तयाविनिमयो
भवति ॥ ३ ॥ अत्रजर्जरेति । मूल्यार्पणक्रयणयोरत्रबाधाल्लक्षणैवोप
चारः शब्दवृत्तिस्तुपूर्ववदेवकुण्ठैवेतिभवतिविनिमयः ॥ ४ ॥ लोचना
धरेति । लोचनाधरयोर्यथासङ्ख्यङ्कृतआहृतोरागोययातेनलोचने
कृतोधरादपनीतइतिव्यत्ययः । वासितेआननेनेविशेषितोगन्धोयस्याः

वृत्त्यैवोक्तेतिमुख्येयमुभयवतीपरिवृत्तिः ॥ ५ ॥ उभयवत्यमुख्या यथा। किञ्चित्रं यदि देवेन भूभृतः करदीकृताः। देवोपि दापितः किन्तैर्न पुनः पृष्ठतः करम् ॥ अत्रभूभृतामकरदानांयत्करप्रदानञ्जिगीषोश्चयत्पृष्ठे हस्तनिक्षेपः सएषद्रव्यगुणादीनांस्थानादिपरिवृत्तौव्यत्ययोयच्चदेवेनभूभृतःकरदीकृताःदेवोपितैः पृष्ठतःकरन्दापितइतिसायन्दानप्रतिपादनलक्षणोपिविनिमयइत्येतदुभयमपीहश्लिष्टपदाभिधेयत्वादमुख्यवृत्त्यैवोच्यमानमुपलभ्यतइत्युभयवतीयममुख्यापरिवृत्तिः ॥ ६ ॥ १० ॥ दृष्टान्तःप्रोक्तसिध्यैयःसिद्धेर्थेतन्निदर्शनम् । पूर्वोत्तरसमत्वेतदृजुवक्रञ्चकथ्यते ॥ १ ॥ तेषुपूर्वमृजुयथा । उदयन्नेवसवितापद्मेष्वर्पयतिश्रियम् । विभावयतिभूतीनां

---

सतया । तेनतयामुखंवासितम्मुखेनचसेतिभवतिविनिमयः । परगुणात्मगुणानामिति । परगुणानामितिपरगुणानांव्यत्ययश्चात्मगुणानां विनिमयइतिसम्बन्धः । कर्तृत्वमुत्प्रेक्षितन्त्वदेतद्दर्शयति । अत्रेति ॥ ५ ॥ ६ ॥ १० ॥ एकत्रप्रतीतस्यान्यत्रप्रत्ययःपरिवृत्तौतथादृष्टान्तेपीतितदनन्तरन्दृष्टान्तंलक्षयति । दृष्टान्तइति । प्रोक्तस्यप्राकरणिकस्यसिद्धिर्निश्चयः । नन्वनुमानाङ्गमपिदृष्टान्ताभिधानम्पृथगलङ्कारःस्यादित्यतआह । सिद्धेर्थइति । सिद्धएवार्थेकञ्चिद्विशेषमावेदयितुन्दृष्टान्तोक्तिर्निदर्शनम् । साध्येत्वर्थेनुमानमितिविभागः । पूर्वन्दार्ष्टान्तिकोक्तिंसमाप्यपश्चादृष्टान्तोक्तिरितिद्वितीयः । एकयैवोक्त्यादृष्टान्तदार्ष्टान्तिकयोरुक्तिरितितृतीयस्तदाह । पूर्वोत्तरसमत्वइति । यत्रशब्दतएवतुल्येतिवृत्तता दृष्टान्तदार्ष्टान्तिकयोरनुगम्यतेतदृजुनिदर्शनम् । यत्रतुपर्यवसितायामुक्तौसहृदयपर्यालोचनयातद्वक्रम् । तदेतदाह । ऋजुवक्रञ्चेति । तेननिदर्शनस्यषड्भेदाः ॥ १ ॥ सूर्यदृष्टान्ते

फलंसुहृदनुग्रहः । अत्रऋजूक्त्यैश्पूर्वेन्दृष्टान्तःप
श्चाद्दार्ष्टान्तिकम्प्रदर्शितमितीदमृजुपूर्व्वञ्चनिदर्श
नंसूर्यदृष्टान्तेनविभूतीनांसुहृदनुग्रहःफलमितिज्ञाप
यति ॥१॥ तदेवमवक्रंयथा । पाणउडीअविजलिथ
णहुअत्रहोजलइजरासाडम्मीगहुलेपरिहरिअव्वात्रिस
मदसासठिआपुरिसा * । अत्रापिपूर्वन्दृष्टान्तःप
श्चाद्दार्ष्टान्तिकंकिन्तुयथापूर्वत्रोदीयमानसवितासु
हृत्पद्मेषुश्रियमर्पयतीतितुल्येतिवृत्ततोऋजूक्त्याश
ब्देनैवाभिधीयते । नैवमत्रकिन्तर्हिज्वलनेतिवृत्तेन
तुल्यन्तत्तुसत्पुरुषाणामितिवृत्तमशाब्दंयुक्तिचातु
र्यात्प्रतीयतेतदिदम्पूर्वञ्चवक्रञ्चनिदर्शनम् ॥ २ ॥
उत्तरमृजुयथा । हिअअत्तिरच्छीपडसम्मुहपच्छाग
हिअकडक्खस्स । पहिअएकेजेगोरडीणञ्चउहद्वउ

नेति । ऋद्धिभिःसुहृदनुगृह्यतइतिसिद्धोर्थःकिन्तुतदेतदेवतासाम्फ
लमितिविशेषमभिधातुंसूर्यदृष्टान्तोपन्यासः । अत्रसमृद्धताफलंसुहृत्त्व
मनुग्रहत्वञ्चेतिशब्दतएवसूर्यादिषुदृष्टान्तदार्ष्टान्तिकाभिमतेषुप्रतीय
तइतिऋजुत्वमित्यर्थः॥ १ ॥ पाणउडीति ॥ पाणपदंम्लेच्छदेशीयंपाने
कुटीशौण्डिककुटीवा । अत्रापीति । दृष्टान्तेपिपानकुटीज्वलनादिकं
विशेषणमुपात्तञ्चतद्दार्ष्टान्तिकेसम्भवतिशब्देनवाप्रत्याय्यन्तकिन्तुबि
म्बप्रतिबिम्बन्यायेनात्रभवति । तथाहियथापानकुट्यांहुतवहस्यज्व
लनंयज्ञवाटेचतथाऽव्यवस्थितचित्ततयाग्रामीणाऽविदग्धयुवतिप्रस
क्तोभूत्वान्यत्रनागरिकासुविदग्धासुरज्यतेसोपिनत्याज्यइत्युक्तिचातु
र्यात्तुल्येतिवृत्तलाभस्यतेऽतोवक्रत्वमित्याह । किन्तुयथेति ॥ २ ॥
हिअअत्ति । विच्छित्तिपथिकस्याभिलाषितयायोषित्साएवैव । हृ
दयेस्मरणारूढासतीलग्नाअतएवतिरश्चीतिर्यक्शयायमानापथिक
सम्मुखाभिमुखस्यतस्यचलितत्वात् पश्चाच्चगृहीतकटाक्षापश्चाद्भूतेन

* पर्णकुटीमपि ज्वालयित्वाहुतवहो ज्वलतियज्ञवाटेपि ॥
नहितेपरिहर्तव्या विषमदशासंस्थिताः पुरुषाः ॥ १ ॥

वच्क्र * । अत्रऋजूक्त्याशब्दतएवाभिधीयमानसा
धर्म्यन्दार्ष्टान्तिकमभिधीयोत्तरकालन्दृष्टान्तोभिहि
तस्तदिदमुत्तरमृजुनिदर्शनम् ॥ ३ ॥ तदेववक्रंय
था । उपरिघनन्घनपटलन्दूरेदयिताकिमेतदापति
तम् । हिमवतिदिव्यौषधयःकोपाविष्टःफणीशिर
सि । अत्रापिदार्ष्टान्तिकमभिधीयोत्तरकालमेवदृ
ष्टान्तःकिन्तुयथापूर्वस्मिन्हृदयेतिर्यगित्यादिभिःश
ब्दएवऋजूक्त्यासाधर्म्याभिधानंनैवमत्रतथाऽपितु
किमेतदापतितमितिउक्तिचातुर्येणविपर्ययेणचलि
ङ्गसङ्ख्यायथासङ्ख्यानान्तदेतदुत्तरंवक्रञ्चनिदर्शन
म् ॥ ४ ॥ सममृजुयथा । यातिचन्द्रांशुभिःस्पृष्टा
ध्वान्तराजीपराभवम् । सद्योराजविरुद्धानान्दर्श

---

गृहीतस्वस्तकृतःकटाक्षोयस्याएकेनैवशिरेवधारणे । यांनमुवतु
व्यथेषुमार्गेषुकश्चित्सम्मुखताङ्कश्चित्तिरश्चीनताङ्कश्चित्पश्चाद्भावन्यसे ।
गौरीतुपथिकस्यैकैवतथेति । अत्रऋजूक्त्याशब्दतएवेति । तिर्यक्त्वा
दीनामुभयगामिनांशब्देनोपादानात्प्रतीतिमात्रेणचालङ्कारनिर्वाहः
अपितुतदेतदापतितमित्युक्तिचातुर्येणेति । ननुवउपरीत्यनेनव्यवधा
नमुपात्तन्दृष्टान्तेपिशब्दएवप्रतिफलतितत्कथंवक्रत्वमित्यतआह ।
विपर्ययेणेति । घनपटलन्नपुंसकम्फणीपुमान्दयिताचैकवचनवती
ओषधयोबहुवचनालिङ्गिताःघनपटलम्पूर्वन्दार्ष्टान्तिकमुपक्रम्यदृष्टा
न्तोमौनपूर्वम्फणीनिर्दिष्टस्ततोलिङ्गसङ्ख्यानांविपर्ययोभवतितदय
मर्थेनशब्दतएवोपदेपर्यवस्यानन्दूरत्वमदृष्टान्तयोः प्रतीयतेशिरसि
हिमवतीत्येताभ्यामन्यथाकारंबोधितत्वा । फलतस्तुसएवार्थइतिव
क्रतैवेति ॥ ४ ॥ यातीति । राजाचन्द्रोनृपतिश्च । तदनयोःश्लिष्टो
क्तिविषयतयानपूर्वापरभावोविभाव्यते । चन्द्रांशुपराभूतध्वान्तराजी
नृपतिविरुद्धदुरन्तयोरपिदर्शयन्तीतिशत्रासद्यइतितद्वितेनचसमत्वम्।

* हृदयेतिरिश्चीनाग्रामासंमुखं पश्चागृहीतकटाक्षस्य ।

यन्तीदुरन्तताम् । अत्रराजविरुद्धानामितिश्लिष्टप
देनदर्शयन्तीतिवर्तमानकाललक्षणात्सद्यइतितद्धि
तेनचसमकालमेवदृष्टान्तदार्ष्टान्तिकयोःशब्दतऋ
जूक्त्यैवोक्तत्वादिदमृजुसमन्वयनिदर्शनम् ॥५॥ तदेव
वक्रंयथा । णहुणवरंकोअण्डदण्डएपुत्तिमाणुसेविए
मेअ । गुणवज्जिएण जाअइवंसुप्पण्णेविटङ्कारो * ।
अत्रनकेवलंकोदण्डदण्डकेमानुषेप्येवमेवइतीतरेत
रयोगवद्वक्रतयायुगपदभिधानङ्गुणवर्जितवंशोत्
पन्नेपिटङ्कारोनजायतइतिश्लिष्टपदत्वेपिव्यतिरेक
मुखेनगुणवृत्त्याचाभिधानाद्धनुषीवमानुषेपिगुणव
त्त्येवमहान्शब्दोभवतीतिवक्रोक्त्यासाधर्म्यावगतिः
तदिदमशाब्दत्वादिभिःपूर्वाद्भिद्यमानंसमन्वक्रञ्चनि

किन्तुध्वान्तराजीपराभवंयातीतिदृष्टान्तोक्तौसत्यामध्येराजविरुद्धा
नामितिदार्ष्टान्तिकमुक्त्वापुनरपिदृष्टान्तविशेषणन्दर्शयन्तीत्युक्तम् ।
अतएवोक्तिवक्रीकृतत्वाद्दृष्टान्तदार्ष्टान्तिकयोःसमत्वमित्याशयवा
न्व्याचष्टे । अत्रराजविरुद्धानामिति ॥ ५ ॥ णहुणवरेति । गुणोऽत्र
र्योद्वितन्त्रीचवंशःकुलंवेणुश्च । टङ्कारोऽव्यक्तानुकरणरूपख्यातिश्च । इ
तरेतरयोगवदिति । यथाहि "त्वन्मुखपुण्डरीकञ्चफुल्ले" इत्यत्रफुल्ल
त्वेतीतरेतरयोगेनैकशेषेएकयोक्त्याफुल्लेतिद्वाभ्यांसम्बध्यते तथाविना
प्येकशेषङ्गुणवज्जिएवंसुप्पणेटङ्कारइतियुगपदन्वीयन्ते । ननुयथारा
जविरुद्धानामित्यत्रश्लेषेणार्जुत्वन्तथात्रापिभविष्यतीत्यतआह । श्लि
ष्टपदत्वेपीति । धनुषीवमानुषेपिमहान्शब्दोभवतीतिविवक्षितम् ।
नचव्यतिरेकमुखेनोपनयेऽयमर्थःशब्दादवगम्यते,प्रतीयतेत्वार्थत्वादितियु
क्तंवक्रत्वम् । ननुव्यतिरेकेणैवकथंतुल्यवृत्तितासम्मतेत्यतआ
ह । गुणवृत्त्याचेति । सत्यमेतत्तथापिद्वयोर्वर्णनाययोर्गुणादिकयोर
भेदाध्यवसायोवक्तव्यः । तथागौणवृत्तिव्यपाश्रयेणैववक्रत्वम् । तदि

* नखलुकेवले कोदण्डदण्डे पुत्रिमानुषेपि एवमेव ।
गुणवर्जितेनजायते वंशोत्पन्नेपिटङ्कारः ॥ १ ॥

दर्शनम् ॥ ६ ॥ ११ ॥ शब्दोपात्ते प्रतीते वा सादृश्ये
वस्तुनोर्द्वयोः ॥ भेदाभिधानम्भेदश्च व्यतिरेकश्च क
थ्यते ॥ १ ॥ स्वजातिव्यक्त्युपाधिभ्यामेकोभयभिदा
श्रयः । सादृश्याद्वैसादृश्याच्चाभिन्नः षोढाभिजाय
ते ॥ २ ॥ तत्र शब्दोपात्तसादृश्ये स्वजातिव्यक्तिव्य
तिरेको यथा । अरत्नालोकसंहार्यमवार्यं सूर्यरश्मि
भिः । दृष्टिरोधकरं यूनां यौवनप्रभवन्तमः । अ
त्र यौवनप्रभवस्य तमसस्तमोजात्या सह दृष्टिरोधकर
मिति सादृश्यमुक्त्वा अरत्नालोकसंहार्यमवार्यं सूर्यर
श्मिभिरिति व्यतिरेको विहितः सोयं स्वजातिव्यतिरे

---

दमुक्तं व्यतिरेकमुखेन गुणवृत्त्या चेति ॥ ६ ॥ ११ ॥ व्यतिरेकं विनादृ
ष्टान्तदार्ष्टान्तिकभावाभावाद्व्यतिरेकानन्तरमुपमाह । शब्दोपात्त
इति । भेदाभिधानं वैधर्म्यकथनम् । एवञ्चेन्निरुक्तसर्षपयोरपि सधाभि
धानमलङ्कारः स्यादत उक्तं सादृश्ये वस्तुनोरिति । उपमानोपमेययोरि
त्यर्थः । सादृश्यन्द्विधा । शब्दोपात्तञ्चाशब्दोपात्तमपि ध्वननानु
मानादिभिरवगम्यते व्यतिनविरोधस्ताहिदमुक्तं प्रतीते चेति । तदयम
र्थः । उद्भूतचमत्कारिसादृश्ययोर्वैरस्योक्तिर्व्यतिरेकः स्वरूपाख्यस्तु
पृथग्भेदो नास्त्येवेत्युक्तम् ॥ ३ ॥ विभागन्दर्शयति । स्वजातीयेति ।
येन रूपेणावैयतिरेकमुपादीयते तद्रूपवन्तं व्यतिरेकप्रतियोगिनम्व्यतिरिक्त
स्यतलोव्यतिरेकोपीति स्वजातिव्यतिरेकः प्रथमः प्रकारः । द्वितीयस्तु
सैव व्यक्तिविधर्मेतिएतत्प्रकारद्वयं यथासङ्ख्यमभिधीयमानसादृश्ययो
रिति मूलभेदद्वयन्तथैवापरमेकानेकलक्षणप्रकारद्वयन्तत्रैवान्यत्सादृ
श्यवैसादृश्यरूपन्द्वयमितिक्रमेणषोढाभेदो विवक्षितः । यथाचस्वजा
तिव्यक्तिव्यतिरेकयोः प्रतीयमानाभिधीयमानसादृश्यगामितानसम्भव
तितथाग्रेवक्ष्यते ॥ २ अत्रयौवनप्रभवस्येति । यौवनकृतमज्ञानलक्ष
णमन्यदेवतमोन्यच्चान्धकाररूपन्तयोस्तद्भावापत्तिरियमेवकल्यनास्मा

कः ॥ १ ॥ प्रतीयमानसादृश्येस्वव्यक्तिव्यतिरेको यथा। अस्सोसोहिंसुअरिअसअहिंअणुदिणवढिअ माणु*। अप्पणविणहुमहुपिअहअप्पाणेणसमोणु। अत्रप्रतीयमानोपमानसादृश्योपचरितभेदादात्म व्यक्तेरन्यैरन्यैश्चसुचरितशतैःस्वव्यक्तितएवभेदोभि हितःसोयंस्वव्यक्तिव्यतिरेकः ॥ २ ॥ शब्दोपात्तसादृ श्यएकव्यतिरेकोयथा।प्रेयानेववृषस्तवापिसततम्भू तिस्तवापिस्थिरादुर्गायामवतापिभूधरभुवःसम्यग्गृ हीतःकरः। निर्व्याजम्परमेश्वरस्त्वमियतानोयासि वक्तुञ्जनैर्हेलोल्लासितवाहिनीशमथनेयन्नोविषादी भवान्। अत्राप्रियवृषत्वादिभिरभिहितसादृश्ययो रुपमानोपमेययोरुपमेयस्यैवयथोक्तसादृश्याविषये विषादित्वयुक्तमित्येकव्यतिरेकोयम् ॥ ३ ॥ सए वप्रतीयमानसादृश्योयथा। सकलङ्केनजडेनचसा म्यन्दोषाकरेणतेकीदृक्। अभुजङ्गःसमनयनः

भिरुक्ता। अनेनतुप्रकारेणरसःपुष्यतीत्यलङ्कारमध्येगणनम् ॥ १ ॥ यशोयशोहिंअन्योन्यैर्मानोहङ्कारःपूजावा। यौतुकल्पितभेदाधिकरणा स्वेनोपात्तौविरोधिधर्मवत्तयाशब्दात्प्रतीयेतेतयोर्निर्यत्नत्वाद्धिकमि तिभवतिसादृश्यम्प्रतीयमानम् ॥ २ प्रेयानेवेति। वृषोगौर्धर्म श्च। भूतिःसम्पद्भस्मचदुर्गागौरीविषमाचभूधरभूर्गिरिजापर्वतभूमिश्च करोहस्तोराजदण्डश्च। वाहिनीशःसमुद्रःसेनापतिश्च। विषादीविषभ क्षकोऽवसादवांश्च। यद्यप्यत्रानुरूपंसादृश्यन्नास्तितथापिशब्दसादृ श्येनाप्युपमाप्रवर्त्ततएव। यथासकलङ्कम्पुरमेतज्जातंसम्प्रतिसितां शुबिम्बमिवेति। अतएवोभयालङ्कारत्वमुपमायाः ॥ ३ ॥ सकलङ्के नेति। कलङ्कोपवादोलाञ्छनञ्च। जडोमूर्खःशीतलश्च। अभुजङ्गो

* अन्यैरन्यैःसुचरितशतैरनुदिनं वर्धमानः ॥
अस्यापि न खलमहानपि अयात्मना समानः ॥ १ ॥

कथमुपमेयोहरेणासि । अत्रप्रतीयमानसादृश्य स्यपूर्वार्द्धेचन्द्रोपमानस्यसकलङ्कतादिरुत्तरार्द्धेनवर्ण नीयोपमेयस्याभुजङ्गत्वादिरेकस्यैवभेदकःस्वधर्मोभि हितःसोयमप्येकव्यतिरेकएव ॥ ४ ॥ शब्दोपात्त सादृश्येउभयव्यतिरेकोयथा । अभिन्नवेलौगम्भीरा वम्बुराशिर्भवानपि । असावञ्जनसङ्काशस्त्वञ्चचा मीकरद्युतिः । अत्रद्वयोरप्यभिधीयमानसादृश्यमुप न्यस्योभयोरपिपृथक्पृथग्भेदकःस्वधर्मोभिहितःसो यमभिधीयमानसादृश्ययोरुभयव्यतिरेकः ॥ ५ ॥ सएवप्रतीयमानसादृश्ययोर्यथा । त्वन्मुखम्पुण्ड रीकञ्चद्वयोरप्यनयोर्भिदा । कमलञ्जलसंरोहित्वन् मुखन्त्वदुपाश्रयम् ॥ तदेतन्निगदेनैवव्याख्यातम् सोयम्प्रतीयमानसादृश्ययोरुभयोर्व्यतिरेकः ॥ ६॥ अभिधीयमानसादृश्ययोःसदृशव्यतिरेकोयथा । त्वन्मुखम्पुण्डरीकञ्चफुल्लेसुरभिगन्धिनी । भ्रमद्भ्र मरमम्भोजंलोलदृष्टिमुखन्तु ते । अत्रमुखाम्भोजयोः फुल्लेसुरभिगन्धिनीइतिपदाभ्यामभिधीयमानसा दृश्ययोःसदृशमेवभ्रमद्भ्रमरत्वंलोलदृष्टित्वञ्चभेद कमुपन्यस्तमितिसोयंशब्दोपात्तसादृश्ययोःसदृशव्य तिरेकः ॥ ७ ॥ सएवप्रतीयमानसादृश्ययोर्यथा । चन्द्रोयमम्बरोत्तंसोहंसोयन्तोयभूषणम् । नभोन

---

नवेश्वयापतिरविद्यमानसर्पश्च । समनयनोयुगनयनःसर्वाम्समन्नयतीतिच । आह्लादकत्वादिकञ्चन्द्रेणानिरुद्धैश्वर्यादिकम्परमेश्वरेणसादृश्यम्प्रतीयते ॥ ४ ॥ अभिन्नेति । वेलामर्यादातीरञ्च । गम्भीरोऽत

क्षत्रमालीदमिदमुत्कुमुदम्पयः । अत्रपूर्वार्द्धे चन्द्र हंसयोःप्रतीयमानसादृश्ययोरम्बरोत्तंसत्वतोयभूषणत्वेउत्तरार्द्धेनतुनभःपयसोर्नक्षत्रमालित्वोत्कुमुदत्वेसदृशेएवभेदकेसोयम्प्रतीयमानसादृश्ययोःसदृशव्यतिरेकः ॥ ८ ॥ अभिहितसादृश्ययोरसदृशव्यतिरेकोयथा । शशामवृष्टिर्मेघानामुत्सङ्गेतस्यभूभृतः । विररामनरामस्यधारासन्ततिरश्रुणः । अत्र भूभृदित्यनेनसाक्षादुपात्तसादृश्ययोराममाल्यवतोर्योयमुत्सङ्गे समस्तोश्रुधारापातोयश्चमेघवृष्टेरभावस्तादिदमुभयोरसदृशोबभेदकंसोयमभिधीयमानसादृश्ययोरसदृशव्यतिरेकः ॥ ९ ॥ सएवप्रतीयमानसादृश्ययोर्यथा । अभ्रूविलासमस्पृष्टमदरागम्मृगेक्षणम् । इदन्तुनयनद्वन्द्वन्तवतद्गुणभूषितम् । अत्रकान्तामृगेक्षणयोःप्रतीयमानसादृश्ययोर्भ्रूविलासमदरागौतदभावौचविसदृशौभेदकाविति सोयम्प्रतीयमानसादृश्ययोरसदृशव्यतिरेकः ॥ १० ॥ सदृशासदृशव्यतिरेकाभ्यामेवतदुभयव्यतिरेकोपिव्याख्यातः । यथा । निर्मलेन्दुनभोरेजेविकचाब्जम्बभौसरः । परम्पर्यश्रुवदनौमम्लतुर्भ्रातरावुभौ । अत्रनभःसरसोःप्रतीयमानसादृश्ययोर्निर्मलेन्दुत्वंविकचाब्जत्वञ्चप्रागवदेवसदृशेभेदकेताभ्याञ्चमुख

लस्यशैत्यमचलितचित्तवृत्तिश्च ॥ ५ ॥ ६ ॥ ७ ॥ ८ ॥ शशामवृष्टिरिति भूभृतोराज्ञश्च ॥ ९ ॥ १० ॥ ताभ्यांचसुखञ्चन्द्रेणेति । मुखस्यचन्द्रकमलभावोनादिकविकल्पनासिद्ध इतितेनापिरूपेणप्रतीयमानसादृश्य

चन्द्रमुखकमलाभ्याम्मनोहराहूलादकत्वाभ्यांऽवगम्यप्र तीयमानसादृश्ययोरेवरामलक्ष्मणयोर्यंयम्मुखपर्यं स्रुतातनौघमलानिर्निर्मलेन्दुताविराजमानयोर्विक चाब्जत्वशोभमानत्वयोश्चसाविसदृशीतिसोयंसदृ शासदृशभेदकत्वकृतभेदएवतदुभयव्यतिरेकः ११ एतेनैकव्यतिरेकादिसम्भेदोपिव्याख्यातोयथा। मि थ्यादेवभुजेनतेलपविभवःकल्पद्रुमःस्पर्द्धतेनह्येनम् भुवनत्रयाभयमहासत्रीकृपाणोञ्चति । तुल्यस्तत्र भवान्प्रयागविटपीयस्यैतदेकार्णवे कायान्तर्विनि वेश्यविश्वमखिलंशाखासुशेतेहरिः । अत्रवर्णनीय बाहुकल्पद्रुमयोरभिमतफलदायित्वादिभिःप्रतीत सादृश्ययोर्भुवनत्रयाभयप्रदायीवर्णनीयबाहौकृपा णोभेदकइतिएकव्यतिरेकः । तथावर्णनीयबाहोः प्रयागवटस्यचप्राग्वदेवप्रतीयमानसादृश्ययोरेक स्यभुवनत्रयाभयमहासत्रीकृपाणःशाखासुशेते। अ न्यस्यतुमहाप्रलयेस्वकायान्तर्निवेशिताखिलविश्वो वैकुण्ठः। ताविमौतयोःसदृशावेववेदकौहरिकृपा णयोर्बाश्यामतादिभिःप्रतीयमानसादृश्ययोरिमा वेवधर्मौभेदकौसोयमेवम्प्रकारोव्यतिरेकसङ्करउन्ने

---

स्वसुक्तम् ॥ ११ ॥ ननुमिथोव्यतिरेकिभेदगणनमनुपपन्नंसदृशासदृश व्यतिरेकवदेकादिव्यतिरेकस्यापिसम्भवादित्यतआह । एतेनेति । प्राग्वदेवेति । अभिमतफलदायित्वादिभिः । एवम्प्रकारइति । न ह्येकवाक्यस्यतामात्रेणसम्बाधसत्करोतियथाऽङ्गाङ्गिभावादिभिःपर स्परग्रथनयेति । सैवप्रकारपदेनाभिहिता । यद्युदाहरणान्दृश्यतेस म्भवतिवेति । नहिस्वजातिव्यतिरेकेद्वयोरभेदाध्यवसायःसादृश्यम

यः । स्वजातिव्यतिरेकेप्रतीयमानसादृश्यंस्वव्यक्तिव्यतिरेकेचाभिधीयमानसादृश्यंयद्युदाहरणन्दृश्यतेसम्भवतिवातदातदप्युदाहार्यम् ॥ १२ ॥

॥ १३ ॥ कार्यारम्भेसहायाप्तिर्दैवादैवकृतेद्वया ।
आकस्मिकीबुद्धिपूर्वाभयीवाततसमाहितम् ॥ १ ॥

तत्राकस्मिकीदैवकृतायथा । मानमस्यानिराकर्तुम्पादयोर्मेपतिष्यतः । उपकारायदिष्ट्येदमुदीर्णङ्घनगर्जितम् । अत्रमाननिराकरणोपक्रमेकालोत्पन्नस्याकस्मिकघनगर्जितस्यमानविध्वंसेसहकारित्वादाकस्मिकीयन्दैवकृतासहायसम्पत्तिः ॥ १॥

आकस्मिक्येवादैवकृतायथा । अनुशासतमित्यनाकुलन्नयवर्त्माकुलमर्जुनाग्रजम् । स्वयमर्थइवाभिवाञ्छितस्तमभीयायपराशरात्मजः । अत्रभीमानुशासनकालोपक्रमएवव्यासागमनस्यतदुपकारित्वादाकस्मिकीयमदैवकृतासहायाप्तिः ॥ २ ॥ बुद्धिपूर्वादैवकृतायथा । कल्पान्तेशमितत्रिविक्रममहाक

---

न्तरेणचमत्कारमर्पयतीतिकल्पितमेववाच्यम् । नचकल्पनाशब्दमन्तरेणेतिप्रतीयमानसादृश्यसम्भवःसादृश्यस्यभेदाधिष्ठानत्वात् । स्वव्यक्तिव्यतिरेकेप्यसम्भवस्तथाभूतमेवतुशब्देनोपादीयतइतिस्यादेतदुक्तं यदिदृश्यतइति ॥ १२ ॥ १३ ॥ सहकारित्वंव्यतिरेकनिरूप्यमतोव्यतिरेकानन्तरंसमाहितलक्षणमाह । कार्यारम्भइति । सहायःप्रकृतकार्यकारणस्यसहकारीतेनालङ्कारता आकस्मिकी अचिन्तितपूर्वाबुद्धिपूर्वाद्विपरीता । आकस्मिक्यादीनाम्प्रत्येकन्दैवादैवकृतसम्बन्धेषट्प्रकारंसमाहितमित्यर्थोक्तम् ॥ १ ॥ १ ॥ व्यासागमनस्येति । व्यासेनसम्पाद्यमानस्यतेनादैवकृतेति ॥ २ ॥ दैवात्तथाभूतैरेवेति । नर

ङ्कालदण्डस्फुरच्छेषस्यूतन्तसिंहवक्त्रनखरप्रोतादिको लामिषः । विश्वैकार्णवताविशेषमुदितौ मत्स्यकूर्मावुभौकर्षन्धीवरताङ्गतोस्यतु जगन्मोहमहाभैरवः अत्रप्रलयसमयेमहेश्वरेणसमापयितुमुपक्रान्तानां त्रिविक्रमादीनांयोयन्तद्भुवाबडिशादिनामत्स्यकूर्मयोराकर्षणप्रकारःसभगवताभैरवेणबुद्धिपूर्वकमुपकल्प्यमानोदैवात्तथाभूतैरेवतैःसम्पद्यतइतिबुद्धिपूर्वैयन्दैवकृतासहायाप्तिः ॥३॥ बुद्धिपूर्वैवादैवकृता यथा । मूलेपञ्चततश्चतुष्टयमितिस्रक्सन्निवेशैःशिरःपुष्पैरन्यतमावलोकनमितैरुच्छ्रोणितैरर्चिते । हस्तस्पर्शवशेनमूर्द्धिदशमम्मूर्द्धानमारोपयञ्शम्भोरद्भुतसाहसैकरसिकःकैर्नश्रुतोरावणः । अत्रयोयन्दशवदनेनस्वयञ्छिन्नैःशिरोभिर्भगवतःशम्भोरर्चनाप्रकारउपक्रान्तस्तत्रमूलेपञ्चततश्चतुष्टयमिति शिरोविरचनाप्रपंचोबुद्धिपूर्वकोऽदैवकृतःक्रियमाणोस्यकर्मणः समाप्तौसहकारिकारणतामासादयतीति अयमदैवकृतोबुद्धिपूर्वकःसमाहितभेदः ॥ ४ ॥ अ

---

सिंहनखादीनांवडिशाद्युचितमूर्तिशालिनान्दैवमेवनिमित्तंवडिशादिचिन्तयाचविषयीकृताइतिबुद्धिपूर्वता ॥ ३ ॥ मूलेपञ्चेति । अधोधःस्थूलपुष्पसंसन्निवेशउपर्युपरितनुरितिदूर्वापूजाप्रकारःप्रसिद्धः । अन्यतमालोकननिमित्तैरारोपितैः । अत्रलोकप्रसिद्धपूजाप्रकारःकार्यभूतउपर्युपरितनुसन्निवेशनिष्पादनंसहकारि । इदञ्चरावणप्रयत्ननिष्पाद्यत्वाददैवकृतञ्चबुद्धिपूर्वञ्चभवतीतिअन्यतमेनमूर्द्ध्नोऽन्यतमस्यारोपणान्ननवमच्छेदपर्यन्तमासीत् । पूजास्वरूपेणैवभगवांस्तुष्यतिमतयाविदितेनेत्यभिप्रायवतोनिस्तरङ्गाभक्तिस्तेनसाहसस्याद्भुतत्वम् ४

कस्मिकीबुद्धिपूर्वादैवकृतायथा । साकौमुदीनयन
योर्भवतःसुजन्मातस्यामवानपिमनोरथबंधबन्धुः
ततसङ्गमम्प्रतिसखेनहिसंशयोस्तियस्मिन्विधिश्चम
दनश्चकृताभियोगौ । अत्रमाधवस्ययोयम्मालती
म्प्रतिसमागमाभिलाषस्तत्रेयम्मालत्याश्चाकस्मिकी
बुद्धिपूर्वाचतथाप्रवृत्तिःसोभय्यपिदैवकृताचसहायाप्तिःसमाहितभेदः ॥ ५ ॥ आकस्मिकीबुद्धिपूर्वाचा
दैवकृतायथा । दृष्टिर्वन्दनमालिकास्तनयुगंलाव
ण्यपूर्णौघटौशुभ्राणाम्प्रकरःस्मितःसुमनसांवक्त्रप्र
भादर्पणः । रोमान्चोद्गमएवसर्षपकणःपाणीपुनःप
ल्लवौस्वाङ्गैरेवगृहम्प्रियस्यविशतस्तन्व्याकृतम्मङ्गल
म् । अत्रागच्छतःप्रेयस्येयंवन्दनमालिकादिमङ्गल
क्रियामनःपरितोषहेतुस्तस्यास्तन्वङ्ग्याइङ्गिताकारै
रेवयन्निर्वर्तनंसोयमाकस्मिकःस्वबुद्धिपूर्वकश्चतरस
हकारिकारणत्वाद्दैवकृतश्चसमाहितभेदः॥६॥ ।३॥
भ्रान्तिर्विपर्ययज्ञानन्द्विधासापिप्रयुज्यते ॥ अत

अत्रयोयंमाधवस्येति । विधिश्चमदनश्चकृताभियोगइत्यनेनमालत्याः
पूर्वानुभावाः कथ्यन्तेतेचद्विधाभवन्तीत्याकस्मिकीदैवपूर्वसहायसम्प
त्तिः ॥ ५ ॥ अत्रागच्छतःप्रियस्येति । मङ्गलक्रियासात्रकचम
त्कारास्वदमतउक्तम्मनःपरितोषहेतुरिति । स्मितम्बुद्धिपूर्वम् । रो
मान्चोनबुद्धिपूर्वः । एवन्दृष्ट्यादीयथायथंवेदितव्यमिति ॥ ६ ॥ १३ ॥
बुद्धिपूर्वायांसहायामौक्तिकभ्रान्तिरप्यस्तिततस्तदनन्तरंलक्षयति ।
भ्रान्तिरिति । अतस्मिंस्तदितिमिथ्योभ्रान्तिः । विपर्ययोनचैवंसंश
यादयइत्युक्तपूर्वम् । साद्विधा । यस्ययत्रासद्भावस्तस्यतत्रसद्भावारो
पःयस्यवायत्रसद्भावस्तस्यतत्रासद्भावारोपःसोयम्भावाभावकृतोनियमो

त्वेतत्स्वरूपाचतत्त्वेचातत्स्वरूपिणी ॥ १ ॥ अतत्त्वेत त्स्वरूपायात्रिविधासापिपठ्यते । अबाधिताबाधि ताचतथाकारणबाधिता ॥ २ ॥ तत्रातत्त्वेतत्स्वरू पाबाधितायथा । मोहविरमेसरोसन्थोरत्थणमण्ड लेसुरवहूणम् । जेणकरिकुम्भसम्भावणाइदिठीप रिठविआ*। अत्रसुरवधूस्तनमण्डलेकरिकुम्भत्वेन गृहीतेतत्स्वरूपेयन्मिथ्यैवतत्त्वारोपणन्नचानन्तरम् बाधकोपन्यासङ्कृतस्तेनेयमबाधिताअतत्त्वेतत्स्वरू पाभ्रान्तिः ॥ १ ॥ अतत्त्वेतत्स्वरूपाबाधितायथा । हसिअंसहत्थतालंसुक्खवडंउवगएहिम्पहिएहिम् पत्तप्फलसारिच्छेउड्डीणेपूसवन्दम्मि*। अत्रपत्रफ

ल्भ्रान्तेर्बाधनियमेपिक्वचिद्द्वारोपन्यासोभवतिक्वचिन्नभवति । उपन्या सोद्विरूपः । अभिधयावृत्त्यन्तरेणच । यत्रबाधोपन्यासेबाधितानुप न्यासेवाऽबाधितातस्मिन्नेववाक्येऽविज्ञातबाधेत्यर्थः । उपन्यासेतर प्रकारेणज्ञातबाधकाबाधिता । बाधकारणोक्तेर्बाधपर्यवसानाभिप्रा यत्वात्तदेतद्दर्शयति । अबाधिताबाधिताचेति ॥१॥२॥ मोहविरम इति । परिठविआसपल्लवंव्यवस्थापिता । तत्रैवपरिपूर्वस्थातिष्ठतेःप्र सिद्धत्वात् । सरोषमिलिसमवायिविशेषणान्नचतदन्तरेणक्रियासद्भावः। तेनमोहेपिनप्रक्रान्तरसानुभावस्वरूपतामहासीदितिव्यज्यते । इत्य च्छदृढानुबन्धोसौरसोयद्बलवत्तरविरोधिसम्पर्केपिनकार्कश्यमगादिति स्थूलमण्डलसुरवधूपदैःप्रकाश्यतेसम्भावनयानतुपूर्वोत्पन्नज्ञानेन । करिकुम्भानान्दृढतरवासनत्वात् । अबाधितेत्यत्रयथार्थाभिमतस्तथा दर्शयति । बाधकोपन्यासमिति ॥ १ ॥ हसिअमिति । पूसःशुकोव न्दंवृन्दम् । शुकचञ्चुपुञ्जानाम्पक्वन्यग्रोधफलनवपलाशसादृश्यम् ।

* मोहविरमेसरोषं स्थूलस्तनमण्डले सुरवधूनाम् । येनकरिकुम्भसंभावनयादृष्टिः परिस्थापिता ॥ १ ॥

* हसितं सहस्ततालं शुष्कवटमुपगतैः पथिकैः ॥

लितोयन्न्यग्रोधइत्यतत्वरूपेतत्वबुद्धावुत्पन्नायांय उत्तरकालमपत्रतानिष्फलताप्रत्ययस्तेनेयमतत्वेत त्वरूपाख्याबाधिताभ्रान्तिः ॥ २ ॥ अतत्वेतत्व रूपाकारणबाधितायथा। कनककलशस्वच्छेधाराप योधरमण्डलेनवजलधरश्यामामात्मद्युतिम्प्रतिवि म्बिताम्। असितसिचयप्रान्तभ्रान्त्यामुहुर्मुहुरुक्षि पञ्जयतिजनितव्रीडाहासःप्रियाहसितोहरिः। अत्र श्यामायामात्मद्युतावसितसिचयप्रान्तबुद्धिरतत्वे तत्वरूपाप्रियाहसितेनचकारणेनयद्बाधितासैषा अतत्वेतत्वरूपाकारणबाधिताभ्रान्तिः ॥ ३ ॥ अतत्वरूपातत्वेयासापित्रैविध्यसिद्धये। हानोपा दानयोर्हेतुरुपेक्षायाश्चजायते ॥ ३ ॥ तत्रतत्वेऽत त्वरूपाहानहेतुर्यथा। सोमुद्धमश्चोमअतह्लिआहि न्तहदूमितुहआसाहिम्। जहसब्भावमइंणाविणइं णपरम्मुहोजाओ * ॥ अत्रपारमार्थिकीमपिनदी षुमृगतृष्णाप्रतारितः सन्यन्नमृगःपयःपातुम्प्रतिप द्यते प्रत्युतत्यजतितेनेयन्तत्वेप्यतत्वरूपाहानहेतु भ्रान्तिः ॥ ४ ॥ तत्वेअतत्वरूपोपादानहेतुर्यथा।

यद्यपिनात्रबाधोभिहितस्तथापिडड्डीणइत्यनेनार्थाभावविषयाप्रती तिःक्रियते। कथमन्यथाहसितहस्तलालरूपकार्यस्योपन्यासःस्यात् ॥ २ ॥ अत्रश्यामायामिति। नात्रपूर्वोदाहरणवचशब्देनकयाचिदपिवृ त्यार्थाभावोविषयीकृतःकिन्तुप्रकारान्तरेणोन्नीयते। तथाहिनायकेनां शुकापहरणलीलायितेपियदिदंराधायाः सिचयावरोधाङ्गचलनञ्च तेपादि मुग्धाङ्गनोचितविभ्रमविरोधिहसितन्तत्कारणम्बाधस्येति ॥ ३ ॥ हानन्द्विविधम्प्रवृत्त्यभावोविपरीतश्चप्रयत्नोद्विधाप्यत्राभिमतमि

* समुग्धमृगीमृगतृष्णिकाभिस्तथादूनस्त्वदाशाभिः ॥

समर्थयेयत्प्रथमंप्रियाम्प्रतिक्षणेनतन्मेपरिवर्ततेन्य
था । अतोविनिद्रेसहसाविलोचनेकरोमिनस्पर्शवि
भाविताप्रियः । अत्राङ्गीकृतलतारूपोर्वशीपरिष्वङ्ग
सुखनिमीलिताक्षस्यपुरूरवसःशापान्ताविर्भूतसत्य
रूपायामपितस्यांयेयम्पूर्वानुभूतैवंविधानेकविधवि
प्रलम्भसम्भावनयानयनयोरनुन्मीलनबुद्धिःसेयमत
त्वेप्यतत्वरूपोपादानहेतुर्भ्रान्तिः ॥ ५ ॥ तत्वेप्यत
त्वरूपोपेक्षाहेतुर्यथा । चिक्रंसयाकृत्रिमपत्रिपङ्क्तेः
कपोतपालीषुनिकेतनानाम् । मार्जारमप्यायतनि
श्चलाङ्गंयस्याञ्जनःकृत्रिममेवमेने । अत्रतत्वरूपेपि
मार्जारेकृत्रिमोयमितिबुद्धौजातायान्तस्याम्प्रयोज
नत्वेनयदुपेक्षणंसेयन्तत्वेप्यतत्वरूपोपेक्षाहेतुर्भ्रा
न्तिः ॥ ६ ॥ भ्रान्तिमान्भ्रान्तिमालाचभ्रान्तेरतिशय
श्चयः । भ्रान्त्यनध्यवसायश्चभ्रान्तिरेवेतिमेमतम् ॥
तत्रभ्रान्तिमान्यथा । कपालेमार्जारीपयइतिकरान्ले

---

तिव्याख्यानेनस्फुटयति । नप्रतिपद्यतेप्रत्युतत्यजतीति ॥ ४ ॥ सम
र्थयेदिति । विभाविताप्रियइतियुक्तःपाठः । प्रियादिषुपुंवद्भावप्र
तिषेधात् । नात्राभावारोपःस्फुटोवगम्यतइतिप्रकरणमादायव्याच
ष्टे । अत्राङ्गीकृतेति । नचवाच्यन्दोलायमानतयासंशयरूपमिदंज्ञा
नमिति । यतोनास्त्येवात्रप्रियतमातथापितदारोपेणमनस्तापाति
वाहनमुचितमितिजानतःपुरूरवसोनुबन्धप्रकर्षःपुष्यतिनान्यथेतिसहृ
दयहृदयसाक्षिकमिदन्तदेतन्मनाक्स्फुटयति । पूर्वानुभूतैवंविधे
ति ॥ ५ ॥ प्रयोजकत्वेनयदुपेक्षणमिति । यावृत्तिन्निवृत्तिंवानप्रसूते
साऽपेक्षाबुद्धिरेवेत्यर्थः ॥ ६ ॥ भ्रान्तिमानिति । भूम्निमतुप् । भूमा
र्थोद्विविधोबहूनाम्भ्रान्तीनामेकविषयतोभिन्नविषयाणांवासमानकर्तृ

ढिशशिनस्तरुच्छिद्रप्रोतान्बिसमितिकरी सङ्कलय
ति । रतान्ते तल्पस्थान्हरति दयिताप्यंशुकमिति प्र
भामत्तश्चन्द्रो जगदिदमहो विभ्रमयति । अत्रेन्दुमरी
चिषु पयःप्रभृतिभ्रान्तिभूम्ना यस्भ्रान्तिमान्नामभ्रा
न्तेरेषभेदः ॥ ७ ॥ भ्रान्तिमाला यथा । नीलेन्दी
वरशङ्कया नयनयोर्बन्धूकबुध्याधरे पाणौ पद्मधिया
मधूककुसुमभ्रान्त्या तथा गण्डयोः । लीयन्ते कबरी
षु बान्धवजनव्यामोहजातस्पृहा दुर्वारा मधुपाः कि
यन्ति तरुणि स्थानानि रक्षिष्यसि ॥ अत्र युवत्यवय
वेषु नयनादिषु मधुव्रतानां येयन्नीलोत्पलादिबुद्धिः
सेयम्मालाक्रमेणोपजायमाना भ्रान्तिमाला भ्रान्तेरे
षभेदः ॥ ८ ॥ भ्रान्त्यतिशयो द्वेधा । वितर्कहेतुर्विप
र्ययहेतुश्च । तयोः पूर्वमुपमाभ्रान्तिमाचक्षते द्वितीय
न्तु भ्रान्त्यतिशयमेव । तत्रोपमाभ्रान्तिर्यथा । हृतो
ष्ठरागैर्नयनोदबिन्दुभिर्निमग्ननाभेर्निपतद्भिरङ्कि
तम् । च्युतं रुषा भिन्नगतेरसंशयं शुकोदरश्यामम
दं स्तनांशुकम् । अत्र शाद्वलेऽपि समुत्पन्नस्तनांशुक
भ्रमस्य पुरूरवसो सोयं सादृश्यातिशयितो वितर्कः सं
शयमुपमाभ्रान्तिः ॥ ९ ॥ भ्रान्त्यतिशयो यथा । दि

---

ता । आद्यो भ्रान्तिमतो विषयो द्वितीयो भ्रान्तिमालायाः । नहि भ्रान्ति
मतिमालाक्रमनियमोऽस्ति । युगपदपि भिन्नकर्तृकाणाञ्जायमानत्वा
त् । भ्रान्तेरतिशयः शब्दोपनीतप्रकर्षो भ्रान्तिरिति स्वकार्यभूतं वितर्क
मादाय प्रतीयमानो विपर्ययहेतुर्भ्रमान्तरानुबन्धी ॥ ४ ॥ ७ ॥ ८ ॥ त
योः पूर्वमिति । तत्त्वेन प्रतियतो मध्ये मनाक्व्यतिरेकमुल्लिखतो नूनमभे
दाभेदतुल्यतया मनसि सादृश्यम्प्रवर्त्तत इति भावः । असंशयमिति पदे

न्नूयाद्धूर्जटिजूटकोटिसरितिज्योत्स्नालवोद्भासिनी
शाशाङ्कीकलिकाजलभ्रमिवशाद्दूरागदृष्टनष्टामुदम् ।
याञ्चञ्चच्छफरीभ्रमेणमुकुलीकुर्वन्फणालीम्मुहुर्मुह्य
ल्लक्ष्यमहिर्जिघृक्षतितमामाकुञ्चनप्राञ्चनैः । अत्र
गङ्गाम्भःप्रतिफलितांरजनिकरकलामालोकयतोघा
सुकेर्यंशफरीभ्रमेणमुकुलीकुर्वन्फणालींशफरीयमि
त्यध्यासिनात्रिपर्ययबुद्धिःसोयम्भ्रान्त्यतिशयोनाम
भ्रान्तेरेवभेदः ॥ १० ॥ भ्रान्त्यनध्यवसायोपिद्वि
धा। सालम्बनोनिरालम्बनश्च । तयोःसालम्बनो
यथा * । विरहिणिहिअअक्कअन्तहिंणिसाअट्ठत
क्खणिच्छाइञजइअलिणिवहेहिडिचत्तेनचूअवणि
अहतासुविमअरन्देहिंसोसंदाणिअइजहणकलम्ब
णअम्बणजम्बूआणिअइ * । नकदम्बोनाम्रोनज
म्बूरितिज्ञायतेइतित्रयाणामेवावलम्बनभूतत्वात्
सालम्बनोनामायम्भ्रान्त्यनध्यवसायोभ्रान्तिभेदः
॥ ११ ॥ निरालम्बनोयथा । उमीरम्भास्तम्भा

---

नप्रकर्षोवितर्कश्चप्रत्यायितः ॥ ९ ॥ जिघृक्षतितमामिति । तिङश्चेति
तमपिकिमेत्तिङव्ययघादाम्वद्रव्यप्रकर्षइत्याम् ॥ १० ॥ भ्रान्तेरनध्य
वसायोऽनिर्द्धार्यमाणविषयता । विरहिणिजणाणइति । विरहिणीज
नस्यअधीगर्थेत्यादिनाकर्मणिषष्ठी । दअन्तेनदयमानेनरक्षता । णाव
इ । प्रतिभाति । तेच्छखणितत्क्षणेछाइज्जइअलिणिवहेहिंछाद्यतेऽ
लिनिवहैःकरणभूतैः । चेत्तेणचैत्रेणकर्त्राचूअवणिचूतवनी । तहतथा ।
तासुवितस्याअपि । सन्दाणिअइवध्यते । अनिर्द्धारितविषयतयाकथ

---

* टीकाकारसम्मतपाठस्तु विरहिणीजणाणइति दअन्तेणइति तेच्छ
खणिइति चेत्तेणइतितहइतिएवं तत्तत्पदपरिवर्त्तनेनबोध्यः ॥

* विरहिणीहृदयकृतान्तैर्निर्णीयतेतत्क्षणेछाद्यतेऽलिनिवहैश्चित्तेनचूत

वुपरिविपरीतौकमलयोस्तदूर्ध्वंरत्नाश्मस्थलमथद्रु रूहाङ्कमपियत् । ततःकुम्भोपश्चाद्बिसकिसलये कन्दलमयेतदन्विन्दाविन्दीवरमधुकराःकिम्पुनरि दम् । अत्रोर्वादिषुयुवत्यवयवेषुउत्पन्नरम्भास्त म्भभ्रान्तेर्यायमेतत्समुदायेकिमिदमित्यालम्बनंवि नाकृतोनध्यवसायःसएषनिरालम्बनोनामभ्रान्त्यन ध्यवसायोभ्रान्तेरेवभेदः ॥ १२ ॥ १३ ॥ ऊ होवितर्कःसन्देहनिर्णयान्तराधिष्ठितः । द्विधासौ निर्णयान्तश्चानिर्णयान्तश्चकीर्त्यते ॥ १ ॥ तत्त्वा नुपात्यतत्त्वानुपातीयश्चोभयात्मकः । सनिर्णयान्त स्तत्रोमिथ्यामिथ्योभयात्मकः ॥ २ ॥ तेषुनिर्णया

मालम्बननिरालम्बनयोर्भेदइत्यतआह । त्रयाणामेवालम्बनभूतत्वा दिति । उक्तिभंग्याविषयोपादानादित्यर्थः ॥ ११ ॥ आलम्बनंविने ति । विषयानिर्द्धारणंव्यक्तीकृतम् ॥ १२ ॥ १३ ॥ मिथ्याप्रतीतिसामा न्यादनन्तरंवितर्कलक्षणमाह । ऊहइति । ऊहइतियस्यप्रसिद्धिःसइ त्यर्थः । पर्यायशब्देनापिलक्षणङ्क्रियतएव । यथाघटपदार्थतयाव्या वृत्तौसन्दिहानस्यकलशपदार्थतयानिश्चयवतोयःकलशःसघटइति । क कथमसौसंशयविपर्ययाभ्याम्भिद्यतइत्यतआह । सन्देहेति । सन्देहो नानाकोटिकस्तथाभूतामेवजिज्ञासाम्प्रसूतेतर्कस्तुतदनन्तरभावीनिय तकोटिकस्तथाभूतामिति । कालस्वरूपकार्यभेदात्संशयतोभेदइति । एवंविपर्ययतोपि । सहितर्कान्तरभाविनिश्चयात्मकःप्रवृत्त्यादिहेतुभूत श्च । तदयन्तर्काभासस्यविपर्ययापर्यवसायिनोविषयविभागःकृतःसतु तर्कस्यविषयविभागःस्फुटएवसन्देहनिर्णययोर्मध्यन्तदधिष्ठितःसतद्व त्तीविभागमाह । द्विधासाविति । निर्णयान्तरोपन्यस्तःफलभूता निश्चयोऽतथाभूतोनिर्णयान्तोनिश्चयः ॥ १ ॥ प्रमितिविपर्ययरूपतया द्विविधइत्याशयवान्निर्णयार्थंविभजते । तत्त्वानुपातीति ॥ २ ॥ सैना

न्तस्तत्वानुपातीयथा । मैनाकःकिमयंरुणाद्धिगगनेमन्मार्गमव्याहतंशक्तिस्तस्यकुतःसवज्रपतनाद्भीतोमहेन्द्रादपि । तार्क्ष्यःसोपिसमन्निजेनविभुनाजानातिमांरावणं आःज्ञातंसजटायुरेषजरसाक्लिष्टोवधंवाञ्छति । अत्रनिरूपितलक्षणेवितर्केजटायुरेषइतितत्वानुपातीनिर्णयान्तोवितर्कः ॥ १ ॥ सएवातत्वानुपातीयथा । अस्याःसर्गविधौप्रजापतिरभूच्चन्द्रानुकान्तिप्रदः शृङ्गारैकनिधिःस्वयन्नुमदनोमासोनुपुष्पाकरः । वेदाभ्यासजडःकथन्नुविषयव्यावृत्तकौतूहलो निर्मातुम्प्रभवेन्मनोरममिदंरूपम्पुराणोमुनिःअत्रकिमिदंरूपंनिर्मातुंयथोक्तःपुराणोमुनिःप्रभवेदतश्चन्द्रादिष्वन्यतमेनप्रजापतिनाभवितव्यमित्यतत्वानुपातित्वादतत्वानुपात्ययन्निर्णयान्तोवितर्कः ॥ २ ॥ सएवोभयात्मकोयथा । चित्तेनिवेश्यपरिकल्पितसत्वयोगाद्रूपोच्चयेनरचितामनसाकृतानु । स्त्रीरत्नसृष्टिरपराप्रतिभातिसामेधातुर्विभुत्वमनुचिन्त्यवपुश्चतस्याः । सोयन्तत्वानुपातित्वादतत्वानुपातित्वाच्चोभयात्मानिर्णयान्तोवितर्कः ॥३॥ अनिर्णयान्तोमिथ्यारूपोयथा । अद्रेःशृङ्गंहरतिपवनःकिंस्विदित्युन्मुखीभिर्दृष्टोत्साहश्चकितचकितम्मुग्धसिद्धाङ्गनाभिः । स्थानादस्मात्सर

कःकिमयमिति । किमयमितिकाङ्क्षापूर्वन्दोलायमानचित्तस्यनियतकोटिस्पर्शीज्ञानविशेषउपनीयतेसएवतर्कः । एवमन्यत्रापि ॥ १ ॥ २ ॥ उभयात्मेति । स्त्रीरत्नसृष्टिरित्यनेनतत्वानुपातीअपरेत्यनेनातत्वानुपातीप्रकाशितः ॥ ३ ॥ मिथ्यामिथ्यारूपौबाधिताबाधितविषयौ । अ

सनिघुलादुत्पतोदङ्मुखःखन्दिङ्नागानाम्पथिप रिहरन्स्थूलहस्तावलेपान्। अत्रकिमिदमद्रेःश्टङ्गम्प वनोहरतीतिमेघम्प्रतिकल्पनायामिथ्यात्वाद्वस्तुन श्चानिर्णयादनिर्णयान्तोमिथ्यारूपोवितर्कः ॥ ४ ॥ सएवामिथ्यारूपोयथा । अयमसौभगवानुतपाण्ड वःस्थितमवाङ्मुनिनाशशिमौलिना । समाधिरूढंम नेननुजिष्णुनास्विदितिवेगवशान्मुमुहेगणैः । अत्र भगवत्पार्थयोरमिथ्यारूपत्वेनवेगवत्वादेकस्यानि र्णयान्तोमिथ्यारूपोवितर्कः ॥ ५ ॥ अनिर्णयान्तउ भयात्मायथा । मायास्विदेषामतिविभ्रमोवाध्वस्त न्नुमेवीर्यमुताहमन्यः । गाण्डीवमुक्तांहियथापुरा मेपराक्रमन्तेनशराकिराते । अत्रमायादीनांविक ल्पानाम्मिथ्यारूपत्वान्ममशराकिरातेनव्याप्रिय न्तइत्यस्यामिथ्यारूपत्वादनिर्णयान्तत्वाच्चायमनि र्णयान्तउभयरूपोवितर्कः ॥ ६ ॥ १५ ॥ वस्त्वन्त रतिरस्कारोवस्तुनामीलितंस्मृतम् । पिहितापिहि

बाधितोपितर्कोभवत्येव। यथायद्यस्यनीलंरूपन्नीलोत्पलमिति ॥४॥ अत्रभगवत्पार्थयोरिति । भगवत्पार्थयोरवस्थानयोःसमाधिरोहारोह योश्चनकिञ्चिद्बाधकमस्तिचवानस्यविशेषःप्रत्यक्षतइति ॥ ५ ॥ अत्रमा यादीनामिति । नपरमेश्वरस्यमायाल्वननाशक्तौमतिभ्रमोनध्वंसोवी र्यस्य । नवार्जुनादेवार्जुनस्यान्यत्वमितिविषयबाधात् ॥६॥ १५॥ मीलि तेभ्रान्तिरस्तीतिभ्रान्त्यनन्तरम्मीलितलक्षणमाह । वस्त्वन्तरेति । व स्तूनामितिश्लिष्टषष्ठी । वस्त्वन्तरेणतिरस्कारेइतिकर्मणि । वस्त्वन्तर स्यतिरस्कारइतिकर्त्तरि । फलतःसएवार्थः । तथाचोत्कृष्टगुणेनापकृ ष्टगुणस्यतिरस्करणन्न्यग्भावनमितिलक्षणार्थः । पृथग्भूतितिरस्कारेणै करूपतापत्तिर्मीलितमुच्यतेतथाचकातंत्रम् । मीलितंयुक्तमुच्यतइति ।

तेचैवतद्गुणातद्गुणौचततू ॥ १ ॥ अत्रमीलितम
भिधीयमानगुणेनप्रतीयमानगुणेनचवस्तुनासम्भव
ति । तयोराद्योयथा । एत्तोविणसच्चविओगोसेप
सरन्तपल्लवारुणच्छाओ । मज्जणतम्बेसुमओतह
अमतम्बेसुलोअणेसुअमरिसो * । अत्रमज्जनता
म्रयोर्लोचनयोर्मदरागोमदाताम्रयोःकोपानुरागःसा
क्षादभिधीयमानेनैवगुणेनतिरस्क्रियमाणोनिदर्शि
तइत्यभिधीयमानेनवस्तुनैतन्मीलितम् ॥ १ ॥ प्र
तीयमानेनयथा । पिअदंसणेणसुहरसमुउलिआ
इजइसेणहोन्तिणअणाइम् । ताकेणकसारइअल
कूरिवज्जइकुवलअन्तिरसा * । अत्रप्रियदर्शनसुखे
नमुकुलितयोरेवलोचनयोस्तस्याःकर्णकुवलयंलक्ष्य
तेनत्वमुकुलितयोरितिवस्तुनावस्त्वन्तरतिरस्का
रःप्रतीयमानगुणतयोपपादितइतिप्रतीयमानगुणे
नवस्तुनामीलितमिदम् ॥ २ ॥ पिहितंयथा । पा

---

अभिप्रायपूर्वस्तिरस्कारोद्विविधः सिद्धाभिप्रायफलोऽसिद्धाभिप्रायफ
लश्च । यथाक्रमम्पिहितापिहिते । नचैतावताविशेषेणपृथग्भावः,सामा
न्यलक्षणव्याप्तत्वादवान्तरभङ्गीनामानन्त्याच्च।सरूपगुणेनतिरस्का
रस्तद्गुणोविरूपगुणेनातद्गुणः । एतावपिमिलितविशेषावितिस्फुट
म्॥१॥ विभागमाह । अत्रमीलितमिति । एन्तोवीति । सच्चविअदृष्टः,
सेतस्याः,मज्जनंस्नानम् । अत्रताम्रपल्लवारुणरागपदाभ्यामभिधीयते
गुणः ॥ १ ॥ ननुपिअदंसणेत्यादिकथम्मीलितमत्रतिरस्कारःकेना
पिशब्देनप्रत्याय्यतइत्यतआह । नत्वमुकुलितयोरिति । यदिमुकुलिते

---

* आगच्छन्नपिनदृष्टःप्रातःप्रसरत्पल्लवारुणच्छायः ।
मज्जनताम्रयोर्मदस्तथामदताम्रयोर्लोचनयोरमर्षः ॥ १ ॥

छुडिघ्रणेहसब्भावविब्भमन्तीअजहतुमान्दिठ्ठो ।
संवरणवावडाएअस्रोविजणोतहच्छेच्छ * । अत्रप्र
कटितस्नेहविभ्रमन्तयात्वामवलोक्यनैतदन्योजनो
जानातिय्वतिसर्वत्रस्निग्धदृष्टिपातेनापिहितमप्येतन्
मीलितमेदएव ॥३॥ अपिहितंयथा । दिठ्ठाइजंण
दिठ्ठोआलविआएविजन्नआलविओ । उवआरो
जस्सकओताउचअकलिअउच्छइल्लेहिम् * । अत्रदृष्ट
यायन्नदृष्टःसम्भाषितयायन्नसम्भाषितोनचाभ्या
गतोपचारोविहितस्तेनतदनुरागःपरन्नापिहितःप्र
त्युतच्छादनेनच्छेकानाम्प्रकटितइत्यपिहिताख्योय
म्मीलितमेदः ॥ ४ ॥ तद्गुणोयथा । गोरङ्गउत
रुणीअणजोह्लाइआहिसरइसिअसेवच्छपडिछेओव
लहवहरइ । तच्छाहिहिम्पुणचाल्लिअउसामलग
न्तिहम्मअणुमन्तिअहिम् * । अत्रगौराङ्गस्तरुणी
जनःसितनेपथ्योज्योत्स्नायांश्यामस्तुनीलनेपथ्यस्त
स्याःछायासुगच्छतीतितद्गुणाश्रयमीलनात्तद्गु

नस्यातात्कुयङ्कुवलयंलक्ष्यतइतितर्कस्यतिरस्कारपर्यवसानादितिभावः
मूर्त्तिरूपादिकःप्रतीयमानोगुणः ॥ २ ॥ ३ ॥ ननुदृष्टयापिदृष्टइत्य
पिकथमलङ्कारः । नह्यत्रशक्तिरस्तीत्यतआह । प्रत्युतेति । छेकाविं
दग्धाःतैरास्वाद्यमानत्वदावर्जकत्वञ्चाव्यस्येत्यर्थः ॥ ४ ॥ गोरङ्गउत्त
ति । गौराङ्गः । जोण्हहिञ्जोत्स्नायांसेवच्छनेपथ्यंवस्त्रांङ्गरागादिपरि

* प्रकटितस्नेहसद्भावविभ्रमतया यथात्वं दृष्टः ।
संवरणव्यापृतया अन्योपिजनस्तथा दृष्टः ॥ १ ॥

* दृष्टापियन्नदृष्टआलपितयापि यन्नालपितः ।
उपचारो यन्नकृतस्तेनच कलितं छेकैः ॥ १ ॥

* गौराङ्गस्तरुणीजनो ज्योत्स्नायामभिसरतिसितनेपथ्यपरिच्छन्नोवक्ष

णाख्यमीलितमिदम् ॥ ५ ॥ अतद्गुणो यथा । कर्कन्धूफलमुच्चिनोति शबरी मुक्ताफलाकाङ्क्षिणी क्रुद्धोलूककदम्बकस्य पुरतः काकोऽपि हंसायते । कीर्त्या ते धवलीकृते त्रिभुवने क्ष्मापाललक्ष्मीपुरः कृष्णं वीक्ष्य बलोऽयमित्युपहितव्रीडं शनैर्जल्पति । अत्र कर्कन्धूफलानामपगतनिजगुणत्वादतद्गुणादतद्गुणाख्यमीलितमिदम् ॥ ६ ॥ १६ ॥ सदृशादृष्टचिन्तादेरनुभूतार्थवेदनम् । स्मरणं प्रत्यभिज्ञानस्वप्नावपि न तद्बहिः ॥ १ ॥ तत्र सदृशार्थं यथा । अदृश्यन्त पुरस्तेन खेलखञ्जनपङ्क्तयः । अस्मर्यन्त विनिश्वस्य प्रियानयनविभ्रमाः ॥ अत्र खञ्जनपङ्क्तिदर्शनात्तत्सदृशप्रियानयनविभ्रमस्मरणात्तत्सदृशदर्शनजं स्मरणमिदम् ॥ १ ॥ अदृष्टाद्यथा । मुनिसुताप्रणयस्मृतिरोधिना मम वियुक्तमिदं तमसा मनः । मनसिजेन सखे प्रहरिष्यता धनुषि चूतशरश्च निवेशितः । अत्र मुनिसुताप्रणयप्रतिरोधिना तमसा मे मनो वियुक्तमित्यदृष्टकृतं स्मरणमिदम् ॥ २ ॥ चिन्तया यथा । पुरा यत्र स्रोतः पुलिनमधुना तत्र सरितां विपर्यासं यातो घनविरलभावः क्षितिरुहाम् । बहो

---

ग्रहः । पङ्क्तिविप्रतीत्य गृहीत्वा । वल्लव इव बद्धर इव वल्लभ बद्धरतिस्तच्छा हर्षितास्ता साङ्गीरागी गोपाङ्गनाभिः ॥ ५ ॥ अत्र कर्कन्धूफलानामिति । विरूपगुणानामित्यर्थः ॥ ६ ॥ १६ ॥ मीलिते ज्ञानमस्तीति साजात्यादनन्तरं स्मृतिं लक्षयति । सदृशेति । सदृशाज्ज्ञायमानसादृश्यात् प्रयत्नजा स्मृतिश्चिन्तादिर्यस्यार्थमग्रे कथयिष्यति । अनुभूतार्थवेदनं समानविषयानुभवनियतज्ञानविशेषरूपं स्मरणम् । प्रत्यभिज्ञानमपि पु

दृष्टङ्कालादपरमिवजातंवनमिदन्निवेशःशैलानान्त
दिदमितिबुद्धिन्द्रढयति । अत्रप्रत्यक्षेष्वपिस्रोतस्त
रुविपिनादिषुस्मरणस्यचिन्ताजन्यत्वादिदञ्चिन्तो
द्भूतंस्मरणम् ॥ ३ ॥ आदिग्रहणात्परप्रयत्नाद्यथा ।
दर्शनपथमायातासाक्षादिवतन्मयेनहृदयेन । स्मृ
तिकारिणात्वयामेपुनरपिचित्रीकृताकान्ता । अत्र
परकृतात्प्रयत्नविशेषाच्चिन्तायाःप्रवृत्तत्वादिदमपि
स्मरणमेव ॥ ४ ॥ स्वप्नाद्यथा । जानेस्वप्नविधौम
माद्यचुलकोत्सेक्यम्पुरस्तादभूत्प्रत्यूषेपरिवेषमण्ड
लमिवज्योत्स्नाप्रसन्नम्महः । तस्यान्तर्नखनिस्तुषी
कृतशरच्चन्द्रप्रभैरङ्ककैर्दृष्टाकाप्यबलाबलात्कृतवती
सामन्मथमन्मथम् ॥ अत्रस्वप्नस्यचिन्तादिजन्य
त्वात्स्वप्नस्मृतिरपिस्मरणमेव ॥ ५ ॥ प्रत्यभिज्ञानं
यथा । गृहीतोयःपूर्वम्परिणयविधौकङ्कणधरःसुधा
मूर्तेःपादैरमृतशिशिरैर्यःपरिचितः । सएवायन्त
स्यास्तदितरकरौपम्यसुभगोमयालब्धःपाणिर्ललित
लवलीकन्दलनिभः । अत्रगृहीतोयःपूर्वंसएवायन्त

---

वानुभूतविषयमेव।एवंस्वप्नोपि ॥ १ ॥ अत्रखञ्जनेत्यत्रशब्देनखञ्जनप
ङ्क्त्यवलोकितानन्तरमेवप्रियास्मरणमासीदितिकार्यकारणभावो
वगम्यते । सचकारणतासादृश्यमनन्तर्भाव्यखञ्जनज्ञानस्यास्तीतिच
प्रतीतंसादृश्यमितिभावः ॥ १ ४ अत्रमुनिसुतेति । तमोलक्षणस्यप्र
तिबन्धकस्यापगमेस्मरणरूपङ्कार्यमावश्यकमित्यर्थः । यदिस्वप्नस्मृ
तिरपिस्मरणमेवतदाकथमदत्रसादृश्यादिषुकारणमतउक्तम् । चिन्ता
दीति ॥ २ ॥ ३ ॥ ४ ॥ ५ ॥ प्रत्यभिज्ञास्वरूपन्दर्शयति । यःपूर्वंस
एवायमिति । ननुसूत्रेस्वप्नात्पूर्वम्प्रत्यभिज्ञानमुद्दिष्टम्पश्चादुदाहृय
तइतिकथमेतत् । अत्रोदाहरणक्रमेपिलिपिप्रमादोयमित्याराध्यपा

स्याः पाणिरिति प्रत्यभिज्ञानमपि स्मरणमेव । ६ ॥
अभिप्रायानुकूल्येन प्रवृत्तिर्भाव उच्यते । सोद्भेदो
थ निरुद्भेदश्चैकतश्चाभितश्च सः ॥ १ ॥ तत्रैकतः सो
द्भेदो यथा । गेह्लपलोएह इमं विअसिअवअणा पि
अस्स अप्पेइ । घरणी सुअस्स पढमुब्भिअदन्तजुअ
लङ्किअम्बोरम् * ॥ अत्र सुतस्य दन्तोद्गमादहमुपभो
गयोग्यास्मीति गृहिण्या एवमभिप्रायः प्रकर्षविकाशि
नयनतयोद्भिद्यते न पुनः पत्युरित्येकतः सोद्भेदोयम्भा
वः ॥ १ ॥ अभितः सोद्भेदो यथा । सालोए च्चिअ सूरे
घरिणी घरसामिअस्स घेत्तूण । णेच्छन्तस्स वि पाए
धुअइ हसन्ती हसन्तस्स * । अत्र सालोक एव सूर्ये गृह
पतेर्गृहागमनं गृहिण्याश्च यत्पादधावनं तदावाभ्या
मद्य वेश्मनो न निर्गन्तव्यमिति भावः स च द्वयोरपि हा
सेनाभित उद्भिद्यत इत्यभिहितः सोद्भेदोयम्भावः २ ।

---

दाः ॥ ६ ॥ ७ ॥ अभिमतमुक्तादिवस्तुचिन्तननियमादनन्तरम्भावल
क्षणन्तदाह । अभिप्राय इति । अभिमतवस्तुचिन्ताभिप्रायस्तदानुकू
लतया प्रवृत्तिः क्रियालक्षणा भावः । अत एव सूक्ष्माद्भेदः प्रवृत्तिप्रतिपा
दकेन स्वार्थप्रकाशद्वारा प्रकाश्यमानोभिप्रायः । क्वचित्सहान्तरवृत्तिस
हकृतेन प्रकाश्यते क्वचित्केवलेन । ताविमौ सोद्भेदनिरुद्भेदौ । मिथो
नुबन्धविषयश्चायञ्चमत्करोति । तत्र प्रवृत्तिरुच्यमाना नेननतस्योच्य
ते । तयोर्वा तदिदमाह । एकतश्चाभितश्चेत्यभिप्रायोद्भावनादशायां
रूढः स्वादपदवीमासाद्य चमत्कारमावहति । अत एव तत्कार्ययोः प्रवृ
त्तिरनुभावरूपतया तथा वामकुण्ठ इति हृदयम् ॥ १ ॥ १ ॥ २ ॥ ३ ॥

---

* गृहाण पर्यालोकयेममिति विकसितनयना प्रियायार्पयति ।
गृहिणी सुतस्य प्रथमोद्भिन्नदन्तयुगलाङ्कितं बदरम् ॥ १ ॥

एकतोनिरुद्धो यथा । सालिवणगोविआएउड्डी
वन्तीअ पूसविन्दाइम् । सव्वङ्गसुन्दरीएवि पहिआ
अच्छीइ पेच्छन्ति *। अत्रातिसौन्दर्येण देवीभ्रान्त्या
शालिवनगोपिकामालोकयतां पथिकानान्तद्दक्षि
निरीक्षणे अयमभिप्रायःशालिवनतिरस्कारेण देवमा
नुषयोर्विशेषभूतः पद्मग्राममेव भूमिस्पर्शो भूम्यस्पर्शो वा
नलक्ष्यतइति तदक्षिणी एव पश्यामो यदीयन्निमिष
ति तदा मानुषीयं यदि न निमिषति तदा देवीयमिति स
र्वाङ्गसुन्दर्या अपि पथिकानामेव जायमानो नेहकेन
चित्कर्मणोद्विद्यतइत्येकतोनिरुद्धोऽयम्भावः ४॥
अभितोनिरुद्धो यथा । गोलाअडठिअम्पेच्छिऊण
गहवइसुअंहालिअसोह्णा ॥ आढत्तोउत्तरिउंदुक्खु
त्ताराइपअवीए॥ अत्रागच्छन्तीं हालिकस्नुषां दृष्ट्वा
गृहपतिसूनोर्गोदावरीतटे यदवस्थानं यच्चतमवलो
क्यतस्याःदुरुत्तरमार्गेणावतरणारंभस्तत्रायं तयोरभि
प्रायोहस्तावलम्बदानेनावयोरङ्गसङ्गं सम्पाद्यतामि
ति स चाभितो द्वयोरपि जायमानो नेहकेनचित्कर्मणो
द्विद्यतइत्यभितोनिरुद्धोऽयम्भावः ॥ हृद्यं सूक्ष्म
ञ्च भिद्येत न हि भावात्कथञ्चन । हृद्योदाहरणन्त
त्रतैरिदम्प्रतिपाद्यते ॥ २ ॥ हिअएरोसुम्भिअम्पा
अप्यहरंसिरेणपत्थन्तो णहउदओमाणंसिणीएअ

नेहकेनचिदिति । तथाच शब्दान्तरस्य व्यापारो नास्तीत्यर्थः ॥ ४ ॥
हृद्यमिति । अभिमतस्य वस्तुनो हृदयावच्छेदेन वृत्तिर्मतिस्तस्याय प्रवृ
त्तिः । तत्र यद्यपि विशेषलेशोल्लिखितयापि भावसामान्यलक्षणाक्रान्तस्त

* शालिवनगोपिकायाउच्चाटयन्त्याः शकवृन्दानि ।

थोरंसुअंरुम्रम् * । अत्रहृदयेउद्घूर्णपादप्रहारंय
दयंशिरसाप्रार्थितवान् यच्चतयासौनताडितस्तत्रहृ
दयेवल्लभावसतीतिभावःसचप्रार्थनारोदनाभ्यामुद्भि
द्यमानःसोद्भेदोभावोहृद्यइत्युच्यते ॥ ५ ॥ निरुद्भेद
स्तुयोभावःससूक्ष्मस्तैर्निगद्यते । इङ्गिताकारलक्ष्या
त्ससूक्ष्मात्स्याद्भूमिकान्तरम् ॥३॥ यथा। कदासौ
सङ्गमोभावीत्याकीर्णेवक्तुमक्षमम् । अवेत्यकान्त
मबलालीलापद्मंन्यमीमिलत् ॥ ६ ॥ अत्रवक्तुम
क्षमतायामिङ्गिताकारयोरप्रतीयमानत्वादवगतेर्भू
मिकान्तरमिदम्भवति । पद्मसम्मीलनाच्चात्रसूचि
तोनिशिसङ्गमः । आश्वासयितुमिच्छन्त्याप्रियम
ङ्गजपीडितम् । अत्रानुकरणेऽपिभूमिकान्तरितेए
वभवतइतिसोयन्निरुद्भेदोभावएवसूक्ष्मइत्युच्यते ।
६ ॥ १८ ॥ प्रत्यक्षमक्षजंज्ञानम्मानसञ्चाभिधीयते ।

---

श्चैवान्तर्भविष्यति ॥ २ ॥ ५ ॥ ॥ ननुचसूक्ष्मःकथम्पूर्वोक्तात्सूक्ष्माद्भि
द्यतइत्यतआह । इङ्गिताकारलक्ष्यादिति । कदानौसङ्गमोभावी
त्यभिप्रायस्यव्यञ्जकन्नेङ्गितन्नविकारोवाकान्तस्यकश्चिदुपात्तःअवेत्ये
त्यादिप्रकाशिताभिप्रायानुगुणाकाचिदस्तिक्रियावाक्यमन्यथातमुद्दि
श्यलीलापद्मनिमीलनंसङ्गच्छतेतस्मादन्यमेवेदंसूक्ष्मस्भावलक्षणाक्रा
न्तम् ॥ ३ ॥ उत्तरार्द्धस्योदाहरणंव्युत्पादयति । अत्रपद्मसम्मीलना
च्चेति । एवञ्चेत्प्राप्तमिङ्गितलक्ष्यत्वमतआह । तत्रचेति । आजा
निकम्पद्मनमीलनमनुकार्यङ्कान्ताहस्ताङ्गुलीजनितमनुकरणंरात्रौसमाग
मोभविष्यतीतिकान्तागतोभिप्रायः । नतुनिमीलनमनुकार्याद्यभिच
रितमेतमर्थमवबोधयतीत्यर्थः ॥ ६ ॥ १७ ॥ मानसङ्गत्यनन्तरम्प्र
माणरूपालङ्कारप्रस्तावस्तत्रान्येषाम्प्रमाणानाम्प्रत्यक्षमूलकत्वात्प्रथम
म्प्रत्यक्षलक्षणमाह । प्रत्यक्षमिति । साक्षात्कारःप्रत्यक्षमितिप्रसिद्ध

स्वानुभूतिभवञ्चैवमुपचारेणकथ्यते ॥ १ ॥ तत्रा
क्षजन्द्वेधा । युगपदेकशश्च । तयोर्युगपद्यथा ।
कान्तकान्तवदनप्रतिबिम्बेभग्नबालसहकारसुगन्
धौ । स्वादुनिप्रणदितालिनिशीतेनिर्ववारमधुनी
न्द्रियवर्गः । अत्रमदिराश्रयाणाम्मुखप्रतिबिम्ब
सौगन्ध्यस्वादुताश्रव्यत्वशैत्यानान्दृक्घ्राणरसनश्र
वणत्वगिन्द्रियप्रत्यक्षताप्रतीयते ॥ १ ॥ एकशोय
था । मंदमंदविगलत्त्रपमीषच्चक्षुरुल्लसितपक्ष्मदध
त्या । वीक्ष्यतेस्मशनकैर्नववध्वाकामिनोमुखमधो
मुखयैव ॥२॥ तदेतच्चाक्षुषम् ॥२॥ एवंश्रावणादी
न्यप्युदाहरणीयानि । मानसमपिद्विधा । सुखादि
विषयमनुभूतार्थविषयञ्च । तयोःसुखादिविषयं
यथा । अस्तोकविस्मयमविस्मृतपूर्ववृत्तमुद्भूतनू
तनभय[illegible]र्जरत्वः । एकक्षणत्रुटितसङ्घटित

---

त्तस्यविभागमाह । अक्षजमिति । अक्षम्बहिरिन्द्रियन्तस्माज्जात
म् । मानसम्बाह्येन्द्रियानपेक्षेणमनसाजनितम् । स्वानुभूतिःस
हजाचिच्छक्तिस्तस्याउत्पन्नम् । शरीराभिघाताद्यभिभूतेप्रत्याहार
तिरस्कृतेवामनसियत्कदाचिदतिस्फुटाभंज्ञानमुत्पद्यतेनतस्यमनोनि
बन्धनताशक्यतेभिधातुमितिचिच्छक्तिरेवाश्रयते । नन्विन्द्रियजन्यए
वालोकेसाक्षात्कारिताप्रसिद्धेःकथमनुभूतिभवन्त्वेत्यतआह । उप
चारेणेति । यद्दीन्द्रियजन्येसाक्षात्कारितानियमस्तदोपचारेणपरिग
णनं अथभावनादिबलेनविनापीन्द्रियम्भवतीतिपक्षस्तदानुच्यतएवे
तिभावः ॥ १ ॥ युगपदिति । एकस्मिन्वाक्येघ्राणरसनचक्षुस्त्वक्श्रो
त्राणाम्पञ्चानामपियुगपत्प्रवृत्त्याभिधानाद्यौगपद्यन्तरसानुगुणतया
यौगपद्याच्चमत्कारितामावहतीति । द्विधाप्यलङ्कारकाण्डेपरिसङ्ख्या
नमुषितम्मानसन्द्विधेति । संयुक्तसमवायनियमितमेकमपरन्तुसंस्का

प्रमोदमानन्दशोकशबलत्वमुपैतिचेतः । एतान्नि
गदेनैवव्याख्यातम् ॥३॥ अनुभूतार्थविषयंयथा ।
पिहितेवासागारेतमसिसूचीमुखाग्रसम्भेद्ये । मयि
चनिमीलितनयनेतथापिकान्तामुखंव्यक्तम् । इदम
पिनातिदुर्बोधमितिनव्याख्यातम् ॥४॥ स्वानुभूति
भवन्द्विधा । मिथ्यात्मकममिथ्यात्मकञ्च । तयो
र्मिथ्यात्मकंयथा । अथदीर्घतरन्तमःप्रवेक्ष्यन्सह
सारुणरयःससम्भ्रमेण निपतंतमिवोष्णरश्मिमुर्व्यां
वलयीभूततरुन्धराञ्चमेने । तदिदमिन्द्रियेषुमन
सिचानवतिष्ठमानमात्मन्येवावतिष्ठते ॥ ५ ॥ अ
मिथ्यात्मकंयथा । मनःप्रत्यक्चित्तेसविधमवधाया
त्तमरुतःप्रहृष्यद्रोमाणःप्रमदसलिलोत्सङ्गितदृशः ।
यदालोक्याह्लादंहृदइवनिमज्यामृतमयेदधत्यन्त
स्तत्त्वङ्किमपियमिनस्तत्किलभवान् । अस्यात्मवि
षयता व्यक्तैवयोगिभिरुद्गीयते ॥ ६ ॥ ११ ॥ लि
ङ्गाद्यलिङ्गिनोज्ञानमनुमानन्तदुच्यते । पूर्ववच्छेषव

---

दनियमितम् । संस्कारलक्षणयाहिप्रत्यासत्त्यायथास्मरणातिरिक्तस्य
त्यभिज्ञानन्तथेदमपीतिनकिञ्चिदनुपपन्नम् ॥ १ ॥ २ ॥ ३ ॥
निगदेनैवेति । यदिविस्तयादीनऽयन्नसाक्षात्कृतवान्कश्चनुद्धेलस्तस्मां
चक्षीतेत्यर्थः । इदमपीति । व्यक्तमित्यनेनसाक्षात्कारोदर्शितः । न
हिस्मरणेनव्यक्तताभवतिस्रात्मन्येवावतिष्ठतेस्वानुभूतिमाश्रयतइत्य
र्थः ॥ ४ ॥ ५ ॥ योगिभिरिति । निदिध्यासनबललब्धात्मनोज्ञानस्य
योगिमात्रप्रसिद्धविषयत्वात्नस्वस्यदादयस्तथातम्परिचिन्वन्तियथा
योगिनइत्यर्थः ॥ ६ ॥ ७ ॥ ८ ॥ अनुमानलक्षणमाह । लिङ्गादीति ।
यस्ययेनसहाविनाभावलक्षणाव्याप्तिःसन्दिग्धसाध्यधर्मधर्मिरूपपक्ष

च्छेषवद्दृष्टंसामान्यतश्चयत् ॥ १ ॥ फलसामर्थ्यभेदेन
द्विधैतद्विद्यतेपृथक् । उदाहरणमेवैषांरूपव्यक्तौभवि
ष्यति ॥ २ ॥ तेषु । यत्रकारणन्दृष्ट्वाकार्यमनुमी
यतेतत्पूर्ववद्यथा । अविरलविलोलजलदःकुटजा
र्जुननीपसुरभिवनवातः । अयमायातःकालोहन्त
हताःपथिकगेहिन्यः । अत्रवर्षर्तोःकारणभूतात्का
र्यभूतविरहिणीनाम्मरणमनुमीयतेतेनैतत्पूर्वंकारण
मिहास्तीतिपूर्ववदुच्यते ॥ १ ॥ यत्रकार्यन्दृष्ट्वाका
रणमनुमीयतेतच्छेषवद्यथा । सावश्यमागमिष्यन्नू
नम्पतितोसिपादयोःस्तस्याः । कथमन्यथाललाटे
यावकरसतिलकपङ्क्तिरियम् । अत्रयावकरसति

---

वृत्तितारूपापक्षधर्मतायगृह्यतेतस्मात्तस्यप्रतीतिरनुमानंयथाधूमाद्व
ह्नेःसहियथाविधेसिद्धस्तथाविधसन्निधानंसूचयति । तत्रयस्मात्प्रती
तिरुत्पद्यतेतल्लिङ्गञ्चिह्नंव्याप्तिविशिष्टपक्षेधर्मतासञ्ज्ञापकमित्यर्थः ।
इतरल्लिङ्गंज्ञापकमस्यास्तीतिकृत्वा । पूर्ववच्छेषवत्सामान्यतोदृष्टभे
दात्त्रिविधमनुमानमग्रेग्रन्थकृतैवव्याख्यातमितिनविस्तन्यते ॥ १ ॥ फ
लसामग्र्येति । यद्यपिज्ञानमनुमानमित्युक्तन्तथापितस्यसाधारणमे
वक्वचिदनुपन्यासप्रधानंवाच्यम् । क्वचित्करणीभूतलिङ्गपरामर्शोप
न्यासप्रधानमितिभवतियथोक्तोविशेषःअनुमानशब्दोहिभावल्युडन्तः
करणेल्युडन्तोवाआद्येफलंद्वितीयेसामग्र्यङ्करणमित्यर्थः उपन्यासप्र
धानतादुरूहेत्यतआह । उदाहरणमेवेति ॥ २ ॥ कार्यभूतविरहिणा
मिति । पथिकगेहिनीनान्दशम्यवस्थाज्ञायमानावाक्यार्थः अतःफलो
पन्यासदत्तभरमेवेदङ्काव्यमित्यभिप्रायः । आयातश्चेज्जलदागमस्तदा
पूर्वप्रवृत्तइवपथिकनारीविनाशोलक्ष्यतइतिनिष्ठाप्रत्ययेनद्योत्यते ॥१॥
कथमन्यथेति । नेयमर्थापत्तिःकिन्तुतथाभूतानायकस्यललाटेऽलक्त
कबिन्दुविशेषपङ्क्तिःप्रमदापदावपातप्रतिबद्धेति । नचालक्तबिन्दुप

लकपङ्क्तेः कार्यभूतायाः कारणभूतम्पादपतनमनु
मीयते। तेनैतच्छेषः कार्यमिहास्तीति शेषवदुच्यते।
२ ॥ यत्र न कार्यन्न कारणङ्केवलमविनाभावमात्रम्
प्रतीयते तत् सामान्यतो दृष्टं यथा। गज्जन्ते खे मेहा पु
ल्लाणीवा पणठिया मोरा णट्टो चन्दुज्जोओ वासीरन्तो
हला पत्तो *। अत्र वर्षर्तुरविनाभूतैर्मेघगर्जितादि
भिः सामान्येनैवानुमीयत इति सामान्यतो दृष्टमिदम्
तान्येतानि भावसाधने ऽनुमानशब्दे फलपक्षे उदाह
रणानि भवन्ति ॥ ३ ॥ यदा पुनः करणसाधनो ऽनु
मानशब्दस्तदानुमीयते ऽनेनेत्यनुमानशब्देन यथो
क्तं लिङ्गमुच्यते यदाह अनुमेयेन सम्बद्धम्प्रसिद्धञ्च त
दन्विते। तदभावे च यन्नास्ति तल्लिङ्गमनुमापक
म्। तत्पूर्ववत् यथा। अइ सहि वङ्कुल्ला विरि
ञ्चुहिहि सिगो त्तरुसमत्यएच्छारम्। अच्चन्तदन्नादि

---

ङ्क्तिज्ञानन्तथा स्वदते यथा विपक्षचरणावनमनानुमेयस्य ज्ञानस्फलभू
तन्तत्किल विपक्षगोचरामीर्ष्याव्यञ्जयद्विप्रलम्भप्रकर्षम्पुष्णाति ॥ २ ॥
गज्जन्त इति। अत्र समसमये मेघगर्जितादिभिः कालोपाधिभिरनुमा
नन्तेन कार्यकारणभावः। अत्र हि न पृथक् मेघगर्जितादिज्ञानन्तथा च
मत्कारमावहति यथा वर्षारात्रिज्ञानप्रतिबद्धम्। स हि ज्ञातः केतकक
दम्बपूरादिविदग्धने पथ्यपरिग्रहोत्सुक्यस्प्रवासिनायकागमनौत्सुक्यं वा
जनयतीति फलएवभरः ॥ ३ ॥ अनुमेयेनेति। अनुमेयेन पक्षेणतस्यैव
साध्यवत्तयानुमेयत्वात्। यदाह। स एव चोभयात्मायङ्गम्योगमकइ
ष्यते। प्रसिद्धे नैकदेशेन गम्यः सिद्धेन बोधक इति। तदन्विते साध्यान्वि
ते प्रसिद्धम्प्रकर्षेणासिद्धम्। व्याप्यतयाधिगतम्। तदभावे। साध्या
भावे यतो ऽनुमापकन्ततो लिङ्गम्। पूर्ववतीति। पूर्वङ्कारणमनुमापकं

---

* गर्जन्ते खे मेघा फुल्लानीपाः प्रवर्तितामयराः।

ठेणसामिवलिएणहसिएण *। अत्रैवम्प्रकारयाव
क्रोक्त्याएवंविधेनहसितेनोपलक्षितात्वमग्रतोगोत्र
न्दूषयसीतिकारणतोयत्रकार्यानुमानन्तदिदंसामग्री
पक्षेपूर्ववदित्युच्यते ॥ ४ ॥ शेषवतियथा । दी
सइणचूअमउलंअम्हाणअवाइमलअगन्धवहो । ए
त्तंवसन्तमासंसहिजंउक्कण्ठिअञ्चेअम् * । अत्रो
त्कण्ठालक्षणेनकार्येणवसन्तःकारणभूतोनुमीयतइ
तिसामग्रीपक्षेइदंविशेषवदित्युच्यते ॥ ५ ॥ सा
मान्यतोदृष्टंयथा । आविर्भवन्तीप्रथमम्प्रियायाः
सोच्छ्वासमन्तःकरणङ्करोति । सन्तापदग्धस्यशिख
ण्डियूनोवृष्टेःपुरस्तादचिरप्रभेव । सेयंविद्युदिवदृ
ष्टिक्षामन्दक्यपिप्रथमतउपलभ्यमानाग्नविनाभावे
नमालत्यागमनङ्गमयतीतिसामग्रीपक्षेसामान्यतो
दृष्टमेतत् ॥ ६ ॥ २० ॥ यदाप्तवचनन्तद्विज्ञेयमा
गमसंज्ञया।उत्तममध्यमञ्चाथजघन्यञ्चेतितत्त्रि

यस्याःस्थलत्पूर्ववाल्लङ्घन्तास्मिन्ननुमापयितव्येलिङ्गज्ञानविषयतयापूर्व
ङ्कारणमाश्रयतीतिपूर्ववत् । सोयमर्थःसम्यग्द्योतितः । कारणतइ
ति । यथाहिवक्रआलापोमुग्धाङ्गनाप्रकृत्यौचित्यागतंहसितन्ध्वनन
शक्त्याविषयतयाक्रान्तिमर्पयतिमतयाशब्दाभिलपितन्धारित्र्यखण्डन
मितिसाहित्यमुद्राविदामतिप्रकाशमेव ॥ ४ ॥ एत्तमिति । चूतमञ्ज
रीमलयपवनयोरग्रेसमुत्कण्ठितसमत्रचमत्कारास्पदम् । तथाहि । य
थाप्रियस्यसन्निधास्यतःसम्भावनालोकोत्तराभिमानप्रतिष्ठिताभवति
नतथासन्निधानमितिसहृदयसाक्षिकोयमर्थः । एवंसामान्यतोदृष्टोदा
हरणेबोद्धव्यम् ॥ ५ ॥ ६ ॥ २० ॥ यदाप्तवचनमिति । आप्तोयथार्थशब्दव

* अयि सखि वक्रालापैश्छादयिष्यसि गोत्रस्य मस्तके भस्म ।
अत्यन्तदत्तदृष्टे मसामिवलितेन हसितेन ॥ १ ॥

* दृश्यते नचूतमुकुलमद्य नचवातिमलयगन्धवहः ।

धा ॥ १ ॥ तत्रोत्तमन्द्विधा । विधिरूपन्निषेधरूप
ञ्च । तयोर्विधिरूपंयथा । दमन्दानन्दयांशिक्षेः
स्तनयित्नुर्वदत्यसौ । ददद्दइतिवाग्दैवीदयध्वन्दम
दायते। अत्रचएषादैवीवागनुवदति । यत्स्तनयित्नु
र्ददद्दइतिदयध्वन्दमदयतेतितदेतत्त्रयंशिक्षेत्दम
न्दानन्दयामितिश्रुतेस्तदेतद्विविधरूपमाप्तवचनम्
॥ १ ॥ निषेधरूपंयथा । निवार्यतामालिकिमप्य
यंवटुःपुनर्विवक्षुःस्फुरितोत्तराधरः । नकेवलंयोम
हतोपभाषतेशृणोतितस्मादपियःसपापभाक् । अ
त्रोत्तरार्द्धोक्तनिषेधानुवादवर्द्धितव्युत्पत्तेर्वयस्याय।
योयमपवदमानबटुनिवारणोपदेशस्तस्यमहान्तो
नापभाषितव्याइतिवाक्यार्थतात्पर्यादयन्निषेधरूप
आगमः । तदेतदुभयमप्यवश्यानुष्ठेयत्वादुत्तमम् २
मध्यमन्द्विधा । निर्दिष्टवक्तृकमनिर्दिष्टवक्तृकञ्चत
योराद्यंयथा कल्याणीवतगाथेयंलौकिकीप्रतिभाति

---

क्ता। उत्तमंश्रुतिमूलम् । अतएवतस्यावश्यानुष्ठेयत्वाभिधानम् । मध्य
ममनादिलोकव्यवहारमूलन्तदेषनावश्यानुष्ठेयमित्यनेनप्रकाशयिष्य
ते। उभयविधावपिः फलसंवादिजघन्यम् ॥१॥ ददद्दइति । जलदध्वनि
तनानानादस्यानुकरणन्त्रितयव्याजेनजलधरोवदति । दयध्वम् ।
दत्त । दाम्यतेति । दैवीवागतोदमदानदयाःकर्त्तव्याइतिविधिःपर्यवस्य
ति । बुद्धीन्द्रियनियमोदमःदानदये प्रसिद्धे मूलभूतांश्रुतिन्दर्शयति । अ
त्रतदेतदेवेति ॥१॥ ननुमकेवलंयोमहतोपभाषतेइत्यादिवर्त्तमाना
पदेशात्कथंविधित्वमतआह । अत्रोत्तरार्द्धेति । अपभाषणस्यनिन्दार्थ
वादेननिषेधविधिःकल्प्यतेतेनमहान्तोनापभाषितव्याइतिवचनव्यक्ति
रुन्नीयतइति ॥ २ ॥ अत्रजीवन्नरइति । एषाचिरन्तनीलोकगाथाति

मे । एतिजीवन्तमानन्दोनरंवर्षशतादपि । अत्र जीवन्नरःपश्यतिभद्रमिति । अयमेवार्थोनिर्दिष्टव क्तृकस्तदेतत्सर्ववाक्यानांविधिनिषेधयोःपर्यवसा नात्प्राणेषणायांयतितव्यमितिविधिरूपमाप्तवचन म् ॥ ३ ॥ द्वितीयंयथा । अक्षेवसतिपिशाचःपि चुमन्देदिनपतिर्वटेयक्षः । विश्राम्यतिपद्मेश्रीस्ति ष्ठतिगौरीमधूकतरौ । तदिदमनिर्दिष्टवक्तृकमना दिलोकप्रसिद्धिपरम्परायातमैतिह्यम् । अत्रापिसर्व वाक्यानांविधिनिषेधयोःपर्यवसानात्तस्मादक्षन्नसे वेतापिचुमन्दन्नक्रन्तेतवटन्नाच्छिन्द्यात्पद्मन्नमूर्द्धि बिभृयात्मधूकन्नपदास्पृशेदित्यध्याहारोभवति । सोयन्निषेधरूपआगमउभयमप्येतन्नावश्यानुष्ठेय मितिमध्यमम् ॥ ४ ॥ जघन्यन्द्वेधा । काम्यन्निषिद्ध ञ्च । तयोःकाम्यंयथा । मुहडइआचुम्बकसाउसाहि अम्याणणावणबिङ्डणम् । तेल्लम्पालिअत्यणीपांवि कुणेइपिणुणएथणए * । तदेतत्पूर्ववद्विधिरूपङ्काम्य माप्तवचनम् ॥ ५ ॥ निषिद्धंयथा । वयम्बाल्येबा

---

न्मूलत्वमेतिजीवन्तमित्यादेरागमस्य । अत्रापिप्राग्वदेवस्तुत्य र्थवादेनजीवनायतितव्यमितिविधिःकल्प्यते । तदिदमुक्तंसर्व वाक्यानामिति ॥ ३ ॥ तदिदमनिर्दिष्टप्रवक्तकमिति । एतेनैतिह्य मागमएवान्तर्भूतमितिदर्शितम् । अज्ञातवक्तृकस्यागमस्यैवतयाप्र सिद्धेरिति । अत्रापीतिपिशाचवासादिभिरनुवादैःपूर्ववद्विधयःकल्प्य न्ते ॥ ४ ॥ मुखडइपवदति । मुखितकाअलम्बुसा । कषायःक्वाथोज लञ्चावनत्रस्यम् । काम्यमिति । पीनोन्नतस्तनकामनावतीभिरेवक्रि यमाणत्वात् ॥५॥ त्वयारब्धमित्यादौगणिकयासतीचारित्र्यवत्त्यानभ

लास्तरुणिमनियूनः परिणतावपीच्छामोवृद्धान्यरि
णयविधानस्थितिरियम् । त्वयारब्धञ्जन्मक्षपयि
तुमकाण्डेनविधिनाननोगोत्रे पुत्रिक्कचिदपिसती
लाञ्छनमभूत् । तदेतन्निषेधरूपन्निषिद्धमेवाप्रव
चनम् । उभयमपिचैतन्मूलकारिभिःसंसृज्येतद्ग
त्यादिदोषान्नानुष्ठेयमितिजघन्यम् ॥ ६ ॥ २१ ॥
सदृशात्सदृशज्ञानमुपमानंद्विधेहतत् ॥ स्यादेकम
नुभूतेर्थेऽननुभूतेद्वितीयकम् ॥ १ ॥ तयोरनुभूता
र्थविषयंयथा । सर्वप्राणप्रवणमघवन्मुक्तमाहत्य
वक्षस्तत्सङ्घट्टाद्विघटितबृहत्खण्डमुच्चण्डरोचिः ।
एवंवेगात्कुलिशमकरोद्व्योमविद्युत्सहस्रैर्भर्तुर्वज्रज्व
लनकपिशास्तेचरोषट्टहासाः । अत्ररामकराकृष्य
माणभग्नधूर्जटिधनुर्विमुक्तज्योतिश्छटासहस्रसङ्
कुलमकाशम्पश्यतोरावणदूतस्येयंस्वयन्दृष्टपुप्रभु
वक्षःस्थलविदीर्णवज्रशकलविस्फूर्जथुषुतद्रोषाट्टहा
सेषुवियद्व्यापिषुतत्सादृश्यबुद्धिस्तदिदमनुभूतविष

---

वितथमितिस्फुटोनिषेधविधिजघन्यत्वंव्याघष्टे । उभयमपिचैतन्मू
लकारिकाभिरिति ॥ ६ ॥ २१ ॥ सदृशादिति । इहमीमांसकावर्णय
न्ति । उपमानमपिसादृश्यमसन्निकृष्टेर्थेबुद्धिमुत्पादयति । अस्यार्थः ।
सादृश्यंसादृश्यज्ञानज्ञायमानसादृश्यमितिवत् । तदेवोपमानकुतइ
त्यतआह । असन्निकृष्टेसदृशान्तररूपेर्थेयतोबुद्धिमुत्पादयतितेनभव
तिसदृशात्सदृशप्रतिपत्तिरुपमानम् । नसदृशादननुभूतज्ञानमुत्पद्य
तेतिप्रसङ्गात् । तेनेदमनुभूतविषयमेवनैयायिकानान्तुअननुभूतविषय
मेवोपमानमित्याह । नागरकोयदाआरण्यकः पृष्टआचष्टेयथागौ
स्तथागवयइति । तदाखलुनागरकस्यातिदेशवाक्यार्थमनुस्मरतोगा

यन्नामोपमानम्मीमांसकावर्णयन्ति ॥ १ ॥ अन
नुभूतविषयंयथा । तांरोहिणींविजानीहिज्योति
षामत्रमण्डले । समूहस्तारकाणांयःशकटाकारमा
श्रितः । अत्रयथाविधःशकटाकारस्तथाविधोरो
हिणीतारसमूहाकारइत्येवमवधारितातोपदेशस्य
तदाकारतारकचक्रदर्शनादिदन्तद्रोहिणीशकटमि
तियेयंसंज्ञासंज्ञिसम्बन्धप्रतिपत्तिस्तादिदमननुभूत
विषयमुपमानन्नैय्यायिकास्समुन्नयन्ति ॥१॥ तथा
भूतार्थविज्ञानजनकत्वेनहेतुना । नास्मादभिनया
लेख्यमुद्राप्रतिबिम्बादयःपृथक् ॥२॥ तेष्वभिनयोयथा ।
वड्डविवरणिग्गअदलोएरण्डोसाहइव्वतरुणाणम् ।
एत्थघरेहलिअवहूएद्दहमेत्तत्थणीवसइ । अत्रपयो
धरातिपरिणाहसूचकोत्तानप्रसारिताङ्गुलिहस्ता
भिनयसन्निभैरण्डदलसन्निवेशनात्स्वयमुद्दिष्टेपि
हालिकवधूस्तनपरिणाहेपूर्वानुभूतैवंविधस्तनपरि

---

न्वसादृश्यप्रतियोगिनञ्जानतोवद्गवयेयद्गवयेगोसादृश्यज्ञानन्तदुपमा
नम्प्रमाणन्तेनायङ्गवयशब्दवाच्यइतिसंज्ञिसम्बन्धज्ञानमस्मादुपज
न्यतेसोपमितिरिति । तत्रसदृशाद्बुद्धौविपरिवर्त्तमानाद्यत्सदृशज्ञा
नंसदृशेगवयेसंज्ञासंज्ञिसम्बन्धज्ञानमित्यर्थः । उदाहरणादिकन्निगद
व्याख्यातम् ॥ १ ॥ १ ॥ २ ॥ वड्डविवरेति । ग्रामतरुणैरनन्यबद्धान्तःकर
णैर्हालिकवधूस्तनाभोगोमुसलोल्लासनादौवारंवारमनुभूतस्यतुल्याकार
धृतिविवरप्रसूनैरण्डदलदर्शनादेवबुद्धिमारोहतीतिसाबुद्धिर्मीमांसको
पमितिमध्यास्ते । कथमेरण्डदलसन्निवेशस्याभिनयता । अनु
कारोह्यभिनयःस्यासौतत्रसम्भवति । अतआह । हस्ताभिनयसन्नि
भैरिति । उत्तानप्रसारिताङ्गुलिहस्तसन्निवेशेनवस्त्वन्तरपरिणाहप्रति

णाहसम्बन्धप्रतिपत्तिस्तदिदमनुभूतार्थविषयमुप
मानमेवाभिनयद्दृत्युत्प्रेक्ष्यते ॥ ३ ॥ आलेख्यं यथा ।
तवालेख्ये कौतूहलतरलतन्वी विरचितेविधायैकाच
क्रं रचयति सुपर्णासुतमधः । अथ स्विद्यत्पाणिस्त्वरि
तमपमृज्यैतदपराकरे पौष्पञ्चापं मकरमुपरिष्टाच्च
लिखति । अत्र यदानुभूतनायकसन्दर्शनायास्तद्रू
पालेख्यप्रदर्शनादेवम्भूतः सङ्कातिविज्ञानमुत्पद्यते गो
पतार्थञ्च तथाभूतयोरेवदेवकुलादिदृष्टविष्णुकाम
योः प्रतीतिर्भवति तदेतदनुभूतार्थविषयम्भवति ।
यदा पुनरननुभूतनायकादिसन्दर्शनाया इत्यमाप्तो
वदेश एवम्भूतसुपर्णकेतुश्चक्रपाणिर्भवति । एवम्भू
तो मकरध्वजः पुष्पचापः कामो भवति । यादृशायि
मौ तादृश एव मे मनोरथभूमिः केवलमस्य गरुत्मदादयो
न विद्यन्ते । तदा तदुत्तरकालमालेख्यगततदाकार

बिम्बनं लोकप्रसिद्धत्तद्विपाप्यैरवदलविस्तारदर्शनात् दत्तरितमेव जा
यत इत्यर्थः ॥ ३ ॥ तवालेख्य इति । तदप्राप्तिकर्शिता चित्रप्रति
मादिना परिनोदनेन कथञ्चिदात्मानं धारयतीति तन्वीपदेन ध्वन्यते ।
न च जीवितमात्रार्थिनी सा किन्तु त्वदाकृतिदर्शनकुतूहलेनोद्विग्ना सती
निगूढमप्यभिप्रायमालेख्यनिर्माणेन व्यनक्तीति कौतूहलतरलपदाभ्यां
व्यज्यते । एकेति । याराधादिप्रणयपात्रं वशीकृतत्रिभुवनमाजानसु
कुमारं देवकीनन्दनमागमेषु बहुधाऽश्रौषीत् । अथेति । यानियन्त्र
णप्रार्थनीयताविरोधिनं देवताभावमनुसन्धत्ते । तयात्रैलोक्यातिशा
यिसौभाग्यप्रकर्षस्य पुष्पेषोश्चिह्नभूतौ चापमकरौ लिखिताविति । अथ
स्विद्यत्पाणिस्त्वरितमित्येतैर्व्यज्यते । अत्रोदाहरणे द्विविधमप्युपमा
नं दर्शयति । तत्र मीमांसकपक्षे तावत्तन्व्यालेख्यमुन्मुदितं दृष्ट्वा काचि
दनुभूतपूर्वं नायकं जानाति । सादृश्याविशेषाच्च कृष्णकामावपि प्रत्ये

दर्शनात्सोयम्ममप्रेयानितिभाद्विधयाकथापिलिखि
तोभविष्यतीतितद्गोपयाम्येनंविष्णुचिह्नाभ्यामिति
गरुत्मच्चक्रेधःप्रदेशहस्तयोः केतुहस्तयोर्निवेशयति
अथापराप्रतिविधित्सुर्गोपयन्तीप्रकाशयन्तीचप्र
स्यासन्नोपमानम्मन्मथाकारमालिख्यासुःकरेपोषप
ञ्चापमकरमुपरिष्टाच्चलिखति। अत्राकृतौपदार्थे
याद्वमास्तयोर्लोकानांसोयमितिविष्णुरितिकामइ
तिचसंज्ञासंज्ञिसम्बन्धप्रतिपन्नयस्तादिदमननुभूता
र्थविषयमुपमानमालेख्यमाख्यायते ॥ ४ ॥ मुद्रा
यथा । सचकितमिवविस्मयाकुलाभिःशुचिसिक
तास्वतिमानुषाणिताभिः । क्षितिपुदष्टशिरेपदा
निजिष्णोरूपहितकेतुरथाङ्गलाञ्छनानि । अत्रच
क्रध्वजाङ्कितजिष्णुपादमुद्रादर्शनात्सेयममानुषीपा
दमुद्राभवतीतिसंज्ञासंज्ञिसम्बन्धप्रतिपत्तिस्तादिद
मननुभूतार्थविषयमुपमानमेवमुद्रेत्युच्यते ॥ यद
पिचादृष्टेपिजिष्णुपदेमृगीदृशामीदृशःसइत्यनुमान
ज्ञानन्तदप्युपमानार्थनिबन्धनमेवयदाह। अपिचा

---

ति। तदासदृशात्प्रतियत्तिरुपमानम्भवति । नैयायिकपक्षेतुयदासा
मान्यतोनायकागमेउत्पन्नपूर्वानुरागाया विशेषतश्चमत्यकुलावण्यमजा
नत्याइत्यम्भूताकारौकृष्णकामौयादृशौतादृशक्वप्रेयानित्याप्तोपदेश
श्रवणानन्तरङ्गृहीतचित्राकारायास्तत्तच्छब्दाभिधेयताप्रतिपत्तिरुपमा
नमिति । कथञ्चित्रेकामादिपदप्रयोगइत्यतआह । आकृताविति ।
रेखोपरेखादिसन्निवेशेचित्रतुरगन्यायेनेतिभावः ॥ ४ ॥ सचकितेति ॥
ननुचरणमुद्रयाजिष्णुचरणानुमानमत्रप्रतिभाति । तत्कथमुपमानेना
न्तर्भावइत्यतआह । यदपिचेति । अत्राविशेषस्यचरणविशेषप्रतिष

स्त्यनुमानेपिसादृश्यंलिङ्गंलिङ्गिनः । पदेनयथाकुब्जेनकुब्जापादोनुमीयते ॥ ५ ॥ प्रतिबिम्बंयथा । दर्पणेषुपरिभोगदर्शिनीपृष्ठतःप्रणयिनोनिषेदुषः । वीक्ष्यबिम्बमनुबिम्बमात्मनःकानिकान्यपिचकार लज्जया । अत्रयदातावदेवसम्बन्धग्रहःकीदृशंस्वम्मुखंयादृशमादर्शेप्रतिबिम्बन्तदालोकनाददृष्टेपि स्वमुखेयेयमीदृशम्मेमुखमितिप्रतिपत्तिस्तादिदमननुभूतार्थविषयम् । यदापुनरित्यमाप्तोपदेशाद्यादृशंवस्तुतादृशमादर्शादौप्रतिबिम्बन्तदापिप्रियप्रतिबिम्बालोकनादिदन्तन्ममप्रियप्रतिबिम्बमितीयंसंज्ञासंज्ञिसम्बन्धप्रतिपत्तिस्तदप्यननुभूतार्थविषयम् । यदातुचित्रादिष्वनुभूतस्वमुखदर्शनायाःप्रतिबिम्बदर्शनादनेनसदृशम्मेमुखमितिप्रतिपत्तिर्दृष्टप्रियतमाकारायाश्चप्रतिबिम्बाकारदर्शनादेतदाकारोममप्रेयानितिप्रतिपत्तिःप्रतिबिम्बसन्निधौप्रतिबिम्बोदयोदृष्टस्तादिहसन्निहितेनतेनतेनभवितव्यमितियाक्रीडाविकारभूतस्तदानुभूतविषयमेतदुपमानम्प्रतिबिम्बमित्याचक्षते ॥ ६ ॥२२ ॥ प्रत्यक्षादिप्रतीतोर्थोयस्तथानोपपद्यते । अर्थान्तरञ्च

न्धेसत्यपिसदृशात्सदृशज्ञानमुत्कटत्वाद्शेनव्यपदेशोभवतीत्यर्थः । एतदेवदार्वाचार्यसम्मत्याद्रढयति । अपिचेति ॥ ५ ॥ प्रतिबिम्बासन्निधाविति । प्रसङ्गाद्यदर्थमनुमानंव्याख्यातन्तद्दर्शयति । क्रीडाविकारइति । अतएवप्रधानमात्रस्योपसंहारः ॥ ६ ॥ २२ ॥ अर्थापत्तिंलक्षयति । प्रत्यक्षादिति । प्रमाणप्रतीतस्यार्थस्यान्यथाकरणानुपपत्तिज्ञानेनप्रसूतंज्ञानमर्थापत्तिः । अनुपपद्यमानार्थप्रत्यायकत्वप्रमा

गमयत्यर्थापत्तिंवदन्तिताम् ॥ १ ॥ सर्वप्रमाण पूर्वत्वादेकशोनेकशश्चसा । प्रत्यक्षपूर्विकेत्यादिभे दैःषोढानिगद्यते ॥ २ ॥ तासुप्रत्यक्षपूर्विका एकशो यथा । निर्णेतुंशक्यमस्तीतिमध्यन्तवनितम्बिनि । अन्यथानुपपत्त्यैवपयोधरभरस्थितेः । अत्रस्तनभ रनितम्बयोर्मध्यन्नोपलभ्यतेस्तनभारावस्थानञ्चदृ श्यतेतत्रयेयम्पयोधरभरस्थितिःसासान्यथानुपपद्य मानाधारकम्मध्यमनुपलभ्यमानम्बोधयति । सेय म्प्रत्यक्षपूर्विकार्थापत्तिरेकशएवेहाविवक्षिता । इय मपिह्येवम्बहुशोभवतियत्तदर्थापत्तिलब्धम्मध्यन्त दपिधारणशक्तिमन्तरेणतत्कर्मासमर्थमिति । त स्यापिशक्तिःकल्प्यतेसेयमर्थापत्तिपूर्विकार्थापत्तिः। यश्चायमर्थापत्तिविकल्पस्यमध्यस्योपलम्भाभावः सोपिप्रकारान्तरेणासम्भवन्कान्तिकाश्र्ययोरुत्कर्ष म्ब्रूते । साचेयमभावपूर्विकानुपपत्तिर्भवति । न चैनदिहशाब्दमपितुवाक्यार्थसामर्थ्याद्गम्यते ॥ १ ॥

---

यत्प्रत्यक्षादिभेदात्षट्प्रकारमतस्तत्पूर्वाऽर्थापत्तिरपिषोढासम्पद्यते। यदर्थान्तरङ्गमयतितामर्थापत्तिंवदन्तीति । अर्थान्तरगतिरेवार्थाप त्तिरितिव्यक्तम् ॥ १ ॥ एकशइति । एकप्रमाणपूर्वा । अनेकशोऽने कप्रमाणपूर्वाःकथन्तर्हिषोढाअतउक्तम् । प्रत्यक्षपूर्विकेत्यादिभेदैरि ति । व्याख्यातमेतत् ॥ २ ॥ अत्रस्तनभरेति । स्तनभरस्थितिःप्रत्यक्ष गृहीतासाचाधारमन्तरेणानुपपद्यमानामध्यङ्कल्पयति । साचकल्पना ऽर्थापत्तिः । अनुपलभ्यमानमिति । अन्यथाप्रत्यक्षगृहीतैर्वैकिमर्था पत्त्या । अत्रैवोदाहरणेनेकशोव्याख्यातुंशक्यतइत्याह । इयमपीति । शक्तिर्मीमांसकनयेनित्यातीन्द्रियाअभावेऽभावेनैवगृह्यतइतिमध्यानु

प्रत्यक्षादिपूर्विकानेकशो यथा । एतदालोक्य लोका क्षिरूपमप्रतिमन्तव । कल्पयामः कलातत्त्वंगुरुता मादिवेधसः । तत्रेदंरूपमप्रतिमन्तवेति प्रत्यक्षपूर्वं ताप्रभावपूर्वता च व्यक्तमेव प्रतीयते । तेनेयमनेकशः । अत्रापि येयंरूपस्याप्रतिमता न्यथानुपपद्यमाना कलातत्त्वगुरुविनिर्मितत्वमात्मनो वस्थापयति सो वंश्यहल्यादिरूपोपमानज्ञानपूर्विकाय। तत्कर्तुरर्था पत्तिकल्पित। कला तत्त्वगुरुता सापि तथाविधशक्तिक ल्पनापूर्विकेति उपमानपूर्विकार्थापत्तिपूर्विका चेय मर्थापत्तिः। सापि तत्कर्तुर्वेधसः कलातत्त्वगुरुता तथा भूतशक्त्याधारता त्वासाप्यनुमानत आगमतो वाप्यस्य कल्प्यत इत्यनुमानपूर्विका चेयमर्थापत्तिः । नचै तच्चतुष्टयमिहापि शाब्दमपि तु वाक्यार्थसामर्थ्याद्गम्य ते ॥ २ ॥ एकशोनुमानपूर्विका यथा । कपोलपुलके नास्याः सूचितो मदनज्वरः । मनो निरन्तरारक्तंस ख्याकथयति प्रिये । अत्रयो यत्कपोलपुलकेनानुमी यमानो भवज्वरः स मनसः प्रियेनिरन्तरासक्तिमन्त रेणानुपपन्न इत्यनुमानपूर्विकेयमर्थापत्तिः अनेकश उपमानादिपूर्विका यथा । त्वदास्येन्दू समौ दृष्ट्वा तदिदङ्कल्पयामहे । अन्योन्यगामिलावण्यमनयोरे

पलम्भोऽभावप्रमाणपूर्वकः । कान्तीति । अद्भुतप्रभावतिरस्कृतं हि नयनमासन्नमपि नमध्यग्रहणसमर्थमिति भावः ॥ १ ॥ अप्रतिममिति । प्रतिमाशून्यंरूपंविशिष्टमेयत्र विशेषणांशेऽभावस्यव्यापारः । विशे ष्यांशे प्रत्यक्षस्य । पूर्ववदिहापि व्याख्यानमाह । अत्रापीति । प्रति माभावज्ञानमप्रतिमाज्ञानपूर्वकमप्रतिमा च सादृश्यन्त च सदृशमदृश्यद

वक्केवलम् ॥ अत्रत्वदास्येन्दुसमौदृष्टेत्युपमान पूर्वकता अर्थापत्तेः प्रत्यक्षपूर्वताचसव्दतएवप्रतीय ते । यात्वमिथःसादृश्यानुपपत्तिलभ्यालावण्यान्यो न्यगामितासापितथाविधंविधातारमन्तरेण नसङ्ग छतइत्यादौहापिपूर्ववद्वाक्यार्थसामर्थ्यतोवगन्तव्य म् ॥ ४ ॥ एकशोअभावपूर्वायथा । एतदास्यं विनादास्यन्तिखेदयतिसुभ्रुवः । प्रियापराधदग्धा नाम्मनोभाजनताङ्गतम् । अत्रसुभ्रवइत्यनेनाविल सवत्याःसमस्तप्रशस्तलक्षणयोगोलक्ष्यते । तथावि धायाश्चवक्त्रविलासहासस्याभावोनुपद्यमानःशो कव्यतिरिक्तमात्मकारणंकल्पयतीत्यभावपूर्विकेय मर्थापत्तिः ॥ ५ ॥ अनेकशोर्थापत्त्यादिपूर्विकाय था । दृष्ट्वाविभ्रमिणीमेतांविभ्रलीलागुरुंस्मरम् । स्मरश्चमृगशावाक्ष्यामनस्यस्याःकृतास्पदम् । अत्र विभ्रमिणीतिप्रशंसायाम्मत्वर्थीयस्तेनविभ्रमाणामु त्कर्षोलक्ष्यते । तेचान्योपदेशादसम्भवन्तोमन्मथ मुपाध्यायंबोधयन्ति । तस्याग्रतःपार्श्वतोवानुप लभ्यमानस्यतन्मनस्यवस्थानंलक्ष्यते । सेयमाद्याप्र त्यक्षपूर्विकाद्वितीयाचार्थापत्तिपूर्विकार्थापत्तिर्भव ति । अयमेवचमनोभूर्मनसिकामिनीनांसम्भवती त्याप्तोपदेशादागमपूर्विकापिभवति ॥ ६ ॥ २३ ॥

र्शनवेद्यमित्यस्तिपूर्वमुपमानम् ॥ २ ॥ ३ ॥ हास्यभावस्यान्यथाप्युप पत्तेःकथमर्थापत्तिरित्यतआह । अत्रसुभ्रुवइति ॥ ४ ॥ ५ ॥ इत्यसे वान्यथोपपत्तिमाशङ्क्याग्रेव्याचष्टे । अत्रविभ्रमिणीमितिमत्वर्थीयार्थमा ह ॥ प्रशंसायामिति ॥ ६ ॥ २३ ॥ अभावंलक्षयति । असत्तेति । प्रा

असत्तायापदार्थानामभावःसोऽभिधीयते । प्रागभावादिभेदेनसषड्विधइहेष्यते ॥ १ ॥ तेषुप्रागभावोयथा । सग्गंअपारिजाअङ्कोत्थुहलच्छीविरहिअम् । महुअमहस्सउरम्मुमरामिमहणपुरओअमुद्धअन्दउच्चहरअडापब्भारम् * ॥१॥ प्रध्वंसाभावोयथा । धृतिरस्तमितागतिश्चुताविगलद्गेयमृतुर्निरुत्सवः । गतमाभरणप्रयोजनम्परिशून्यंशयनीयमद्यमे ॥२॥ इतरेतराभावोयथा । कर्णोत्पलन्नचक्षुस्तेनचक्षुःश्रवणोत्पलम् । इतिजानन्नपिजनोमन्यतेनेत्रदीर्घताम् ॥ ३ ॥ अत्यन्ताभावोयथा । जउजरसहोहसारन्तंसोदेइअिकिमत्थअच्छेरम् । अणहोन्नम्पिहुदिसन्तइदोहग्गंसवत्तीणम् * ॥ ४ ॥ अन्येपुनरन्यथाअत्यन्ताभावमाचक्षते । यथा । प्रसीदसद्योमुञ्चेमञ्चण्डिमानम्मनोगतम् । दृष्टमात्रेपितेतत्रपरो

---

गसत्वमुत्तरासत्वमित्यसत्तारूपेणैवप्रागभावादयोव्यवतिष्ठन्ते इतरेतराभावेप्यन्यरूपतयान्यस्याभावइत्यसत्तात्मकत्वम् । प्रागभावादयःपूर्वोल्लिखिताश्चत्वारः । अत्यन्ताभावविशेषसामान्याभावाव्यांसहषड्भावाः । तयोर्विशेषमग्रेवक्ष्यामः ॥ १ ॥ सग्गंअपारिजाअमितिनिगदव्याख्यातः । प्रागभावः । यथाअभावपूर्विकायामर्थापत्तौकरणभेदानुमानमुक्तन्तथात्रापिबोद्धव्यम्पारिजातप्रागभावस्यप्रमेयरूपताव्यक्तैव । अभावोऽभावेनैवप्रतीयतइति । दर्शनेतत्करणतयाशब्दानुपातोपियोग्यप्रमाणाभावोवगम्यते । एवमुत्तरेष्वपिस्वयमूहनीयम् ॥१॥ २ ॥ ३ ॥ ४ ॥ स्थानान्तरप्रमितव्यस्थानान्तरेत्रैकालिकोऽभावविशे

---

* स्वर्गसपारिजातं कौस्तुभलक्ष्मीविरहितंमधुमथनस्योरः ॥ स्मरामिमथनपुरतोऽमुग्धचन्द्रंचहरजटाप्राग्भारम् ॥ १ ॥

* यद्यस्यभवतिसारन्तंसददाति किमत्राश्चर्यम् ॥

षःखकुसुमायते ॥ ५ ॥ सामर्थ्याभावोयथा । मानुषीषुकथंवास्यादस्यरूपस्यसम्भवः । नप्रभातरलज्ज्योतिरुदेतिवसुधातले । तएतेषडपिनिगदैरेवव्याख्याताः ॥ ६ ॥ अभावाभावोप्यभावएव । सप्रागभावप्रध्वंसोयथा । उद्यानसहकाराणामनुद्भिन्नानमञ्जरी । देयःपथिकनारीणांसतिलःसलिलाञ्जलिः ॥ ७ ॥ प्रध्वंसप्रागभावोयथा । नमर्त्यलोकस्त्रिदिवात्प्रहीयतेम्रियेतनाग्रेयदिवल्लभोजनः ८ ॥ प्रध्वंसप्रध्वंसोयथा । निवृत्तमेवत्रिदिवप्रयोजनम्मृतःसचेज्जीवतएवजीवति ॥ ९ ॥ प्रध्वंसप्रागभावप्रध्वंसोयथा । नामिलितमस्तिकिञ्चित्काञ्चीदेशस्यसर्वथानाथ । प्रसरतुकरस्तत्रायम्प्रकृतिकृशेमध्यदेशेपि ॥ १० ॥ प्रध्वंसप्रध्वंसस्यप्रध्वंसोयथा । एषाप्रवासङ्कथमप्यतीत्ययातापुनःसंशयमन्यथैव । कोनामपाकाभिमुखस्यजन्तोर्द्वाराणिदैवा

---

षोत्यन्ताभावइतिदर्शनमाश्रित्यचतुष्टयमध्यपातीतावदत्यन्ताभावउदाहृतः । इदानीमन्यञ्चमाभावोचितविशेषमत्यन्ताभावन्दर्शयति । अन्येपुनरिति । सौगतादयः । अत्यन्तासत्प्रतियोगिकोऽभावोत्यन्ताभावः । यथाखपुष्पस्याभावइत्युदाहरणंस्फुटम् ॥ ५ ॥ सामर्थ्याभावोयोग्यताभावः । अनेनैवरूपेणस्वरतामासादयन्नुपात्तः ॥ ६ ॥ अभावएवेति । अभावव्यवहारपात्रमेवतथाभूतस्यैवलक्षणमित्युक्तम्पुरस्तात् ॥ ७ ॥ वल्लभजनमरणप्रध्वंसःसनजानिषिध्यतेसतुनिषेधःप्रागसत्त्वरूपएव । मृतःसचेदितिमरणोत्तरमभावोभवत्प्रध्वंसोभवति । सद्भावसम्भवन्नपिशब्देनसम्भाव्यमानःकान्तिकारणम्भवतीत्यलङ्कारकक्षामारोहति ॥ ८ ॥ ९ ॥ प्रध्वंसप्रागभावाभावइति ॥ मरणेनप्रध्वं

न्यपिधातुमीष्टे ॥११॥ इतरेतराभावाभावोयथा। शासनेपिगुरुणिव्यवस्थितङ्कृत्यवस्तुनिनियुङ्क्ष्व कामतः। त्वत्प्रयोजनधनन्धनञ्जयादन्यएषइतिमा ऽचमावगाः। अत्यन्ताभावस्यसामर्थ्याभावस्यचप्र ध्वंसाभावोयथा। अनाप्तपुण्योपचयैर्दुरापाफल स्यनिर्धूतरजाःसवित्री। तुल्याभवद्दर्शनसम्पदेषा वृष्टेर्दिवोवीतवलाहकायाः। एतेनातिदुर्बोधाइति नव्याकृताः ॥१३॥१४॥ अर्थालङ्कृतयोप्येताश्चतु र्विंशतिसङ्ख्यया। कथिताकाव्यविज्ञानाच्चित्तप्रह्लादहेतवे ॥१॥ इतिश्रीमहाराजाधिराजश्रीमद्भोजराजविरचिते सरस्वतीकण्ठाभरणनाम्न्यलङ्कार शास्त्रेऽर्थालङ्कारस्तृतीयःपरिच्छेदः॥ शिवम्भूयात्॥

---

सनन्तस्याभावःसमस्तेननञातस्याप्यभावोभिन्नेनप्रतिपादितः॥१०॥ प्रध्वंसस्यप्रध्वंसाभावइति। कथमपीत्यनेनप्रवासेदशम्यवस्थाकटाक्षितातस्यात्ययःप्रध्वंसप्रध्वंसःपुनःसङ्गमित्यनेनतस्यापिप्रध्वंसः११ सुबोधमन्यत्॥ १२ ॥ १३ ॥ १४ ॥ उक्तार्थालङ्काराणांसंख्यामाह। अर्थालङ्कृतयइति॥

॥१॥ श्रीरामसिंहदेवाज्ञामादायरचितोमया॥ दर्पणाख्यः सदातेनतुष्यतु श्रीसरस्वती ॥१॥ रत्नेश्वरोनामकवीश्वरोसौविराजतेकाव्यसुधाभिषेकैः॥ दुस्तर्कवक्राहतदुर्विदग्धांवसुंधरांपल्लवयन्नजस्रम्॥२॥ अद्यस्फुरतुवाग्देव्याःकण्ठाभरणकौतुकम्॥ मयिप्रह्वमनोवृत्तौ कुर्वाणेरत्नदर्पणम्॥३॥

इति श्रीमन्महाराज श्रीरामसिंहेन महामहोपाध्याय मनीषि रत्नेश्वरेणविरचय्यप्रकाशिते दर्पणाख्येसरस्वतीकण्ठाभरण विवरणे ऽर्थालङ्कार स्तृतीयः परिच्छेदः॥

॥ श्रीः ॥

श्रीमल्लक्ष्मीव्यङ्कटेशाभ्यांनमः

# सरस्वतीकण्ठाभरणे

श्रीमन्महाराजाधिराज श्रीभोजदेवनरेन्द्रविरचिते

## चतुर्थपञ्चमपरिच्छेदौ

ज्यौतिषोपाह्व भैरवनाथशास्त्रि प्रभृतिभिः

श्रीकाश्यां

राजराजेश्वरीमुद्रायन्त्रालये

प्राकाश्यंप्रनीतौ ।

संवत् १९४५

शुभम्भवतु

॥ श्रीः ॥

विदितमस्तु तत्र भवतां साहित्यानुरागिणां योयं भैरव शास्त्रिप्रभृतिभिर्मुद्रयितुमुपक्रान्तः सव्याख्यः सरस्वतीकण्ठाभरणाभिधः साहित्यग्रन्थः सोयं श्रीमद्विश्वेशाऽनुकम्पयाश्रीगुरुचरणप्रसादात् सुहृदामानुकूल्येनच संशोधनादिपुरःसरं संपूर्णतामगमत्। परं तत्र परिच्छेदत्रयस्यैवव्याख्योपलब्धेस्तावन्तमेवामुद्रयंसव्याख्यमिति व्यज्ञापयं पूर्वभूमिकायाम्। तदनन्तरं च बहुत्रदेशेषुकृतगवेषणाऽपि नासादितापरिच्छेदद्वयव्याख्येतिखिन्नमना अपि विलम्बमसहमानैः प्रेप्सुभिर्वारंवारं प्रेरितः कृतोत्साहश्च प्रवृत्तोहं श्रौतविद्यानदीष्णपाठकश्रीमज्जगन्नाथशर्मणामेकमेव शुद्धतमं पुस्तकमासाद्य तत्रतत्रप्राकृतोदाहरणेषु कृतच्छायंक्लिष्टस्थलेष्वपि विवरणसंपादनपुरःसरं तुर्यपरिच्छेदम् पञ्चमं तुकेवलप्राकृतोदाहरणप्रायमिति आवश्यकेपि विवरणादिकरणेविलम्बासहिष्णूनांप्रेप्सूनांपरीप्सयासंप्रार्थनयाऽच्छायमेवान्यदप्येकंपण्डितवराणांमोहकमशर्मणांपुस्तकंसंगृह्यसंशोध्य, तत्र तत्र पाठभेदान्संसूच्यचमुद्रयित्वाप्रकाशितवानस्मि। परमत्रमदीयदृष्टिदोषेण सीसकाक्षरयोजकदोषेणवा स्खलितानि परिहाय गुणग्राहिणः सहृदयाः कृतधियः सानन्दमवलोकयन्त्वमुं सफलयन्तु च ममोद्योगमिति सप्रश्रयंप्रार्थयते

पौषवद्य १२ चं० संशोधकः प्रकाशकश्च

सं०१९४५ द्राविडवीरेश्वरशास्त्री

॥ श्रीः ॥

## ॥ सरस्वतीकण्ठाभरणे चतुर्थः परिच्छेदः ॥

॥ श्रीसरस्वत्यै नमः ॥

शब्देभ्यो यः पदार्थेभ्यउपमादिः प्रतीयते । विशिष्टोर्थः कवीनान्ता उभयालंक्रियाः प्रियाः ॥१॥ उपमारूपकंसाम्यंसंशयोक्तिरपह्नुतिः ॥ समाध्युक्तिः समासोक्तिरुत्प्रेक्षा ऽप्रस्तुतस्तुतिः ॥ २ ॥ स*तुल्ययोगितोलेशः ससहोक्तिःसमुच्चयः ॥ साक्षेपोर्थान्तरन्यासः सविशेषापरिष्कृतिः ॥ ३ ॥ दीपकक्रमपर्यायातिशयश्लेषभाविकः । संसृष्टिरितिनिर्दिष्टास्ताश्चतुर्विंशतिर्बुधैः॥४॥तत्र प्रसिद्धेरनुरोधेन यः परस्परमर्थयोः । भूयोवयवसामान्ययोगः सेहोपमानता ॥५॥ एकाभिधीयमानेस्यात्तुल्येधर्मेपदार्थयोः । प्रतीयमानेप्यपरा द्विविधाऽपिच सा त्रिधा ॥६॥ पदवाक्यप्रपञ्चाख्यैर्विशेषैरुपपद्यते । पृथगष्टविधत्वेन ताश्चतुर्विंशतिः पुनः ॥७॥ समासात्प्रत्ययाच्चैव द्विविधास्यात्पदोपमा । यासमासोपमातत्रचतुर्द्धासाभिपद्यते ॥ ॥८॥ इवार्थान्तर्गतैरेकासामान्यान्तर्गतैःपरा । अन्तर्भूतोभयार्थान्यासान्यासर्वसमासभाक् ॥९॥ तास्वन्तर्भूतेवार्थायथा । मुखमिन्दुसुन्दरन्ते बिसकिसलयकोमले भुजालतिके । जघनस्थलीचसुन्दरि तवशैलशिलाविशाले-

---

*सतुल्ययोगितोलेश इति । विशिष्टस्यान्वये प्रतेत्रकसप्राप्त्यन्वितत्वाच्चतुर्विंशतित्वमविरुद्धम् । एवमन्यत्रापि ।

यम् ॥ अत्रेन्दुरिवसुन्दरमिन्दुसुन्दरमितीवार्थं [उपमानानिसामान्यवचनैः] इति समासेनैवोक्तः । एवंबिसकिसलयइव कोमले शैलशिलेवविशालेति । सेयमन्तर्गतेवार्थानामसमासोपमासु पदोपमाभक्तिः ॥ १ ॥ अन्तर्भूतसामान्यायथा । चन्दसरिसम्मुहंसे अमअसरिच्छोअमुहरसोविरसो । सकअग्गहरहसुज्जलचुम्बनङ्कस्ससरिसंसे * ॥ अत्र चन्द्रेणसदृशञ्चन्द्रसदृशम्मुखम् , अमृतेन सदृक्षो ऽमृतसदृक्षोमुखरस, इति समासे सुन्दरमधुरादि सामान्यशब्दप्रयोगोनश्रूयते । प्रतीयते च सदृशादिद्योतकादितिसामान्यधर्मस्य सौन्दर्यमाधुर्यादेरुपमानेप्रसिद्धस्योपमेये समासेनैव प्रतिपादितत्वादियमन्तर्भूतसामान्यानामसमासोपमासुपदोपमाभक्तिः ॥ २ ॥ अन्तर्भूतोभयार्थायथा । कमलकरारम्भोरूःकुवलअणअणा मिअङ्कवअणासा । कहणुणवचम्पअङ्गीमुणालबाहूपिआतवइ * ॥ अत्र कमलमिवताम्रौरम्भेइवपीवरौकुवलयमिवश्यामेमृगाङ्क इवप्रेक्षणीयन्नवचम्पकमिवगौरम्मृणालमिवकोमलौकरावूरूनयने वदनमङ्गम्बाहूयस्याः सातथोक्तेत्यन्यपदार्थेन समासेनैव द्योतकसामान्ययोरुक्तत्वादियमन्तर्भूतेव सामान्यानामसमासोपमासुपदोपमाभक्तिः ॥ ३ ॥ सर्वसमासायथा । शरदिन्दुसुन्द-

---

*चन्द्रसदृशं मुखमस्या अमृतसदृशस्च मुखरसोप्यस्याः । सकचग्रहरभसोज्ज्वलचुम्बनं कस्य सदृशं स्यात् ।

*कमलकरारम्भोरूः कुवलयनयना मृगाङ्कवदना सा । कथं नु नवचम्पकाङ्गीमृणालबाहुः प्रिया तपति । तापयतीत्यर्थः । अन्तर्भावितण्यर्थोच तपतिः ।

रमुखी कुवलयदलदीर्घलोचनासामे। दहति मनः कथ-
मनिशंरम्भागर्भाभिरामोरूः॥ अत्रोपमानोपमेयधर्मा-
णामिन्दुसुन्दरादिपदैरिवार्थस्य समासेनैवाभिधानं सर्वं
समासेऽस्याइति सर्वसमासोपमानामेयं समासोपमासु प-
दोपमाभक्तिः ॥४॥ याप्रत्ययोपमेत्युक्ताकाव्यविद्भिःपदो-
पमा॥ चतुर्द्धाभिद्यते सापिप्रत्ययार्थप्रभेदतः॥१०॥
प्रत्ययोह्युपमेयेस्यादुपमानेपि कश्चन। तत्सामान्येभ-
वेत्कश्चिदिवार्थेकश्चिदिष्यते॥११॥ तेषांवशात्तदुपमाभवे-
त्तद्व्यपदेशभाक्। उदाहरणमेवास्या रूपव्यक्त्यैनिदर्श्यते-
॥१२॥तत्रप्रत्ययस्योपमेयस्यार्थेयथा॥हंसोध्वाङ्क्षविरावी-
स्यादुष्ट्रक्रोशीचकोकिलः। खरनादीमयूरोपित्वञ्चेद्वदसि-
वाग्मिनि। अत्र[कर्त्तर्युपमाने]इत्यनेनयदोपमानेउपप-
देध्वाङ्क्षइवविरौतीति सामानाधिकरण्येनकर्त्तर्येवप्रत्य-
यस्तदोपमेयस्यार्थेभवति। एवमुष्ट्रक्रोशीखरनादीत्येतयो-
रपि द्रष्टव्यम्। सेयमुपमेयार्थप्रत्ययानामप्रत्ययोपमासु
पदोपमाभक्तिः॥५॥ प्रत्ययस्योपमानार्थे यथा। पूर्णेन्दु-
कल्पवदनामृणालीदेश्यदोर्लता। चक्रदेशीयजघना सा
स्वर्गेपि न दृश्यते॥ अत्र पूर्णेन्दुरिव पूर्णेन्दुरित्यादिक-
योपचारवृत्त्या यद्यपि पूर्णेन्दुप्रभृतय उपमानशब्दा अ-
प्युपमेयेषु वदनादिषु वर्त्तन्ते तेभ्यश्चयद्यपिस्वार्थेएव-
स्वार्थिकाःकल्पबादयोभवन्ति। तथापिते शब्दशक्तिस्वा-
भाव्याद्गुणभूतमुपमानार्थमात्रम्ब्रुवते। यथाशुक्लादिभ्य-
स्तरबादयः। तथाहरऽयं शुक्लोऽयञ्चशुक्लोयमनयोःशुक्ल-

तरइत्युक्ते शौक्ल्यस्यैव प्रकर्षोगम्यते। नशौक्ल्यवतः। से-
यमुपमानार्थप्रत्ययानाम प्रत्ययोपमासु पदोपमाभक्तिः
॥६॥सामान्यार्थप्रत्ययेनयथा। सूर्यीयतिसुधारश्मिरना-
थातिमृतायते। मृतस्यकान्ताविरहे स्वर्गोपिनरकीयति॥
अत्र [उपमानादाचारे] इत्यादिभिःसूर्यादिभ्यः क्यजादय
आचारलक्षणक्रियाविशेष उत्पद्यमाना नोपमेययोः सामा-
न्यएवोत्पद्यन्तइति सेयं सामान्यार्थप्रत्ययानाम प्रत्ययो-
पमासुपदोपमाभक्तिः॥७॥ इवार्थप्रत्ययेनयथा। एक
एवहि भूतात्मा भूते भूते व्यवस्थितः। एकधाबहु-
धाचैव दृश्यते जलचन्द्रवत्॥ अत्र [तेनतुल्यं क्रिया-
चेद्वतिः] इत्यनेन चन्द्रशब्दाच्चन्द्रेण तुल्यन्दृश्यत इती-
वार्थएवप्रत्ययो नतु तुल्यक्रियार्थे ऽन्यथादृश्यत इति इ-
वार्थइव तुल्यक्रियाप्रयोगोपि न स्यात्। तदप्रयोगेपि च
गौरिवगवय इत्यादौवतिः प्रसज्येत। सेयमिवार्थ प्रत्य-
यानाम प्रत्ययोपमासुपदोपमाभक्तिः॥८॥ वाक्योपमा
तुया तत्र द्वैविध्यंसाऽपिगच्छति। एकापदार्थयोः सा-
म्ये परावाक्यार्थयोर्मिथः॥१३॥ आद्यापूर्णाचलुप्ताच-
लुप्तपूर्णातथैवच। पूर्णलुप्तेति चाख्याता कविमुख्यैश्चतु-
र्विधा॥१४॥ तत्र। पूर्णासामान्यधर्मस्य प्रयोगेद्योतकस्य-
च। उपमानस्य च भवेदुपमेयस्यचैवहि॥१५॥ यथा।
कमलमिवचारुवदनम्मृणालमिवकोमलम्भुजायुगलम्।
अलिमालेवसुनीलातथैवमदिरेक्षणेकबरी॥ अत्रकमल-
मृणालालिमालादीनामुपमानद्योतकतुल्यधर्मोपमेयवा-

चकानाञ्चतुर्णामपि पदानाम्पृथक्पृथक्प्रयोगे पदार्थयोः सादृश्यस्याभिधीयमानत्वादियम्पूर्णानामपदार्थोपमासु-वाक्योपमाभक्तिः ॥ ९ ॥ लोपेसामान्यधर्मस्यद्योतकस्य-चयोपमा। प्रतीयमानसादृश्ये द्वयोर्लुप्तेतितांविदुः ॥१६॥ यथा। नपद्मम्मुखमेवेदन्न भृङ्गौचक्षुषी इमे। नकेसरा-णिकान्तायाइमास्तादन्तपङ्क्तयः॥ अत्रकान्तामुखादा-वुपमेयेपद्मादिविपर्ययज्ञानप्रत्याख्यानेन इवादीनाम-भावेपि कान्त्यादिलुप्तधर्मप्रतीतेर्लुप्तानामेयम्पदार्थोप-मासुवाक्योपमाभक्तिः ॥ १० ॥ लोपेसामान्यधर्मस्य लु-प्तपूर्णेतिगद्यते॥यथा। राजीवमिवतेवक्त्रन्नेत्रेनीलोत्पले-इव। रम्भास्तम्भाविवोरूच करिकुम्भाविवस्तनौ॥ अत्र-सामान्यधर्मेलुप्तेपि प्रतीयमानसादृश्यादेवपदार्थयोरुप-मानोपमेयभावस्य परिपूर्णत्वे लुप्तपूर्णानामेयम्पदार्थो-पमासुवाक्योपमाभक्तिः ॥११॥ द्योतकस्य तु लोपेयापू-र्णलुप्तेति सास्मृता ॥ १७॥ यथा। त्वन्मुखम्पुण्डरीक-ञ्चफुल्लं सुरभिगन्धिनी*। कोमलापाटलौतन्विपल्लवश्चाध-रश्चते॥ अत्रतन्त्रेण सदृशयोरनभिधानात्सादृश्यस्यपुन-रुपमानोपमेयभावविवक्षितेनश्लेषतोन्यत्वेसतीतरेतरयो-गेनोपमानोपमेययोरेकशेषेणचतद्विशेषणयोः समुदाये-नाभिधानादिवादिमन्तरेणापिउपमानादीनाञ्चतुर्णामपि-पूर्णत्वेसत्युक्तार्थत्वादिवादेर्लुप्यतइति पूर्णलुप्तानामेय-म्पदार्थोपमासु वाक्योपमाभक्तिः ॥ १२ ॥ यातुवाक्या-

*गन्धस्येत्पूतिसुसुरभिभ्य इति इकारादेशः।

र्थयोः साऽपिचतुर्द्धैकेवशब्दिका । नैकेवशब्दिकेवादि-
शून्यावैधर्म्मवत्यपि॥१८॥तास्वेकेवशब्दायथा। पाण्ड्योय-
मंसार्पितलम्बहारः क्लृप्ताङ्गरागोहरिचन्दनेन। आभाति-
बालातपरक्तसानुः सनिर्झरोद्गारइवाद्रिराजः ॥ अत्र-
हिमवत्पाण्ड्ययोर्निर्झरहारयोर्बालातपहरिचन्दनयोश्च प-
रस्परमुपमानोपमेयविवक्षायां विशेषणविशेष्यभावप-
रिकल्पनेन वाक्यार्थयोर्द्वयोरेवकल्पितत्वादेकेनैवेवशब्दे-
नतयोःपरस्परमुपमानोपमेयभावोऽभिहित इतीयमेके-
वशब्दानामवाक्यार्थोपमासुवाक्योपमाभक्तिः ॥ १३ ॥
अनेकेवशब्दायथा। दिनेदिने सापरिवर्द्धमानालब्धो-
दयाचान्द्रमसीवरेखा॥ पुपोषलावण्यमयान्विशेषाञ्ज्यो-
त्स्नान्तराणीवकलान्तराणि॥ अत्रक्रियापदस्यवाक्यार्थ-
द्वयैकतापत्तिहेतोः सकर्मकत्वात्कर्त्तुः कर्मणश्चोपमाना-
त्पृथगिवशब्दप्रयोगइतिसेयमभिधीयमानसादृश्या ऽने-
केवशब्दानामवाक्यार्थोपमासु वाक्योपमाभक्तिः॥ १४॥
अनिवादिशब्दायथा। दिवोजागर्त्ति रक्षायै पुलोमारि-
र्भुवोभवान्। असुरास्तेन हन्यन्ते सावलेपानृपास्त्वया॥
अत्रपुलोमारिवर्णनीययोर्द्यावाभूम्योरसुराणामवलिप्त-
पार्थिवानाञ्च तुल्यक्रियासमावेशादिवादिमन्तरेणापि-
वाक्यार्थानाम्परस्परमुपमानोपमेयभावोऽवगम्यत इ-
तीयमनिवादिशब्दानामवाक्यार्थोपमासु वाक्योपमाभ-
क्तिः॥ १५ ॥ वैधर्म्यवतीयथा। प्रहितः प्रधनायमाघ-
वानहमाकारयितुम्महीभुजा। नपरेषुमहौजसश्छला-

दपकुर्वन्ति मलिम्लुचा*इव॥अत्रसत्यप्युपमानेसत्यप्यु-
पमेयेसत्त्यपिचेवशब्देमहौजसाम्मलिम्लुचानाञ्चयोऽय-
ञ्छलापकरणन्नामवस्तुधर्मः सउपमान एव नजानिय-
म्यत इति वैधर्म्यवतीनामेयं वाक्यार्थोपमासुवाक्योप-
माभक्तिः ॥१६॥ यत्रोक्तिभङ्ग्यावाक्यार्थसादृश्यमवगम्य-
ते। वाक्यार्थयोर्विस्तरतः साप्रपञ्चोपमेष्यते ॥ १९ ॥
सातुप्रकृतरूपास्याद्रूपेणविकृतातथा ॥ तयोः प्रकृतरू-
पास॥विज्ञेयाचचतुर्विधा ॥ २० ॥ स्यात्समस्तोपमातद्वदे-
कदेशोपमापरा ॥ मालोपमातृतीयास्याच्चतुर्थीरसनोप-
मा ॥ २१ ॥ तासुसमस्तोपमायथा । अलिवलयैरलकै-
रिवकुसुमस्तबकैः स्तनैरिववसन्ते । भान्तिलताललना-
इवपाणिभिरिवकिशलयैरधिकम् ॥ अत्रवसन्तलक्ष्मीप-
रिष्कृतलतानां ललनानाञ्चप्रतीयमानसादृश्यानामुप-
मानोपमेयभावविवक्षायां येयमलिवलयादिभिरलकादी-
नाम्प्रतीयमानसादृश्यानामेव पृथक्पृथगिवशब्दप्रयोग-
वतीतिविस्तारेणावयविनोऽवयवानाञ्चेति सामस्त्येनवा-
क्यार्थयोरौपम्यभङ्गिः।सेयंसमस्तोपमानामप्रकृतरूपोप-
मासुप्रपञ्चोपमाभक्तिः॥१७॥ एकदेशोपमायथा॥कमलद-
लैरधरैरिवदशनैरिवकेसरैर्विराजन्त्यो अलिवलयैरलकैरि-
वकमलैर्वदनैरिवनलिन्यः ॥ अत्रनलिनीनां विलासिनी-
नाञ्च परस्परमुपमानोपमेयभावेवक्तव्ये विलासिनील-
क्षणमुपमानार्थमेवावयवान्तराणिचयानिस्तनाद्युपमेया-

---

*मलिम्लुचाश्चौराः।

नितानिपरित्यज्यकमलमेवैकन्तदवयवैर्दलादिभिः सहा-
धरादिभिरुपमानैः पृथक्पृथगिवप्रयोगाद्विस्तरेणोपमितं
तेनेयमेकदेशोपमानामप्रकृतरूपोपमासु प्रपञ्चोपमाभ-
क्तिः॥१८॥मालोपमायथा॥सोहव्व लक्खणमुहं वणमालव्व-
विअलंहरिवइस्सउरम्। कित्तिव्वपवणतणअं आणव्वव-
लाइसेविलग्गइदिठ्ठी*॥अत्ररामदृष्टेर्लक्ष्मणमुखादिवि-
निवेशिन्याः शोभाद्युपमानमालया प्रतीयमानसादृश्य-
या विस्तरेणोपमितेर्मालोपमानामेयमप्रकृतरूपोपमासु
प्रपञ्चोपमाभक्तिः ॥१९॥ रसनोपमा यथा। चन्द्रायतेशु-
क्लरुचाथहंसो हंसायते चारुगतेन कान्ता । कान्तायते
स्पर्शसुखेन वारि वारीयते स्वच्छतया विहायः ॥ अत्र
चन्द्रादीनां शौक्ल्यादिभिरभिधीयमानसादृश्यैर्हंसादिभि-
र्येयं रसनान्यायेन पश्चाद्वलनया विस्तरवती हेतुमती च
प्रत्ययोपमापङ्क्तिस्तयैहैकवाक्यताकरणेन शरद्रमणीय-
तोयवर्णनमिति सेयं रसनोपमानामप्रकृतरूपोपमासुप्र
पञ्चोपमाभक्तिः ॥२०॥ इतीमास्ताश्चतस्रोपिरूपेण प्रकृते-
नयाः। उपमानाद्भुतस्रोन्याविकृतेन प्रचक्ष्महे ॥ २२ ॥
विपर्यासोपमा तासु प्रथमाथोभयोपमा। अथोत्पाद्यो-
पमानामतुरीया ऽनन्वयोपमा ॥२३॥ तासु विपर्यासोप-
मा यथा। यत्त्वन्नेत्रसमानकान्ति सलिले मग्नन्तदिन्दी-
वरं मेघैरन्तरितः प्रिये तव मुखच्छायानुकारी शशी।

---

* शोभेव लक्ष्मणमुखं, वनमालेव विकलं हरिवरस्योरः। कीर्तिरिव पवनतन-यमाज्ञेव बलान्यस्य विलग्ना दृष्टिः।

येऽपि त्वद्गमनानुसारिगतयस्ते राजहंसा गतास्त्वत्सादृश्यविनोदमात्रमपि मे दैवेन न क्षम्यते ॥ अत्र नेत्रादीनामुपमेयत्वमिन्दीवरादीनामुपमानत्वमिति प्रसिद्धौ येयमत्यनुरागान्नेत्रादिष्वाधिवयबुद्धिर्नाऽत्यनुरागादिन्दीवरादिषु तदनुकारबुद्धिस्तयेह रामेण विरहिणाऽभिधीयमानसादृश्यानाममीषाम्परस्परमुपमानोपमेयभावः प्रसिद्धेर्विपर्यासेन कल्पित इति सेयं विपर्यासोपमानामविकृतरूपोपमासु प्रपञ्चोपमाभक्तिः[1] ॥२१॥ उभयोपमा यथा। तवाननमिवाम्भोजमम्भोजमिव ते मुखम्। निलीनान्नलिनीखण्डे कथन्नुत्वां लभेमहि ॥ अत्राप्यत्यन्तसादृश्यादेकस्मिन्पक्षे प्रसिद्धेर्विपर्यासइति सेयम्प्रतीयमानसादृश्योभयोपमानामविकृतरूपोपमासुप्रपञ्चोपमाभक्तिः ॥२२॥ उत्पाद्योपमा यथा। उभौ यदि व्योम्नि पृथक् प्रवाहावाकाशगङ्गापयसः पतेताम्। तदो[2]पमीयेत तमालनीलमामुक्त मुक्तालतमस्यवक्षः ॥ अत्रोपमानार्थमुत्पाद्योपमेयेन प्रतीयमानमभिधीयमानंच सादृश्यमभिहितमिति सेयमुत्पाद्योपमानामविकृतरूपोपमासुप्रपञ्चोपमाभक्तिः ॥२३॥ अनन्वयोपमा यथा। त्वन्मुखन्त्वन्मुखमिवत्वदृशौ त्वदृशाविव। त्वन्मूर्तिरिव मूर्तिस्ते त्वमिवत्वं कृशोदरि ! ॥ अत्र त्वमेवेदृशी नाऽन्या

---

१यद्यपि केचित्प्रसिद्धोपमानोपमेयप्रातिलोम्यात्प्रतीपालङ्कारमाहुस्तथापि प्रतीपभेदानामुपमालङ्कारान्तर्भूतत्वेनाक्षेपालङ्कारान्तर्भूतत्वेन च पृथगलङ्कारत्वं नाश्रयणीयमेवमनन्वयादिष्वपीति तात्पर्यम्।

२तदोपमीयेतेति। उपलभ्यमानमाघपुस्तकेषु "तेनोपमीयेतेति" पाठो दृश्यते तत्रचाऽयमर्थः। तेनव्योम्ना उपमीयेत समीक्रियेत इति।

त्वत्सदृशीत्यऽनन्वयेसति उपमानोपमेयभावविवक्षयैक-
स्यापि वस्तुनोभेदमुपकल्प्य प्रतीयमानसादृश्यमौपम्ये-
नाभिहितमिति सेयमनन्वयोपमानामविकृतरूपोपमा-
सुप्रपञ्चोपमाभक्तिः ॥२४॥१॥ इत्युपमालङ्कारनिरूपणम् ॥
यदोपमानशब्दानाङ्गौणवृत्तिव्यपाश्रयात्। उपमेयेभवेद्वृ
त्तिस्तदातद्रूपकंविदुः॥२४॥शब्दार्थोभय१ भूयिष्ठभेदात्त्रे-
धातदुच्यते। शब्दभूयिष्ठमेतेषु प्रकृतं विकृतन्तथा ॥२५॥
अर्थभूयिष्ठमप्याहुः प्राधान्येङ्गाङ्गयोर्द्विधा। द्विधैवोभ-
यभूयिष्ठं शुद्धसङ्कीर्णभेदतः॥२६॥ चतुर्धाप्रकृतन्तेषुशब्दभू-
यिष्ठमुच्यते। समस्तं व्यस्तमुभयं सविशेषणमित्यपि॥२७॥
तेषुसमस्तं यथा। पाणिपद्मानिभूपानांसङ्कोचयितुमीशते।
त्वत्पादनखचन्द्राणामर्चिषः कुन्दनिर्मलाः। अत्र[उपमितं
व्याघ्रादिभिःसामान्याप्रयोगे]इतिसमासेपद्मानीवपद्मा-
निचन्द्राइवचन्द्राइत्यभेदोपचारेणोत्पन्नसादृश्यात्पाणी-
नान्नखानाञ्चपद्मचन्द्रादिभिरऽभिधानेसामान्येवादिश-
ब्दा२ऽप्रयोगादुपमानार्थस्तिरोभूतइति सोऽयङ्गौणशब्द-
व्यपाश्रयः समासहेतुकः समस्तं रूपन्नामप्रकृतरूपके-
षुशब्दभूयिष्ठरूपकभेदः॥१॥ व्यस्तंयथा। अङ्गुल्यः प-
ल्लवान्यासन्कुसुमानिनखार्चिषः। बाहूलते वसन्तश्री-
स्त्वं नः प्रत्यक्षचारिणी॥अत्रापिपूर्ववत्पल्लवकुसुमलता-
वसन्तश्रीशब्दानाङ्गुणवृत्त्याश्रयेणाऽङ्गुलीनखार्चिर्बाहू-

१उभयेति।शब्दार्थेत्यर्थः। २सामान्येति। सामान्यस्योभयानिष्ठधर्मस्य रक्त-
त्वशुभ्रत्वादिकस्य इवशब्दस्य चेत्यर्थः।

वर्णनीयनायिकाभिः सह सामानाधिकरण्यात्सामान्ये-
वादिशब्दाप्रयोगाच्चतिरोभूतेप्युपमानार्थे समासेनक्त-
तइत्यसमस्तरूपन्नामप्रकृतरूपकेषुशब्दभूयिष्ठरूपकभे-
दः ॥ २ ॥ समस्तव्यस्तंयथा । स्मितम्मुखेन्दौज्योत्स्ना-
ते प्रभाम्बुकुचकुम्भयोः । दोर्लतापल्लवेपाणौपुष्पंसखि
नखार्चिषः ॥ अत्र मुखेन्दोः स्मितमेवज्योत्स्ना,कुचकु-
म्भयोः प्रभैवाऽम्बु,दोर्लतयोः पल्लवभूते पाणौ नखार्चि-
षएव पुष्पमिति समस्तानामसमस्तानाञ्चगौणशब्दा-
नामुपमातिरस्कारेण दर्शितत्वादिदं समस्तव्यस्तरूप-
न्नामप्रकृतरूपकेषुशब्दभूयिष्ठरूपकभेदः ॥ ३ ॥ सविशे-
षणंयथा । हरिपादः शिरोलग्नजह्नुकन्याजलांशुकः ॥
जयत्यसुरनिःशङ्कसुरानन्दोत्सवध्वजः ॥ अत्रयथोक्तवि-
शेषणविशिष्टोयोहरिपादो, यश्च हरिहतासुरेभ्योनिःश-
ङ्कानां सुराणामानन्दोत्सवेध्वजस्तयोः सविशेषणयोरेव-
प्रतीयमानसादृश्ययोः परस्परमुपमानोपमेयभावइति
सविशेषणन्नामप्रकृतरूपकेषुशब्दभूयिष्ठरूपकभेदः। तदे-
तच्चतुष्टयमपिप्रकृतसमासादिशब्दैर्निबद्धमितिप्रकृतमुच्य-
ते॥४॥चतुरोविकृतस्यापिप्रभेदान्प्रतिजानते॥परम्परार्थर-
शनामालारूपकरूपकम्॥२८॥तेषुपरम्परा यथा। ववसा-
अरइपओसोरोसगइन्ददिढसिङ्खलापडिवन्धो। कहक-
हंविदासरहिणो जअकेसरिपञ्जरोगओघणसमओ*।अ-

* व्यवसायरविप्रदोषोरोषगजेन्द्रदृढशृङ्खलाप्रतिबन्धः । कथङ्कथमपि दाश-
रथेर्जयकेसरी पञ्जरगतो घनसमयः ॥

अदाशरथिसम्बन्धिनोऽव्यवसायस्य रविणा रोषस्य गजेन्द्रेण जयस्य केसरिणा सहोपमानोपमेयभावकल्पनया यदेकं रूपणमऽथैतत्सम्बन्धितयाप्रदोषशृङ्खलाप्रतिबन्धपञ्जराणान्द्वितीयन्तत्त्रयाणामपि घनसमयेन तृतीयं तेनेयं रूपकपरम्परानामविकृतरूपकेषुशब्दभूयिष्ठरूपकभेदः ॥५॥ रशनायथा। किशलयकरैर्लतानाङ्करकमलैर्मृगदृशाञ्जगज्जयति। नलिनीनाङ्कमलमुखैर्मुखेन्दुभिर्योषितां मदनः ॥ अत्रकिशलयकरैः करकमलैः कमलमुखैर्मुखेन्दुरितिरशनाक्रमेणशब्दानां सन्दर्भ उपलभ्यमानस्तदर्थानांमनोभुवोजगद्विजयेलतादिसंबन्धात्करणभावमनुमापयतीतिरशनानामैतद्विकृतरूपकेषुशब्दभूयिष्ठरूपकभेदः ॥ ६ ॥ मालायथा। स्वामीदुर्नयवारणव्यतिकरेशौर्योपदेशेगुरुर्विस्रम्भे हृदयन्नियोगसमयेदासोभयेचाश्रयः। दातासप्तसमुद्रसीमरशनादामाङ्कितायाः क्षितेः सर्वाकारमहो स्वयंवरसुहृत्कोवानकर्णोमम ॥ अत्रस्वाम्यादीनां मालोपमादिक्रमेणनिरूपितत्वान्मालारूपकन्नामविकृतरूपकेषुशब्दभूयिष्ठरूपकभेदः॥७॥ रूपकरूपकंयथा। मुखपङ्कजरङ्गेस्मिन्भ्रूलतानर्तकीतव। लीलानाट्यऽमृतं दृष्टौसखि! यूनांविपिञ्चति॥ अत्रमुखमेवपङ्कजन्तदेवरङ्गो भ्रूरेवलतासैवनर्तकी लीलैवनाट्यं तदेवामृतमितिरूपितानामपिरूपणेनसमासेनरूपकरूपकन्नामायंविकृतरूपकेषुशब्दभूयिष्ठरूपकभेदः।तदेतच्चतुष्टयमपि परंपरादिभिर्विकृतसमासादिशब्दैर्निबद्धमिति-

विकृतमुच्यते॥८॥समस्तञ्चासमस्तं च युक्तञ्चायुक्तमेवच ।
चतुर्द्धाङ्गिप्रधानंस्यादर्थभूयिष्ठरूपकम्॥२१॥ तेषुसमस्तंय
था॥ताम्राङ्गुलिदलश्रेणिनखदीधितिकेसरम्।ध्रियतेमूद्ध-
र्ध्नि भूपालैर्भवच्चरणपङ्कजम्॥ अत्रसमस्तोपमायामिवपा-
दाख्यःपङ्कजाख्यश्चावयवीपरस्परमुपमानोपमेयभूतः प्र-
तीयमानाभिधीयमानसादृश्यै रङ्गुलिश्रेणिनखदीधितिभि
र्दलश्रेणिकेसरैश्च सह सामस्त्येनरूपितस्तद्योग्यस्थानवि-
न्यासेनचार्थस्यप्राधान्यमभिहितमितिसमस्तन्नामरूपक-
मिदमङ्गिप्रधानरूपकेष्वऽर्थभूयिष्ठरूपकभेदः । नचैतद्वाच्य-
म् । पाणिपद्मानिभूपानामित्यादेरुदाहरणादिदन्नभि-
द्यत इति । तत्रहि । वाक्ये नखार्चिषां क्रियासमावेशेन
प्रधान्यमवगम्यते ननखचन्द्राणान्ततश्चनरूपकम् । पा-
णिपद्मेत्यस्यतुयद्यपिसङ्कोचक्रियायामस्तिसमावेशस्त -
थापिनतानिवर्णनीयत्वेनउपन्यस्तानि । अपितुजिगी-
षुभाववर्णनाङ्गतया । अतः समावेशमात्रभणनान्नतत्र
पाणिपद्मानान्नाऽपिनखचन्द्राणामर्थप्राधान्यमपितु श-
ब्दप्राधान्यमेव । इहतुचरणपङ्कजताम्राङ्गुलिदलश्रेण्या-
दिविशेषणविशिष्टस्य भूपालमौलिविनिवेशनेन प्राधा-
न्यम्प्रतीयतइति उभयमपि निरवद्यम्॥१॥असमस्तं यथा॥
अकस्मादेवते चण्डि! स्फुरिताधरपल्लवम्। मुखम्मुक्तारु-
चो धत्ते घर्माम्भःकणमञ्जरीः॥ अत्राप्येकदेशोपमाक्रमे-
णाऽधरपल्लवस्वेदाम्बुकणमञ्जरीणां सहजाहार्यावयवा-
ऽनभिधानादुपमानावयविनश्चाऽनभिधानादिदमसमस्त-

न्नामरूपकमङ्गिप्रधानेष्वर्थभूयिष्ठरूपकभेदः । अत्राऽपिच मुख्यवस्तुनः स्फुरिताधरपल्लवमिति विशेषणविशिष्टस्य घर्माम्भःकणमञ्जरीधारणक्रियासमावेशः प्राधान्यं स्थापयति ॥१०॥ युक्तं यथा । स्मितपुष्पोज्ज्वलं लोलनेत्रभृङ्गमिदम्मुखम् । न कस्य नन्दनं सुभ्रूः! सुरभिश्वसितानिलम् ॥ अत्रस्मितपुष्पोज्ज्वललोलभृङ्गसुरभिश्वसितानिलन्तेमुखन्न कस्य नन्दनमिति पुष्पभृङ्गादीनां परस्परं युक्तत्वपपत्तेर्युक्तन्नामायमङ्गाङ्गिप्रधानरूपकेष्वर्थभूयिष्ठोरूपकभेदः । अत्र यद्यपि नन्दनमिवनन्दनमिति गौणवृत्तिव्यपाश्रयः शब्द एव समस्तविशेषणैः परिष्क्रियते तथापि नन्दयतीति कृदभिहितक्रियासमावेशे मुखाख्यस्यैव वस्तुनः प्राधान्यमवगम्यते । तस्यत्वपह्नियत इत्यर्थप्रधानमेवैतत् ॥११॥ अयुक्तं यथा । इदमार्द्रस्मितज्योत्स्नं स्निग्धनेत्रोत्पलम्मुखम् । जगन्नेत्रेन्दुरस्माकङ्कथं तापाय १ कल्पते ॥ अत्र ज्योत्स्नोत्पलयोरयोगाज्जगन्नेत्रेन्दोश्चमुखस्य सन्तापाकारणमिदमयुक्तन्नामाङ्गिप्रधानरूपकभेदेष्वर्थभूयिष्ठरूपकभेदः । अत्रापि पूर्ववन्मुखाख्यवस्तुनोविशेषणैः परिष्करणमिति तस्यैव प्राधान्यमवगम्यते॥१२॥ भेदानङ्गप्रधानस्य चतुरोऽवयवाश्रयान् ॥ सहजाहार्यतद्योगतद्वैषम्यैः प्रचक्षते ॥३०॥ तेषु सहजावयवं यथा । पप्फुरिअउठ्ठदलन्तक्खणविग्गलि

१ तापायेति । क्लृपिसंपद्यमानेश्चेति चतुर्थी ।

ग्ररुहिरमहुविछडम् । उक्खडिअकण्ठनालम्पडिअम्फुडदसणकेसरम्मुहकमलम् १॥ अत्रौष्ठादीनां दलादीनाञ्च मुखाम्भोजावयवानां स्फुरितविगलितोत्खण्डितस्फुटविशेषणविशिष्टानां परस्परमुपमानोपमेयभावरूपितानाम्मुखपक्षे कमलपक्षेच सहजत्वङ्गम्यतइति सहजावयवो नामायमङ्गप्रधानरूपकेष्वर्थभूयिष्ठरूपकभेदः । नैतद्वाच्यम् । ताम्राङ्गुलिदलश्रेणीत्यादेरर्थप्रधानभेदादिदन्न भिद्यते इति । तत्र हि भूपालमौलिधारणक्रियासमावेशेनावयविनः प्राधान्यं विवक्षितमिहतुपतनक्रियायामवयवानामतएव ते स्फुरितादिविशेषणैर्विशिष्यन्ते ॥ १३ ॥ आहार्यावयवं यथा । तोकुम्भअण्णपडिवअणदण्डपरिघट्टिआमरिसघोरविसो । गलिअंसुअणिम्मोओजाओ भीसणअरोदसाणणभुअओ १॥ अत्र कुम्भकर्णप्रतिवचनममर्षोंशुकमितिदशाननपक्षेदण्डोघोरविषनिर्मोक इति भुजगपक्षेऽवयवास्तेषामाहार्यत्वादिदमाहार्यावयवन्नामरूपकमङ्गप्रधानरूपकेष्वर्थभूयिष्ठरूपकभेदः । अत्रापि कुम्भकर्णसम्बन्धपरिघट्टितगलितविशेषणविशिष्टानामवयवानामेवदशाननभुजगभीषणतरीकरणक्रियायाम्प्राधान्यमवगम्यते ॥ १४ ॥ उभयावयवं यथा । यस्यावी-

---

१ प्रस्फुरितोष्ठदलं तत्क्षणविगलितरुधिरमधुवितीर्णं च । उत्खण्डितकण्ठनालंपतितं स्फुटितदशनकेशरं मुखकमलम् ।

२ सकुम्भकर्णप्रतिवचनदण्डपरिघट्टनामर्षघोरविषः । गलितांशुकनिर्मोको जातो भीषणतरो दशाननभुजगः ।

जमहङ्कृतिर्गुरुतरो मूलम्ममेतिग्रहो नित्यत्वस्मृतिरङ्कुरः सुतसुहृद्भृत्यादयः पल्लवाः। स्कन्धो दारपरिग्रहः परिभवः पुष्पं फलं दुर्गतिः सा मे त्वच्चरणार्हणापरशुना तृष्णालता लूयताम्॥ अत्र बीजम्मूलमङ्कुरः पुष्पम्फलमिति लतापक्षे सहजास्तृष्णापक्षे पुनरहंकृत्यादय आहार्यावयवा इति तदिदं सहजाहार्याणामवयवानाम्परस्परमुपमानोपमेयभावरूपणेनोभयावयवन्नामरूपकमिदमङ्गप्रधानरूपकेष्वर्थभूयिष्ठरूपकभेदः। अत्रापि चाहङ्कारममताध्रौव्यस्मरणसुतादिदारपरिग्रहपराभवदुर्गतीनामवयवानामेवबीजादिरूपेण रूपितानाम्भगवदाराधन कुठारेण तृष्णालतालूयतामिति प्रार्थनक्रियया समावेशेन प्राधान्यमवगम्यते ॥ १५ ॥ विषमावयवं यथा। मदरक्तकपोलेन मन्मथस्त्वन्मुखेन्दुना। नर्त्तित भ्रूलतेनालम्मर्द्दितुम्भुवनत्रयम् ॥ अत्रेन्दुनामुखावयवीरूपितो भ्रुवौ च तदवयवौलतावयविभ्याम्मदरक्तौतु कपोलौनकेनाऽपीति सर्वतोवैषम्याद्विषमावयवन्नाम रूपकमिदमङ्गप्रधानरूपकेष्वऽर्थभूयिष्ठरूपकभेदः। अत्रापि मदरक्तनर्त्तितयोः कपोलभ्रुवोरेवमन्मथस्य जगत्त्रितयमर्द्दनक्रियायाम्प्राधान्यं साधकतमत्वङ्गम्यते॥ १६ ॥ आधारवन्निराधारङ्केवलं व्यतिरेकि च ॥ इति शब्दार्थभूयिष्ठं शुद्धमाहुश्चतुर्विधम् ॥ ३१ ॥ तेष्वाधारवद्यथा। सोहइविसुद्धकिरणो गअणसमुद्दम्मिरअणिवेलालग्गो। तारामोत्तापअरो फुडविहडिअमेहसिप्पि-

सम्पुडविमुक्को १ ॥ अत्र समुद्रत्वेन रूपितङ्गगनमाधार-
म्परिकल्प्य रजनिमेघतारकौघानां वेलाशुक्तिमुक्ताफल
प्रकराणाञ्च प्रतीयमानाऽभिधीयमानसादृश्यानां शब्द-
प्राधान्यतोऽर्थप्राधान्यतश्च रूपणङ्कृतमिति आधारव-
न्नामरूपकमिदं शुद्धरूपकेषु शब्दार्थभूयिष्ठरूपकभेदः॥१७॥
निराधारं यथा । वणराइकेसहत्थाकुसुमाउह सुरहि
सञ्चरन्तधअवडा । ससिअरमुहुत्तमेहा तमप्पडिहत्था-
विणेन्ति धूमुप्पीडा २॥ अत्र धूमोत्पीडानां वनराजिके
शहस्तत्वेन कुसुमायुधसुरभिसञ्चरद्ध्वजपटत्वेन शशि
करमुहूर्त्तमेघत्वेनतमःप्रतिहस्तत्वेन च रूपितानान्नि-
राधाराणामेव शब्दप्राधान्यमर्थप्राधान्यञ्चावधार्यतइति
निराधारन्नामरूपकमिदं शुद्धरूपकेषु शब्दार्थभूयिष्ठरू-
पकभेदः ॥१८॥ केवलं यथा । वेल्लितभ्रु गलद्घर्मजलमा-
लोहितेक्षणम् । विवृणोति मदावस्थामिदं वदनपङ्कज-
म् ॥ अत्रावयविन एव केवलस्य वदनपङ्कजमिवेति रू-
पणादस्य शब्दप्राधान्यं वेल्लितभ्रुप्रभृतिविशेषणोपादा-
नाच्चार्थप्राधान्यमेवलक्ष्यते तेन केवलंनाम रूपकमिदं
शुद्धरूपकेषूभयभूयिष्ठरूपकभेदः ॥ १९ ॥ व्यतिरेकव-
द्यथा । अनाघ्रातम्पुष्पङ्किसलयम लूनङ्कररुहैरनाविद्धं र-
त्नम्मधुनवमनास्वादितरसम् । अखण्डम्पुण्यानाम्फल-

१ शोभते विशुद्धकिरणो गगनसमुद्रे रजनीवेलालग्नः।तारामुक्ताप्रकरः स्फु
टविघटितमेवशुक्तिसंपुटविमुक्तः ॥ २वनराजिकेशहस्ताः कुसुमायुधसुरभिसंचरद्-
ध्वजपटाः। शशिकरमुहूर्तमेघास्तमः प्रतिहस्ताविनयन्ति धूमोत्पीडाः॥ केशहस्ताः
प्रशस्तकेशा इत्यर्थः। हस्ताः शस्तास्तु केशेभ्य इत्युक्तेः ।

मिवच तद्रूपमनघन्नजाने ओक्कारङ्कमिह समुपस्थास्य-
तिविधिः१॥ अत्र पुष्पकिसलयरत्नमधुपुण्यफलानामना-
घ्रातमित्यादिविशेषणापादित व्यतिरेकाणामप्रतीयमान-
सादृश्येनशकुन्तलारूपेणरूपणादर्थतःशब्दतश्चप्राधान्यम-
वधार्यतइति व्यतिरेकवन्नामरूपकमिदं शुद्धरूपकेषूभ-
यभूयिष्ठरूपकभेदः ॥ २० ॥ अथ सङ्कीर्णभेदानाञ्चतुष्टय-
मिहोच्यते। स्यात्सावयवसङ्कीर्ण न्तथाऽनवयवाह्वयम्॥३२॥
तथैवोभयसङ्कीर्णं श्लेषोपहितमित्यपि। सैषारूपकभेदा-
नां विंशतिश्चतुरुत्तरा ॥३३॥ तेषु सावयवसङ्कीर्णं यथा।
रइअरकेसरणिवहं सोहइ धवलब्भदलसहस्सपरिगअ-
म्। महुमहदंसणजोग्गम्पिआमहुपत्ति पङ्कअं ववणह-
अलम् १॥ अत्र पितामहोत्पत्तिपङ्कजमिवनभस्तलं शो-
भत इत्युपमानोपमेयभावेनाऽवयविनोरभेदस्या ऽविव-
क्षायामुपमैव नरूपकं रविकरधवलाभ्रदलसहस्रयोः
केसरनिकरदलसहस्रयोश्च प्रतीयमानाभिधीयमानसा-
दृश्ययोश्च सहजाहार्यावयवभूतयोरभेदोपचारेण रूपण-
मिति सावयवरूपेणोपमायाः सङ्कीर्णत्वादिदं सावयव-
सङ्कीर्णन्नामसङ्कीर्णरूपकेषूभयभूयिष्ठरूपकभेदः ॥ २१ ॥
निरवयवसङ्कीर्णं यथा। दीहो दिअहभुअङ्गोरइवि-
म्बफणामणिप्पहं विअसन्तो। अवरसमुद्दमुवगओ मु-
ञ्चन्तो कञ्चुअं व्वअाइणिवहम्२॥ अत्र दिवसावयवि-

१ विधिर्दैवम्। २ रविकरकेसरनिवहंशोभतेधवलाभ्रदलसहस्रपरिगतम्। मधुमथदर्शनयोग्यं पितामहोत्पत्तिपङ्कजमिवनभस्तलम्॥ ३ दीर्घोदिवसभुजङ्गोरविबिम्बफणामणिप्रभयाविकसमानः। अवरसमुद्रमुपगतोमुञ्चन्कञ्चुकमिवकान्तिनिवहम्॥

नोभ जङ्घाऽवयविनश्चाऽभिधीयमानप्रतीयमानदैर्घ्यदारु-
णादिधर्मयोरभेदोपचारेण रूपणमवयवानाञ्चतुर्णां र-
विबिम्बातपफणामणिनिर्मोकानां सत्त्यामप्यभेदोपचा-
रयोग्यतायान्द्वयोरिवशब्दप्रयोगेनोपमायान्द्वयोस्तुल्य-
रूपणेप्यसामानाधिकरण्यान्नावयवावयविभावो विभा-
व्यतइति निरवयवस्योपमायां सङ्कीर्णत्वान्निरवयव-
सङ्कीर्णन्नाम सङ्कीर्णरूपकेषु उभयभूयिष्ठरूपकभेदः॥२२॥
उभयसङ्कीर्णं यथा। धुअमेहमहुअराओघणसमआ-
अठ्ठिओण अविमुक्काओ। णहपाअवसाहाओोणि
अअठ्ठाणं व्वपडिगआ दिसाओ १॥ अत्र पादपरूपेण-
रूपितस्य नभसोयदेतद्दिशां शाखारूपेणरूपणम्मेघाना-
ञ्च मधुकरप्रकरेण तदुभयमप्यन्यपदार्थषष्ठीसमासयो-
रभिधीयमानेन सावयवन्निरवयवञ्चेति उत्प्रेक्षया च
सङ्कीर्यमाणमुभयसङ्कीर्णरूपकव्यपदेशं लभते। सोऽयं
सङ्कीर्णरूपकेषूभयभूयिष्ठरूपकभेदः ॥ २३ ॥ श्लेषोपहितं
यथा। पीणपओहरलग्गन्दिसाणपवसन्त जलअ सम-
अ विइण्णम्। सोहग्गपढम इह्लम्पव्वाअइ सरसणहप-
अंव्वइन्दहणु २॥ अत्र सरसनखपदाकारस्येन्द्रधनुष उ-
त्पन्नसादृश्यादभेदोपचारेणरूपणेयोऽयं सरसेनभसिपद-
मस्येति व्युत्पत्याश्लिष्टरूपेण तद्विशेषणप्रकारः। यश्चशो-

१ धुतमेवमधुकरावनसमयारब्धौन्नत्यविमुक्ताः। नभःपादपशाखानिजस्थान-मिव प्रतिगतादिशः॥ २ पीनपयोधरलग्नं दिशां प्रवसज्जलदसमयवितीर्णम्। सौभाग्यप्रथमचिह्नं प्रतीयते सरसनख(नभः) पदमिवेन्द्रधनुः॥

भायाः प्रथममग्र्यंचिह्नं सौभाग्यस्यच प्रथमञ्चिह्नं पीनपयोधरेमेघेस्तनेवालग्नमित्यादिविशेषणविशेष्यभावस्तेनेदंश्लेषेणोपधीयतइतिश्लेषोपहितन्नामसङ्कीर्णरूपकेषूभयभूयिष्ठरूपकभेदः॥२४॥२॥इतिरूपकालंकारनिरूपणम्॥

द्वयोर्यत्रोक्तिचातुर्यादौपम्यार्थोऽवगम्यते।उपमारूपकान्यत्वे साम्यमित्यामनन्तितत्॥३४॥तदानन्त्येनभेदानामसङ्ख्यन्तस्यतूक्तयः। दृष्टान्तोक्तिःप्रपञ्चोक्तिःप्रतिवस्तूक्तिरेव च ॥३५॥तत्रैवादेःप्रयोगेणदृष्टान्तोक्तिम्प्रचक्षते।इवादेरप्रयोगेणप्रपञ्चोक्तिम्मनीषिणः ॥३६ ॥ वस्तुकिञ्चिदुपन्यस्यन्यसनात्तत्सधर्मणः। साम्यप्रतीतिरस्तीति प्रतिवस्तूक्तिरुच्यते॥ ३७ ॥ तत्र क्रियाजातिगुणद्रव्ययोगादि हेतुके। साम्ये पूर्वादिभेदेन दृष्टान्तोक्तिर्विधीयते ॥ ३८॥

सा क्रियायोगनिमित्तसाम्या दृष्टान्तोक्तिः सामान्यतः पूर्वा यथा। स्थितः स्थितामुच्चलितः प्रयातान्निषेदुषीमासनबन्धधीरः। जलाभिलाषी जलमाददानाञ्छायेवताम्भूपतिरन्वगच्छत् ॥ अत्र दृष्टान्तदार्ष्टान्तिकयोरनाविष्टलिङ्गत्वादवश्याभिधेयत्वाच्च स्थितइत्यादिषु न लिङ्गभेददोषः। अभिधीयमानस्थानादिक्रियायोगजनितं साम्यंसमस्तमूर्त्तिमत्साधारणञ्च पूर्वमेवच्छाया दृष्टान्तः सेयं क्रियायोगनिमित्तसाम्यासामान्यतः पूर्वानामदृष्टान्तोक्तिः साम्यभेदः॥ १॥ सैवक्रियागुणयोगनिमित्ताविशेषतः पूर्वायथा। सअलुज्जोइअवसुहेसम-

त्थजीअलोअवित्थरन्तपआवे । ठाइ णचिरं रविम्मि-
वविहाणपडिदाविमइलदासप्पुरिसे१॥ अत्र जगदुद्द्योतन
क्रियाप्रतापगुणयोगहेतुसाम्यमसाधारणश्च सूर्यदृष्टान्त
इति विशेषतः क्रियागुणयोगनिमित्तेयम्पूर्वानामदृष्टान्तो-
क्तिः साम्यभेदः ॥२॥ गुणयोगनिमित्तसाम्यासामान्य-
त उत्तरा यथा । रूपन्तदोजस्वि तदेववीर्यं तदेवनैस-
र्गिकमुन्नतत्वम् । न कारणात्स्वाद्बिभिदे कुमारः प्रवर्त्ति-
तोदीपइव प्रदीपात् ॥ अत्र रूपादिगुणयोगजन्मज-
नितं साम्यं सामान्यरूपश्चपश्चात्प्रदीपदृष्टान्त इति
सामान्यतोगुणयोगनिमित्तेयमुत्तरानामदृष्टान्तोक्तिःसा
म्यभेदः ॥ ३ ॥ सैवक्रियागुणद्रव्ययोगनिमित्ताविशेष-
तो यथा । अव्वोच्छिन्नपसरिओअहिअंउद्धाइफुरिअसू-
रच्छाओ । उच्छाहोसुहडाणंविसमक्खलिओमहाणईणवसो
त्तो२॥ अत्राव्यवच्छिन्नप्रसृत इति क्रियायोगनिमित्तंस्फु
रितशौर्यच्छाय इति गुणयोगनिमित्तं स्फुरितसूर्यच्छाय
इति द्रव्ययोगनिमित्तञ्च साम्यं सामान्यविशेषरूपश्चवि-
षमस्खलितमहानदीस्रोतो दृष्टान्तइति विशेषतः क्रिया-
दियोगनिमित्तेयमुत्तरानामदृष्टान्तोक्तिः साम्यभेदः ॥४॥
द्रव्यजातिनिमित्तसाम्यासामान्यतःपूर्वादृष्टान्तोक्तिर्यथा।
विसवेओव्वपसरिओजंजंअहिलेइवहलधूमुप्पीडो।साम-

१ सकलोद्द्योतितवसुधे समस्तजीवलोकविस्तरप्रतापे। स्थायिनी न चिरं रवा-
विवविधानपतितापि मलिनता सत्पुरुषे ॥ २ अव्यवच्छिन्नप्रसृतोधिकमुद्धातिस्फु-
रितसूर्य(शौर्य)च्छायः । उत्साहः सुभटानां विषमस्खलितं महानदीनवस्रोतः ॥

लइज्जइतन्तंरुहिरेवमहोअहिस्सविद्दुमवेढम् १॥अत्रधू-
मविषयेविंद्रुमरुधिरयोश्च द्रव्यजातियोगकृतम्प्रतीयमा
नं श्यामलायतइति धूमविषयद्रव्ययोगजनितमभिधीय-
मानं सामान्यरूपंचसाम्यं सेयन्दृष्टान्तस्य पूर्वमेवोपन्या
साद्द्रव्यजातियोगनिमित्तसाम्यासामान्यतःपूर्वानामदृ-
ष्टान्तोक्तिः साम्यभेदः ॥५॥ सैवद्रव्यायोगनिमित्तसाम्या-
विशेषतो यथा । संचारिणीदीपशिखेव रात्रौ यंयं व्यती-
यायपतिंवरा२सा। नरेन्द्रमार्गाट्ट३इवप्रपेदेविवर्णभावं स
सभूमिपालः ॥ अत्र दीपशिखादिद्रव्ययोगकृतं साम्यम्।
सामान्यविशेषरूपौसंचारिणीदीपशिखेति च राजमार्गा
ट्टइतिच दृष्टान्तौपूर्वमेवोपन्यस्तौ सेयं विशेषतोद्रव्यायो-
गनिमित्तसाम्यापूर्वानामदृष्टान्तोक्तिः साम्यभेदः ॥ ६ ॥
द्रव्यायोगनिमित्तसाम्यैव सामान्यत उत्तरा यथा । उ-
ज्ज्वलालोकयास्निग्धात्वयात्यक्ता न राजते । मलीम-
समुखावर्तिः प्रदीपशिखया यथा ॥ अत्र द्रव्यायोगकृतं
साम्यं सामान्यरूपश्च प्रदीपः पश्चात्प्रदीपशिखावर्तिर्दृ-
ष्टान्तः सेयं यथोक्तरूपोत्तरानामदृष्टान्तोक्तिः साम्यभेदः
॥७॥ सैव क्रियागुणायोगनिमित्तसाम्याविशेषतो यथा ।
तोताणहच्छाअंणिच्चलोअणसिहंपउत्थपआवम्।आले
क्खपईवाणवणिअमपअइचडुलत्तणम्पिपविअलिअम् ४॥

१ विषवेग इव प्रसृतोयं यमभिलेढि बहलधूमोत्पीडः । श्यामलयति यत्तद्रु-
धिरमिव महोदधेर्विद्रुमवेष्टः॥ २संज्ञायां भृत्टजीतिखश्च अत्र्हिंषदजन्तस्येति
सुमिसाधु । ३ अट्टाख्यो गृहभेदः ॥ ४ तत्तेषां हतच्छायं निश्चललोचनशिखं प-
यंस्तप्रतापम् । आलेख्यप्रदीपानामिवनिजं प्रकृतिचटुलत्वमपि विगलितम् ॥

अत्रहृतच्छायमित्यादीनामन्तर्गतगुणत्वेन क्रियाविशेषणत्वात्क्रियागुणयोगनिमित्तन्निजंप्रकृतिचटुलत्वमपिविगलितमिति गुणायोगनिमित्तंचसाम्यम् । सामान्यविशेषरूपश्चालेख्यप्रदीपदृष्टान्तइति क्रियागुणायोगनिमित्तेयंविशेषत उत्तरानामदृष्टान्तोक्तिः साम्यभेदः ॥ अथ दृष्टान्तोक्तेर्दृष्टान्तालङ्कारस्यवाकोविशेषः। उच्यते। लौकिकपरीक्षकाणां यस्मिन्नर्थे बुद्धिसाम्यं सदृष्टान्त इत्यर्थंप्रतितुन कश्चिद्विशेषः । उक्तिंप्रतितुपुनरनेको विद्यते । तद्यथा । दृष्टान्तदार्ष्टान्तिकयोर्भिन्नवाक्ये निर्देशोदृष्टान्तालङ्कारः । एकवाक्यनिर्देशोदृष्टान्तोक्तिः । साध्यधर्मसिद्धये दृष्टान्ताऽलङ्कारः । साधर्म्यसिद्धयेदृष्टान्तोक्तिः । इवाद्यप्रयोगो दृष्टान्तालङ्कारः । इवादिप्रयोगेतुदृष्टान्तोक्तिः । अत एवेयमुभयालङ्कारः सपुनरर्थालङ्कार इति ॥८॥ साम्योत्कर्षापकर्षोक्तेरुपमानोपमेययोः । प्रकृता विकृता चेति प्रपञ्चोक्तिः प्रदर्श्यते ॥३९॥ सोपमानोपमेययोः साम्ये नप्रकृतायथा । अरण्यबीजाऽञ्जलिदानलालितास्तथा च तस्यां हरिणा विशश्वसुः । यथा तदीयैर्नयनैः कुतूहलात्पुरः सखीनाममिमीतलोचने ॥ अत्र मृगलोचनोपमानानान्तल्लोचनोपमेययोश्च साम्यमविकृतानामेव प्रतीयते सेयं सामान्येनप्रकृतानामप्रपञ्चोक्तिः साम्यभेदः ॥ ९ ॥ प्रकृतैवोपमानोत्कर्षेण यथा ।

१ बीजाञ्जलिर्नीवाराञ्जलिः ।

गर्वमसंवाह्यमिमं लोचनयुगलेन वहसि किम्मुग्धे!। स-
न्तीदृशानि दिशिदिशि सरस्सु ननु नीलनलिनानि॥अत्र
तव द्वेलोचनोत्पले एव सरसाम्पुनर्बहूनि नीलोत्पला-
नीत्युपमानोत्कर्षः प्रतीयते। सेयमुपमानोत्कर्षेण प्रकृता
नामप्रपञ्चोक्तिः साम्यभेदः ॥१०॥ सैवोपमानापकर्षेण य-
था। अन्यतो नयमुहूर्तमाननं चन्द्र एष सरलेकलामयः।
मा कदाचनकपोलयोर्मलं सङ्क्रमय्यसमतान्नयिष्यति।
अत्रोपमानस्य मलिनताकृतोपकर्षः प्रकृत एव प्रतीयते
सेयमुपमानापकर्षेण प्रकृतानामप्रपञ्चोक्तिः साम्यभेदः
॥११॥सैवोपमानस्य किंचिदुत्कर्षेण यथा। आपातमा[१]त्र
रसिकेसरसीरुहस्य किंबीजमर्पयितुमिच्छसि वापिका-
याम्। कालःकलिर्जगदिदन्नकृतज्ञमङ्गे! स्थित्वा हरि
ष्यति तवैवमुखस्य शोभाम्॥ अत्रोपमानस्योपमेयादी-
षदुत्कर्षः प्रकृत एव प्रतीयते। सेयमीषदुत्कर्षेण प्रकृता-
नामप्रपञ्चोक्तिः साम्यभेदः ॥ १२ ॥ उपमानोपमेययोः
साम्यापत्त्याविकृता यथा॥ घरिणीअ महाणसकम्म-
लग्गमसिमइलिएण हत्थेण। छित्तम्मुहं हसिज्जइ च-
न्दावत्थङ्ग[२]अं पइणा ॥ अत्रोत्कृष्टोपमेयस्य मसीमालि-
न्यवैकृतेनोपमानसाम्यमापाद्यमानं प्रतीयते। सेयमु-
पमानोपमेययोः साम्यापत्त्याविकृतानाम प्रपञ्चोक्तिः
साम्यभेदः॥१३॥ विकृतैवोपमेयस्योत्कर्षापत्त्यायथा।रत्तु-

१ पद्मातपत्रमित्यपि क्वचित्पाठः॥ २ गृहिण्यामहानसकर्मलग्नमसीमलिनेन हस्तेन। छिप्तं मुखे हसति चन्द्रावस्थाङ्गतं पीला॥

प्पलदलसोहातीअवि चसअम्मि सुरहि वारुणीभरिए ।
मअतंवेहिंमणहरा पडिमावडि एहिंलो अणेहिं लहुइआ१॥
अत्रोपमेयस्यमधुमदताम्रत्ववैकृत उत्कर्षः प्रतीयते। से-
यमुपमेयोत्कर्षेणविकृतानाम प्रपञ्चोक्तिः साम्यभेदः॥१४॥
सैवोपमेयापकर्षापत्या यथा । मृगम्मृगाङ्कः सकलं
सदाङ्केबिभर्त्तितस्यास्तुमुखङ्कदाचित् । कपोलदेशे मृग-
नाभिपत्त्रमियान्सखे ! तस्य ततोऽपकर्षः ॥ अत्रमृगाङ्कः
सकलं मृगं सदाबिभर्त्ति । तन्मुखञ्च कदाचिन्मृगनाभि
मात्रजमेवपत्त्रमित्युपमेयस्यवाचनिक्यपकर्षापत्तिः प्रती-
यते । सेयमुपमेयापकर्षापत्याविकृतानाम प्रपञ्चोक्तिः
साम्यभेदः ॥ १५ ॥ सैवोपमेयस्य साम्यापत्योपमानो-
त्कर्षेण च यथा । नमर्त्त्यलोकस्त्रिदिवात्प्रहीयते म्रियेत-
नाऽग्रे यदि वल्लभोजनः । निवृतमेवत्रिदिवप्रयोजनम्मृ-
तः सचेज्जीवत एवजीवति ॥ अत्रोपमेयस्य यथोक्तधर्म-
योगे सत्युपमानेन पूर्वार्द्धे साम्यमुत्तरार्द्धे तु किञ्चिदुत्क-
र्षो भवति । सेयं यथोक्ताविकृतानामप्रपञ्चोक्तिः साम्य-
भेदः ॥ १६ ॥ प्रतिवस्तूक्तिरप्यऽस्मिन्नृज्वीवक्राच क-
थ्यते । दृष्टान्तोक्तेश्च साछायाम्प्रपञ्चोक्तेश्च गाहते ॥४०॥
सादृष्टान्तोक्तिच्छाययाद्विधावृजुः पूर्वाच यथा । तन्मन्ये-
हिमभासस्तारानिकरेण कान्तिरुच्छेद्या । यत्तस्या मुख-
मेतद्यदि युवति मुखानिविजयन्ते २॥ अत्र तदिन्दोस्ता-

१ रक्तोत्पलदलशोभा तस्याअपिचषके सुरभिवारुणीभरिते । मदताम्राभ्यांमनो-
हरप्रतिमापतिताभ्यां लोचनाभ्यां लघ्वी कृता॥२विपराभ्यां जेरित्यात्मनेपदम् ।

रक्तौघेणकान्तिरुच्छेद्याइति पूर्वमृजूक्त्या दृष्टान्तरूपम्। पश्चाद्यदेतन्मुखं युवतिमुखानि विजयन्तइति ऋजूक्त्यैवदार्ष्टान्तिकरूपम्प्रतिवस्तूपन्यस्तमिति सेयन्दृष्टान्तोक्तिच्छायया विधावृज्वी पूर्वाच प्रतिवस्तूक्तिः साम्यभेदः॥ १७॥ सैवोत्तरावक्राच यथा। शुद्धान्तदुर्लभमिदं वपुराश्रमवासिनो यदि जनस्य। दूरीकृताः खलु गुणैरुद्यानलता वनलताभिः॥ अत्र शुद्धान्तदुर्लभमिति वक्रोक्त्या पूर्वन्दार्ष्टान्तिकरूपं वस्तूपन्यस्य पश्चाद् दूरीकृताः खलु गुणैरिति वक्रोक्त्यैवत्र दृष्टान्तरूपम्प्रतिवस्तूपन्यस्तमिति सेयन्दृष्टान्तोक्तिच्छायया विधौ वक्रोत्तरा च प्रतिवस्तूक्तिः साम्यभेदः॥ १८॥ दृष्टान्तोक्तिच्छाययानिषेधेच ऋजुः पूर्वा च यथा। न मालतीदामविमर्द्दयोग्यन्नप्रेमनव्यं सहते ऽपराधान्। म्लानापिन म्लायति केसरस्रग्देवीन खण्डप्रणया कथञ्चित्॥ अत्र "न मालतीदामविमर्द्दयोग्यमिति, म्लानापि न म्लायति केसरस्रगितिच ऋजूक्तिभ्यामेव पूर्वन्दृष्टान्तरूपे वस्तुनी प्रतिषिध्योत्तरकालं"न प्रेमनव्यं सहते ऽपराधानिति"देवी न खण्डप्रणया कथञ्चिदिति,च दार्ष्टान्तिकरूपे प्रतिवस्तुनी ऋजूक्त्यैव प्रतिषिद्धे सेयन्निषेधे ऋज्वी पूर्वा च दृष्टान्तोक्तिच्छायया प्रतिवस्तूक्तिः साम्यभेदः॥ १९॥ सैवोत्तराचवक्रा च यथा। मानुषीषु कथं वास्यादस्य रूपस्य सम्भवः। न प्रभातरलज्ज्योतिरुदेति वसुधातलात्॥ अत्र कथंवास्यादितिवक्रयानिषेधोक्त्यादार्ष्टा-

न्तिक्रमभिधायपश्चान्नवसुधातलात्प्रभातरलंज्योतिरुदेतीति वैयधिकरण्यवक्रयैव निषेधोक्त्या दृष्टान्तोऽभिहितः सेयन्निषेधेवक्रोत्तराच दृष्टान्तोक्तिच्छायया प्रतिवस्तूक्तिः साम्यभेदः ॥ २० ॥ प्रपञ्चोक्तिच्छायया विधावृज्वी यथा । तरङ्गयदृशोऽङ्गने ! पततुचित्रमिन्दीवरं स्फुटीकुरु रदच्छदं व्रजतुविद्रुमः श्वेतताम् । क्षणं व पुरपावृणुस्पृशतु काञ्चनङ्कालिकामुदञ्चयमुखम्मनाग्भवतु च द्विचन्द्रन्नभः ॥ अत्र प्रथमचतुर्थपादयोरुपमानोपमेयसाम्यं वैकृतम् । द्वितीयतृतीयपादयोरुपमानापकर्षः प्रकृत इति सेयं प्रपञ्चोक्तिच्छायया विधावृज्वी नामप्रतिवस्तूक्तिः साम्यभेदः ॥ २१ ॥ सैवविधौवक्रा यथा । एक्कोणामिअभुअभङ्गविमलकवोलङ्कवअणङ्क तुज्झमअच्छिन्तिरिच्छिण अणङ्क । एहुससिबिम्बउकलङ्कगार उपण्डरउक्खित्तउ उप्परेणभमाड्ड अणिमञ्छणखप्परउ १ ॥ अत्रोपमेयोत्कर्षो वैकृत उपमानापकर्षःप्राकृतःप्रकाशतएव यापुनरियमुत्तरार्द्धे न रूपकेणोपमानापकर्षस्योक्तिभङ्गिस्तयेयम्प्रपञ्चोक्तिच्छायया विधौवक्रा नामप्रतिवस्तूक्तिः साम्यभेदः ॥२२॥ सैवनिषेधे ऋज्वी यथा । दातारोयदिकल्पशाखिभिरलं यद्यर्थिनः किन्तृणैः सन्तश्चेदमृतेन किं यदि खलास्त-

१ एकोनामित भ्रुवभङ्ग विमलकपोलाङ्कवदनाङ्कतवमदच्छितिर्यङ्नयनाङ्कः । अयं शशिबिम्बः कलङ्कपङ्कः पाण्डरः क्षिप्तउपरिष्टाद्भ्रम्यते नीराजनखर्परः ॥

त्कालकूटेन किम्। किङ्कर्पूरशलाकया यदि दृशोः पन्थानमेति प्रिया संसारेपि सतीन्द्रजालमपरं यद्यस्तिते नापि किम्॥ अत्रोपमेयोत्कर्ष ऋजूक्त्यैवचनिबद्ध इति सेयमप्रपञ्चोक्तिच्छायया निषेधे ऋजुर्नामप्रतिवस्तूक्तिः साम्यभेदः॥२३॥सैवनिषिद्धे वक्रा यथा। तद्वक्त्रं यदि मुद्रिता शशिकथा तच्चेत्स्मितं कासुधातच्चक्षुर्यदिहारितं कुवलयैस्ताश्चेद्गिरोधिङ्मधु। धिक्कन्दर्पधनुर्भ्रुवौ चयदिते किं वा बहुब्रूमहे तत्सत्यम्पुनरुक्तवस्तुविरसः सर्गक्रमोवेधसः॥ अत्रोपमानापकर्षो वक्रोक्त्याचनिषेधः शेषम्पूर्ववत्। तेइमेद्वे अपिमालोपमाछायया प्रपञ्चोक्तीपूर्वेपुनरुत्पाद्योपमाछाययेतिमन्तव्यम्॥२४॥३॥ इतिसाम्यालंकारनिरूपणम्॥अर्थयोरतिसादृश्याद्यत्रदोलायते मनः॥ तमेकानेकविषयद्वयःसंशयंविदुः॥४१॥तत्रैकविषयोऽनेको यस्मिन्नेकत्रशङ्क्यते॥ यस्मिन्नेकमनेकत्र सोऽनेकविषयः स्मृतः॥४२॥तयोराद्योऽभिधीयमानसादृश्योयथा। आहारे विरतिः समस्तविषयग्रामेनिवृत्तिः परानासाग्रे नयनंयदेतदपरंयच्चैकतानम्मनः। मौनं चेदमिदं चशून्यमखिलं यद्विश्वमाभातिते तद्ब्रूयाः सखि योगिनी किमसिभोः किं वा वियोगिन्यसि॥ अत्रैकस्मिन्वस्तुनि वस्तुद्वयस्याभिधीयमानसामान्यप्रत्यक्षन्तद्विशेषप्रत्यक्षादुभयविशेषस्मरणाच्चयोविमर्शः सोयमेकविषयः संशयः॥१॥ स एव प्रतीयमानसादृश्यो यथा। किम्पद्ममन्तर्भ्रान्तालि किन्तेलोलेक्षणम्मुखम्। ममदोलायते चित्तम्पश्यतस्त्वां

घनस्तनि !॥ अत्रमुखलक्षणे लोचनलक्षणे चैकस्मिन्नेव-
वस्तुनिपद्मलक्षणम्भ्रमरलक्षणंचाऽपरमपि वस्तु प्रती-
यमानसादृश्यमाशङ्क्यते । सोयमप्येकविषय एव संश-
यः ॥ २ ॥ अनेकवस्तु विषयोद्विधा । शुद्धोमिश्रश्च ।
तयोः प्रतीयमानसादृश्यः शुद्धो यथा । बालीभम्भु-
रभोलीउल्हसिअणि अंसिणी गहणसुणिअविणिक्कन्ता
णिद्दाएभेम्भली । राहुविती अमुहुजोहइपुणुजोहइगअणु-
भुल्लल्लेओणहुआणइदोण्हविचन्दुकंवणु १ ॥ अत्र द्वयोः
प्रतीयमानसादृश्ययोर्बालिकामुखचन्द्रयोरेकश्चन्द्र एव
विशङ्क्यतइति सोयमनेकविषयः शुद्धः संशयः ॥ ३ ॥ अ-
भिधीयमानसादृश्योमिश्रो यथा । द्वावप्येतावभिनवज-
पापुष्पभासान्निवासौतिष्ठत्येतद्द्वयमपि वियन्मण्डल-
स्योपसन्ध्यम्। अस्तङ्गौयात्युदयतिचकःकोरविःकःशशा-
ङ्कः काचप्राचीतदिहनवयङ्का प्रतीचीति विद्मः॥ अत्र द्व-
योरभिधीयमानसादृश्ययोः सूर्या२चन्द्रमसोः प्राचीप्रती-
च्योर्वातदन्यतममेकमेववस्तुपर्यायतोविशङ्क्यतइति अ-
नेकविषयोयम्मिश्रः संशयः ॥ ४ उपलक्षणञ्चैतत्तेन-
वितर्कोत्क्याद्योपिसंशयोक्तावेवद्रष्टव्याः । तद्यथा ।
सरोजपत्त्रे परिलीनषट्पदेविशालदृष्टेः स्विदमूविलोचने।
शिरोरुहाः स्विन्नतपक्ष्मसन्ततेर्द्विरेफवृन्दन्नुनिशब्दनि-

१ बालानिष्कपटोल्लसितनिवसनाग्रहणंश्रुत्वाविनिष्क्रान्ता निद्रयाव्याकुला॥ राहुरपि तस्यामुखं पश्यति पुनः पश्यति गगनं भ्रान्तिमान् खलुनजानातिद्व योरपि चन्द्रःकः ॥ २देवताद्वन्द्वे चेत्यानङ् पूर्वपदस्य।

श्चलम् ॥ अगूढहासस्फुटदन्तकेसरम्मुखंस्विदेतद्विकचन्नु पङ्कजम् । इतिप्रलीनान्नलिनीवने सखींविदाम्बभूवुः सुचिरेणयोषितः॥ युग्मम् । यथाच । मुहेम अक्खलिउल्ला- वेण्हाणोल्लएचिउरेविणिणिअंसणसारेसमोत्ति अहारेउ- रे । कालत्तरेतरलच्छिहुमअ्णुसमुल्लसइमाहहु पुणुथण गुडुरेणमुणइकहिंवसइ १ ॥ कःपुनर्वितर्कसंशययोर्विशे- षः । उच्यते । निर्णयासन्नोवितर्कः । वितर्कासन्नश्चसं- शयःसंशयानोहिवितर्कस्यकोटिमारुह्यततोविभ्रष्टस्तत्त्व- मभिनिविशते । यथापूर्ववाक्ये विदाम्बभूवुरिति संशयमे- वविगाहते । यथा "माहहुपुणुथणगुडुरेणमुणइकहिंवस- इ"इति । शब्दाश्चकिंस्विदादयस्तुल्यरूपाएवसंशयविपर्य- ययोरिति दुरवबोधस्तद्विशेषः । नन्वेवंवितर्कादयोप्युभ- यालङ्काराःस्युः।सत्यम्।किन्तूक्तिपक्षेपरार्थानुमानवत्स्व- रूपपक्षे स्वार्थानुमानवदिति।अयमेवचोक्तिशब्दस्यार्थस्ते नस्वरूपमात्रोक्तौसंशयवितर्कादयोप्यर्थालङ्काराउक्तिप्रा धान्येतूभयालङ्काराः॥५॥४॥इतिसंशयोक्त्यलंकारनिरूपण- म्॥अपह्नुतिरपह्नुत्यकिंचिदन्यार्थदर्शनम्।औपम्यवत्य नौपम्याचेतिसाद्विविधोच्यते॥४३॥वाच्येप्रतीयमानेचसा- दृश्येप्रथमातयोः॥तथाभूते द्वितीयास्यादपह्नोतव्यवस्तुनि ॥४४॥अनौपम्यवतीभूयः पूर्वापूर्वा च कथ्यते॥ तासामु-

१ मुखे मदस्खलितोल्लापे स्नानोल्लुलितेषु चिकुरेष्वपिनिर्निवसनसारेसमौ- क्तिकहारे उरसि । कालान्तरे तरलाक्ष्योर्मदनः समुल्लसतिमाधवःपुनः स्तन- कुड्मले न मन्यते क्व वसति ॥

दाहृतिष्वेव रूपमाविर्भविष्यति॥४५॥ तत्राभिधीयमानौ-
पम्यवती यथा। गिह्मेदवग्गिमसिमइलिआइन्दीस-
न्तिविंज्झसिहराइम्। आसासुप उत्थवइएणहोन्तिणव
पाउसम्भाइम्१॥ अत्र नवप्रावृडभ्राणां विन्ध्यशिखरैर-
भिधीयमानसादृश्यैरपह्नुतत्वादभिधीयमानौपम्यवत्य-
पह्नुतिः॥१॥ प्रतीयमानौपम्यवती यथा। न केतकीनां
विलसन्तिसूचयः प्रवासिनोहन्तहसत्ययं विधिः। तडि-
ल्लतेयन्न चकास्ति चञ्चलापुरःस्मरज्योतिरिदं विजृम्भते॥
अत्र केतकीसूचीनां विधिविहसितैः प्रतीयमानसादृश्यै
स्तडिल्लतायाश्च स्मरज्योतिषाऽपह्नुतत्वादियंप्रतीयमा-
नौपम्यवत्यपह्नुतिः॥२॥ अनौपम्याभिधीयमानापह्नो
तव्यवस्तुः पूर्वा यथा। राजकन्यानुरक्तंमारोमोद्भेदेनर-
क्षकाः। अवगच्छेयुराः ज्ञातमहोशीतानिलंवनम्॥ अत्र
राजकन्यानुरागलक्षणस्य रोमाञ्चकारणस्य रक्षकावगति
हेतोः पूर्वमेवाभिहितस्यचवनानिलशैत्यलक्षणेन कार-
णान्तरेणापह्नवः। नचैतयोः सादृश्यमस्ति। सेयमनौ
पम्याभिधीयमानाऽपह्नोतव्यवस्तुः कार्यात्पूर्वङ्कारणो-
पन्यासेन पूर्वेत्युच्यते॥३॥ सैवापूर्वा यथा। आनन्दा-
श्रुप्रवृत्तं मेकथन्दृष्ट्वैवकन्यकाम्। अक्षिमेपुष्परजसावा-
तोद्धूतेन पूरितम्। अत्रानन्दाश्रुप्रवृत्तमिति पूर्वङ्कार्यस्य
पश्चाद्दृष्ट्वैवकन्यकामिति कारणस्योपन्यासः। शेषं पू-

१ग्रीष्मे दावाग्निमसीमलिनानि दृश्यन्ते विन्ध्यशिखराणि। आशासु
पर्यस्तान्येतानि न भवन्ति नवप्रावृडभ्राणि॥

र्ववत् । सेयमभिधीयमानाऽपह्नोतव्यवस्तुरनौपम्यापह्नुतिरपूर्वेत्युच्यते ॥४॥ अनौपम्यैवप्रतीयमानापह्नोतव्यवस्तुः पूर्वायथा ॥ उप्पेल्लिअवइकारिल्लआइं उच्चेसिदइ अवच्छलिये। कण्टअविलिहित पीणुण्ण अथणि उत्तम्मसुएत्ताहे १ ॥ अत्रचैतस्याः स्तनयोरुपपतिनाननखक्षतङ्कृतमपितुकण्टकैरितिप्रतीयमाना ऽपह्नोतव्यं वस्तु प्रकाशते । पूर्ववदेवच पूर्वार्द्धेकारणस्योपन्यासः पश्चिमार्द्धेतु कार्योपदेशो दृश्यते। सेयमनौपम्या प्रतीयमानाऽपह्नोतव्यवस्तुः पूर्वानामापह्नुतिरपह्नुत्यकिञ्चिदन्यार्थदर्शनमिति लक्षणयोगाज्जायते ॥५॥ सैवापूर्वायथा कस्सवणहोइरोसोदठ्ठनपिआइसव्वणं अहरम् । सभमरपउमग्घाइणि वारिअवामेसहसुएह्निम् २ ॥ अत्रापि नास्या उपपतिना अधरोव्रणितः किन्तर्हि भ्रमरेणेति प्रतीयमाना ऽपह्नोतव्यं वस्तु। पूर्वार्द्धे तु सव्रणमधरमिति कार्यमुपन्यस्य पश्चिमार्द्धे सभ्रमरकमलाघ्रायिणीति कारणमुपन्यस्तम्। सेयमन्यौपम्याप्रतीयमानापह्नोतव्यवस्तुरपूर्वा च अपह्नुतिर्यथोक्तलक्षणयोगाज्जायते॥६॥॥५॥

इत्यपह्नुत्यलंकारनिरूपणम् ॥समाधिमन्यधर्माणामन्यत्रारोपणं विदुः॥ निरुद्भेदोऽथसोद्भेदः सद्विधापरिपठ्यते ॥ ४६॥तयोर्निरुद्भेदो यथा।३दूरपारिट्ठराए अवऊहत्तम्मि-

१ उत्क्रम्यवचनकारिणि ! लतामुखैरुदस्यापच्छलितायाम्। कण्टकविलिखितपीनोन्नतस्तनिउत्ताम्यस्वेदानीम् ॥ २॥ कस्यवानभवतिरोषोदृष्ट्वाप्रियायाः सव्रणमधरम्। सभ्रमर पद्मोद्घ्रायिणि ! वारिते वामे सहस्वेदानीम् ॥३दूरप्रति ब

दिणअरे अवरदिसम् । असहन्तिव्व किलिम्मइ पिअअमपच्चक्खदूसणं दिणलच्छी ॥ अत्र दिनकरदिनलक्ष्मीप्रतीचीनां समारोपितनायकनायिकाप्रतिनायिकाधर्माणां दूरप्रतिबद्धराग इत्यादिभिः श्लिष्टपदैरनुद्भेद एवमन्यधर्माध्यारोपादयन्निरुद्भेदः ॥१॥ सोद्भेदो यथा । वल्लहेलहु बोलन्तइ एत्तइ पुणु बहुबलिकिज्जमितामरसणि तुज्झरोसहु थिरहु । जेणाणिरग्गलु जम्पइ किम्पि पणिजावजणु तावहिमेण त्रिसित्तिभ्रतिथपुलुइठतशु १॥ अत्रापि प्रियतमव्यलीकासहिष्णुः कापि कामिनी हिमानीपुष्टाङ्कमलिनीमालोक्यतस्यामात्मधर्मान्प्रिये च सूर्यधर्मानारोपयति । ते च बलिक्रियेऽहन्तव रोषस्येत्यादिभिः पदैरुद्भिद्यमाना इह प्रतीयन्त इत्ययं सोद्भेदः समाधिभेदः ॥२॥ अन्यश्चान्यधर्मश्चान्यधर्मा इति व्युत्पत्त्या धर्मिणोऽप्यध्यासे समाधिरिष्यते । स धर्माणां धर्मिणश्च यथा । चन्द्रज्योत्स्नाविशदपुलिने सैकतेऽस्मिन्सरय्वां वादद्यूतं सुचिरमभवत्सिद्धयूनोः कयोश्चित् । एको ब्रूते प्रथमनिहतं केशिनं कंसमन्यः सत्वं तत्त्वं कथय भवता को हतस्तत्र पूर्वम् ॥ अत्र सम्बोध्यवर्णनीये विष्णुस्वरूपस्य धर्मिणस्तद्धर्माणाञ्चाध्यासादयं धर्मिधर्माध्यासरूपः समाधिः ॥ ३ ॥ धर्मिण एवाध्यासो यथा । प्राप्तश्रीरेष कस्मात्पुनरपि मयि तं मन्थखेदं विदध्यान्निद्राम-

---

द्वारागेऽवगूहिनि दिनकरेऽपरदिशम् । असहन्तीव क्लाम्यति प्रियतमप्रत्यक्षदूषणं दिनलक्ष्मीः ॥ १ वल्लभे लघु ददत्यागच्छति पुनर्बहुबलिक्रियेतामरसितव दोषस्य स्थिरस्य ॥ येन निरर्गलं जल्पति किमपि यावज्जनस्तावद्धिमेन प्रविश्य मुष्टासि ॥ २ ॥ अर्थप्रदर्शनमेतत् । व्युत्पत्तिस्तु अन्यस्य धर्मोऽस्त्येव ॥

प्यस्य पूर्वामनलसमनसोनैवसम्भावयामि । सेतुंबध्ना-
तिकस्मात्पुनरयमखिलद्वीपनाथानुयातस्त्वय्यायाते वि-
तर्कानिति दधतइवाभातिकम्पः पयोधेः॥ अत्र प्राप्तश्री-
रेषकस्मादित्यादिभिर्मन्थखेदादि धर्माणान्निवर्त्तितत्वा-
त्प्राप्तश्रीरित्यादीनाञ्चश्लेषेणैवाभिधानात्त्वयीति वर्ण-
नीयपदे विष्णुस्वरूपस्यधर्मिणएवाध्यासात्तद्धर्माणाञ्चा
नध्यासादऽयन्धर्माध्यासरूपःसमाधिः ॥ ४ ॥ समाधि-
मेवमन्यन्ते मेलितन्तदपिद्विधा ॥ धर्माणामेवचाध्या-
सेधर्मिणां वान्यवस्तुनि ॥ ४७ ॥ तत्रान्यधर्माणामेवान्य-
वस्तुन्यध्यासान्मेलितं यथा । पल्लविअंविअकरपल्लवे
हिम्पप्फुल्लिअंविअणअणेहिम् । फलिअंविअपीणप-
ओहरेहिं अज्जाएलावण्णम् १ ॥ अत्रपल्लवितमिवपुष्पि-
तमिवफलितमिवेत्युत्प्रेक्षयालताधर्माणांलावण्यधर्मिणि-
धर्माध्यारोपो दृश्यते । करपल्लवादीनाञ्चानुपात्तव्या-
पारहेतुत्वेनसाधकतमत्वेनवाप्राधान्यंलक्ष्यते । सोय-
मन्यवस्तुनिपुनरन्यधर्माणामेवारोपेणमेलितन्नामसमा-
धिभेदोभवति । सतूद्देशेसमाध्युक्तिरित्युक्तिग्रहणाल्ल-
भ्यते ॥ ५ ॥ धर्माणान्धर्मिणश्च यथा । देहोव्वपड-
इ दिअहो कण्ठच्छेओव्वलोहिओहोइ रई । गलइरुहि-
रव्वसंज्झाघोलइकेसकसणंसिरम्मिविअतिमिरम् २ ॥
अत्र देहादयोयथोक्तक्रियावन्तोजन्तुवधक्रियायान्नि-

१ एतच्छ्लोकच्छायाप्रथमपरिच्छेदपृष्ठे ८३ द्रष्टव्यम् ॥ २ देहइवपततिदि-
वसकण्ठच्छेदइवलोहितोभवतिरविः । गलतिरुधिरमिवसंध्याघूर्णते केशक-
षणं शिरसीवतिमिरम् ॥

बहुदिवसादिभिरुपमेयादिवसावसानक्रियायाम्मेलिता-
स्तदेतद्गुणक्रियावतान्द्रव्याणाम्प्रधानक्रियाध्यारोपेध-
र्मिधर्माध्यासे मेलितन्नामसमाधेरेवभेदोभवति॥६॥ इति
समाध्युक्त्यलंकारनिरूपणम् ॥ यत्रोपमानादेवैतदुपमेय-
म्प्रतीयते ॥ अतिप्रसिद्धे स्तामाहुः समासोक्तिम्मनीषिणः
॥४८॥ प्रतीयमानेवाच्येवासादृश्ये सोपजायते॥श्लाघाङ्ग-
र्हामुभेनोभेतदुपाधीन्प्रचक्षते ॥४९॥ विशेष्यमात्रभिन्ना-
पि तुल्याकारविशेषणा॥ अस्त्यसावपराप्यस्ति तुल्या तु-
ल्यविशेषणा॥५०॥ संक्षेपेणोच्यते यस्मात्समासोक्तिरिय-
न्ततः॥ सैवान्योक्तिरनन्योक्तिरुभयोक्तिश्च कथ्यते ॥५१॥
तत्र प्रतीयमानसादृश्या श्लाघावती यथा । उत्तुङ्गकृतसं-
श्रयस्यशिखरिण्युच्चावचग्रावणिन्यग्रोधस्य किमङ्ग तस्य
वचसाश्लाघासुपर्याप्यते । बन्धुर्वा सपुराकृतः किमथ वा
सत्कर्मणां सञ्चयोमार्गे रूक्षविपत्त्रशाखिनि जनोयम्प्रा-
प्यविश्राम्यति ॥ अत्रन्यग्रोधेनैवोपमानेनोपमीयमा-
नेन प्रतीयमानसादृश्यस्य वर्णनीयवदान्यो[1]पमेयस्यो-
क्तत्वात्तच्छ्लाघयैवतच्छ्लाघा प्रतीयते इति सेयम्प्र-
तीयमानसादृश्या श्लाघावती समासोक्तिः ॥ १ ॥
सैवगर्हावतीयथा । किञ्जातोसि चतुष्पथेयदिघनच्छायो-
सिकिञ्छाययासम्पन्नःफलितोसिकिंयदिफलैः पूर्णोसि-
किंसन्नतः । हेसद्वृक्ष! सहस्वसम्प्रतिशिखाशाखाशताक-
र्षणक्षोभोन्मोटनभञ्जनानि जनतः[2]स्वैरैवदुश्चेष्टितैः॥ अ-

[1] वदान्यस्त्यागिवीरयोरितिविश्वः ॥[2] जनेभ्य इत्यर्थः॥

त्रोपमानभूतस्यसद्वृक्षस्यव्याजगर्हणया तदुपमेयःकोपि-
सत्पुरुषोविगर्ह्यतइति सेयम्प्रतीयमानसादृश्या गर्हा-
वतीनामसमासोक्तिः ॥ २ ॥ सैवोभयवतीयथा । निष्क-
न्दामरविन्दिनीं स्थपुटितो१द्देशांस्थलीम्पल्वलेजम्बाला-
विलमम्बुकर्त्तुमपरासूतेवराही सुतान् । दंष्ट्रायाञ्जुतुरर्ण-
वोर्मिपटलैराप्लावितायामियंयस्याएवशिशोः स्थिताऽवि-
पदिभूःसापुत्रिणी पौत्रिणी ॥ अत्रपूर्वार्द्धेगर्होत्तरार्द्धेश्ला-
घागम्यते । सेयम्प्रतीयमानसादृश्योभयवतीसमासो-
क्तिः ॥ ३ ॥ अनुभयवतीयथा । इतः स्वपिति केशवःकु-
लमितस्तदीयद्विषामितश्चशरणार्थिनः शिखरिपक्षिणःशे-
रते । इतोपिवडवानलः सहसमस्तसंवर्त्तकैरहोविततमू-
र्जितम्भरसहञ्चसिन्धोर्वपुः ॥ अत्रगर्हाश्लाघावाविस्म-
योक्तावेवास्तमयते सेयम्प्रतीयमानसादृश्यानुभयवती-
नामसमासोक्तिः ॥ ४ ॥ अभिधीयमानसादृश्याश्लाघाव-
तीतुल्याकारविशेषणायथा । नालस्यप्रसरोजलेष्वपिकृता-
वासस्यकोषेरुचिर्दण्डेकर्कशतामुखेच मृदुतामित्त्रेमहान्प्र-
श्रयः । आमूलङ्गुणसङ्ग्रहव्यसनितात्द्वेषश्चदोषाकरेयस्यै-
षास्थितिरम्बुजस्यवसतिर्युक्तैवतत्रश्रियः ॥ अत्राम्बुरुह-
सत्पुरुषयोः परस्परमुपमानोपमेयभावस्यातिशयप्रसि-
द्धेरुपमानेनैवश्लेषवत्तुल्यविशेषणपदाभिधीयमानसादृ-
श्यमुपमानमेवावगम्यते । सेयमभिधीयमानसादृश्या-
श्लाघावतीतुल्यविशेषणानामसमासोक्तिः ॥ ५ ॥ प्रती-

१ निम्नोन्नतप्रदेशामित्यर्थः । निम्नोन्नतन्तुस्थपुटमितिकोशात्॥

यमानाभिधीयमानसादृश्याश्लाघागर्हावती तुल्यातुल्य-
विशेषणायथा । उपाध्वन्ततपान्थाः पुनरपिसरोमार्ग-
तिलकंयदासाद्यस्वेच्छं विलसथविलीनक्लमभराः । इत-
स्तु क्षाराब्धेर्जरठकमठक्षिप्तपयसोनिवृत्तिः कल्याणीनपु-
नरवतारः कथमपि ॥ अत्रपूर्वार्द्धेऽभिधीयमानसादृश्य-
योः श्लाघापश्चिमार्द्धेतुप्रतीयमानसादृश्ययोर्गर्हाऽवगम्य-
ते । सेयमुभयवतीतुल्यातुल्यविशेषणाभिधीयमानसादृ-
श्यासमासोक्तिः ॥ ६ ॥ अन्योक्तिर्द्विधास्वजातौजात्यन्त-
रेच । तयोःस्वजातौयथा । लक्ष्मीपयोधरोत्सङ्गकुङ्कुमा-
रुणितोहरेः । बलिरेषसयेनास्यभिक्षापात्रीकृतः करः ॥
अत्रहरिशब्देनबलिशब्देनकश्चित्समानेतिवृतःपुंविशेष-
एवोच्यते । सेयं स्वजातिविषयान्योक्तिः संक्षेपोक्तिरूप-
त्वात्समासोक्तिरेव॥७॥जात्यन्तरेयथा । पिबन्मधु यथा-
कामम्भ्रमरः फुल्लपङ्कजे । अप्यसन्नद्धसौरभ्यमपश्य चु-
म्बतिकुड्मलम्॥अत्रभ्रमरशब्देनकश्चित्कामीफुल्लपङ्कजश-
ब्देनकापिप्रौढाङ्गनाकुड्मलशब्देनकापिमुग्धाङ्गनाभिधी-
यते। सेयमन्यजातिविषयान्योक्तिः समासोक्तिरेवभवति
॥८॥अनन्योक्तिशब्देनेहाध्यासविषया तद्भावापत्तिरुच्य-
ते। यथैष ब्रह्मदत्त इति । साद्विधा।शुद्धाचित्रा च। तयोः
शुद्धा यथा । सुधाबद्धग्रासैरुपवनचकोरैरनुसृतां किर-
ज्ज्योत्स्नामच्छान्नवलवलिपाकप्रणयिनीम् । उपप्राका-
राग्रम्प्रहिणुनयनेतर्कयमनागनाकाशेकोऽयङ्गलित हरिणः
शीतकिरणः ॥ अत्र कस्याश्चिन्मुखे चन्द्रमसमध्यास्य-

कश्चिदेवम्भूते । साचेयम्पूर्वार्द्धेऽभिधीयमानतुल्यविशेष-
णा । पश्चिमार्द्धे पुनरनाकाशे कोऽयङ्गलितहरिणइत्यत्रा
ऽतुल्यविशेषणा समासोक्तिरेवानन्योक्तिः । एकस्यैव-
चाभ्यासादियं शुद्धेत्युच्यते ॥ ९ ॥ चित्रा यथा । कमल-
मनम्भसिकमले च कुवलयेतानि कनकलतिकायाम् ।
सा च सुकुमारसुभगेत्युत्पातपरम्पराकेयम् ॥ अत्रा-
ध्यासः पूर्ववद्वैचित्र्यञ्चनिगदेनैवव्याख्यातम् । सेयमन-
न्योक्तिः समासोक्तिरेवानेकाध्यासवैचित्र्याच्चित्रेत्युच्य-
ते ॥ १० ॥ उभयोक्तिर्यथा । लावण्यसिन्धुरपरैवहि-
केयमत्रयत्रोत्पलानिशशिनासह सम्प्लवन्ते । उन्म-
ज्जतिद्विरदकुम्भतटीचयत्रयत्रापरेकदलिकाण्डमृणाल-
दण्डाः ॥ अत्रापूर्वेयं लावण्यसिन्धुरित्यन्योक्तिः य-
त्रोत्पलानिशशिनासहसंप्लवन्तइत्यनन्योक्तिः सेयमुभय-
योगादुभयोक्तिरपदिश्यते ॥ ११ ॥ उपलक्षणञ्चैतत् । ते-
नान्यापियोपमानोपमेयविषयेसंक्षेपोक्तिःसाऽपिसमासो-
क्तिरेवभवति । यथा । इन्दुर्लिप्तइवाञ्जनेनजडितादृ-
ष्टिर्मृगीणामिवप्रम्लानारुणिमेव विद्रुमलताश्यामेवहे -
मप्रभा । पारुष्यङ्कलयाचकोकिलवधूकण्ठेष्विवप्रस्तुतंसी-
तायाः पुरतश्चहन्तशिखिनां बर्हाः सगर्हाइव ॥ अत्रसं-
क्षेपतः सीताशब्दवाच्यस्यमुखादेरवयवसमूहस्याश्रय-
तइन्दुरञ्जनेनेवलिप्तोजडितेवमृगीणां दृष्टिः प्रम्लानमि-
वारुण्यं विद्रुमस्यश्यामेवहेमकान्तिः । परुषाइवकोकि-
लालापाः सगर्हाइवशिखिनां बर्हाइत्युत्प्रेक्षोक्तेरनुक्ता-

न्यपि तदुपमेयानिमुखादीनिप्रतीयन्ते । सेयमपिसंक्षेपोक्तिः समासोक्तिरेव भवति । कःपुनः समासोक्तेःसमाध्यध्युक्तेर्विशेषः । उच्यते । यत्रप्राकरणिकेऽप्राकरणिकोधर्मोऽध्यास्यतेसासमाध्युक्तिर्यथा । "असहन्तिव्वकिलिं मइपिअअमपच्चक्खदूसणन्दिणलच्छी" इति । यत्रपुनरप्राकरणिकेप्राकरणिकधर्मः सासमासोक्तिर्यथा । "पिबन्मधुयथाकामंभ्रमरःफुल्लपङ्कजे" इति । ननुधर्मिणोध्यासेसमानमितिचेन्न । सत्वन्तस्त्वङ्कथय भवताकोहनस्तत्रपूर्वमित्यादिषु, अनाकाशेकोयङ्गलितहरिणः शीतकिरणइत्यादिषुचप्रव्यक्तएवाध्यासविशेषोदृश्यते । एकत्रमनसाऽन्यत्रतुवचसेति । सोयंसमाध्युक्तेःसमासोक्तेश्चभेदोभवति ॥ १२ ॥ ७ ॥ इति समासोक्त्यलंकारनिरूपणम् ॥ अन्यथावस्थितं वस्तु यस्यामुत्प्रेक्ष्यतेऽन्यथा ॥ द्रव्यङ्गुणः क्रियावाऽपि तामुत्प्रेक्षां प्रचक्षते ॥ ५२ ॥ तासुद्रव्योत्प्रेक्षायथा । देहस्थादर्पणे यस्य पश्यति प्रतिमामुमा । भ्रान्त्यादर्द्धमिवोत्पन्नमर्द्धनारीश्वरान्तरम् ॥ अत्रप्रतिबिम्बरूपेणदर्पणेऽन्यथावस्थितस्यार्द्धनारीश्वररूपलक्षणस्य द्रव्यस्ययदपरार्द्धोत्पन्नार्द्धनारीश्वरान्तररूपेणद्रव्यान्तररूपेणोत्प्रेक्षणंसेयमुत्प्रेक्षाद्रव्योत्प्रेक्षेतिभवति ॥ १ ॥ गुणोत्प्रेक्षायथा । पल्लविअं विअकरपल्लवेहिंपप्फुल्लिअंव्वणअणेहिम् । फलिअंविअपीणपओहरेहिं अज्जाएलावण्णम् ॥ अत्रकरपल्लवादिरूपेणान्यथावस्थितस्याङ्गलावण्यलक्षणस्ययदेत-

त्पल्लवितत्वादिरूपेणान्यथोत्प्रेक्षणम् । सेयमुत्प्रेक्षागुणोत्प्रेक्षेति भवति ॥ २ ॥ क्रियोत्प्रेक्षा यथा । सेनागजाः स्वकरपल्लवलेखिनीभिर्गण्डस्थलान्मदमषीं मुहुराददानाः । मन्ये नरेन्द्र! तव तोयधितीरतालीपत्त्रोदरेषु विजयस्तुतिमालिखन्ति॥ अत्र सेनागजानां गण्डस्थलेभ्यो लेखन्याकारैः करैर्मषीरूपस्य मदपयसो यदादानं यश्चास्य तीरतालीपत्त्रोदरेषु महावर्णतया निःक्षेपः स उक्तरूपेणान्यथोत्प्रेक्ष्यत इति सेयमुत्प्रेक्षा क्रियोत्प्रेक्षा भवति ॥ ३॥ उत्प्रेक्षावयवो यश्चयाचोत्प्रेक्षोपमामता । मत उचेति न भिद्यन्ते ता न्युत्प्रेक्षा स्वरूपतः ॥५३॥ तत्रोत्प्रेक्षावयवो यथा । अङ्गुलीभिरिव केशसंचयं सन्निगृह्य तिमिरम्मरीचिभिः । कुड्मलीकृतसरोजलोचनं चुम्बतीव रजनीमुखं शशी ॥ अत्राङ्गुलीभिः केशेषु गृहीत्वा प्रियामुखं चुम्ब्यते सा च लोचने निमीलयतीति प्रायोवादः । तत्र मुखचुम्बनादिक्रियाप्रधानमङ्गिभूता प्रतीयते । केशग्रहणाक्षिनिमीलनेन चाङ्गभूते प्रधाने तत्राङ्गिभूतायाः क्रियाया उत्प्रेक्षणेनाऽवयवभूता क्रियोत्प्रेक्षिता भवति। यथा हि।कुड्मलीकृतसरोजलोचनमित्यत्र नोत्प्रेक्षापदमेवमङ्गुलीमरीचिभिस्तिमिरकेशसंचयं सन्निगृह्येत्यत्रापि तन्न प्राप्नोति मरीच्यङ्गुलिसन्निगृहीततिमिरकेशसंचयमित्येवं वा वक्तव्यं भवति। तत्र योयमवयवक्रियायामप्यन्यपदार्थोक्ताद्द्वितीयाऽवयवक्रिया विलक्षण इव प्रयोगेण पृथक्पदतया वाक्यकल्पः स इवस्यापि व्याख्यानपरत्वेनाप्यनुयोज्यमानः कविभिरुत्प्रेक्षावयव इत्युच्यते ।

अन्ये पुनर्यत्र प्रधानक्रियानोत्प्रेक्ष्यतेऽवयवक्रियात्तूत्प्रेक्ष्यते तमुत्प्रेक्षाऽवयवं वर्णयन्ति । यथा । लीनेव प्रतिबिम्बितेव लिखितेवोत्कीर्णरूपेव च प्रत्युप्तेव च वज्रलेपघटितेवान्तर्निखातेवच । सानश्चेतसि कीलितेव विशिखैश्चेतोभुवः पञ्चभिश्चिन्तासन्ततितन्तुजालनिबिडस्यूतेव लग्नाप्रिया ॥ तेषां मते पूर्वोदाहरणमुत्प्रेक्षाऽवयवोन भवति ॥ ४ उत्प्रेक्षोपमा यथा । किंशुक१व्यपदेशेनतरुमारुह्यसर्वतः । दग्धादग्धमरण्यान्याः२पश्यतीव विभावसुः ॥ अत्रव्यपदेशशब्देन किंशुककुसुमानामग्निसादृश्यमभिधाय दर्शनक्रियोत्प्रेक्ष्यत इति सेयमुत्प्रेक्षोपमापूर्वस्मिन्नप्युदाहरणे मरीचिभिरङ्गुलिभिरिव तिमिरकेशसंचयमिव संनिगृह्येत्युपमानार्थानुप्रवेशउत्प्रेक्षायांद्रष्टव्यः। सेयमुत्प्रेक्षावयवउत्प्रेक्षोपमाचोत्प्रेक्षैवभवति॥५॥मतंयथा। यदेतच्चन्द्रान्तर्जलदलवलीलां वितनुते तदाचष्टेलोकःशशकइति,नोमांप्रतितथा३।अहन्त्विन्दुं मन्येत्वदरिविरहाक्रान्ततरुणीकटाक्षोल्कापातव्रणकिणकलङ्काङ्किततनुम् ॥ अत्र कटाक्षोल्कापातव्रणकिणकलङ्काङ्किततनुमिन्दुमहं मन्ये इत्यनेनस्वमतद्वारकमुत्प्रेक्षायाः समर्थनं कृतमित्ययं मताभिधानमुत्प्रेक्षाया एव प्रकारः ।६॥८॥इत्युत्प्रेक्षालंकारनिरूपणम्॥अप्रस्तुतप्रशंसास्यात्प्रस्तोतव्यस्ययास्तुतिः॥कुतोपि हेतोर्वाच्याचप्रत्येतव्याचसोच्यते॥८४॥साचधर्मार्थकामानां प्रायोन्यतमस्य।यथा ॥

१ किंशुकः पलाशः ।२ महारण्यस्य ।३ मन्मतं नेति यावत् ॥

स्वाभिप्रायप्रसिद्ध्याच जायमानेह दृश्यते ॥ ५५ ॥ तासु-
धर्मबाधयावाच्या यथा । मेदश्छेदकृशोदरं लघु भव-
त्युत्थानयोग्यं वपुः सत्वानामपि लक्ष्यते विकृतिमच्चि-
त्तं भयक्रोधयोः । उत्कर्षः स च धन्विनां यदिषवः सि-
ध्यन्ति लक्ष्ये चले मिथ्यैवव्यसनं वदन्ति मृगयामीदृ-
ग्विनोदः कुतः ॥ अत्र यथोक्तैर्हेतुभिः स्वाभिप्रायसाध-
नेन यदीदमीदृग्विनोदःकुतइति साक्षान्मृगयाऽभिन-
न्दनं सेयं वाच्यानामप्रस्तुतस्तुतिरहिंसापरमोधर्मइति
धर्मम्बाधते ॥ १ ॥ धर्मबाधयैव प्रत्येतव्यायथा । काल-
क्खरदुस्सिक्खिअबालअरेलग्गमज्झकण्ठम्मि । दोण्ह
विणरअणिवासोसमअंजइहोइताहोउ १ ॥ अत्र काला-
क्षरदुःशिक्षितेत्यनेन लिपिज्ञानादिभिरधीतधर्मशास्त्रा-
भिमतरूपकपोगण्डः कोपिकयापि अविनयवत्यासो-
पालम्भमेहिरेकण्ठेलगेत्यभियुज्यते । तत्र यदितेमत-
मेवं कृतेनरकः स्यात्सयथावयोः सहैवनासौ नरकइ-
ति किं तर्हि स्वर्ग इति स्वाभिप्रायसाधनाद्रु महा-
साहसेनियोगस्तस्येहसाक्षादप्रस्तुतस्यास्तोतव्यस्यस्तुतिः
प्रतीयतेसैयमप्रत्येतव्यानामा ऽप्रस्तुतप्रशंसा परस्यदा-
रान्मनसापि नेच्छेदिति धर्ममेवबाधते ॥ २ ॥ अर्थबा-
धयावाच्या यथा । पङ्गो!वन्द्यस्त्वमसिनगृहं यासियोर्थी
परेषान्धन्योऽन्ध ! त्वन्धनमदवतान्नेक्षसेयन्मुखानि । श्ला-

१ कालाक्षरदुःशिक्षितबालकरे लग मम कण्ठे । द्वयोरपि नरकनिवासः सम-
कं यदि भविष्यति तद्भवतु ॥

घ्योमूक ! त्वमसि कृपणं स्तौषिनार्थाशयायः स्तोतव्य-
स्त्वम्बधिर ! नगिरंयः खलानां शृणोषि॥अत्रस्तोतव्या-
नाम्पङ्ग्वन्धमूकबधिराणां वन्द्यधन्यश्लाघ्यस्तोतव्य-
पदैः साक्षादभिनन्दनादियं वाच्यानामाप्रस्तुतप्रशंसा-
ऽभिमानितोर्थसिद्धिम्बाधते ॥ ३ ॥ अर्थबाधयैवप्रत्येत-
व्यायथा । कामं वनेषु हरिणास्तृणानिखादन्त्यऽयत्नसुल-
भानि । विदधतिधनिषुनदैन्यन्तेकिलपशवोवयं सुधियः॥
अत्र तेकिलपशवो वयंसुधियइति मृगाणामसाक्षादभि-
नन्दनन्तेनेयमस्तोतव्यानाममीषां वाक्यार्थत्वेन स्तुति
प्रतीतेः प्रत्येतव्यानामाप्रस्तुतप्रशंसा मनस्विनोर्थसि-
द्धिम्बाधते ॥ ४ ॥ कामबाधयावाच्या यथा । णमुअ-
न्तिदीहसासंणरुअन्तिणहोन्तिविरहकिसिआओ । ध-
ण्णओताओजाणं वहुवल्लहवल्लहोणतुमम् १ ॥ अत्र
धन्यास्तायासान्त्वन्नवल्लभ इतियेयमतिरक्तायाः सा-
क्षादस्तोतव्यस्तुतिः सेयंवाच्यानामाप्रस्तुतप्रशंसातस्या
एवकामसिद्धिम्बाधते ॥ ५ ॥ कामबाधयैव प्रत्येतव्या
यथा । सुहउच्छअञ्जणन्दुल्लहंपिदूराहि आणेन्ता ।
उअआरअजरजीअम्पणेत्तणकआवराहोसि २ ॥ अत्र
पूर्वोक्तास्मदभिप्रायसिद्धैवन्नामत्वयास्माकमुपकृतं ये-
नजीवितमपि हरन्नापराध्यसीति ज्वरम्प्रतियदतिर-
क्ततयावाक्यन्तेनेहास्तोतव्यस्य ज्वरस्यस्तुतिः प्रतीयते ।

---

१ नम्रियन्ते दीर्घश्वासं नरुदन्ति नभवन्ति विरहकृशिताः । धन्यास्तायासां वहुवल्लभवल्लभो नत्वम् ॥ २सुखपृच्छकं जनं दुर्लभमपिदूरादिश्चानीयता ॥ उपकारकज्वर ! जीवं प्रणयन्नकृतापराधोसि ॥

सेयम्प्रत्येतव्यानामाऽप्रस्तुतप्रशंसा तस्या एव शरीरव्या-
घयासर्वानपि कामान्व्याघत्ते ॥ ६ ॥ १ ॥ इत्यप्रस्तुतप्र-
शंसाऽलंकारनिरूपणम् ॥ विवक्षितगुणोत्कृष्टैर्यत्स-
मीकृत्य कस्यचित् ॥ कीर्त्तनं स्तुतिनिन्दार्थं सा
मता तुल्ययोगिता ॥ ५६ ॥ साभिधीयमानतुल्यगुण-
त्वेनस्तुत्यर्था यथा ॥ शेषोहिमगिरिस्त्वञ्चमहान्तोगु-
रवः स्थिराः । इमां लङ्घितमर्यादाञ्चलन्तीम्बिभृथक्षि-
तिम् ॥अत्राभिधीयमानमहत्त्वादि गुणोत्कृष्टाभ्यां शेषा-
हितुपारशैलाभ्यांसह स्तुत्यर्थन्तुल्ययोगेनक्षितिपतेर-
भिहितत्वादियंस्तुत्यर्थातुल्ययोगिता॥२॥ अभिधीयमान-
तुल्यगुणत्व एवनिन्दार्थायथा। सङ्गतानिमृगाक्षीणान्त-
डिद्विलसितानि च। क्षणद्वयन्नतिष्ठन्तिघना१रब्धान्य-
पि स्वयम् ॥ अत्रघनारब्धान्यपीत्यादिभिरभिधीयमा
नतुल्यगुणानाम्मृगाक्षीसङ्गतानान्तडिद्विलसितानाञ्चनि-
न्दार्थन्तुल्ययोगेनाभिधानादियन्निन्दार्था तुल्ययोगिता
॥ २ ॥ प्रतीयमानतुल्यगुणत्वेस्तुत्यर्था यथा। यमः कु-
बेरोवरुणः सहस्राक्षोभवानपि । बिभ्रत्यनन्यविषयां
लोकपालाइतिश्रुतिम् ॥ अत्रयमादयःपञ्चभवन्तोलोक-
पालाइत्यनुक्तमपि तुल्यवस्तुयोगितयैवस्तुत्यर्थमेषा-
म्मिथः सादृश्यम्प्रतीयते। सेयम्प्रतीयमानतुल्यगुणत्वे-
स्तुत्यर्थातुल्ययोगिता ॥ ३ ॥ प्रतीयमानतुल्यगुणत्वएव-
निन्दार्था यथा। राजानमपि सेवन्तेविषमप्युपभुञ्जते।

१ घनो मेघो घनं निबिडम् ॥

रमन्ते च परस्त्रीभिरहो साहसिका नराः ॥ अत्रयोयं से-
वादिर्मानवानां राजविषये स्त्रीषु च वैषम्यहेतुस्तुल्य-
त्वेनयोगः । राजादीनां वा कर्मतादिरूपतयातत्क्रिया-
यां समावेशः सोमीषाम्मिथः सादृश्यम्प्रत्याययन् राज-
सेवापरस्त्रीरत्योर्विषोपभोगतुल्यताङ्गमयतीति सोय-
म्प्रतीयमानतुल्यगुणत्वे निन्दार्थातुल्ययोगिता ॥४॥ अ-
न्येसुखनिमित्ते च दुःखहेतौ च वस्तुनि । स्तुतिनिन्दा-
र्थमेवाहुस्तुल्यत्वे तुल्ययोगिताम् ॥५७॥ सास्तुत्यर्था य-
था । आहूतस्याभिषेकाय विसृष्टस्य वनायच । नमया-
लक्षितस्तस्य स्वल्पोप्याकारविभ्रमः॥अत्र रामस्य राज्या-
भिषेकवनगमनयोः पितुरादेशेन तुल्यरूपतयास्तुतिः
प्रतीयते ॥ ५ ॥ निन्दार्थायथा । यश्चनिम्बम्परशुना
यश्चैनम्मधुसर्पिषा । यश्चैनङ्गन्धमाल्याभ्यां सर्वस्य कटु-
रेवसः ॥ अत्रयः परशुनाछिनत्तियोमुं मधुसर्पिषा सिञ्च-
तियोवागन्धमाल्याभ्यामर्चति । तम्प्रतितुल्यमेवनिम्ब-
स्य कटुत्वमिति समासोक्त्यातदुपमेयस्य निन्दाप्रतीयते
॥ ६ ॥ १० ॥ इति तुल्ययोगिताऽलंकारनिरूपणम् ॥
दोषस्ययो गुणीभावो दोषीभावो गुणस्ययः ॥ सलेशः
स्यात्ततोनान्याव्याजस्तुतिरपीष्यते ॥ ५८ ॥ तत्र दोषस्य
गुणीभावेलेशो यथा । युवैषगुणवान्राजायोग्यस्तेपति-
रूर्जितः । रणोत्सवेमनः सक्तं यस्य कामोत्सवादपि ॥
अत्रयेयमुत्तरार्द्धे राज्ञोवीर्यप्रकर्षस्य स्तुतिः साकन्यायाः
निरन्तरान्भोगान्निर्विविक्षोर्दोषत्वेन प्रतिभासिष्यत

इत्यभिप्रेत्ययोयं विदग्धसख्याराजप्रकोपपरिजिहीर्षया-दोषोपि गुणरूपेणोक्तः सोयन्दोषस्य गुणीभावोनाम-लेशतोल्पतयाशनैरनन्यविदित उच्यमानोलेश इत्युच्य-ते ॥ २ ॥ गुणस्य दोषीभावो यथा। चपलोनिर्दयश्चासौ-जनः किं तेन मेसखि!। आगः प्रमार्जनायैवचाटयोये-नशिक्षिताः ॥ अत्र पूर्वार्द्धेनमानपरिगृहानुगुणंसखीना-मगूतः प्रकाशम्प्रतिज्ञायतदनिर्वाहमाशङ्कमानातदुप-हासम्परिजिहीर्षदोषाभासन्तद्गुणग्राममाह । "आगः प्रमार्जनायैवचाटवोयेन शिक्षिताः" इति सोयङ्गुणस्य दोषीभावोनामलेशो भवति ॥ २ ॥ अन्ये पुनः समस्त-मेवलेशलक्षणमाचक्षते । यत्र दोषस्य गुणीभावो गुणस्य च दोषीभावइति । सोपिद्विधा । समासोक्त्याऽसमासो-क्त्या च । तयोः समासोक्त्या यथा । गुणानामेवदौ-रात्म्याद्धुरि धुर्यो नियुज्यते । असञ्जातकिणस्कन्धः सुखं स्वपिति गौर्गली १॥ अयमपिप्रकोपभयाल्लेशेनैवो-च्यतइति लेशः ॥ ३ ॥ असमासोक्त्या यथा । सन्तः सच्चरितोदयव्यसनिनः प्रादुर्भवद्यन्त्रणाः सर्वत्रैवजना-पवादचकिताजीवन्ति दुःखं सदा । अव्युत्पन्नमतिः कृतेन नसता नैवाऽसताव्याकुलो युक्ताऽयुक्तविवेकशून्य-हृदयोधन्योजनः प्राकृतः ॥ अत्रापि प्रकोपभयादि पूर्व-वत् ॥ अथैषव्यस्तलक्षणत्वेन कस्मान्न लेशइत्यु-च्यते । दोषगुणीभावस्याप्रस्तुतस्तुत्यागुणीभावस्य तु

१ कुत्सितगलवान् ॥

व्याजस्तुत्यापहारात् । व्याजस्तुतिरपि द्विधा । शुद्धा-
मिश्रा च । तयोः शुद्धा यथा । पुंसः पुराणादाच्छिद्य श्री-
स्त्वया परिभुज्यते । राजन्निक्ष्वाकुवंश्यस्य किमिदन्तव यु-
ज्यते । अत्र शुद्धपरदारापहरणलक्षणनिन्दाव्याजेन स्तु-
तेर्विहितत्वादियं शुद्धानामव्याजस्तुतिर्गुणदोषीभावल-
क्षणाल्लेशान्न पृथक् ॥ ५ ॥ मिश्रा यथा । प्रियोऽसि प्रा-
ज्ञोऽसि प्रभुरसि कुलीनोऽस्यसि युवा युवत्यस्त्वामेव ङ्क्ति न-
पतिमुर्वीशा वृणुते । अतश्चैनाङ्कीर्तिं रघुनहुषमान्धातृमहि-
षीमपरामृष्टां वृद्धामधिगततनयो नार्हति भवान् ॥ अत्र स्तु
तिपदमिश्रयैव व्याजगर्हया स्तुतिरिति इयम्मिश्रानाम-
व्याजस्तुतिर्लेशभेदः ॥६॥११॥ इति लेशालंकारनिरूपणम् ॥
कर्त्रादीनां समावेशः सहान्यैर्यः क्रियादिषु ॥ विविक्तश्चा
विविक्तश्च सहोक्तिः सा निगद्यते ॥५९॥ वैसादृश्यवती चे-
यमुच्यमाना मनीषिभिः ॥ सहेवादिप्रयोगेषु ससादृश्या च
दृश्यते ॥६०॥ सा कर्तृविविक्तक्रियासमावेशे यथा । कोकि-
लालापमधुराः सुगन्धिवनवायवः । यान्ति सार्द्धं जनानन्दै-
र्वृद्धिं सुरभिवासराः ॥ अत्र सुरभिवासरा इति कर्तृपदार्थः
केवल एव जनानन्दैः सह वृद्धिप्राप्तिक्रियायां समाविष्ट इति
सेयं विविक्तकर्त्रीक्रियासमावेशा नाम वैसादृश्यवती सहो-
क्तिः ॥१॥ कर्मणा विविक्तक्रियासमावेशे यथा । [1]उम्भसि पि
आइ सम अन्तह विधुरेण भणसि कीस किसि अन्ति । उअ-

---

१ उह्यसे प्रियया समं तथापि धुरो भरस्तेन भणसि किं कृशितइति । उ-
परि भरेण चानतौ मुञ्चति बलीवर्दोप्यङ्गानि ॥

रिभरेगअअणुअमुअइअइल्लोविअङ्घाइम् ॥ अत्र स-
म्बोध्यमानयुष्मदर्थः कर्मतामापन्नजह्रास इति क्रि-
यायाङ्केवलएव प्रियापदार्थेन सहसमाविष्टः । सेयं वि-
विक्तक्रियासमावेशानामवैसादृश्यवतीसहोक्तिः ॥ २ ॥
यत्रानेकोपिकर्त्रादिःप्रविविक्तैःक्रियादिभिः । विविक्त-
भावंलभतेविविक्तासापिकथ्यते ॥६१॥ साकर्तृद्वयस्यपृथ-
क्क्रियासमावेशेयथा । वर्द्धतेसहपान्थानांमूर्च्छयाचूतम-
ञ्जरी । वहन्तिचसमन्तेषामस्रुभिर्मलयानिलाः ॥ अत्र-
चूतमञ्जरीमूर्च्छयासहवर्द्धनक्रियायां मलयानिलाश्चास्रुभिः
सहवहनक्रियायांपृथक्पृथग्विवेकेनैव कर्तारःसमाविष्टाः
सेयमपिविविक्तकर्तृक्रियासमावेशैरवैसादृश्यवतीसहो
क्तिरेवङ्कर्मणोपिविवेकेद्रष्टव्या ॥३॥ कर्तृणामविविक्तक्रि
यासमावेशेयथा । धीरेणसमञ्जामाहिअएण समंअणिट्-
ठिआउवएसा । उच्छाहेणसहभुआआहेणसमङ्गलन्तिसे-
उल्लावा१॥ अत्रयामादीनांबहूनांधैर्यादिभिःसहगलनक्रि-
यायामेकस्यामेवाविवेकतःसमावेशादृश्यते । सेयमवि-
विक्तकर्तृक्रियासमावेशानामवैसादृश्यवतीसहोक्तिः॥४॥
कर्मणाविविक्तक्रियासमावेशेइवशब्देनसहशब्दस्यस्था-
नेससादृश्यायथा । धीरंवजलसमूहन्तिमिणिवहंमिव-
सपक्खपव्वअलोअम् । णइसोत्तेव्वतरङ्गेरआणाइंवग-
रुअगुणसआइंवहन्तम्२॥अत्रधैर्येणजलसमूहस्यतिमिनि

१ धैर्येण समं यामा हृदयेन सममनिष्ठिता उपदेशाः । उत्साहेन सह भुजा बाष्पेण समं गलन्ति अस्या उल्लापाः ॥ २ धैर्यमिव जलसमूहं तिमिवहमिव सपक्षपर्वतलोकम् । नदीस्रोतांसीव तरङ्गान् रत्नानीव गुरुकगुणशतानि वहन्तम् ॥

वहनसपक्षपक्षपर्वतलोकस्यनदीस्रोतोभिस्तरङ्गाणांरत्नैश्च गुरुकगुणशतानांमिथःप्रतीयमानंसादृश्यमिवेन द्योत्यते। सहार्थश्चवाक्यार्थसामर्थ्येनलभ्यत इतिसेयन्धैर्यादीनांबहूनांवहनक्रियायामेकस्यामेवविवेकतः कर्मभूतानामावेशोनाविविक्तकर्मक्रियासमावेशानाम ससादृश्यासहोक्तिः ॥ ५॥आदिग्रहणाद्गुणसमावेशोपिगुणिनःससादृश्यायथा। सहदीर्घाममश्वासैरिमाःसम्प्रतिरात्रयः । पाण्डराश्चममैवाङ्गैःसहताश्चन्द्रभूषणाः ॥ अत्ररात्रयोदीर्घाःपाण्डराश्चेतिदैर्घ्येणपाण्डरत्वगुणयोरविवेकेनरात्रिषुरात्रीणाञ्च तयोः श्वासैरङ्गैश्चसहसमावेशो दृश्यते । सेयमविविक्तगुणसमावेशानाम इवाद्यप्रयोगेपिससादृश्यासहोक्तिः ॥ ६ ॥ १२ ॥ इति सहोक्त्यऽलङ्कारनिरूपणम् ॥ द्रव्यक्रियागुणादीनां क्रियाद्रव्यगुणादिषु ॥ निवेशनमनेकेषामेकतः स्यात्समुच्चयः ॥ ६१ ॥ इतरेतरयोगोयः समाहारोयउच्यते ॥ अन्वाचय इहान्योयः सोपिनान्यः समुच्चयात् ॥ ६२ ॥ द्विपदाश्रयश्च सस्यात्सस्याद्बहुपदाश्रयः ॥ उभयाश्रयश्च सस्यात्सस्यादनुभयाश्रयः ॥ ६३ ॥ त्रयः प्रतिपदं वास्युर्द्योतकैरुत्तरत्रवा ॥ पदैशुद्धाश्च मिश्राश्चतुरीयोद्योतकंविना ॥ ६४ ॥ तत्र द्विपदाश्रयः प्रतिपदाश्रितद्योतकत्वेन द्रव्ययोः क्रियासमुच्चयो यथा। निर्यता परिजनेन बोधितः स्फूर्जमानरुचिरुल्लसद्दृशः । द्वारसंवलनमांसलेऽधिकन्दीपकश्चमदनश्चदिद्युते ॥ अत्र दीपकश्चमदनश्चेतिद्वेद्रव्येप्रतिपदञ्चकारेणैकस्यांदिद्युत इति

क्रियायां समुच्चयेन निवेशित इति नदिद्युताते इति द्विवचनम्। दीपकमदनाविति चार्थे द्वन्द्वश्च नभवति॥१॥ द्विपदाश्रय एवोत्तरपदाश्रितद्योतकेन क्रिययोर्द्रव्य-समुच्चयो यथा। निकामंक्षामाङ्गी सरसकदलीगर्भसुभगा कलाशेषामूर्त्तिः शशिनइव नेत्रोत्सवकरी। अवस्थामा-पन्ना मदनदहनोद्दाहविधुरामियन्नः कल्याणी रमयति मनः कम्पयतिच ॥ अत्ररमयति, कम्पयतिचेति द्वेक्रि-ये उत्तरपदवर्त्तिना चकारेणैकस्मिन्मनोलक्षणे द्रव्ये कर्मणिसमुच्चयेनैककालमेव निवेशिते तेनायमन्वाचयोन भवति ॥ २ ॥ बहुपदाश्रयःप्रतिपदाश्रितद्योतकत्वेन गुणानांक्रियासमुच्चयोयथा। अप्राकृतस्तु कथमस्तु न-विस्मयाय यस्मिन्नुवास करुणाच कृतज्ञताच। ल-क्ष्मीश्चसात्विकगुणज्वलितञ्चतेजो धर्मश्चमानविजयौ च पराक्रमश्च ॥ अत्रकरुणाचकृतज्ञताचेत्यादयोगुणाः प्र-त्येकम्बहुपदाश्रयत्वेनचकारेणैकस्यामुवासेति क्रिया-यां समुच्चयेन निवेश्यन्ते । तेन गुणेषुबहुवचनन्नभ-वति। करुणाकृतज्ञतादीनां द्वन्द्वसमासश्च नभवति। य-स्मिन्नित्यपेक्षायाञ्चायमेव गुणानान्द्रव्यसमुच्चयो भव-ति॥३॥ बहुपदाश्रय एवोत्तरपदाश्रितद्योतकत्वेन गुणा-नांक्रियासमुच्चयो यथा। रूपमप्रतिविधानमनोज्ञम्प्रे-मकार्यमनपेक्षविकाशि। चाटुचाकृतकसम्भ्रममासाङ्का-र्मणस्त्वमगमद्रमणेषु ॥ अत्ररूपम्प्रेमचाटुचेतिबहवो-गुणाउत्तरपदाश्रयेणचकारेणाऽगमदित्येकस्यां क्रिया-

यां समुच्चयेन निवेश्यन्ते। तेनागमन्निति बहुवचनं, द्व-
न्द्वो वा न स्यात्। कार्मणत्वमित्यपेक्षायाञ्चायमेव गुणा-
नाञ्जातिसमुच्चयो भवति ॥ ४ ॥ उभयपदाश्रय उत्तरप-
दाश्रितद्योतकत्वेन द्रव्यगुणानाङ्क्रियासमुच्चयो यथा।
विचिन्त्यमानम्मनसाऽपि देहिनामिदं हि लोकेषु चका-
स्तिदुर्लभम्। निशा स चन्द्रा मदिरा च सोत्पला प्रियानु-
रागोऽभिनवश्च यौवनम्॥ अत्र निशामदिरा च द्रव्ये, अ-
नुरागो यौवनञ्च गुणौ बहुष्वपि पदेषु द्वन्द्वे सत्यपि उत्तर-
पदाश्रयनिवेशिना चकारेण चकास्तीत्येकस्याङ्क्रियाया-
न्निवेश्यन्ते। तेन चकासतीति बहुवचनं, समासश्च न
स्यात्। अयमेव च दुर्लभमित्यपेक्षायान्द्रव्यगुणानाङ्गुण-
समुच्चयो भवति। तेऽमी त्रयोऽपि शुद्धाः ॥५॥ मिश्रः पुनरुभ-
यपदाश्रयवद्बहुपदाश्रयश्च भवति। यथा। आदित्यच-
न्द्रावनिलोऽनलश्च द्यौर्भूमिरापो हृदयं यमश्च। अहश्च रा-
त्रिश्च उभे च सन्ध्ये धर्मश्च जानाति नरस्य वृत्तम्॥ अत्रादित्य
चन्द्रादयो द्रव्यविशेषा उत्तरपदनिवेशिना प्रतिपदनिवेशि
ना च चकारेण जानातीति एकस्यां क्रियायान्निवेश्यन्ते। ते
न च बहुवचनाभावे समासाभावे चैष मिश्रः समुच्चयभेदो भ-
वति ॥६॥ अनुभयाश्रयस्तु समुच्चयोऽन्वाचयश्च न भवति।
द्वयोरपि दीपकेन विषयापहारात्। तेनेतरेतरयोगसमाहा-
रयोः स उदाह्रियते। तत्रेतरेतरयोगो यथा। सावशेषपद-
मुक्तमुपेक्षा स्रस्तमाल्यवसनाभरणेषु। गन्तुमुत्थितमका-
रणतः स्म द्योतयन्ति मदविभ्रममासाम्॥ अत्रोक्तमुपेक्षोत्थि-

तमित्येतेक्रियाद्रव्यविशेषाइतरेतरयोगेनमदविलासद्योतनक्रियायान्निवेश्यन्ते । तेनद्योतयन्तीतिबहुवचनम् । द्वन्द्वसमासश्चतद्विवक्षायांस्यात् । नचेहद्योतकश्चकार उत्तरपदेप्रतिपदंविद्यतइतिसोयमुभयाश्रयःसमुच्चयभेदः ॥ ७ ॥ समाहारोयथा । वपुर्विरूपाक्षमलक्ष्यजन्मतादिगम्बरत्वेननिवेदितंवसु । वरेषुयद्वालमृगाक्षि!मग्यतेतदस्ति किं व्यस्तमपि त्रिलोचने ॥ अत्र यद्वरेषुमृग्यतेतत्किं त्रिलोचने व्यस्तमप्यस्तीति ब्रुवन्वपुर्वयोवसूनां समुदायं समस्तमेवाऽभिसन्धत्ते। तस्यचाविर्भूतावयवभेदत्वेनेतरेतरयोगस्तिरोहिताऽवयवभेदत्वेन समाहारः । स इह यदित्येकवचनान्तेन नपुंसकेन च कथ्यते । न चेहक्कचिदपिचकारोस्तीति सोयमप्यनुभयाश्रयः समुच्चयभेदः ॥८॥ चयोगेपीतरेतरयोगः स उत्तरपदयोगेपि यथा। तत्क्षणं विपरिवर्त्तितह्रियोर्नेष्यतोः शयनमिद्धरागयोः । साबभूववशवर्त्तिनी द्वयोः शूलिनः सुवदना मदस्यच ॥ अत्रशूलिनोमदस्यचेत्युत्तरपदाश्रयेण चकारेणद्वौद्रव्यविशेषौ वशवर्त्तिनीत्येतस्मिन्गुणपदेयदीतरेतरयोगेन सन्निवेश्येतेतदाविपरिवर्त्तितह्रियोरित्यादिषु द्वन्द्वयोरितिपर्यन्तेषुद्विवचनमेकशेषोवानस्यात् । सोयमपिद्विपदाश्रय उत्तराश्रितद्योतकश्च समुच्चयभेदः ॥ ९ ॥ एवमपरेपीतरेतरयोगेऽपि चयोगाउदाहार्याः । समाहारस्तु च योगविषयोविचिन्त्यमानामित्यादिनैवोक्तः । अन्वाचयस्तु क्रियाविषयएपोपपद्यते । तत्रचोत्तरपदाश्रय एव

चकारोभवति । यथा । गच्छन्तीनां रमणवसतिंयोषि-
तान्तत्रनक्तं रुद्धालोकेनरपतिपथेसूचिभेद्यैस्तमोभिः ।
सौदामिन्याकनकनिकषस्निग्धयादर्शयोर्वी तोयोत्सर्गस्त-
नितमुखरो माच भूर्विक्लवास्ताः ॥ अत्रपूर्वन्दर्शयेत्युर्वी
कर्मविषयत्वेन क्रियामुपन्यस्य तोयोत्सर्गस्तनितमुख-
रोमाचभूरिति तत्कर्त्तृयैव धर्मिण्यकर्मकङ्क्रियान्तरम-
न्वाचीयते । सोयम्भिन्नकालत्वभिन्नविषयत्वाभ्याम-
न्वाचयः समुच्चयाद्भिन्नो भवति। नन्वेवं यदि समुच्चयेपि
भिन्नविषये क्रिये तुल्यकालमेव प्रयुज्येते को दोषः स्यान्न
कश्चित्। किन्तु तस्य समुच्चयमुद्रयाविषयोपहृतइति नो-
दाह्रियते ॥ १० ॥ समासेपीतरेतरयोगादनुभयाश्रितः
समुच्चयभेदो यथा । वागर्थाविवसम्पृक्तौवागर्थप्रतिप-
त्तये। जगतः पितरौ वन्देपार्वतीपरमेश्वरौ ॥ अत्रवा-
गर्थाविवेतिपरवल्लिङ्गता सम्पृक्तौपितरावित्यत्रयोयं[पु-
मान्स्त्रिया,पितामात्रा] इतिचैकशेषः । तेनैषविशेष-
लक्षणयोगाद्वक्रोक्तित्वे सत्यलङ्कारतां लभतइति। नध-
वखदिरादिष्वतिप्रसङ्गइत्ययमपिसमुच्चयभेदः ॥ ११ ॥
समाहारयोगादपियथा । स्त्रीणांहावैः कृतेयत्रनिज
कार्यैमनोभुवा। अक्षिभ्रुवनिभन्न्यस्तन्तन्मुखे शरकार्मुक-
म्॥ अत्रापियोयमक्षिभ्रुवंशरकार्मुकमित्येतयोः[प्राणितू-
र्यसेनाङ्गानाम्]इति [वाङ्मनसाक्षिभ्रुव]इतिचविशेषल-
क्षणयोगस्तेनधवखदिरपलाशमित्येवमादिषु नाऽतिप्रस-
ङ्गो भवति॥ १२ ॥ १३ ॥ इतिसमुच्चयालङ्कारनिरूपणम्॥

विधिनाथनिषेधेन प्रतिषेधोक्तिरत्रया । शुद्धामिश्रा च साक्षेपोरोधोनाक्षेपतः पृथक् ॥ ६५ ॥ तत्र विध्याक्षेपः शुद्धोयथा । गच्छगच्छसिचेत्कान्त!पन्थानःसन्तुतेशिवाः । ममापि जन्मतत्रैवभूयाद्यत्र गतोभवान् ॥ अत्रगच्छेत्यस्य विधिवाक्यस्य ममापिजन्मतत्रैव भूयादित्याशिषाऽनुकूलतयैवमरणसूचनान्निषेधःक्रियतइतिशुद्धोऽयं विध्याक्षेपः ॥ १ ॥ मिश्रोयथा । अलंविवादेन यथा श्रुतन्त्वयातथाविधस्तावदशेषमस्तुसः । ममात्रभावैकरसम्मनः स्थितन्नकामवृत्तिर्वचनीयमीक्षते ॥अत्रालंविवादेनेति निषेधेनतथाविधः सोऽस्त्वितिविधिनाचतन्मतमवस्थाप्य ममात्रभावैकरसम्मनःस्थितमितिविधिनानकामवृत्तिर्वचनीयमीक्षतइतिप्रतिषेधेनचयत्पुनराक्षिपतिसोयं विधिनिषेधाभ्यांविधिमिश्रआक्षेपोभवति ॥२॥ निषेधाक्षेपःशुद्धोयथा । कुतःकुवलयङ्कर्णेकरोषिकलभाषिणि! । किमपाङ्गमपर्याप्तमस्मिन्कर्मणिमन्यसे ॥ अत्रकुतःकुवलयङ्कर्णेकरोषीत्यस्यनिषेधवाक्यस्यकिमपाङ्गमित्यादिनाप्रश्नपरेणापिनिषेधपर्यवसायिनावाक्येनसमर्थनंक्रियतइत्ययंशुद्धोनिषेधाक्षेपः ॥ ३ ॥ मिश्रोयथा । सच्चङ्गुरुआगिरिणोकोभणइजलासआणगम्भीरा । धीरेहिंउवमाउन्तह विहुमहणत्थिउच्छाहो१ ॥ अत्रसत्यङ्गुरवोपिगिरयइति विधिः,कआहजलाशयानगम्भीराइतिपरमताक्षेपः। ता-

१ सत्यं गुरवो गिरयः कोभणतिजलाशयानगम्भीराः ॥ धीरै रुपमात तथाविधं ममनास्ति उत्साहः ॥ १ ॥

भ्याङ्गिरीणांगुरुत्वं, सागराणाङ्गाम्भीर्यंयदयमुत्तरार्द्धेन धीरापेक्षयानिषेधति । अन्यापेक्षयातत्तदेवविधत्ते । सए षमिश्रोनिषेधाक्षेपः ॥४॥ रोधोनाक्षेपतःपृथगित्युक्तन्त- त्रैतावान्विशेषः। क्रियासूत्तिष्ठमानस्यवारणङ्कारणेनयत्॥ उक्तयायुक्त्याचरोधोयआक्षेपःसोयमुच्यते॥६६॥प्रतिकूलो- नुकूलश्चविधौरोधोऽभिधीयते॥निषेधेप्युक्तियुक्तिभ्यान्द्वि- प्रकारःसकथ्यते॥६७॥तत्रोक्त्याविधौप्रतिकूलोयथा । कि- ञ्जम्पिपएणदहमुहजम्पिपश्रसरिसंअणिववहन्तरसभरम् । एत्तिश्रजम्पिपअसारणिणहणंश्रण्णेविवज्जधारासुगआ१॥ अत्रकिमःप्रतिकूलवाचित्वाद्वचनवृत्त्यैवजलपन्दशाननश्चि- त्ररथेनरुद्धः । कारणञ्चवज्रप्रभावकीर्तनादितिप्रातिकूल्ये- नोपन्यस्तम् । सोयमौक्तःप्रतिकूलश्चविध्याक्षेपोरोधइत्यु च्यते॥५॥ उक्त्यैवविधावनुकूलोयथा । हन्तुं ठिवमग्गमा- णोहन्तुं तुरिश्रस्सश्रप्पणादहवअणम्।किंइच्छसिकाउं सेप वअवइपिअन्तिविप्पिअं रहुवइणम्२॥अत्रापिकिमःप्रति षेधवाचित्वाद्वचनवृत्त्यैवदशाननवधायोत्तिष्ठमानःसुग्रीवो जाम्बवतारुद्धःकारणम्पुनरानुकूल्येनैवोक्तम् । किमेतत्त्व- यारघुपतेःप्रियरूपंविप्रियमुपक्रान्तमिति सोयमौक्तोऽनु- कूलश्चविध्याक्षेपोरोधइत्युच्यते ॥६॥ विधावेवयुक्त्याऽनु कूलःप्रतिकूलश्चयथा । गच्छेतिवक्तुमिच्छामित्वत्प्रियम्म

---

१ किंजल्पितेन दशमुखजल्पितसदृशमनिवध्नती भरम् ॥ एतावज्जल्पितसारं निधनमन्येपिवज्रधारासुगताः । २ हन्तुं विमार्गमाणो हन्तुं त्वरितस्यात्मना- दशवदनम्।। किमिच्छसिकर्तुमस्य प्लवगपते प्रियमितिविप्रियं रघुपतेः ।

तिप्रयैषिणी। निर्गच्छति मुखाद्वाणी मागाइति करोमि किम् ॥ अत्रयथोक्तमुक्त्वाकिङ्करोमीत्यानुकूल्येनैवाह । अत्रकिमः प्रश्नार्थत्वेपि युक्त्यानिषेधार्थत्वङ्गम्यते। सोयं यौक्तोनुकूलोयौक्तश्च विध्याक्षेपोरोधइत्युच्यते । अय-मेवचास्यावैयात्योक्तिपक्षे यौक्तप्रतिकूलविध्याक्षेपोरो-धोभवति ॥ ७ ॥ युक्त्यानिषेधे प्रतिकूलोयथा । प-उरजुआणोगामोमहुमासोजोव्वणंपईठेरो । जण्णसुरा-साहीणा असईमाहोउकिम्मरउ[1] ॥ अत्रासतीमाभव-त्वितियः प्रतिषेधमाह। सप्रचुरयुवाग्रामइत्यादिकारण-मुक्त्वाततः किम्म्रियतामिति प्रातिकूल्येन रुध्यते। तत्र किमः काक्वासासूयप्रश्नार्थस्य युक्त्यानिषेधार्थत्वङ्गम्यते। सोयं यौक्तः प्रतिकूलनिषेधाक्षेपोरोध इत्युच्यते॥ ८॥ युक्त्यैवनिषेधेनुकूलोयथा। कह माझिज्जउ मज्झोइ-मीअ कन्दोट्टदलसरिच्छेहिम् । अच्छीहिओ ण दीसइ घणत्थणभरसद्धपसरेहिम्[2] ॥अत्रस्तनादिवदस्यामध्यो-पि माक्षीयतामिति निषेधवादीकेनचिदानुकूल्येन रु-ध्यते । कथमयम्माक्षीयतामिति योस्याः कुवलयदल सदृशाभ्यां लोचनाभ्याङ्घनस्तनरुद्धप्रसराभ्यान्न दृश्यते। इयं ह्येताभ्यामन्यमीक्षमाणा यन्नपश्यति सोहमिवम-ध्योपि क्षीयमाणोलक्ष्यते। तत्रकिमः प्रश्नार्थत्वे निषेधा-

---

१ पौरयुवाग्रामोमधुमासोयौवनं पतिर्वृद्धः। यत्र सुरास्वाधीना असती मा भवतु किं म्रियताम् ॥ २ कथं माक्षीयतांमध्यएतस्याः कंदोट्टदलसदृशाभ्याम्। अक्षिभ्यां यो न दृश्यते घनस्तनभररुद्धप्रसराभ्याम् ॥ कन्दोट्टं कुवलयम् ॥

र्थत्वङ्गम्यते। सोयंयौक्तोऽनुकूलश्चनिषेधाक्षेपोरोधइत्युच्यते ॥९॥ निषेधएवोक्त्याप्रतिकूलोऽनुकूलश्चयथा। भ्रुकुटिरारचिता गतमग्रतो हृतमथाननमुक्तमसाधुवा। इयमतिप्रभुता क्रियते बलादकुपितोपि हि यत्कुपितोजनः॥ अत्राऽकुपित्तोपिकुपितः क्रियतइति योऽयंनिषेधाक्षेपरूपउपालम्भस्तत्रच भ्रुकुटिरारचितेत्यादिवैयात्येन प्रतिकूलंकारणमुपन्यस्य सेयमतिप्रभुतासौयम्बलात्कारइति काक्वावाचनिकमेवोपालम्भमभिधत्ते। तेनायमौक्तः प्रतिकूलश्चनिषेधाक्षेपोरोधइत्युच्यते। अयमेवचास्या अवैयात्योक्तिपक्षे स्वरूपाख्यानादौक्तोऽनुकूलनिषेधाक्षेपोरोधोभवति॥१०॥यदातुकारणमुपन्यस्यापिक्रियासूत्तिष्ठमानोनरुध्यते। तदाक्षेपएव नरोधः। तद्यथा। गमिआकलम्बवाआदिठ्ठम्मेहन्धआरि अङ्गअणअलम्। सहिओगज्जिअसद्दोतहविहुसेणत्थिजीविएआसंघो १॥ अत्र कदम्बवातातिवाहनादीनाञ्जीविताध्यवसायहेतूनामुपन्यासेपिक्रियासूत्तिष्ठमानोनरुध्यते। कथमयन्नजीवतीति। किन्तर्हिकारणमेवाक्षिप्यते। तथापिनास्त्यस्यजीवितेध्यवसायइति। सोयमाक्षेपएवनरोधः॥ ११॥ क्रियोद्यतस्याऽपि वारणेकारणानामन्यपरत्वेरोधोनभवति। यथा। घनञ्चबहुलभ्यन्ते सुखंक्षेमंचवर्त्मनि। नचमेप्राणसन्देहस्तथापिप्रिय!मास्मगाः२॥अत्रयद्यपियात्रोद्य-

१ गमिताः कदम्बवाताहृष्टं मेघान्धकारित गगनतलम्। सोढोगर्जितशब्दस्तथापि खल्वस्यानास्तिजीविते आशंसा॥ २ नमाङ्योगे इति अडभावः॥

तः प्रियोरुध्यते प्रभूतार्थलाभादीनाङ्कारणानां गमनंपरत्वमेवन निवारणपरत्वमतोयन्नरोधः किन्तर्हि आक्षेप एवभाति ॥ १२ ॥ १४ ॥ इति आक्षेपालङ्कारनिरूपणम् । ज्ञेयःसोऽर्थान्तरन्यासोवस्तुप्रस्तुत्यकिञ्चन ॥ तत्साधनसमर्थस्यन्यासोयोऽन्यस्यवस्तुनः ॥ ६८ ॥ सउपन्यस्तवस्तूनां साधर्म्येणचकथ्यते ॥ वैधर्म्येणचविद्वद्भिर्वैपरीत्ये नकुत्रचित् ॥६९॥ तेषुसाधर्म्येणयथा । पयोमुचः परीतापं१हरन्त्येतेशरीरिणाम् । नचात्मलाभोमहतांपरदुःखोपशान्तये ॥ अत्रपरीतापहरणक्षमस्यजलदाख्यस्यमहावस्तुनोन्यसनं विधायतत्साधनसाधर्म्येणैवतत्साधनक्षमम्महापुरुषलक्षणंवस्त्वन्तरमुपन्यस्यति । सोयं साधर्म्येणार्थान्तरन्यासः ॥ १ ॥ वैधर्म्येणयथा । प्रियेण सङ्ग्रन्थ्य विपक्षसन्निधावुपाहितां वक्षसिपीवरस्तने । स्रजन्नकाचिद्विजहौ जलाविलां वसन्ति हि प्रेम्णिगुणा न वस्तुनि॥ अत्रापि प्रियतमेनस्वयङ्कान्ताहृदये समारोपितायाः स्रजःप्रेमकारणमुपन्यस्यजलाविलदोषवत्याअपिस्रजोयदत्यागकारणन्तदिहवैधर्म्यद्वारेण प्रतिपादितमतोवैधर्म्येणाऽयमर्थान्तरन्यासः ॥२॥ विपर्ययेणयथा । जोजस्स हिअअदयिओ दुःखन्देन्तोवि सोसुहन्देइ।दइअणहदूनि आणविवठ्ठइथणआणरोमञ्चो२॥ अत्रसाधनसमर्थवस्तुप्रथमतएवोपन्यस्यपश्चात्तत्साध्य मभिहितमितिविप-

१ उपसर्गस्यघञ्यमनुष्ये बहुलमिति पूर्वपदस्य दीर्घः ॥ २ ॥ योयस्य हृदयदयितो दुःखंददन्नपिससुखंदत्ते । दयितनखदूनितयोरपिवर्द्धतेस्तनयोरोमाञ्चः ॥

र्यासादयंविपर्ययोनामार्थान्तरन्यासः ॥ ३ ॥ प्रोक्तोयस्तू भयन्यासोऽर्थान्तरन्यासएवसः ॥ सप्रत्यनीकन्यासश्चप्र- तीकन्यासएवच ॥७०॥ तेषूभयन्यासोयथा। तेविरलास- प्पुरिसाजेअभणन्ताघडन्तिकज्जलावे। थोश्रव्विश्रतेवि दुमाजेअमुणिअकुसुमणिग्गमादेन्तिफलम् १॥ अत्रवि- द्यमानमपिसाध्यसाधनभावमप्रतिपाद्ययदुभयोर्वस्तुनो न्र्यसनं सोयमुभयन्यासः ॥ ४ ॥ प्रत्यनीकन्यासोयथा। विरलाउवअरिङ्गच्चिअणिरवेक्खाछलहरव्ववद्धन्ति। भिज- ज्झन्तिताणविरहेविरलच्चिअसरिप्पवाहव्व२॥ अत्रय- दिदमुपकृत्यानपेक्षितप्रत्युपकाराणाङ्गमनं यच्चाकृतप्र- त्युपकाराणान्तद्विरहेऽवसादनं तदुभयमपि जलधरस- रित्प्रवाहयोरन्योन्यातिशयितयोरुपन्यस्यमानम्प्रत्यनी- कन्यासोभवति ॥५॥ प्रतीकन्यासोयथा। का कथा बाण सन्धानेज्याशब्देनैवदूरतः। हुङ्कारेणैवधनुषः सहि विघ्ना- नपोहति ॥ अत्रविघ्नप्रोत्सारणसमर्थाया बाणमोक्षण लक्षणायाः क्रियायाः प्रथमावयवभूतज्याशब्दन्धनुषोहु- ङ्कारमिवेति तत्साधनमुपन्यस्य प्रतीकन्यासनामानम- र्थान्तरन्यासमभिधत्ते ६ ॥१५॥ इतिअर्थान्तरन्यासालं कारनिरूपणम् ॥ गुणजातिक्रियादीनांयत्रवैकल्यदर्शन- म् ॥ विशेषदर्शनायैवसाविशेषोक्तिरिष्यते ॥७१॥ प्रत्ये-

१विरलाः सत्पुरुषाये अभणितावटन्ते कार्यजाभि। स्वल्पाएव तेऽपि द्रुमाअ- ननुमितकुसुमनिर्गमाददतेफलम् ॥ २विरलाउपकृत्यएवानिरपेक्षाजलधाराइव वर्तन्ते। क्षीयन्ते तेषांविरहे विरलाएव सरित्प्रवाहा इव ॥

तव्योऽभिधेयेचसाविशेषस्यकारणे ॥ वैकल्यादर्शनेनाऽपि क्वचिदप्युपपद्यते ॥ ७२ ॥ सागुणवैकल्येनयथा । न कठोरन्नवातीक्ष्णमायुधम्पुष्पधन्वनः । तथापिजितमेवाभूदमुनाभुवनत्रयम् ॥ अत्रातीक्ष्णेनाकठोरेणचायुधेन पुष्पधन्वात्रीणिजगन्ति विजयतइतितस्यप्रभावातिशयः प्रतीयते । सेयम्प्रतीयमानविशेषहेतुर्गुणवैकल्यवतीविशेषोक्तिः ॥१॥ जातिवैकल्येनयथा । न देवकन्यका नाऽपिगन्धर्वकुलसंभवा । तथाप्येषा तपोभङ्गंविधातुं वेधसोप्यऽलम् ॥ अत्रदेवकन्यकादित्वाभावेप्येषावेधसोऽपि तपोभङ्गंविधातुमलमितिवर्णनीयोरूपातिशयः प्रतीयते । सेयम्प्रतीयमानविशेषहेतुर्जातिवैकल्यवती विशेषोक्तिः ॥ २ ॥ क्रियावैकल्येनयथा । नबद्धाभ्रुकुटिर्नाऽपिस्फुरितो रदनच्छदः । नच रक्ताभवद्दृष्टिर्जितञ्चद्विषतां कुलम् ॥ अत्रभ्रूभङ्गादेरभावेपियोयन्द्विषताञ्जयस्तेनवर्णनीयस्यप्रतापातिशयः प्रतीयते । सेयम्प्रतीयमानविशेषहेतुः क्रियावैकल्यवतीविशेषोक्तिः ॥ ३ ॥ आदिग्रहणाद्द्रव्यवैकल्येनयथा । नरथानचमातङ्गानहयानचपत्तयः । स्त्रीणामपाङ्गदृष्टैवजीयतेजगतांत्रयम् ॥ अत्ररथादेरभावेपि जगत्त्रयविजयहेतुः स्त्रीणामपाङ्गावलोकनमभिधीयते । सेयमभिधेयविशेषहेतुर्द्रव्यवैकल्यवतीविशेषोक्तिः ॥ ४ ॥ द्रव्यस्यापिवैकल्येनयथा । एकचक्रोरथोयन्ताविकलो विषमाहयाः । आक्रामत्येवतेजस्वीतथाप्यर्कोजगत्त्रयम् ॥ अत्ररथादीनान्द्रव्याणामेकचक्रत्वादिभिर्वैकल्येपि यदे-

तद्भगवतोभास्करस्य भुवनत्रयाक्रमणन्तस्येह तेजस्वि-
ताहेतुरभिधीयते । सेयमभिधेयविशेषहेतुर्वैकल्यवद्द्र-
व्यानामाऽपराविशेषोक्तिः ॥५॥ द्रव्यस्ययोगायोगाभ्या-
मवैकल्पेनापिक्वचिद्देषाविशेषायाऽविशेषायच यथा । अ-
यन्तयारथक्षोभाद्दंसेनांसोनिपीडितः । एकःकृतीशरीरे-
स्मिन्शेषमङ्गंभुवोभरः ॥ अत्रायन्तयारस्पृष्टोंसः सपुण्यवां
स्तयाचाऽस्पृष्टं शेषमङ्गम्मेनिरर्थकमिति योऽयमवैकल्यद-
र्शनेऽपि विशेषस्तेनैषा हेतुमत्यपि हेतुमता विशेष्यमाणा
यथोक्ता विशेषोक्तिर्भवति । यापुनरिहोर्वश्यामितोवा-
क्याद्गुणादिविशिष्टाऽवगतिःसापर्यायोक्तिर्नविशेषोक्तिः॥
६ ॥ १६ ॥ इतिविशेषालङ्कारनिरूपणम् ॥ क्रियाकारक
सम्बधिसाध्यदृष्टान्तवस्तुषु ॥ क्रियापदाद्युपस्कारमाहुः
परिकरम्बुधाः ॥ ७३ ॥ तेषुक्रियापरिकरोयथा । ववसि-
णिवेइअत्थोसोमारुइलद्धपच्चआगअहरिसम् । सुग्गीवे-
णउरत्थलवणमालामलिअमहुअरंउवऊढो१ ॥ अत्रमा-
रुतिलब्धप्रत्ययागतहर्षमित्यनेन,उरःस्थलवनमालामृदि-
तमधुकरमित्यनेनचोपगूहनक्रियायाःपरिकरितत्वादयङ्
क्रियापरिकरः ॥ १ ॥ कारकपरिकरोयथा । पढिआअ-
हत्थसिठिलिअणिरोहपण्डुरसमूसत्तकवोला । पेल्लिअ-
वामपओहरविसमुण्णाहिणत्थणीजणअसुआ२॥ अत्रह-

१ व्यवसायनिवेदितार्थः समारुतिर्लब्धप्रत्ययागतहर्षम् । सुग्रीवेणउरः स्थलव-
नमालामृदितमधुकरमुपगूढः ॥ २पतिताच हस्तशिथिलितनिरोधपाण्डुरसमु-
च्छ्वसत्कपोला । प्रेरितवामपयोधरविषमोन्नतचिणस्तनीजनकसुता ॥

स्तशिथिलितनिरोधपाण्डुरसमुच्छ्वसत्कपोलेत्यनेन, प्ररि-
त्वामयोधरविषमोन्नतदक्षिणस्तनीत्यनेनच, जनकसुतेति
चकारकपदस्यपरिकरितत्वादयङ्कारकपरिकरः॥२॥सम्ब-
न्धिपरिकरोयथा॥ उम्मूलिआणखुलिआउक्खिपन्ताणउ-
ज्जअंओसरिआ॥खिज्जन्ताणणिराआगिरीणमग्गेणपत्थि-
आणइसोत्ता॥१॥अत्रोध्रियमाणगिरिसम्बन्धिनोप्रयोजका-
अपिनदीप्रवाहविशेषणैरुपस्कृताइतिसम्बन्धिपरिकरोय-
म्॥३॥ साध्यपरिकरोयथा। धीरंहरइतिसाओविणअंजो-
व्वणमओअणङ्गोलज्जम्। एक्कन्तगहिअवक्खोकिंसीउउ-
जण्ठवेइवअपरिणामो॥२॥ अत्रगतवयसोनधैर्यंनविनयो
नलज्जेतिसाध्यम्। विषाद, यौवन, मदाऽनङ्गक्रियाद्दृष्टान्तै-
रुपस्कृतमितिसाध्यपरिकरोयम्॥४॥दृष्टान्तपरिकरोयथा।
मज्झट्ठिअधरणिहरच्छिज्जइअसमुद्दमण्डलंउव्वेलम्। र-
इरहवेअविअलिअम्पडिअंविअउक्खडक्खके।डिच्चक्कम्॥३॥
अत्रप्रक्षिप्तमन्दरसमुद्रोदाहरणभूतंरविरथचक्रमुत्कटा-
क्षकोटीतिविशेषणेनसाम्यसिद्धयेपरिकरितमितिदृष्टान्त-
परिकरोयम्॥५॥वस्तुपरिकरोयथा। देवीपुत्रमसूत नृत्य-
तगणाः!किन्तिष्ठतेत्युद्भुजेहर्षाद्भृङ्गिरिटावुदाहृतगिराचा
मुण्डयालिङ्गिते। पायाद्वोजितदेवदुन्दुभिघनध्वानःप्रवृ-

१ उन्मूलितानखण्डिताउत्क्षिप्ता नच ऋजुकं प्रहृताः। निर्यान्तीननिरापा गिरीणां मार्गेणप्रस्थितानदीप्रवाहाः॥ २ धैर्यंहरति विषादोविनयंयौवनमदोऽनङ्गोलज्जाम्। एकान्तगृहीतपक्षः किंशिष्यतु यत्स्थापयति वयः परिणामः॥ ३मध्यस्थितधरणिधरं चीयते च समुद्र मण्डलमुद्वेलम्। रविरथवेगविगलितं पलितमिवोत्कटाक्षकोटिं चक्रम्॥

त्तस्तयोरनयोन्याङ्गनिपातजर्जरतरस्थूलास्थिजन्मारवः॥ अत्रचामुण्डाभृङ्गिरिटिपरिष्वङ्गसङ्घट्टितपरस्परहृदयास्थि-जन्मनःशब्दस्यवस्तुतयापरिगृहीतस्यदेवीपुत्रमसूतेत्यादिभिः परिकरितत्वादयंवस्तुपरिकरः॥ ६ ॥ क्रियायथा समासेनतथाकृत्तद्धितादिभिः । विशेष्यतेतदाहुस्तं क्रियापरिकरम्परम् ॥७४॥ तत्रकृतातादर्थ्येनयथा । गेहाद्रातासरितमुदकंहारिकानाजिहीषेमङ्क्ष्यामीति अयसियमुनातीरवीरुद्गृहाणि । गोसन्दायी[1]विशसिविपिनान्येव-गोवर्द्धनाद्रेर्नत्वंराधे!द्दशिनिपतितादेवकीनन्दनस्य॥ अत्र [तुमुण्वुलौक्रियायांक्रियार्थायाम्]इत्यादिभिरुपपदभू-तापिक्रियैवविशिष्यते। तेनायमपरःक्रियापरिकरोभवति ॥७॥एवंलक्षणादिषुशत्रादिभिरपिद्रष्टव्यम् । तद्यथाऽव्ययेन । सलीलमासक्तनितान्तभूषणंसमासजन्त्याकुसुमावतंसकम् । स्तनोपपीडं[2]नुनुदेनितम्बिनाघनेनकाञ्चिज्जघनेनकान्तया ॥ अत्रस्तनाभ्यामुपपीडयन्त्यायन्नुनुदेइत्यर्थाक्रियाविशेषणमेवैतदिति । अयमपिक्रियापरिकरो भवति ॥८॥ एवंयथाविध्यनुप्रयोगादिष्वपिद्रष्टव्यम् । तेनक्रियायाः क्वचिदान्तरविशेषणयोगाद्वरङ्गत्वम्भवतीत्यपिव्याख्यातम् । यथा । शय्यन्तेहतशायिकाः पथितरुच्छायानिषण्णाध्वगैःश्रीकण्ठायतनेषुधार्मिकजनैरास्यन्तउष्ट्रासिकाः । शून्येतत्रनिकुञ्जशाखिनिसखि!ग्रीष्मस्यमध्यन्दिनेसज्जानान्दयिताभिसारणविधौरम्यः क्षणोव

१ अण्कर्मणिचेत्यणिङीप् ॥ २ सप्तम्यांचोपपीडरुधकर्षइतिणमुल् ॥

र्तते ॥ अत्रउष्ट्रासिकाआस्यन्तेहतशायिकाः शय्यन्तेइ-
त्यमूभ्यां सामान्यविशेषोपचरितरूपो भावात्माण्वुलैव
प्रत्याय्यते । सआख्याताभ्यांसामान्यरूपेणण्वुलन्ता-
भ्यां विशेषरूपेण । बहुवचनञ्चेहकुत्सातिशयार्थम् । या
हिनामोष्ट्रस्य कुत्सावन्त्योबहुप्रकारवत्योवक्षःसुआसि-
काश्चहतानामतिशयव्यत्यस्तास्तथाभूताएवभूयस्यःशा-
यिकाःप्रतीतास्ताभिर्विशेषरूपाभिरियमासिकाशायिकाचो
पमानोपमेयसम्बन्धजनितंभेदाऽपरिग्रहाल्लकारेणापि ब-
हुत्वेनैवप्रत्याय्यते । तेनोष्ट्रासिकाइवासनानिहतशा-
यिकाइवशयनानिक्रियन्ते । भवन्तीतिवाक्यार्थोभवति ।
सोयंयथोक्तक्रियापरिकरः ॥ ६ ॥ क्वचित्पुनर्बाह्यमपिकृ-
द्रूपङ्कृदर्थरूपंवाक्रियाविशेषणम्भवतियथा । शतंवारा-
नुक्तःप्रियसखिवचोभिःसपरुषैःसहस्त्रन्निर्धूतः पदनिप-
तितःपार्ष्णिहतिभिः । कियत्कृत्वोबद्धाःपुनरिहनवेद्भ्रिभ्रु
कुटयस्तथापिक्लिश्यन्मांक्षणमपिनधृष्टोविरमति१॥ अत्र
वारानितिवारशब्दःकृदन्तोवारसङ्ख्यायाः कृत्वसुजिति
कृत्वसुच्कृदर्थस्ताविमौद्वावप्यावृत्तिरूपेणक्रियायाविशे-
षणम्भवतः । नन्वेवमुष्ट्रासिकादीनाञ्चक्रियाविशेषण-
त्वात्कर्मत्वेनपुंसकलिङ्गतापिप्राप्नोति यथा मृदुपचति
प्रशस्तम्पठतीति? । उच्यते । त्रिधाखलुक्रियाविशेषणम्भ-
वति।बाह्यमाभ्यन्तरम्बाह्याभ्यन्तरञ्च । तत्रबाह्यङ्कर्मरूपं
वारादि । आभ्यन्तरंविशेषरूपमुष्ट्रासिकादि । बाह्या-

१ व्याङ् परिभ्योरम इति परस्मैपदम् ॥

भ्यन्तरङ्गुणरूपमम्मृद्वादि । तेषुबाह्यंसोयमित्यभिधाया-
सम्बन्धादभेदोपचारेणाविचलितस्वरूपमेवप्रधानं विशिं
षत्कथमिवस्वलिङ्गञ्जहयात्। आभ्यन्तरन्तु विशेषापरि-
ग्रहादाविष्टलिङ्गसंख्यङ्कथमिवान्यलिङ्गङ् गृह्णीयात् ।
बाह्याभ्यन्तरन्तु गुणत्वात्स्वलिङ्गविरहे"गुणवचनानामा-
श्रयतोलिङ्गवचनानीति" विशेष्यलिङ्गग्राह्यं वभवति । त-
द्धिनकृत्स्वसुप्चउक्तः ॥ १० ॥ थालादिनोच्यते । यथा ।
अकृतकवलारम्भैर्भूयोभयस्थगितेक्षणाःकिमपिवलितग्री
वंस्थित्वामुहुर्मृगपङ्क्तयः । गगनमसकृत्पश्यन्त्येतास्त-
थाश्रुघनैर्मुखैर्निपततियथाशृङ्गाग्रेभ्योभ्रमन्नयनोदकम् ॥
अत्राद्यः [ प्रकारवचनेथाल् ] अनेकवारानित्यर्थेऽसकृ-
दितितद्धितेन,पश्यन्तीति क्रियां वलितग्रीवमितिसमासे-
न,किमपीतिनाम्नाऽव्ययेन,स्थित्वेतिकृता,मुहुरितिकृदर्थेवी-
प्सयाचक्रियाविशेषणेनसहविशेषयति॥द्वितीयश्चयथाभ्रम-
न्नयनोदकन्निपततीति शतृलक्षितयापतनक्रिययातमेवा-
र्थमनुमन्दधानः पूर्वक्रियायाएवविशेषणम्भवति । सोयंकृ-
त्तद्धितसमासाव्ययानांसन्निपातरूपेपिक्रियापरिकरेयथा-
तथेत्येनयोःप्राधान्यात्तद्धितेनैवोपदिश्यते। एतेनतद्वदोर्वि-
पर्ययस्तद्विशेषणयोगश्चव्याख्यातः॥११॥तद्यथा । १जहजह
णिसासमप्पइतहतहवेवइतरङ्गपडिमापडिअम् । किङ्का-
अव्वविमूढंवेवइहिअअंवउअहिणोससिबिम्बम्॥अत्रय-

१ यथा यथा निश्वासमर्पयति तथा तथावेपते तरङ्गप्रतिमापतितम् । किंकर्तव्यविमूढं वेपते हृदयमिवोदधेःशशिबिम्बम् ॥

थातथेतिक्रियाविशेषणयोरपरमपिविशेषणंवीप्सा भवति। सोयमेवम्प्रकारःक्रियापरिकरोद्रष्टव्यः॥१२॥क्रियाविशेषणंकैश्चित्सम्बोधनमपीष्यते॥सम्बन्धिभिःपदैरेवलक्ष्यन्ते लक्षणादयः॥७५॥तेषुसम्बोधनपरिकरोयथा। धर्मस्योत्सववैजयन्तिमुकुटस्रग्वेणिगौरीपतेस्त्वांरत्नाकरपत्निजह्नुतनयेभागीरथि!प्रार्थये। त्वत्तोयान्तशिलानिषण्णवपुषस्त्वद्वीचिभिःप्रेङ्खतस्त्वन्नामस्मरतस्त्वदर्पितदृशः प्राणाःप्रयास्यन्तिमे॥ अत्रभागीरथीतिसम्बोधनपदन्धर्मस्योत्सववैजयन्तीत्यादिभिःपरिष्क्रियते । तत्रयथाकथञ्चिदप्युच्यमानोर्थः क्रियाविशेषणन्नातिक्रामतीत्ययमपिक्रियापरिकरः॥१३॥लक्षणपरिकरोयथा॥महाप्रथिम्नाजघनस्थलेनसा महेभकुम्भोच्चकुचेनवक्षसा। मुखेनदीर्घोज्ज्वललोलचक्षुषा वयस्य!कान्ताकथयक्व?वर्त्तते॥अत्रजघनस्थलादीनिलक्षणानिमहाप्रथिम्नेत्यादिभिः परिष्क्रियन्तेसोयंलक्षणपरिकरः ॥ १४ ॥ हेतुपरिकरोयथा । त्वयाजगन्तिपुण्यानित्वया१ऽपुण्याजनोक्तयः। नाथवन्तस्त्वयालोकास्त्वमनाथाविपद्यसे ॥ अत्रप्रथमतृतीयपादयोस्त्वयात्वयेति हेतूक्तिनीयचतुर्थपादाभ्याम्परिष्क्रियेतेसोयं हेतुपरिकरः ॥ १५ ॥ सहार्थपरिकरोयथा । अनेनयूनासहपार्थिवेनरम्भोरु!कच्चिन्?मनसोरुचिस्ते। शिप्रातरङ्गानिलकम्पितासुविहर्त्तुमुद्यानपरम्परासु ॥ अत्रानेनेतिसहार्थोयूनापार्थिवेनेतिचपदाभ्याम्परिष्क्रियते सोयंसहार्थपरिकरः

१ साधकतमत्वाविवक्षयातृतीया। त्वयीतिपाठे त्वद्विषय इत्यर्थः।

॥ १६ ॥ तादर्थ्यपरिकरोयथा। इन्दीवरश्यामतनुर्नृपो[1] यंत्वंरोचनागौरशरीरयष्टिः। अन्योन्यशोभापरिवृद्धये वांयोगस्तडित्तोयदयोरिवास्तु ॥ अत्रान्योन्यशोभापरिवृद्धयइतितादर्थ्यार्थः शेषपदार्थैः परिष्क्रियते सोऽयन्तादर्थ्यपरिकरः ॥ १७ ॥ उपपदपरिकरोयथा। प्रत्यक्षवस्तुविषयाय जगद्धिताय विश्वस्थितिप्रलयसम्भवकारणाय। सर्वात्मने विजितकोपमनोभवाय तुभ्यन्नमस्त्रिभुवनप्रभवे शिवाय॥ अत्रनमस्तुभ्यमित्युपपदार्थःसमस्तपदैःपरिष्क्रियतेसोयमुपपदपरिकरः ॥ १८ ॥ उपमारूपकादीनांशब्दार्थोभयभङ्गिभिः॥ साधर्म्योत्पादनंयत्तमन्येपरिकरंविदुः ॥ ७६ ॥ तत्रसशब्दकृतउपमायांयथा। कहकहविरएइपअम्मग्गम्पुलएइछेज्जमाविसइ। चोरव्वकईअत्थंलद्धुन्दुःक्खेणणिव्वहइ[2] ॥ अत्रपदमार्गच्छन्दोः[3]शब्दैर्भिन्नार्थैरभिन्नार्थविरचनादिक्रियानिवेशिभिःकविचारयोरप्रसिद्धमौपम्यं साधितमितिशाब्दोयमौपम्यपरिकरः ॥ १९ ॥ अर्थकृतोरूपकेयथा। विअडंगअणसमुद्दे दिअसेसूरेणमन्दरेणवमहिए। णीअइमइरव्वसंज्झातिरसामग्गेणअमुअकलसोव्वससी[4]॥ अत्रगगनेसमुद्रत्वेन निरूपितेसूर्यसन्ध्याशशिभिर्मन्दरमदिराऽमृतकलशैश्च मथनादिक्रियानिवेशिभिरर्थैः परस्परोपमानात्साधर्म्य-

---

१नृपोसावित्यपिपाठः। २कथंकथमपिरचयति मार्गं प्रलोकते छेद्यमाविशति। चोरइवकविरर्थं लब्धुंदुःखेन निर्वहति ॥ ३पदरीतिच्छन्दोभिः। ४वितते गगनसमुद्रे सूर्येण मन्दरेणेवमथिते। नीयते मदिरेवसंध्या तस्यामार्गेणामृतकलशइवशशी ॥

मुत्पादितमित्यार्थोयंरूपकपरिकरः ॥ २० ॥ उभयकृतश्च विरोधश्लेषयोर्यथा । रइमुणालाहरणो णलिणदलत्थइ-अपीवरत्थणअलसो । वहइपिअसङ्गमम्मिविमअणा-अप्पसाहणजुअइजणो१ ॥ अत्रप्रियसङ्गमेपिमदनाकल्पप्रसाधनम्भवतीति विरुद्धार्थयोः साधर्म्योत्पादनाय जलेक्रीडतोयुवतिजनस्य यथोक्तविशेषणाभ्यांशब्दतोऽर्थतश्चोपस्कारःकृतइत्युभयकृतोयंविरोधश्लेषपरिकरः । एवमलङ्कारान्तरेष्वपिद्रष्टव्यम् ॥ २१ ॥ एकावलीतियासापिभिन्नापरिकरान्नहि ॥ त्रिधासापिसमुद्दिष्टाशब्दार्थोभयभेदतः ॥७७॥ तत्रशब्दैकावलीयथा । पर्वनभेदिपवित्रं२जैत्रन्नरकस्य३बहुमतङ्ग४हनम् । हरि५मिवहरि६मिवहरि७मिववहतिपयः पश्यतपयोष्णी ॥ अत्रहरिमिव हरिमिवहरिमिवेतिशब्दैकावल्या विभिन्नार्थयापयःकर्मकारकमुपस्क्रियतेसेयंशब्दैकावलीपरिकरस्यैवभेदः ॥२१॥ अर्थैकावलीयथा । किमितिकबरीयाद्दूकूलाद्दृग्दृशौकिमकज्जलेनखलुलिखिताः पत्त्रावल्यःकिमद्य कपोलयोः । अयमयमयङ्क्तिभुक्काम्यत्यसंस्मरणेनतेप्रियसखि सखीहस्तन्यस्तोविलासपरिच्छदः८॥अत्रायमयमयमितिसर्वनामपरामृष्यमाणयाप्रागुपन्यस्तकारणभूतयाततोन्यया वा तथाविधयाऽर्थैकावल्यापरिच्छदइतिकर्तृकारकमभिन्ना-

१ रतिस्थृणालाभरणो नलिनीदलस्थगितपीवरस्तनकलशः । वहति प्रियसंगमेपिमदनाकल्पप्रसाधनंयुवतिजनः॥२पर्वतभेदकं पूतं पर्वतभेदिनंपविं त्रायते इतिच ॥ ३नरकासुरस्यनिरयस्यच ॥ ४ अतिगम्भीरं संमतं बहून्मतङ्गान् गजान् हन्तीतिच ॥ ५इन्द्रम् । ६विष्णुम् । ७सिंहम ॥ ८ कुसुमोत्तरीयम् ।

र्थइवपरिष्क्रियतेसेयमर्थैकावलीपरिकरस्यैवभेदः॥ २३ ॥
उभयैकावलीयथा॥ अम्बातुष्यतिनमया नस्नुषया सापि
नाम्बयानमया॥अहमपिनतयानतया वद राजन्! कस्य-
दोषोयम् ॥ अत्राम्बास्नुषाऽस्मदर्थलक्षणैरर्थैस्तद्वाचिभिः
सर्वनामभिःशब्दैरेकावलीक्रमेण मिथोऽनुस्यूतैर्मिथोऽनुस्यू
तएवतुष्यतीतिक्रियाहेतुर्मयेत्यादिभिःपरिष्क्रियतेसेयमु-
भयग्रथितत्वादुभयैकावलीपरिकरस्यैवभेदः २४ ॥ १७ ॥
इतिपरिकरालंकारनिरूपणम् ॥ क्रियाजातिगुणद्रव्य
वाचिनैकत्रवर्त्तिना ॥ सर्ववाक्योपकारश्चेद्दीपकन्तन्निग-
द्यते ॥ ७८ ॥ अर्थावृत्तिःपदावृत्तिरुभयावृत्तिरावली ॥
सम्पुटंरसनामालाचक्रवालञ्चतद्भिदाः ॥ ७९ ॥ तेषुक्रिया
वाचिनाआदिदीपकंयथा । चरन्ति चतुरम्भोधिवेलो-
द्यानेषु दन्तिनः । चक्रवालाद्रिकुञ्जेषु कुन्दभासोगुणाश्च
ते ॥ अत्रचरन्तीतिक्रिययाद्वयोरपिवाक्ययोरादिपदस्थ-
यैवोपकारःक्रियतइत्यादिदीपकमिदङ्क्रियाविषयमुच्य-
ते । एवम्मध्यान्तयोरपिद्रष्टव्यम् ॥ १ ॥ जातिवाचिना
आदिदीपकंयथा । पवनोदक्षिणःपर्णञ्जीर्णंहरतिवीरुधा-
म् । सएवच नताङ्गीनाम्मानभङ्गायकल्पते ॥ अत्रपवन
इत्यादिपादे जातिपदन्तेनादिदीपकमिदञ्जातिविषयमु-
च्यते । एवम्मध्यान्तयोरपि द्रष्टव्यम् ॥ २ ॥ गुणवाचिना
आदिदीपकंयथा । श्यामलाःप्रावृषेण्याभिर्दिशोजीमूत
पङ्क्तिभिः । भुवश्चसुकुमाराभिर्नवशाद्वलराजिभिः ॥
अत्र श्यामलाइत्यादिपादे गुणपदन्तेनादिदीपकमिदङ्गुण-

विषयमुच्यते । एवम्मध्यान्तयोरपिद्रष्टव्यम् ॥ ३ ॥ द्र- व्यवाचिनाआदिदीपकंयथा । विष्णुनाविक्रमस्थेनदान- वानांविभूनयः । क्वापिनीताःकुतोप्यासन्नानीतादैवत- र्द्धयः ॥ अत्रविष्णुनेत्यादिपादद्रव्यपदन्तेनादिदीपकमि- दन्द्रव्यविषयमुच्यते । एवम्मध्यान्तयोरपिद्रष्टव्यम् ॥४॥ अर्थावृत्तिर्यथा । हृष्यतिचूतेषुचिरन्तुष्यनिबकुलेषुमोद- तेमरुति । इहहिमधौकलकूजिषुपिकेषुप्रीयतेकामी ॥ अ- त्रहृष्यति,तुष्यति,मोदते,प्रीयनइत्येतैःपदैःसएवार्थआव- र्त्यमानःसर्ववाक्यानिदीपयति । सेयमर्थावृत्तिर्दीपकस्यभे- दः ॥ ५ ॥ पदावृत्तिर्यथा । उत्कण्ठयतिमेघानाम्माला वृन्दङ्कलापिनाम् । यूनामुत्कण्ठय[१]त्यद्यमानसम्मकर- ध्वजः ॥ अत्रोद्ग्रीवङ्करोतिउत्कण्ठावन्तङ्करोतीत्यर्थयो- रुत्कण्ठयतीति पदमावर्त्यमानं वाक्यद्वयमपिदीपयति । सेयम्पदावृतिर्दीपकस्यभेदः ॥६॥ उभयावृत्तिर्यथा । जयदेव भुवनभावन! जयभगवन्निखिलवरदनिगमनिधे! ॥ जय- रुचिरचन्द्रशेखर! जय मदनान्तकजयादिगुरो ! ॥ अत्रजये- त्यर्थःशब्दश्चावर्त्यमानः सर्ववाक्यानिदीपयतिसेयमुभया- वृत्तिर्दी[illegible]स्यभेदः ॥ ७ ॥ आवलीयथा । त्वमर्कस्त्वंसो- मस्त्वमसिपवनस्त्वंहुतवहस्त्वमापस्त्वंव्योमत्वमुधरणि- रात्मात्वमितिच । परिच्छिन्नामेवन्त्वयिपरिणताबिभ्र तिगिरंनविद्मस्तत्तत्त्वंवयमिहहियत्त्वन्नभवसि ॥ अत्र- पूर्वार्द्धेत्वमितिशब्दार्थयोःप्रथमावृत्तिः प्रथमपादस्ययाअ-

१ उत्कण्ठावच्छन्दांसिचिद्वत्वद्भावेनविख्यातोलुंगितिलुकीदंबोध्यम् ॥

सीतिक्रियया दीप्यते । ततस्तृतीयपादे त्वयीतिरूपान्त-
रेणयुष्मदर्थआवर्त्यमानः क्रियान्तरेणसम्बध्यते । चतुर्थ-
पादेतुपुनरपितेनैवरूपेणास्त्यर्थेनभवतिनासम्बध्यतइति
सेयंवृत्तीनामावृत्तिरावलीतिदीपकस्यैवभेदोभवति ॥ ८ ॥
सम्पुटंयथा । णवपल्लवेसुलोलइघोलइविदुवेसुचलइसि-
हरेसु । थवइथवएसुचलणेवसन्तलच्छीअसोअस्स १ ॥
अत्रनवपल्लवेत्यादीन्यशोकस्येतिलोलतीत्यादीनिवसन्त-
लक्ष्मीरितिपदेद्रव्यवाचिनीसम्पुटक्रमेण मिथः सम्बध्य-
मानेमिथः सम्बद्धान्येवदीपयतः । तदेतत्सम्पुटन्नामदी-
पकस्यभेदः ॥ ९ ॥ रसनायथा । सलिलंविकाशिकमल-
कमलानिसुगन्धिमधुसमृद्धानि । मधुलीनालिकुलाकुल-
मलिकुलमपिमधुररणितमिह ॥ अत्ररसनाक्रमेणमिथः
सङ्ग्रथितानिसलिलविकाशिकमलमित्यादीनिवाक्यानि
इहेत्यन्तस्थितेनाधिकरणवाचिनाद्रव्यदीपकेनदीप्यतेत-
देतद्रसनादीपकन्नामादिदीपकभेदः ॥ १० ॥ मालायथा ।
इमिणासरएणससीससिणाविणिसाणिसाइकुमुअवणम् ।
कुमुअवणेणअपुलिणं पुलिणेणअ सोहएहंसउलम् २ ॥
अत्रमालाक्रमेणपरस्परग्रथिताः कर्त्तारोहेतवश्चशशिप्र -
भृतयः शोभन्तइतिक्रिययादीप्यन्ते । तदेतन्मालादीपक-
न्नामदीपकस्यभेदः । कः पुनरस्यपूर्वस्माद्विशेषः ? । पूर्व-
त्रवृत्तिच्छिन्नंरसनायांसर्वत्रइहतुस्त्रतन्त्रमालापुष्पवत्प-

१ नव पल्लवेषु लोलति विद्रुमेषु चलति शिखरेषु । तिष्ठति स्तम्बेषुचलतिव-
सन्तलक्ष्मी अशोकस्य ॥ २ अनया शरदा शशी शशिनापि निशा निशया कुमुद
वनम् । कुमुदवनेनच पुलिनं पुलिनेनचशोभते हंसकुलम् ॥

दम्पदेनयुज्यमानङ्क्रियादिभिः सम्बध्यतइतितनोयम्भि-
द्यते ॥ ११ ॥ चक्रवालंयथा । संग्रामाङ्गणमागतेनभवता
चापेसमारोपितेदेवालोकय१येनयेनसहसायद्यत्समासा-
दितम् । कोदण्डेनशराः शरैररिशिरस्तेनापिभूमण्डलं
तेनत्वं भवताचकीर्त्तिरतुला कीर्त्याचलोकत्रयम्॥अत्रसं-
ग्रामाङ्गणमागतेनभवताचापेसमारोपितइतिभावलक्षणा-
क्षिप्तस्यभावविशेषस्यद्वितीयपादेकारकवीप्सयायत्संक्षे-
पेणाभिधानन्तदेतच्चक्रवालाद्गिणेवमालादीपकेनविस्तर व
तावेष्टितमिदञ्चक्रवालन्नामदीपकस्यभेदः ॥१२॥७८॥ इति
दीपकालंकारनिरूपणम् ॥ शब्दस्ययदिवार्थस्यद्वयोरप्य-
नयोरथ ॥ भणनम्परिपाट्यायत्क्रमःसपरिकीर्त्तितः॥८०॥
तत्रशब्दपरिपाटिर्द्विधा । पदतोवाक्यतश्च । तयोराद्या
यथा । तस्याः प्रवृद्धलीलाभिरालापस्मितदृष्टिभिः । जी-
यन्तेवल्लकीकुन्दस्रगिन्दीवरसम्पदः ॥ अत्रालापस्मित
दृष्टिभिः पदार्थैर्वल्लकीकुन्दस्रगिन्दीवरसंपदः पदार्था
जीयन्तेइतिशब्दपरिपाट्याभणनंसेयं पदतःशब्दपरिपा-
टिःक्रमः ॥ १ ॥ वाक्यतोयथा । इन्दुर्मूर्ध्नि शिवस्यशैलदु-
हितुर्वक्त्रेनखाङ्कः स्तनेदेयाद्वोऽभ्युदयन्द्वयन्तदुपमामाल-
म्बमानम्मिथः । संवादः प्रणवेनयस्यदलनाकायैकनाया-
न्तयोरूर्द्ध्वं द्वारविचिन्तितेनचहृदिध्यातस्वरूपेणच ॥ अत्रे-
न्दुर्मूर्द्ध्नि शिवस्यशैलदुहितुर्वक्त्रेनखाङ्कःस्तनइतिचान्या
र्थवाचिनौ शब्दसमुदायौक्रमेणोर्द्ध्वं द्वारविचिन्तितेनचहृ-

१ देवाकर्णयेत्यपि क्वचित्पाठः ॥

दिध्यातस्वरूपेणचेतिवाक्यार्थद्वयवाचिभ्यांशब्दसमुदाया-
भ्यांसम्बध्येते । सोयंवाक्यतःशब्दपरिपाटिःक्रमः ॥ २ ॥
अर्थपरिपाटिर्द्विधाकालतोदेशतश्च । तयोराद्यायथा । हस्ते
लीलाकमलमलकंबालकुन्दानुविद्धन्नीतालोध्रप्रसवरजसा
पाण्डुतामाननश्रीः । चूडापाशे नवकुरबकञ्चारुकर्णे शि-
रीषंसीमन्तेचत्वदुपगमजंयत्रनीपंवधूनाम् ॥ अत्रहस्ते-
लीलाकमलमलकं बालकुन्दानुविद्धमित्याद्यर्थानां शर-
दादिकालक्रमेणभणनंसेयङ्कालतोर्थपरिपाटिःक्रमः ॥ ३ ॥
द्वितीयायथा । पायाद्वोरचितत्रिविक्रमतनुर्देवःसदैत्या-
न्तको यस्याक्रमिकवर्द्धमानवपुषस्तिग्मद्युतेर्मण्डलम् ।
मौलौरत्नरुचिः श्रुतौपरिलसत्ताटङ्ककान्तिक्रमाज्जातंव-
क्षसिकौस्तुभाभमुदरेनाभीसरोजोपमम् ॥ अत्रत्रिविक्र-
मतनोर्वैकुण्ठस्य प्रवृद्धिसमयेक्रमेणैवमौलिश्रुतिवक्षउदर-
लक्षणेषु शरीरदेशेषुभास्वन्मण्डलस्यचूडारत्नताटङ्ककौ-
स्तुभनाभ्यम्बुजैर्योऽयमौपम्यलाभःसेयन्देशतोऽर्थपरिपा-
टिःक्रमः ॥ ४ ॥ उभयपरिपाटिर्द्विधा । शब्दप्रधानाऽर्थ
प्रधानाच । तयोराद्यायथा । पङ्कअ पङ्कि वहेलिअकुव
लअ खित्तनु हदहिं वालिहि बिम्बविविल्लिओ पत्तिओ
चन्दु णहहिम् । करणजणाहरवअणहिं तहि लीलावइहि
णिअसिव्विवि उच्चिठीणाइ पआवइहिम् १॥अत्रपङ्कजकु-
वलयबिम्बीफलचन्द्रमसाङ्करनयनाधरवदनैर्यथासङ्ख्यं

१ पङ्कजंपङ्केऽवहेल्यकुवलयंक्षिप्तं ह्रदे वारिधौ बिम्बवल्लरः प्राप्ताश्चन्द्रोनभसि ॥ करनयनाऽधरवदनैस्तैर्लीलावतोभिर्निजशिल्पे पि उच्चस्थानानिप्रजापतिभिः ॥

पराजयतइतिशब्दपरिपाटैवपङ्कजानि पङ्केन्यस्तानि, कुवलयानि ह्रदेक्षिप्तानि, बिम्बवृन्तेप्रकीर्णश्चन्द्रोनभसि निरस्तइत्याधाराणामुपर्युपरिभावःक्रियाणाञ्चतयागता-रतम्यमित्यर्थपरिपाटिर्न्यग्भवति । सेयंशब्दप्रधानोभ-यपरिपाटिःक्रमः॥५॥अर्थप्रधानायथा । गङ्गे!देवि दृशा पुनीहि यमुने! मातःपुनर्दर्शनं सम्प्रश्नोऽस्तुपितःप्रयाग! भगवन्न्यग्रोध! मान्ध्यास्यसि । तंहारासिलतावतंस-विपुलस्थूलांसवक्षोभुजम्पुम्भावंभवतामवन्तिनगरीनाथं दिदृक्षामहे॥अत्रगङ्गायमुनाप्रयागन्यग्रोधतत्पुम्भावाऽव-न्तिनगरीनाथलक्षणानामर्थानां मुख्यक्रमेणदेविदृशापु-नीहि, मातःपुनर्दर्शनं, पितःसंप्रश्नो,भगवन् मान्ध्यास्य-सीतिमुख्यक्रमेणैवसम्भ्रमात्त्रिर्वचोविशेषैरभ्यर्चा भवतामे-वपुम्भावमवन्तिनगरीनाथन्दिदृक्षामहइति येयमभ्यर्थ-नाभङ्गिस्वार्थपरिपाटिकृतातस्याञ्चगङ्गेयमुनेप्रयागन्यग्रो-धेतिहारासिलतावतंसविपुलस्थूलांसवक्षइतिचशब्दपरि-पाटीपरस्परमुपमानोपमेयभूतेन्यग्भवतः सेयमर्थप्रधा-नोभयपरिपाटिःक्रमः ॥ ६ ॥ १९ ॥ इतिक्रमालंकारनिरू-पणम् ॥ मिषंयदुक्तिभङ्गिर्यात्रसरोयःससूरिभिः ॥ निरा-काङ्क्षोऽथसाकाङ्क्षःपर्यायइतिगीयते ॥८१॥ तेषुनिरा-काङ्क्षमिषंयथा । मयाविमुक्तावहिरेववल्लकीव्रजेदवश्या-यकणैश्चसार्द्रताम् । द्रुतन्तदेनाङ्कुरवैनिचोलकेकयाचि-देवम्मिषतोविनिर्ययौ ॥ अत्रकयाचिदेवं मिषतोविनिर्य-यइत्युदर्काभिधानेनाकाङ्क्षानिराकृतेर्निराकाङ्क्षमेतन्मिष-

न्नामपर्यायभेदः ॥ १ ॥ तदेव साकाङ्क्षं यथा । दशत्यसौ परभृतः सहकारस्य मञ्जरीम् । तमहं वारयिष्यामि युवाभ्यां स्वैरमास्यताम् ॥ अत्र कयाचिद्देवमिमषतो विनिर्यय इति वदुदर्कानभिधानात्साकाङ्क्षमेतन्मिषन्नामपर्यायस्य भेदः ॥ २ ॥ निराकाङ्क्षोक्तिभङ्गिर्यथा । राजन्! राजसुता न पाठयति मान्देव्योऽपि तूष्णीं स्थिताः कुब्जे भोजय मां कुमार कुशलन्नाद्याऽज्जु के भुज्यते । इत्थन्नाथ! शुकस्तवारिभवने मुक्तोध्वगैः पञ्जराच्चित्रस्थानवलोक्य वेश्मवलभीष्वेकैकमाभाषते ॥ अत्रानयोक्तिभङ्ग्या शून्यीकृतारिनगरस्य नरपतेः कश्चित्प्रतापं वर्णयति तत्र वाक्यस्य परिपूर्णत्वेन निराकाङ्क्षत्वान्निराकाङ्क्षेयमुक्तिभङ्गिः ॥ ३॥ साकाङ्क्षा यथा । शान्त्यै वोऽस्तु कपालदाम जगतामपत्युर्यदीयां लिपिं क्वापि क्वापि गणाः पठन्ति पदशो नातिप्रसिद्धाक्षराम् । विश्वं स्रक्ष्यति वक्ष्यति क्षितिमपामीशिष्यते शिष्यते नागैरागि पुरं स्यते ऽस्स्यति जगन्निर्वेक्ष्यति द्यामिति ॥ अत्रानयोक्तिभङ्ग्या ब्रह्मा द्यस्तसमयेप्यनस्तमितस्य भगवतो महेश्वरस्य प्रभावो वर्ण्यते तत्र च यदीयां लिपिं क्वापि क्वापि गणाः पठन्ति पदशो नातिप्रसिद्धाक्षरामित्यनेनैव वाक्येऽस्मिन्नाकाङ्क्षोत्थाप्यते । सा च विश्वं स्रक्ष्यतीत्यस्मिन्नीदृशी ब्रह्मणाञ्च चतुर्युगसहस्रान्ते दिनमेकमिति मानेनैष वर्षशतजीवी विश्वं स्रक्ष्यति ब्रह्मेति ज्ञाप्यते । कपालञ्चास्य भगवतो भूषणम्भविष्यतीति । वक्ष्यति क्षितिमित्यस्मिन्नीदृशी ब्रह्मणामयं वर्षशतेनैकन्दिनमिति मानेनैष पुरुषायुष१ जीवी क्षितिं वक्ष्यति विष्णुरिति

ज्ञाप्यते कपालञ्चास्य भगवतो भूषा भविष्यतीति । एवम-
पामीशिष्यत इत्यादिषु वरुणवायुकामयमेन्द्रविषयत्वेन
योजनीयं सेयमनेकप्रकारेण ब्रह्मादीनां साक्षादनभिधानेन
साकाङ्क्षोक्तिभङ्गिः ॥ ४ ॥ अवसरो निराकाङ्क्षो यथा । अथ
तैः परिदेवितक्षरैर्हृदये दिग्धशरैरिवार्दितः । रतिमभ्युप-
पत्तुमातुरां मधुरात्मानमदर्शयत्पुरः ॥ अत्र "क्वनु ते हृदय-
ङ्गमः सखा कुसुमायोजितकार्मुको मधुः । न खलूग्ररुषा पि-
नाकिना गमितः सोपि सुहृद्गतां गतिम्" इति यानि रतेः प-
रिदेविताक्षराणि तैराकृष्टहृदयस्य मधोर्योयमात्मदर्शनाय
प्रस्तावः सोयन्न किञ्चन काङ्क्षतीति निराकाङ्क्षोयमवसरः
पर्यायस्य भेदः ॥ ५ ॥ साकाङ्क्षो यथा । अज्जवि बालो दामो-
अरोत्ति इअ जम्पिए जसोआए । कण्हमुहपेसिअच्छिणिहुअं-
हसिअं वअवहूण[२] । अत्राद्यापि बालो दामोदर इति कृत
प्रस्तावनस्य कृष्णास्य वक्त्रे विन्यस्तलोचनया तद्रहस्यवादि
न्या व्रजवधूमतल्लिकया यदेतन्निभृतं हसितन्तत्त्वाम्बाबा-
लन्त्वाम्ब्रूते त्वन्तु मादृशीभिर्निधुवनविदग्धाभिर्दिवानि-
शं यमुनानिकुञ्जोदरेषु विहरसीत्यादिनार्थजातेन साकाङ्-
क्षमिति साकाङ्क्षोयमवसरः पर्यायस्य भेदः ॥ ६ ॥ ८० ॥ इति प
र्यायालंकारनिरूपणम् ॥ विवक्षाया विशेषस्य लोकसीमा
तिवर्तिनी ॥ असावतिशयोक्तिः स्यादलङ्कारोत्तमा च सा ॥
८२ ॥ सा च प्रायो गुणानाञ्च क्रियाणाञ्चोपकल्पते ॥ नहि द्र-

---

१ अचतुरेति निपातितः ॥ २ अद्यापि दामोदरो बालोस्तीति च जल्पिते यशोदया । कृष्णमुखप्रेषिताक्षं निभृतं हसितं व्रजवधूभिः ।

व्यस्यजातेर्वाभवत्यतिशयःक्वचित् ॥८३॥ प्रभावातिशयो यश्चयश्चानुभवनात्मकः ॥ अन्योन्यातिशयोयश्चतेपिना-तिशयात्पृथक् ॥८४॥ अलङ्कारान्तराणामप्येकमाहुःपरा यणम् ॥ वागीशमहितामुक्तिमिमामतिशयाह्वयाम् ॥ ८५॥ तत्रगुणातिशयेनमहत्त्वातिशयोयथा । अहोविशा लम्भूपाल!भुवनत्रितयोदरम् । मातिमातुमशक्योपियशो राशिर्यदत्र ते॥अत्रैवं यशोराशेरशक्यमानस्याप्यतिशयो क्त्या विशेषविवक्षा । येन त्रिभुवनोदरमपिसङ्कीर्णमाशङ्क्य ते । सोयम्महत्त्वातिशयोनामातिशयभेदः ॥१॥ तनुत्वा-तिशयोयथा । स्तनयोर्जघनस्यापिमध्येमध्यम्प्रियेतव । अस्तिनास्तीति सन्देहोनमेऽद्यापि निवर्त्तते॥अत्रैवम्मध्य स्यलोकसीमातिक्रमेणतनावतिशयविवक्षायेनतदस्तिना स्तीतिवासन्दिह्यते । सोयन्तनुत्वातिशयोनामातिशयभे दः ॥ २ ॥ कान्त्यतिशयोयथा । मल्लिकामालभारिण्यः[१] सर्वाङ्गीणार्द्रचन्दनाः । क्षौमवत्यो न लक्ष्यन्ते ज्योत्स्नाया मभिसारिकाः ॥ अत्रैवञ्चन्द्रालोकस्य लोकसीमातिक्रमेण बाहुल्योत्कर्षविवक्षा । येन तस्मिन्समानाभिहारेणाभिसा रिकाअपिनलक्ष्यन्तेसोयङ्कान्त्यतिशयोनामातिशयभेदः । अथास्यपिहितात्कोविशेषः? । उच्यते । पिहितेचन्द्रातप स्योत्कर्षेणाभिसारिकातिरस्कारोविवक्ष्यते । इहत्वभिसा रिकातिरस्कारेण चन्द्रातपोत्कर्षइति ॥३॥ प्रभावातिश-योयथा । तन्दइआहिण्णाणञ्जंम्मिविअङ्गम्मिराहवेणण-

१ इष्टकेषीकामालानांचिततूलभा रघुइतिपर्वपदस्यङ्कस्वः ॥

णिमिअम् । सीआपरिगव्वेणवऊढेत्तिणविणिरन्तरंरोम-ञ्चो१ । अत्रदयितामिज्ञानस्ययोयंरोमाञ्चक्रियाविशेषःस क्रियातिशयस्यैव भेदः प्रभावातिशयउच्यते ॥४॥ अनुभावातिशयोयथा । विमलिअरसाअलेणविविसहरवइणा-अइट्ठमूलच्छेअम् । अप्पन्ततुङ्गसिहरन्तिहुअणहरणेपव-ट्टिएणविहरिण २॥ अत्ररसातलमपिमृद्नताशेषेणापि च तस्यमूलन्नदृष्टं त्रिभुवनमप्युल्लङ्घयताहरिणाऽपिनतुङ्ग शिखराणिप्राप्तानीतियदेतल्लोकसीमातिक्रमेणविशेषव्य-वस्थय।पर्वतानुभावभणनंसोयमनुभूयमानमाहात्म्याति शयस्यैवभेदोनुभावातिशयउच्यते ॥५॥ अन्योन्यातिशयो यथा । रणदुज्जओदहमुहोसुराअवज्झाअतिहुअणस्स इमे । पडइअणत्थोत्तिफुडंविहीसणेणपुडिआहरणीस-सिअम् ३ ॥ अत्रदशास्यःसमरेनजीयतेसुराश्चामरत्वान्न वध्यन्ते । तयोश्चपरस्परसङ्घट्टक्रियातिशयात्त्रिभुवन-मपिक्षयंयास्यतीति येयमन्योन्यातिक्रियातिशयभणना-ल्लोकसीमातिक्रमेणविशेषविवक्षा । सोयंक्रियातिशयोना मातिशयएवान्योन्यातिशयउच्यते ॥६॥२१॥ इतिअतिश-योक्त्यलंकारनिरूपणम् ॥ श्लेषोनेकार्थकथनंपदैरेकैनक थ्यते ॥ पदक्रियाकारकैःस्याद्भिन्नाभिन्नैःसषड्विधः॥८६॥

---

१ तन्दयिताभिज्ञानं जद्यप्यपि अङ्गे राघवेननिर्मितम् । सीतापरिगर्वेणेव ऊढेति नवनिरंतरं रोमाञ्चः ॥ २विमृदितरसातलेनापि विषधरपतिना अदृष्ट-मूलच्छेदम् । अप्राप्ततुङ्गशिखरं त्रिभुवनहरणे प्रवर्द्धितेनापि हरिणा ॥ ३ रण-दुर्जयोदशमुखः सुराश्चवध्यास्त्रिभुवनस्येमे । पतति अनर्थोतिस्फुटं विभीषणेन स्फुरिताधरं निश्वसितम् ॥

तेषु भिन्नपदो यथा । दोषाकरेण संबन्धन्नक्षत्रपथवर्त्तिना
राज्ञा प्रदोषो मामित्थमप्रियङ्किन्न बाधते ॥ अत्र प्रदोषो रा
त्रेः प्रथमो यामः किमिति प्रियारहितं मां न बाधत इत्युक्तेयु
क्तिमाह । इत्थमनुभूयमानेन प्रकारेण राज्ञा संबन्धं कीदृ
शेन दोषाकरेण नक्षत्रपथवर्त्तिनेति । यो हि दोषाणामाक-
रेण राजमार्गातिगामिना च राज्ञा प्रकृष्टदोषः संबध्यते सो-
ऽप्रियमवश्यम्बाधत एव तदत्र पूर्वस्मिन्प्राकरणिकेर्थे द्विती
योर्थोऽप्राकरणिकः पदभेदेनोपश्लिष्यमाणो भिन्नपदश्लेषा-
पदेशमासादयति ॥१॥ अभिन्नपदो यथा । असावुदय-
मारूढः कान्तिमान्रक्तमण्डलः । राजा हरति लोकस्य हृदयं
मृदुभिः करैः॥ अत्रायमुदीयमानश्चन्द्रमा लोकस्य हृदयं हर-
तीत्युक्तेर्युक्तिमाह । राजानुरक्तमण्डल उदयी मृदुकरः का
न्तिमानिति। यो ह्येवंभूतो राजा सोवश्यं लोकस्य हृदयहारी
भवति । अत्रापि च प्राकरणिकेर्थेऽप्राकरणिक उपश्लिष्यमा
णः पदानामभेदेनाभिन्नपदश्लेषो भवति ॥२॥ भिन्नक्रियो
यथा । मधुरा रागवर्द्धिन्यः कोमलाः कोकिलागिरः । आक-
र्ण्यन्ते मदकलाः श्लिष्यन्ते चासितेक्षणाः ॥ अत्राकर्ण्यन्ते
श्लिष्यन्ते चेति क्रियापदं द्वितयस्य प्राधान्यतः समुच्चयेनोपा
त्तस्य मधुरा इत्यादिभिः श्लिष्टपदैः कोकिलागिर इत्यसितेक्ष
णा इति वा विशेष्यैकपदवर्जं पर्यायतः संबन्धो भवति तद्य-
था । आकर्ण्यन्ते काः कोकिलागिरः कीदृश्यो मधुरा रागव-
र्द्धिन्यः कोमलाः पुनरपि किंभूता आसितेक्षणा आसिते उपवे-
शिते अन्तः प्रमोदानुभावादीक्षणे याभिस्तास्तथा । सर्वोपि

हिमधुरंशब्दमाकर्णयन्निश्चलाक्षोभवति। श्लिष्यन्ते चका असितेक्षणाहरिणचक्षुषः किंभूता मदकलाः कोकिलागिरः कोमलारागवर्द्धिन्योमधुराइतिसोयंद्वयोर्विभिन्नक्रिययोर्भिन्नार्थेचरूपिणांपदार्थानामुपश्लेषोभिन्नक्रियःश्लेषउच्यते ॥३॥ अभिन्नक्रियोयथा। स्वभावमधुराःस्निग्धाःशंसन्त्योरागमुल्बणम्। दृशोदूत्यश्चकर्षन्तिकान्ताभिःप्रेषिताःप्रियान्। अत्रकर्षन्तीत्येतस्यांक्रियायांदृशांदूतीनाञ्चश्लिष्टपदत्वेनावेशादयमभिन्नक्रियो नामश्लेषविशेषः। प्रथमयोरस्यवाकोविशेष?इतिचेत्। तत्रैकस्यैवप्राकरणिकत्वमत्रतुद्वयोरपीत्ययंचभिन्नकारकोभवति॥४॥ भिन्नकारकोयथा। गतिर्वेणीचनागेनवपुरूरूचरम्भया। औष्ठौपाणीप्रवालैश्चतस्यास्तुल्यत्वमाययुः॥ अत्रैकस्मिन्पक्षे धर्मधर्मिणोरभेदोपचारान्नागगतिर्गृह्यते। तत्रगतेर्वेण्याश्चनागेनहस्तिनाअहिनाचतुल्यत्वंवपुरूर्वोश्चरम्भयाकदल्याअप्सरोभिश्चतुल्यत्वमोष्ठयोःपाण्योश्चप्रवालैर्विद्रुमैर्नवपल्लवैश्चवर्णनीययोःश्लेषप्रभावाल्लभ्यतेसोयमनेककर्तृकत्वाद्भिन्नकारकइतिश्लेषोभवति॥५॥ अभिन्नकारकोयथा। कृष्णार्जुनानुरक्ताऽपिदृष्टिःकर्णावलम्बिनी। यातिविश्वसनीयत्वङ्कस्यतेकलभाषिणि॥ अत्रहेकलभाषिणि कस्य ते दृष्टिर्विश्वास्याभवतीत्युक्तेयुक्तिमाह। कृष्णार्जुनानुरक्तापिकर्णावलम्बिनीतियाहिकृष्णार्जुनेनाऽनुरज्यतेकथंसाकर्णपक्षपातिनीभवति। याचैवमुभयगतातस्याङ्कोविश्वसितिसचायमेककर्तृकत्वादभिन्नकारकइतिश्लेषोभवति॥६॥

२५। इति श्लेषालङ्कारनिरूपणम् ॥

स्वाभिप्रायस्यकथनंयदिवाप्यन्यभावना॥अन्यापदेशोवा यस्त्रिविधंभाविकं विदुः॥८७॥मतेचास्माकमुद्देदोविद्य-तेनैवभाविकात्।व्यक्ताव्यक्तोभयाख्याभिस्त्रिविधःसोऽपि कथ्यते॥८८॥तत्र भाविकभेदेषु स्वाभिप्रायकथनं यथा।

णाविज्जइदुग्गेज्झिजआदिट्ठम्मिजम्मिभिउडिआजत्थणअ व्वाहारओघिप्पइआहसत्तएविछुहइ। अहिणिज्ञुएजत्थ ण्सोवंअ सिआतम्मिकहहु माणअज्जइमेइच्छहुजिअजम्१।

अत्र भ्रूभेदासम्भाषणप्रियतमावक्षेपणरूपान्प्रत्यनभिम-तप्रतिपादनरूपस्याभिप्रायस्यकथितत्वादिदं स्वाभिप्राय-कथनंनाम भाविकम्। अन्यभावनायथा। दंसणवलिअ-न्दढकंविघणन्दीहरंसुपरिणाहम्। होइइघरेसाहीणम्म-सलनधण्णाणमहिलाण२।अत्रमेढ्रभावनयामुसलरूपस्यो-क्तत्वादिदमन्यभावनाभिधानम्भाविकम्। अन्यापदेशोय-था। आसाइअंणाएण जत्तिअविअं विहीणओरम्मसुव-सहएन्हिं रक्खिज्जइगहवछेत्तम्३। अत्रपरक्षेत्रस्यघस्मर-वृषनिवारणापदेशेनचिरात्परिज्ञातउपपत्तिर्वार्यते।तदि-दमन्यापदेशाख्यम्भाविकम्॥२॥उद्भेदेषुव्यक्तोयथा। मन्ते-सिमहुमहपणअं सन्दाणेसितिअसेसपाअवरअणम। ओ

१ न विद्यते दुर्ग्राह्याहष्टे यस्मिन् भृकुटिका यत्र न च व्याहारो गृह्यते आहसति विक्षुभ्यते। अभिनन्दके यत्र न सोपदर्शिता तंमिकथय मानंयदिमि इ-च्छसि जीवनम्॥ २ दर्शनवलितं दृढमपि घनं दीर्घं सुपरिणाहम्। भवति गृ-हे स्वाधीनं मुसलं धन्यानां महिलानाम्॥ ३ आसादितं नागेन याविक इव विहीनको रमव वृषभ इह रक्ष्यते गृहपतिक्षेत्रम्॥

जसुसुद्धसहावंसम्भावेसुसुरणाहजावअलोजम् ।[१] अत्रमाया
विनोमहेन्द्रस्याभिप्रायः सत्यकेनव्यक्तमेवोद्भिन्नइतिव्य-
क्तोयमुद्भेदः ॥ ३ ॥ अव्यक्तोयथा। निःशेषच्युतचन्दनंस्तनत-
टंनिर्मृष्टरागोधरोनेत्रेदूरमनञ्जनेपुलकितातन्वीतवेयन्त-
नुः। मिथ्यावादिनि दूतिबान्धवजनस्याज्ञातपीडागमा
वापींस्नातुमितोगतासि न पुनस्तस्याधमस्यान्तिकम् ॥
अत्रवापींस्नातुमितोगतासिनपुनस्तस्याधमस्यान्तिकमि-
त्याक्षेपवताप्रकृतोदाहरणेनयद्यपिदूत्यान्दुश्चेष्टितंनिर्भि-
न्नम् ।तथापिनपूर्ववद्व्यक्तव्यमित्यव्यक्तोयमुद्भेदः। उभयरू
पोयथा।अम्लानोत्पलकोमलेसखिदृशौनीले। ञ्जनेनाऽञ्चि-
तेकर्पूरच्छुरणाच्चगण्डफलकेयंवेल्लितः पाण्डिमा। श्वासाः
सन्तुचकन्दुकभ्रमिभुवःकिन्तुप्रभावाऽहिनामङ्गानाङ्कृशि
मानमुत्कटममुंको नाम नोत्प्रेक्षते । अत्रदृशोर्म्लानता
गण्डयोः पाण्डुरत्वंश्वासानान्दैर्घ्यमित्युत्कण्ठाचिह्ननिह्न-
वाययोयमविनयवत्यानीलाञ्जनादिप्रयोगस्तस्यतत्त्वाभ्यु-
पगमेऽप्यङ्गानांकृशिमानमुत्कटममुंकोनामनोत्प्रेक्षतइति
योयं सखीव्याहारस्तेनतदभिप्रायउद्भिन्नोऽनुद्भिन्नश्चभव-
तीत्यनुभयरूपोयमुद्भेदः । तेऽमीत्रयोप्युद्भेदाभाविकान्न
भिद्यन्ते ॥ २३ ॥ इतिभाविकालङ्कारनिरूपणम् ॥ संसृ-
ष्टिरिति विज्ञेयासर्वाऽलङ्कारसङ्करः॥ सातुव्यक्तातथाऽव्य-
क्ताव्यक्ताव्यक्तेतिचत्रिधा ॥ ८९ ॥ तिलतन्दुलवद्व्यक्ताछा-

१ मन्नयसि मधुमम प्रणयं संदानयसि त्रिदशेश पादरजम् । शुद्धस्वभाव संभावय सुरनाथ यावदलीकम् ॥

यादर्शवदेवच ॥ अव्यक्ताक्षीरजलवत्पांसुपानीयवच्चसा ॥९०॥ व्यक्ताऽव्यक्ता च संसृष्टिर्नरसिंहवदिष्यते ॥ चित्रवर्णवदन्यस्मिन्नानालङ्कारसङ्करे ॥ ९१ ॥ व्यक्तातिलतण्डुलवद्यथा। पिनष्टीव तरङ्गाग्रैरुदधिः फेनचन्दनम्। तदादाय करैरिन्दुर्लिम्पतीव दिगङ्गनाः ॥ अत्रोत्प्रेक्षाद्वयं रूपकद्वयञ्च तिलतण्डुलवत्सङ्कीर्यते ॥१॥ व्यक्तैव च्छायादर्शवद्यथा। निर्मलेन्दु नभो रेजे विकचाब्जम्बभौ सरः। परम्पर्यस्तुवदनौ मम्लतुर्भ्रातरावुभौ। अत्रादर्शच्छायेवहेत्वलङ्कारेरामलक्ष्मणमुखयोरिन्दुपद्मौपम्येन सदृशाऽसदृशव्यतिरेकौ दृश्यते ॥२॥ अव्यक्ता क्षीरजलवद्यथा। क्षीरक्षालितचन्द्रेव नीलीधौताम्बरेव च। टङ्कोल्लिखितसूर्येव वसन्तश्रीरदृश्यत ॥ अत्रोपमोत्प्रेक्षेक्षीरनीरवन्मिश्रे संसृष्टे न व्यज्येते॥३॥अव्यक्तैव पांसूदकवद्यथा। कृष्णार्जुनानुरक्ताऽपिदृष्टिः कर्णावलम्बिनी। याति विश्वसनीयत्वं कस्य ते कलभाषिणि![1]। अत्रपांसूदकयोरिव मृत्पिण्डेश्लेषविरोधयोरव्यक्तयोरेवव्याजस्तुतावङ्गभावोगम्यते ॥४॥ व्यक्ताऽव्यक्ता नरसिंहवद्यथा। रजोभिस्तुरगोत्कीर्णैर्गजैश्च घनसन्निभैः।भुवस्तलमिवव्योम कुर्वन्व्योमेवभूतलम्। अत्रनरसिंहजाताविवसिंहनरशरीरभागयोः!परिवृत्त्यलङ्कारहेतूपमयोरङ्गभावोव्यक्ताऽव्यक्तरूपः परिस्फुरन्नुपलभ्यते ॥५॥ व्यक्ताव्यक्तैव चित्रवर्णवद्यथा। मयूरारावमुखराम्प्रावृषं सतडिल्लताम्। महाटवीमिवोल्लङ्घ्यतो

१ कृष्णः श्रीकृष्णोवर्णश्च। अर्जुनः पार्थो धवलश्च। कर्णः श्रोत्रं राधेयश्च

यानिमुमुचुर्घनाः । अत्रपटावयवस्थानान्नीलादीनामिव पटावयव्याश्रिते चित्रवर्णे श्लेषरूपकोपमार्थश्लेषाणामपदपदार्थाश्रयाणां शरद्वर्णनवाक्याश्रयिणि समाध्यलङ्कारे व्यक्ताव्यक्तरूपोऽङ्गाङ्गिभावः, प्रतीयते ॥ ६ ॥ २४ ॥

चतुर्विंशतिरित्येताः क्रमेणोभयसंश्रयाः ॥ काव्यालङ्कृतयःप्रोक्तायथावदुपमादयः॥२५॥इति श्रीमहाराजाधिराजश्रीभोजदेवविरचिते सरस्वतीकण्ठाभरणे उभयालङ्कारविवेचनोनामचतुर्थः परिच्छेदः ॥

॥ श्री सरस्वत्यैनमः ॥

॥ सरस्वतीकण्ठाभरणे पञ्चमः परिच्छेदः ॥

रसोभिमानोऽहंकारः शृङ्गार इति गीयते ॥ योऽर्थस्तस्याऽन्वयात्काव्यं कमनीयत्वमश्नुते ॥ १ ॥ विशिष्टादृष्टजन्मायं जन्मिनामन्तरात्मसु ॥ आत्मसम्यग्गुणोद्भूतेरेको हेतुः प्रकाशते ॥ २ ॥

शृङ्गारीचेत्कविःकाव्ये जातं रसमयञ्जगत् ॥ सएव चेदशृङ्गारीनीरसं सर्वमेवतत्॥३॥"पश्यति स्त्रीतिवाक्ये"हि न रसः प्रतिभासते ॥ "विलोकयति कान्तेति" व्यक्तमेव प्रतीयते ॥ ४ ॥ "कन्ये कामयमानम्मान्त्वन्न कामयसे कथम्" इतिग्राम्योयमर्थात्मा वैरस्यायैव कल्पते ॥ ५ ॥ "कामङ्कन्दर्पचाण्डालो मयि वामाक्षि निर्दयः ॥ त्वयिनिर्मत्सरोदिष्टेरत्यऽग्राम्योर्थो रसावहः ॥ ६ ॥ नवोर्थः सूक्तिरग्राम्या श्रव्योबन्धः स्फुटाश्रुतिः ॥ अलौकिकार्थ-

युक्तिश्च रसमाहर्त्तुमीशते ॥ ७ ॥ वक्रोक्तिश्च रसोक्तिश्च स्वभावोक्तिश्च वाङ्मयम् ॥ सर्वानुग्राहिणीं तासु रसोक्तिं प्रतिजानते ॥ ८ ॥ भावोजन्मानुबन्धोऽथ निष्पत्तिः पुष्टिसङ्करौ॥ह्रासाभासौशमःशेषो।विशेषःपरिपोषवान्॥९॥ विप्रलम्भोऽथसम्भोगस्तच्चेष्टास्तत्परीष्टयः ॥ निरुक्तयः प्रकीर्णानि प्रेमाणः प्रेमपुष्टयः ॥ १० ॥ नायिकानायकगुणाः पाकाद्याः प्रेमभक्तयः॥ नानाऽलङ्कारसंसृष्टिः प्रकाराश्च रसोक्तयः ॥ ११ ॥ चतुर्विंशतिरित्युक्ता रसान्वयविभूतयः॥ स्वरूपमासां यो वेद स काव्यङ्कर्त्तुमर्हति॥१२॥ आलम्बनविभावेभ्यः स्वेभ्यःस्वेभ्यः समुन्मिषन् ॥ रसोरत्यादिरूपेण भाव इत्यभिधीयते ॥ १३ ॥ रतिर्हासश्च शोकश्च क्रोधोत्साहौ भयन्तथा ॥ जुगुप्सा विस्मयश्चाऽष्टौ स्थायिभावाः प्रकीर्त्तिताः ॥ १४ ॥ स्तम्भस्तनूरुहोद्भेदो गद्गदः स्वेदवेपथू । वैवर्ण्यमश्रुप्रलयावित्यष्टौ सात्विका मताः ॥ १५ ॥ स्मृतिर्वितर्कश्चौत्कण्ठा चिन्ता चपलतामतिःगर्वःस्नेहोधृतिर्व्रीडाऽवहित्थम्मूढतामदः॥१६॥ हर्षाऽमर्षावसूयेर्ष्या विषादो दैन्यमुग्रता ॥ त्रासः शङ्का गदोग्लानिरुन्मादः सम्भ्रमः श्रमः ॥ १७ ॥ निर्वेदोजाड्यमालस्यन्निद्रा सुप्तम्प्रबुद्धता । इतिभावास्त्रयस्त्रिंशद्विज्ञेया व्यभिचारिणः ॥ १८ ॥ चिरञ्चित्तेऽवतिष्ठन्ते सम्बध्यन्तेऽनुबन्धिभिः । रसत्वम्प्रतिपद्यन्ते प्रवृद्धाः स्थायिनो ऽत्रते ॥१९ ॥ रजस्तमोभ्यामस्पृष्टम्मनः सत्वमिहोच्यते । निर्वृतयेस्यतद्योगात्प्रभवन्तीति सात्विकाः

॥२०॥ विशेषेणाभितः काये स्थायिनञ्चारयन्ति ये। अनुभावादिहेतूँस्तान्वदन्ति व्यभिचारिणः॥२१॥ जनित्वा ये न जायन्ते तेऽथवा व्यभिचारिणः। स्मृत्यादयो हि प्रेमादौ भवन्ति न भवन्ति च॥२२॥ रतौ सञ्चारिणः सर्वान् गर्वत्त्वे हौ धृतिम्मत्तिम्। स्थास्नूनेवोद्धतप्रेयः शान्तोदात्तेषु जानते॥२३॥ संस्कारपाटवादिभ्यो ऽनुभावं वा निजाश्रये। सञ्चारिणं वा जनयन्सात्त्विकं वा न जायते॥ २४॥ उद्दीपनविभावेभ्यः स्मृतिहेतौ पटीयसि। अनुबन्धोऽनुभावादेरनुबन्धोऽस्यकथ्यते॥२५॥ विभावस्यानुभावस्य सात्त्विकव्यभिचारिणोः॥ संयोगे तस्य निष्पत्तिमात्रन्निष्पत्तिरिष्यते॥ २६॥ विषयाश्रयसंस्कारगुणप्रकृतिपाटवैः। दीपनातिशयैश्चाऽस्य प्रकर्षः पुष्टिरुच्यते॥ २७॥ तुल्यकालबलोत्पत्तिहेतौ भावान्तरोदये॥ संसर्गस्तस्य यस्तेन सङ्करः स निगद्यते॥ २८॥ रसान्तरतिरस्कारादन्यद्रागाच्च तस्य यः॥ भवत्यपचयोवृद्धेस्तद्ध्रासन्तमप्रचक्षते॥ २९॥ हीनपात्रेषु तिर्यक्षु नायकप्रतियोगिषु॥ गौणेष्वेव पदार्थेषु तमाभासं विजानते॥२०॥ बलवत्सूपजातेषु प्रतिकूलेषु हेतुषु॥ सर्वात्मना समुच्छेदः प्रशमस्तस्य वर्ण्यते॥ ३१॥ आश्रयात्प्रकृतेर्वापि संस्कारस्थैर्यतो ऽपि वा॥ योऽस्यात्यन्तमविच्छेदः स शेष इति शब्द्यते॥ ३२॥ शृङ्गाराद्या रसा येच येच शान्तोद्धतादयः॥ येच रत्यादिभेदास्तान्विशेषानऽस्य मन्वते॥ ३३॥

१ निष्पत्तिः प्रकटीकरणं न तूत्पत्तिः॥

विभावश्चानुभावश्च संचारीचाश्रयश्चयः ॥ येच लीलाद-
यो यूनां परिपोषः स कीर्त्यते ॥ ३४ ॥ आश्रयोयस्यर-
त्यादिःप्रेमादेरुपजायते ॥ विषयो यत्र योषादौ सो ऽस्य
जन्माऽधिगच्छति ॥ ३५ ॥ आलम्बनविभावः स ज्ञान-
कारणमुच्यते॥तेनादरादिरूपेण संस्कारस्तेनजायते॥३६॥
अन्यतः पटुरभ्यस्त आश्रयादेर्गुणेन सः ॥ तत्प्रबोधाय
माल्यर्तुचन्दनेन्दूदयाऽऽदयः ॥ ३७ ॥ उद्दीपनविभवास्ते
सतैः स्मरति वाञ्छति ॥ द्वेष्टिप्रयततेऽवैति मन्यतेव-
क्ति चेष्टते ॥३९॥ तेऽनुभावास्तदा ये स्युः स्वेदरोमोद्गग-
मादयः ॥ हर्षामर्षादयो येच ज्ञेयाः सञ्चारिणोऽत्रते॥३९॥
स्मृतीच्छायत्नजन्मानोमनोवाक्कायसंश्रयाः॥ विलासा ये
वरस्त्रीणां ज्ञेया लीलादयस्तु ते ॥४०॥ लीला विलासो
विच्छित्तिर्विभ्रमः किलकिञ्चितम् ॥ मोहायितं कुट्टमितं
विब्वोकोललितन्तथा ॥ ४१ ॥ विहृतङ्क्रीडितङ्केलि-
रिति स्त्रीणां स्वभावजाः ॥ हेलाहावादयश्चान्ये ज्ञेयाः
स्त्रीपुंसयोरपि॥४२॥उपसङ्ख्यानमेतेषामनुभावेषु मन्वते॥
पश्चाद्भावाऽनुभूतिभ्यां स्मरणाद्वानुभाववत् ॥ ४३ ॥ स्मृ-
त्यादयोऽनुभावाश्च भावाः संश्चारिणश्चये ॥ नाग्रेऽनुक्रि-
यमाणास्तेनटैरभिनयाः स्मृताः ॥ ४४ ॥ भावोयदा रति-
र्नामप्रकर्षमधिगच्छति । नाऽधिगच्छति चाभीष्टं विप्रल-
म्भस्तदोच्यते ॥४५॥ पूर्वानुरागोमानश्च प्रवासः करुणश्च
सः । पुरुषस्त्रीप्रकाण्डेषु चतुःकाण्डः प्रकाशते ॥४६॥ प्रा
गसङ्केतयोर्यूनोरभिलाषः प्रवर्तते । सङ्कल्परमणीयोऽनु-

रागः सम्प्राच्यउच्यते ॥४७॥ अहेरिवगतिःप्रेम्णः स्वभाव-
कुटिलेति सः। अहेतोर्नैतिनेत्युक्ते हेतोर्वा सा न उच्यते॥
४८॥ देशान्तरादिभिर्यूनोर्व्यवधानञ्चिराय यत्। नवेऽनु-
रागे प्रौढे वाप्रवासः सोऽभिधीयते॥४९॥लोकान्तरगते यू-
निवल्लभे वल्लभा यदा। भृशं दुःखायते दीनःकरुणःस तदो-
च्यते ॥५०॥ रतिरेवेष्टसंप्राप्तौपुष्टःसम्भोग उच्यते । सो-
पिपूर्वानुरागादेरानन्तर्याच्चतुर्विधः ॥५१॥ नविना विप्रल-
म्भेन सम्भोगः पुष्टिमश्नुते॥ कषायिते हि वस्त्रादौ भूयान्रा
गो ऽनुषज्यते॥५२॥स्त्रीपुंसयोर्विप्रलम्भे वैचित्र्याकल्पना
दयः ॥ चेष्टाविशेषाःसम्भोगेचुम्बनालिङ्गनादयः ॥५३॥
विप्रलम्भे ऽभियोगाद्यैः सम्भोगे साध्वसादिभिः ॥ ५४ ॥
मिथःपरीक्षा याः प्रेम्णो निर्दिष्टास्ताः परीष्टयः। विप्रल-
म्भादिशब्दानां लोकसिद्धेषु वस्तुषु ॥५६॥ प्रकृत्यादिवि-
भागेन विनिवेशा निरुक्तयः। संस्मृत्य विप्रलम्भार्थान्
गृधिवञ्चनोःप्रलम्भने।इत्यादिज्ञापकाद्‌ज्ञेयः प्रपूर्वोवञ्चने
लभिः ॥५६॥ आदानञ्च प्रतिश्रुत्य विसंवादनमेव च ॥
कालस्य हरणञ्चाहुः प्रत्यादानञ्च वञ्चनम् ॥५७॥ पूर्वानुरा
गपूर्वेषु विप्रलम्भेषु तत्क्रमात्। विशेषद्योतकेनेह व्युप-
सर्गेण सूच्यते ॥५८॥ प्रतिश्रवोहि पूर्वानुरागवक्रोक्षिता-
दिभिः। अभीष्टालिङ्गनादीनामादानंह्रीभयादिभिः ॥५९॥
माने निवारणन्तेषां विसंवादनमुच्यते। अयथावत्प्रदानं
वा व्यलीकस्मरणादिभिः ॥६०॥ प्रवासेकालहरणं व्यक्त-
मेषां प्रतीयते। प्रोष्यागतेष्विहैतानि कान्ताः कान्तेषु यु-

तुरीयार्थान्प्रयुञ्जते ॥६३॥ विविधश्च विरुद्धश्च व्याविद्धश्च क्रमेण सः । विनिषिद्धश्च पूर्वानुरागादिषु विषज्यते ॥६४॥ पूर्वानुरागे विविधं वञ्चनं व्रीडितादिभिः । माने विरुद्धन्तत्प्राहुः पुनरीर्ष्यायितादिभिः ॥६५॥ व्याविद्धन्दीर्घकालत्वात्प्रवासे तत्प्रतीयते । विनिषिद्धन्तु करुणे करुणत्वेन गीयते ॥ ६६ ॥ रागोनुसहपश्चाद्वानुरूपोऽनुगतोपि वा । यूनोरपूर्वः पूर्वाऽनुरागशब्देन शब्द्यते ॥६७॥ राजतेरञ्जतेर्वापि रागः करणभावयोः ॥६८॥ घञान्यकारके भावेनलोपेन नियम्यते । मान्यते प्रेयसा येन यस्मिन्प्रयत्नेन मन्यते । मनुते वामिमीते वा प्रेममानः स कथ्यते ॥ ६९ ॥ महाभाष्यकृतः"कोसावनुमान,, इति स्मृतेः । ल्युडन्तोपि न पुल्लिङ्गो मानशब्दः प्रदुष्यति ॥७०॥ यत्राङ्गना युवानश्च वसते न वसन्ति च । सप्रवासः प्रशब्देन प्रतीपार्थेन कथ्यते ॥७१॥ चिन्तोत्कण्ठादिभिश्चेतो भृशं वासयतीह यः । प्रवासयति वा यूनः सप्रवासो निरुच्यते ॥७२॥ प्रपूर्वको वसिर्ज्ञेयः कारितान्तःप्रमापणे[१] । तूष्णीम्प्रवासयेदेनमिति वृद्धाऽनुशासनात् ॥७३॥ अभूतोत्पादनायां कृञ् दृष्टः कुरु घटं यथा । दृष्टश्चोच्चारणे चोरङ्कार[२]माक्रोशतीति वत् ॥ ७४॥ दृष्टो ऽवस्थापने ऽश्मानमितः कुरु यथोच्यते ॥७५॥ अभ्यञ्जनेपि च यथा पादौमे कुरु सर्पिषा । मूर्छाविलापौ कुरुते कुरुतेसाहसंमनः॥७६॥करोति दुःखञ्चित्तेनयोसौ क

१ कारितं यदन्तः प्रमापणमाभ्यंतरीवधइत्यर्थः ।

२ कर्मण्याक्रोशे इत्यनेन खमुञ् । चोरशब्दमुच्चार्येत्यर्थः ।

रुण उच्यते। भुजिः पालनकौटिल्याभ्यवहारानुभूतिषु॥७७॥
भुनक्तिभुग्नोभुङ्क्तेन्नम्भुङ्क्तेसुखमितीष्यते। समीचीना-
ऽर्थसम्पूर्णात्ततो घञ् प्रत्यये सति॥७८॥भावे वाकारकेवा
ऽपि रूपं सम्भोग इष्यते। स पावनार्थः पूर्वानुरागानन्तर
उच्यते॥७९॥उत्पन्ना हि रतिस्तस्मिन्ननानुकूल्य न पाल्यते।
स मानानन्तरम्प्राप्तः कौटिल्यार्थं विगाहते ॥ ८० ॥ स्वतो
ऽपि कुटिलम्प्रेम किमु मानान्वयेसति। प्रवासानन्तरेतस्या
ऽभ्यवहारार्थतेष्यते ॥८१॥ तत्र तद्युपोषितैरन्नमिव नि-
र्विश्यते रतिः। करुणानन्तरगतो ऽनुभावार्थःसकथ्यते ८२
विश्रम्भवद्भिरस्मिद्भिः सुखमेवानुभूयते । यदि वा भोग
इत्यस्य सम्प्रयोगार्थवाचिनः॥८३॥समा समासे चतुराश्च-
तुरोर्थान्प्रचक्षते। स संक्षिप्तोऽर्थसङ्कीर्णःसम्पूर्णःसम्यगृद्धि-
मान् ॥८४॥ अनन्तरोपदिष्टेषु सम्भोगेषूपपद्यते । नवे
हि सङ्गमे प्रायो युवानः साध्वसादिभिः॥८५॥ संक्षिप्तानेव
रत्यर्थमुपचारानप्रयुञ्जते। मानस्यानन्तरे तेषां व्यलीकस्म
रणादिभिः॥८६॥ रोषशेषानुसन्धानात्सङ्करः केन वार्यते।
सम्पूर्णः पूर्णकामानाङ्कामिनां प्रोष्यसङ्गमे ॥ ८७॥ उत्क-
ण्ठितानाम्भूयिष्ठमुपभोगः प्रवर्तते। प्रत्यागतेपि यत्रैषा
रतिपुष्टिः प्रयोजने ॥८८॥ साकिमावर्ण्यते यूनान्तत्रैव
मृतजीविते। पूर्वानुरागपूर्वाणां व्युत्पत्तिभिरुदाहृतः॥
८९॥ अनन्तराणां सर्वेषान्तत्समासं निरुक्तयः। वृत्तिर-
त्राऽजहत्स्वार्थाजहत्स्वार्थाऽपि वर्तताम्॥९०॥प्रधानमनु
पस्कृत्य न तदर्थो निवर्तते। प्रथमानन्तरे वृत्तेरजहत्स्वा

र्थतेष्यते ॥ ९१ ॥ नात्यन्तमजहत्स्वार्थान्ताम्मानानन्तरे
विदुः । प्रवासानन्तरेत्वीषदजहत्स्वार्थतेष्यते ॥९२॥ क-
रुणार्थस्य गन्धोपि नास्त्येव तदनन्तरे । अष्टमीचन्द्र-
कः कुन्दचतुर्थीसुवसन्तकः ॥९३॥ आन्दोलनचतुर्थ्येकशा
ल्मलीमदनोत्सवः। उदकक्ष्वेडिका शोकोत्तंसिका चूतभ-
ञ्जिका ॥९४॥ पुष्पावचायिका चूतलतिका भूतमातृका ।
कादम्बयुद्धानि नवपत्रिका बिसखादिका॥९५॥शक्रार्चा
कौमुदीयक्षरात्रिरभ्यूषखादिका । नवेक्षुभक्षिका तोयक्री
डापेक्षादिदर्शनम्॥९६॥द्यूतानि मधुपानञ्च प्रकीर्णानीति
जानते। नित्यो नैमित्तिकश्चान्यः सामान्योऽन्योविशेषवा
न् ॥९७॥ प्रच्छन्नोन्यः प्रकाशोन्यः कृत्रिमाऽकृत्रिमावुभौ
सहजाऽऽहार्यनामानौ परौ यौवनजोऽपरः॥९८॥विश्रम्भ-
जश्च प्रेमाणो द्वादशैते महर्द्धयः । चक्षुःप्रीतिर्मनःसङ्गः स
ङ्कल्पोत्पत्तिसन्ततिः ॥९९॥ प्रलापो जागरः कार्श्यमरति
र्विषयान्तरे । लज्जाविसर्जनं व्याधिरुन्मादो मूर्छनम्मु
हुः॥१००॥ मरणञ्चेति विज्ञेयाः क्रमेणप्रेमपुष्टयः। नायकः
प्रतिपूर्वीयमुपपूर्वोनुनायकः ॥ १०१ ॥ नायिकाप्रतिपूर्वा
सावुपपूर्वाऽनुनायिका। नायिकानायिकाभासावुभयाभा
स इत्यपि॥२॥ तिर्यक्षु च तदाभासा इति द्वादश नायकाः।
तत्र सर्वगुणोपेतः कथाव्यापी च नायकः ॥ ३ ॥ अन्या-
यवाँस्तदुच्छेद्य उद्धतः प्रतिनायकः । ततः कैश्चिद्गुणैर्ही
नः पूज्यश्चैवोपनायकः ॥४॥ समो न्यूनोऽपि वा तस्य क-
नीयाननुनायकः । स्यात्कथाव्यापिनीसर्वगुणयुक्ताऽथ

नायिका॥५॥हेतुरीर्ष्यायितादीनां सपत्नीप्रतिनायिका।
ततः कैश्चिद्गुणैर्हीना पूज्या चैवोपनायिका ॥६॥ समा
न्यूनापि वा किञ्चित्कनीयस्यनुनायिका। तदाभासास्त
थैवस्युर्भेदास्तेषाङ्गुणादिभिः ॥७॥ नायकस्तत्र गुणत उ-
त्तमो मध्यमोऽधमः। प्रकृतेः सात्विकः सस्याद्राजसस्ता-
मसस्तथा ॥८॥ साधारणोनन्यजातिः स विज्ञेयः परि-
ग्रहात्। उद्धतो ललितः शान्त उदात्तो धैर्यवृत्तितः ॥९॥
शठो धृष्टोनुकूलश्च दक्षिणश्च प्रवृत्तितः।गुणतो नायिकापि
स्यादुत्तमामध्यमाधमा ॥११०॥ मुग्धामध्याप्रगल्भा च व-
यसा कौशलेन च। धीराऽधीरा च धैर्येण स्वान्यदीयाप-
रिग्रहात् ॥११॥ उढानूढोपयमनात् क्रमाज्ज्येष्ठा कनीय-
सी। मानर्द्धैरुद्धतोदात्ता शान्ता च ललिता च सा ॥१२॥
सामान्या च पुनर्भूश्च स्वैरिणी चेति वृत्तितः। आजीव-
तस्तु गणिका रूपाजीवा विलासिनी॥ १३॥ अवस्थातो
ऽपराश्चाष्टौ विज्ञेयाः खण्डितादयः। निद्राकूणितताम्रा-
क्षो नारीनखविभूषितः ॥१४॥ प्रातरेति प्रियो यस्याः कु-
तश्चित्खण्डितेति सा। चाटुकारमपि प्राणनाथङ्कोपाद-
पास्य या ॥ १५॥ पश्चात्तापमवाप्नोति कलहान्तरिता तु
सा। दूतीमहरहःप्रेष्यकृत्वा सङ्केतकं क्वचित् ॥ १६॥ य-
स्या न मिलितः प्रेयान्विप्रलब्धेति तां विदुः। सा तु वा
सकसज्जास्यात्सज्जिते वासवेश्मनि ॥१७ प्रियमास्ती-
र्णपर्यङ्के भूषिता या प्रतीक्षते। स्वधीनपतिका सा तु य-
स्याः पार्श्वन्नमुञ्चति॥१८॥प्रियश्चित्ररतक्रीडासुखास्वाद-

नलोलुपः। पुष्येषु पीडिताकान्तं याति या साभिसारिका ॥१९॥प्रियो देशान्तरे यस्याः सा तु प्रोषितभर्तृका। यस्याः समुचितेप्यनिह प्रवासी नैति वल्लभः॥२०॥विरहोत्कण्ठिता सा तु द्वात्रिंशदिति नायिकाः। हीनपात्राणि शेषाणि पीठमर्दोविदूषकः २१ विटचेटौ पताकाश्च सख्यश्चैषाम्परिग्रहः। महाकुलीनतौदार्यंमहाभाग्यङ्कृतज्ञता ॥२२॥ रूपयौवनवैदग्ध्यशीलसौभाग्यसम्मदः। मानितोदारवाक्यत्वमदरिद्रानुरागिता ॥ २३ ॥ द्वादशेति गुणानाहुर्नायकेष्वाभिगामिकान्। मृद्वीकानारिकेराम्रपाकाद्याः पाकभक्तयः ॥ २४ ॥ नीलीकुसुम्भमञ्जिष्ठारागाद्या रागभक्तयः॥अन्तर्व्याजबहिर्व्याजनिर्व्याजाव्याजभक्तयः॥२५॥ धर्मार्थकामोदर्काश्च प्रेमसम्पर्कभक्तयः। वाक्यवच्चप्रबन्धेषु रसालङ्कार सङ्करात् ॥ २६ ॥ निवेशयन्त्यनौचित्यपरिहारेणसूरयः । चतुर्वृत्त्यङ्गसम्पन्नञ्चतुरोदात्तनायकम् ॥ २७ ॥ चतुर्वर्गफलङ्गीनप्रबन्धम्बान्ववीयति। मुखम्प्रतिमुखङ्गर्भोऽवमर्शश्चमनीषिभिः ॥ २८ ॥ स्मृतानिर्वहणञ्चेतिप्रबन्धेपञ्चसन्धयः। अतिविस्तृतमसंक्षिप्तं श्रव्यवृत्तं सुसन्धि च ॥ २९ ॥ भिन्नसर्गान्तवृत्तञ्चकायं लोकोभिनन्दति।पुरोपवनराष्ट्रादिसमुद्राश्रमवर्णनैः॥३०॥ देशसम्पत्प्रबन्धस्य रसोत्कर्षाय कल्पते। ऋतुरात्रिन्दिवार्केन्दूदयास्तमयवर्णनैः॥ ३१ ॥ कालःकाव्येषु सम्पन्नोरसपुष्टिन्नियच्छति। राजकन्याकुमारस्त्रीसेनासेनाङ्गशङ्गिभिः ॥ ३२ ॥ पात्राणां वर्णनात्काव्येरसस्रोतोधिति-

ष्ठति । उद्यानसलिलक्रीडामधुपानरसोत्सवाः ॥ ३३ ॥ विप्रलम्भाविवाहाश्च चेष्टाः काव्ये रसावहाः। मन्त्रदूतप्रयाणाजिनायकाभ्युदयादिभिः ॥ ३४ ॥ पुष्टिःपुरुषकारस्य रसङ्काव्येषु वर्षति । नावर्णनन्नगर्यादेर्दोषायविदुषाम्मत्तम् ॥ ३६ ॥ यदिशैलर्त्तुरात्र्यादेर्वर्णनेनैव तुष्यति । गुणतः प्रागुपन्यस्य नायकन्तेनविद्विषाम् ॥ ३६ ॥ निराकरणमित्येष मार्गः प्रकृतिसुन्दरः । वंशवृत्तश्रुतादीनिवर्णयित्वा रिपोरपि ॥३७॥ तज्जयान्नायकोत्कर्षकथनञ्चधिनोतिनः ॥ १३७ ॥ अथैषां लक्षणोदाहरणानि । मनोनुकूलेष्वर्थेषु सुखसंवेदनंरतिः । आसम्प्रयोगविषयासैवप्रीतिर्निगद्यते ॥ १३९ ॥ तद्रूपेण रसस्य भावो यथा । हरस्तुकिञ्चित्परिवृत्त१धैर्यश्चन्द्रोदयारम्भइवाम्बुराशिः । उमामुखंबिम्बफलाधरोष्ठेव्यापारयामास विलोचनानि । अत्रबिम्बोष्ठत्वादिभिर्मनोनुकूलेपार्वतीमुखेत्रिलोचनव्यापारानुमितो महेश्वरस्याभिलाषविशेषः सात्विको रत्यनुत्पादात्सुखानुभवस्योत्पत्तिमात्रमनुमापयति ॥ १ ॥ तद्रूपेणैव सात्विकोत्पत्तौ जन्मयथा । अभूद्वरः कण्टकितप्रकोष्ठःस्विन्नाङ्गुलिः संववृत्तेकुमारी । तस्मिन्द्वयेतत्क्षणमात्मवृत्तिः समंविभक्तेव मनोभवेन। अत्र स्वेदरोमोद्गमयोः सात्विकयोरुत्पादाद्रसस्य रतिरूपेणात्रिभावो ऽवगम्यते ॥२॥ जन्मैवसञ्चार्युत्पत्तौ यथा । तयोरपाङ्गप्रविचारितानिक्रियाञ्चिद्व्यवस्थापितसंहृतानि । ह्री-

१ परिलुप्तेत्यपिपाठः ॥

यन्त्रणामानशिरेमनोज्ञामन्योन्यलोलानि विलोचनानि॥
अत्र ह्रीःसंचारिभावो जायमानो रसस्य जन्म ज्ञापयति
॥३॥ तदत्रानुभावोत्पत्तौ यथा । ततः सुनन्दावचनावसा-
ने लज्जाम्मृदूकृत्य नरेन्द्रकन्या । दृष्ट्या प्रसादामलया
कुमारम्प्रत्यगृहीत्संवरणस्रजेव । अत्र दृष्टिलक्षणः शरी-
रारम्भेनुभावोभवन् साविर्भावं लक्षयति॥४॥अनुभावा-
देरनेकस्यैकस्य वापुनरुत्पत्तिरनुबन्धः । सोनेकस्य यथा ।
विवृण्वती शैलसुतापि भावमङ्गैः क्वचिद्बालकदम्बकल्पैः।
साचीकृता चारुतरेण तस्थौ मुखेन पर्यस्तविलोचनेन ।
अत्र देव्याः स्मरारौ पूर्वमुत्पन्नारतिः साभिलाषतदव-
लोकनेन विविक्तवसन्तादिभिरुद्दीप्यमानारोमाञ्चावहि-
त्थलक्षणाभ्यां सात्विकव्यभिचारिभ्यामनुबध्यते ॥ ५ ॥
एकस्यैव पुनःपुनर्यथा । यान्त्यामुहुर्वलितकन्धरमानन-
न्तदा वृत्तवृन्तशतपत्रनिभं वहन्त्या । दिग्धोऽमृतेन च
विषेण च पक्ष्मलाक्ष्या गाढन्निखातइव मे हृदयेकटाक्षः॥
अत्र मालत्या माधवविषये पूर्वमुत्पन्ना रतिर्वसन्ताव-
तारतत्सन्निधिविशेषप्रदर्शनादिभिरुद्दीप्यमाना पुनःपु-
नरुत्पन्नेन वलितग्रीवकटाक्षविक्षेपलक्षणेन शरीरार-
म्भानुभावेनानुबध्यते । अत्रैव माधवस्य मालतीविषये
तदहरवोत्पन्ना रतिस्तैरेवोद्दीपनैरुद्दीप्यमाना हर्षधृति-
स्मृतिमतिव्याध्यादिभिः सञ्चारिभावैर्वागारम्भेण चानु-
भावेनानुबध्यते ॥६॥ रतिरूपेणैव रसनिष्पत्तिर्यथा । तं
वीक्ष्य वेपथुमती सरसाङ्गयष्टिर्निक्षेपणाय पदमुद्धृतमर्पय-

न्ती । मार्गाचलव्यतिकराकुलितेव सिन्धुः शैलाधिराजतनया न ययौ न तस्थौ । अत्र जन्मान्तरानुभवसंस्कारात्प्रतिकूलेऽपि शूलिनि शैलात्मजायाः सर्वकालमेवाविच्छिन्नारतिश्चिरं वियुक्तस्य दुश्चरेणापि तपसा प्रार्थनीयसङ्गमस्यतस्याकस्मिकदर्शनेनोद्दीप्यमानासद्यः समुपजायमानसात्त्विकस्वेदस्तम्भवेपथूपलक्षितैर्हर्षधृतिस्मृत्यावेगसाध्वसादिभिर्व्यभिचारिभिर्भावैः पदविक्षेपलक्षणेन चशरीरानुभावेनसंसृज्यते । सोयंविभावानुभावव्यभिचारिसंयोगैरतिरूपेण रसो निष्पद्यते ॥७॥ रतिरूपेणैव रतिपुष्टिर्यथा । पीनश्रोणिगभीरनाभिनिभृतम्मध्येभृशोच्चस्तनम्पायाद्वः परिरब्धमब्धिदुहितुः कान्तेन कान्तं वपुः । स्वावासानुपघातनिर्वृतमनास्तत्कालमीलद्दृशे यस्मै सोच्युतनाभिपद्मवसतिर्वेधाः शिवन्ध्यायति । अत्र सर्वदैव श्रीवत्सलक्ष्मणो लक्ष्मीविषये महाकुलीनतौदार्यस्थिरानुरागितारूपयौवनवैदग्ध्यशीलसौभाग्यमहाभाग्यादिभिः समुत्पन्ना रतिस्तदवयवविशेषकामनीयकविभावनेनोद्दीपनविभावातिशयेनोद्दीप्यमानाब्रह्मणः समक्षमप्यालिङ्गनलक्षणेन शरीरारम्भानुभावेनानुमीयमानां लज्जाप्रणाशलक्षणाम्प्रेमपुष्टेरष्टमीमवस्थामध्यास्ते अत्र चानुक्ता अपि सात्त्विकाव्यभिचारिणोन्येऽपि चाऽनुभावविशेषाः प्रतीयन्ते । श्रियोऽपि च समग्रात्मगुणसम्पदाश्रये श्रीवत्सलक्ष्मणि तथाभूता तदभ्यधिकावा रतिः प्रवृद्धप्रेमप्रियतमालिङ्गनलक्षणेनोद्दीपनविभावेनो

द्दीप्यमानां नयननिमीलनानुमेयां समस्तसात्त्विकानुभा-
वव्यभिचारिहेतुम्प्रेमपुष्टेरुत्तरामवस्थामाश्रयति । सोयं
विषयसौन्दर्यादाश्रयप्रकृतेः संस्कारपाटवादुद्दीपनाति-
शयाच्च पराङ्कोटिमावहन् रसः पुष्टइत्युच्यते। अत्रैव ब्र
ह्मणः श्रियम्प्रतिमानोहराममेयां सृष्टिरिति रत्नाकरस्ये-
यमात्मजेति चन्द्रामृतादीनामियंसोदर्येति विष्णोरिय-
म्प्रियतमेति कामस्येयं जननीत्यादिभ्य आलम्बनेभ्यः स
मुत्पन्ना प्रीतिः स्वाबासानुपघातिना शरीरसन्निवेशे-
न दृङ्निमीलनजनितया च तदुपघातशङ्कया उद्दीप्यमा-
ना तत्क्षणोपजायमानतया वेगस्मृतिवितर्कोन्मादमोह-
चिन्तादिभिर्व्यभिचारिभावैस्तदनुमेयैश्च स्तम्भवेपथुप्र-
भृतिसात्त्विकैः शिवानुध्यानलक्षणेन बुद्धयारम्भानुभावेन
संसृज्यमानापरम्प्रकर्षमारोहतीति प्रतीयते ॥ ८ ॥ रतौ
भयादिसङ्करो यथा। राहोश्चन्द्रकलामिवाननचरीन्दैवा-
त्समासाद्यमेदस्योरस्य कृपाणपातविषयादाच्छिन्दतःप्रे
यसीम्। आतङ्काद्विकलन्द्रुतङ्करुणया विक्षोभितं विस्म-
यात्क्रोधेन ज्वलितम्मुदाविकसितञ्चेतः कथं वर्तताम्।
अत्र माधवस्य मालत्याम्पूर्वमुत्पन्नारतिस्तदवस्थालो
कनादिभिरुद्दीपनविभावैरुद्दीप्यमाना भयशोकविस्मय-
क्रोधहर्षैरपिरसान्तरैःपृथक्पृथग्विभावानुभावव्यभिचा
रिसंयोगान्निष्पद्यमानैः सङ्कीर्यमाणा मनोवाग्बुद्धिशरी-
रारम्भानुभावैर्भयाद्यनुरूपैश्च सात्त्विकव्यभिचारिभिः स-
म्पर्कैःपरम्प्रकर्षमारोहन्ती प्रतीयते।तत्र"चेतसो वैकल्या-

दिपरिभावनम्मन आरम्भो वाक्योच्चारणं"वागारम्भः रा-
हीरिवदस्योश्चन्द्रकलामिव प्रेयसीमित्यादि„बुद्ध्यारम्भः।
आच्छिन्दत इत्यादि"शरीरारम्भः।भयादीनाञ्चपञ्चाना-
मपि यथाक्रमं राहोरिति चन्द्रकलामिवाननचरीमिति दै
वात्समासाद्यम इति दस्योरस्य कृपाणपातविषयादिति
आच्छिन्दतः प्रेयसीमित्यालम्बनविभावास्तत्स्वरूपपरि
भावनान्युद्दीपनविभावाः विकलन्द्रुतं विक्षोभितञ्चलितं
विकसितमित्यनुभावाः। आतङ्ककरुणाविस्मयक्रोधमुद-
नुरूपाश्च कम्पाश्रुस्तम्भवैवर्ण्यरोमाञ्चादयः सात्त्विकामो-
हविषादोदर्कौग्र्यताधृत्यादयोव्यभिचारिणश्चानुमीयमा-
नानिष्पत्तिहेतवो भवन्ति। सोयन्तुल्यकालबलोत्पत्ति-
कारणानाम्भयादिनिष्पत्तीनां रतौ संसर्गः सङ्कर इत्यु-
च्यते ॥९॥ रतिरूपेण रसप्रकर्षस्य ह्रासो यथा। कोपो
यत्र भ्रुकुटिरचनानिग्रहो यत्र मौनं यत्राऽन्योन्यं स्मितम-
नुनयो दृष्टिपातः प्रसादः। तस्य प्रेम्णस्तदिदमधुना वै-
शसम्पश्यजातन्त्वम्पादान्ते लुठसि नच मे मन्युमोक्षः
खलायाः।अत्र योषितिरोषाख्यरसान्तरतिरस्कारात्पुरुषे
चान्यरागाद्रतिप्रकर्षस्य ह्रासोऽवगम्यते ॥१०॥ रतिरूपेण
हीनपात्रेषु रसाभासो यथा। विक्किणइ माहमासम्मि
पामरोपारणं बिइल्लेण। णिद्धूममुम्मुरेसामलीएथ-
णएणिअच्छन्तो १ ॥११॥ तिर्यक्षु यथा। पअपाडिअंसो

१ विक्रीणीते माघमासे पामरः प्रावरणं बलीवर्देन। निर्धूम मुर्मुरश्याम-
लायास्तनौनियच्छमानः।

हग्गन्तं वाए उवसहगोठ्ठमज्भम्मि। दुठ्ठवसहस्स सिङ्गेअ-
च्छिउडङ्कडुअन्तीए १॥१२॥ नायकप्रतियोगिषु यथा। पुलअ
ञ्जणेंति दहकन्धरस्स राहवसरा सरीरम्मि। जणअसुआ
फअंसमहग्घविअकरअलाठ्ठविमुक्का २॥१३॥ गौणेषु य-
था। उव्वहइ णवत्तिणंकुररोमञ्चपसाहिआइ अङ्गाइं। पाउ-
सलच्छीएपओहरेहिंपडिवेल्लिओविञ्झो ३॥ एतेचत्वारोपि-
रसाभासा उच्यन्ते ॥१४॥ रतावेवलज्जारोषरूपरसान्तर-
योः प्रशमो यथा। दृष्टे लोचनवन्मनाङ्मुकुलितम्पार्श्वं-
स्थिते वक्त्रवन्न्यग्भूतम्बहिरासितमपुलकवत्स्पर्शंसमात-
न्वति। नीवीबन्धवदागतं शिथिलतामाभाषमाणे ततो
मानेनापगतं ह्रियेव सुदृशः पादस्पृशिप्रेयसि। अत्र ब-
लवद्भ्यां प्रियप्रेमानुनयाभ्यां ह्रीरोषयोरुपशमः क्रियते ॥
१५॥ रतावेवरोषरूपरसस्यशेषो यथा। एष्यत्युत्सुकमा-
गते विवलितं सम्भाषिणि स्फारितं संश्लिष्यत्यरुणं गृ-
हीतवसने कोपाञ्चितभ्रूलतम्। मानिन्याश्चरणानतिव्य-
तिकरे बाष्पाम्बुपूर्णेक्षणञ्चक्षुर्जातमहोप्रपञ्चचतुरञ्जाता-
गसिप्रेयसि। अत्र कस्याश्चिद्बलवताप्रेम्णोन्मूलितस्यापि
मानस्य शेषेऽनुवर्तते। तएते भावा दशापि रसप्रकारा हा-

१ प्रतिपादितं सौभाग्यं त्वयैवेह वृषभ गोष्ठमध्ये। दुष्टवृषभस्यशृङ्गे चक्षि-
पुटं कण्डूयन्त्या।

२ पुलकं जनयन्ति दशकन्धरस्य राघवशराः शरीरे। जनकसुता स्पर्शम-
हार्घित करतलाकृष्टविमुक्ताः॥

३ उद्वहति नवतृणाङ्कुर रोमाञ्चप्रसाधितानि अङ्गानि। प्रावृट्लक्ष्म्याः पयो-
धराभ्यां प्रतिवेल्लितो विन्ध्यः।

सादिष्वपि प्रायशो दृश्यन्ते । ग्रन्थगौरवभयान्न क्वचिदु-
दाह्रियन्ते॥१८॥ तत्र । न्यङ्गः १ क्रीडादिभिश्चेतो विकासो
हास उच्यते । तद्रूपेण रसस्य भावो यथा । कनककलश-
स्वच्छे राधापयोधरमण्डले नवजलधरश्यामामात्मद्यु-
तिम्प्रतिबिम्बिताम् । असितसिचयप्रान्तभ्रान्त्या मुहुर्मु-
हुरुत्क्षिपन् जयति जनितव्रीडाहासः प्रियाहसितो हरिः।
अत्र राधया हरिन्यङ्गाद्धरेस्तु व्रीडातो हासस्य सत्तामात्र-
म्प्रतीयते॥१॥शोकश्चित्तस्य वैधुर्यमभीष्टविरहादिभिः॥१४१॥
तद्रूपेण रसस्य निष्पत्तिर्यथा । हृदयान्नापयातोसि दि-
क्षु सर्वासु दृश्यसे । वत्स रामगतोसीति सन्तापादनुमी-
यसे । अत्र दशरथस्य रामवियोगादुत्पन्नस्तद्गुणस्म-
रणादिभिरुद्दीपितश्चिन्तासन्तापादिर्वागारम्भेण चानुष-
ज्यमानः शोकरूपेण रसो निष्पद्यते॥२॥ प्रतिकूलेषुतैक्ष्ण्य
स्य प्रबोधः क्रोध उच्यते॥१४२॥ तद्रूपेण रसस्य निष्पत्ति
र्यथा। मय्येवमस्मरणदारुणचित्तवृत्तौ वृत्तं रहः प्रणयमप्र-
तिपाद्यमाने। भेदाद्भ्रुवोःकुटिलयोरतिलोहिताक्ष्या भग्नं
शरासनमिवातिरुषास्मरस्य।अत्र "यद्यपि विभावाऽनुभा-
वसञ्चारि संयोगलक्षणाया रसनिष्पत्तेरधिकमतिरुषाति
लोहिताक्ष्येति प्रकर्षनिमित्तमतिशब्दोपादानं विद्यते" त-
थाप्युत्तमनायिकाश्रयः प्रियविषये न रोषः प्रकर्षमासा-
दयति॥३॥कार्यारम्भेषु संरम्भःस्थेयानुत्साहइष्यते॥१४३॥

१ सोल्लुण्ठनं वचः।

तद्रूपेण रसस्य जन्म यथा । मूर्द्धा जाम्बवतोभिवाद्य च रणावापृच्छ्य सेनापतीनाश्वास्याश्रुमुखान्मुहुः प्रियसखीन्प्रेष्यान्समादिश्य च । आरम्भज्ञगृहे महेन्द्रशिखरादम्भोनिधेर्लङ्घने रंहस्वी रघुनाथपादरजसामुच्चैः स्मरन्मारुतिः ॥ अत्राभिवादनाप्रश्नाश्वासनासमादेशनाद्रिशिरारोहणेष्टदेवतास्मरणानां पूर्वरङ्गपर्यवसायित्वेनाऽनुद्दीपनविभावत्वादनुत्साहानुभावत्वाच्च नायमनुबन्धो निष्पत्तिः प्रकर्षो वा भवति ॥४॥ भयञ्चित्तस्य वैक्लव्यं रौद्रादिजनितं विदुः ॥१४४॥ तद्रूपेण रसस्यानुबन्धो यथा । मन्त्रान्मृत्युजितो जपद्भिरसकृद्ध्यायद्भिरिष्टान्सुराञ्छुष्यत्तालुभिराकुलाकुलपदैर्निर्यद्भिरुत्कम्पिभिः । अध्वन्यैरिह जीवितेश महिषव्याघ्रूग्रधूमाविलालङ्घ्यन्ते करिमांसघस्मररणत्कौलेयकाः पल्लयः ॥ अत्र "यद्यपि पल्लीनामालम्बनत्वन्तद्विशेषणयोरुद्दीपनत्वम्मन्त्रजपादेरनुभावत्वन्तालुशोषादीनां व्यभिचारित्वमिति विभावानुभावव्यभिचारिसंयोगो ऽस्ति" तथापि मन्त्रजपेष्टदेवतानुध्यानयोर्लङ्घनोपायपरत्वान्न भयरूपेण रसनिष्पत्तिः ॥ अध्वन्यानां हि तन्निष्पत्तावल्पसत्वतयास्तम्भमोह मूर्छामरणादिभिरुपायप्रयोगो न घटते ॥५॥ जुगुप्सा गर्हणाऽर्थानान्दोषसन्दर्शनादिभिः ॥१४५॥ तद्रूपेण रसस्यानुगमो यथा । रे हस्त दक्षिण मृतस्य शिशोर्द्विजस्य जीवातवे विसृज शूद्रमुनौ कृपाणम् । रामस्य गात्रमसि निर्भरगर्भखिन्नसीताप्रवासनपटोः करुणा कुतस्ते ॥ अत्र "यद्यपि द्विजशिशोर्जीव-

नाय मुनिरपि शूद्रो वध्य इति न रामस्यात्मकर्मनिन्दा” तथाप्यनपकारिणञ्जिघांसतो घृणा प्रवर्तत इति सीतापरित्यागविषयत्वेनैवात्र जुगुप्सानुगमो गृहीतव्यः। शम्बूकविषये पुनरस्याजन्ममात्रमेवेति ॥६॥ विस्मयश्चित्तविस्तारः पदार्थातिशयादिभिः ॥१५६॥ तद्रूपेण रसस्य जन्म यथा। कृष्णेनाम्ब गतेन रन्तुमधुना मृद्भक्षिता स्वेच्छया सत्यं कृष्ण क एव माहमुसलीमिथ्याम्ब पश्याऽननम्। व्यादेहीति विदारिते तु वदने दृष्टा समस्तञ्जगन्माता यस्य जगाम विस्मयवशम्पायात्स वः केशवः। अत्र शिशोर्मुखेजगद्दर्शनमालम्बनविभावः। तत्सामग्रशैशवाद्यालोकनमुद्दीपनविभावो विस्मयवशञ्जगामेत्यनेनाऽनुपात्ता अपि सञ्चारिणोनुभावाश्च गृह्यन्ते॥७॥ स्तम्भश्चेष्टाप्रतीघातो भयरागामयादिभिः॥१५७॥ तद्रूपेण रसस्य पुष्टिर्यथा। तन्ताणइअच्छाअंणिच्चलओअणसिहम्पउत्थपआवम्। आलेक्खपईवाण व्वणिअअम्पअइचडुलत्तणम्पि विअलिअम्।[१] अयञ्च पुष्टोपि सात्त्विकत्वात्सदैवान्यानुयायीति नानुभावादिभिरनुबध्यते॥८॥ हर्षाद्भुतभयादिभ्यो रोमाञ्चो रोमविक्रिया॥१५८॥ तद्रूपेण रसस्य जन्म यथा॥ करिमरिअआलगज्जिरजलआसणिपडिरवोएसो। पइणोधणुरवकङ्खिणिरोमञ्चङ्किम्मुहावहसि[२]। अस्यापि

---

१ एतच्छ्लोकच्छाया चतुर्थपरिच्छेदे (२२) पृष्ठे गता

२ किर्मीरितजाल गर्जित जलदाशनि प्रतिरवोएषः। पत्युर्धनूरवकाङ्क्षिणि रोमाञ्चं किं मुधावहसि ॥

सात्विकत्वादन्यानुबन्धानजायन्ते॥९॥मदप्रमदपीडादेर्वै-
स्वर्यङ्गद्गदं विदुः॥१४९॥तद्रूपेण रसस्य निष्पत्तिर्यथापि-
पिप्रियससस्वयंमुमुमुखासवन्देहि मे ततत्यज दुदुद्रुतम्भ
भभभाजनङ्काञ्चनम् । इति स्खलितजल्पितम्मदवशोत्कु
रङ्गीदृशः प्रगे हसितहेतवे सहचरीभिरध्यैयत॥ अयमपि
सात्विकत्वान्निष्पन्नो नान्यैरनुबध्यते॥१०॥वपुर्जलोद्ग-
मः स्वेदो रतिघर्मश्रमादिभिः॥१५०॥तद्रूपेणरसस्य जन्म
यथा । हिमव्यपायाद्विशदाधराणामापाण्डुरीभूतमुख-
च्छवीनाम् । स्वेदोद्गमः किम्पुरुषाङ्गनानां चक्रे पदं
पत्र विशेषकेषु॥अत्रापि पूर्ववदन्यानुषङ्गो न भवति॥११॥
रागरोषभयादिभ्यः कम्पो गात्रस्य वेपथुः ॥१५१॥ तद्रू-
पेण रसस्यजन्म यथा । मा गर्वमुद्वह कपोलतले चका-
स्ति कान्तस्वहस्तलिखितामम मञ्जरीति । अन्यापि कि-
न्न सखिभाजनमीदृशीनां वैरी न चेद्भवति वेपथुरन्त-
रायः॥ अयमपि प्राग्वदेवनान्यैरनुगम्यते॥१२॥विषादम-
दरोषादेर्वर्णान्यत्वं विवर्णता॥१५२॥तद्रूपेण रसस्य निष्प-
त्तिर्यथा । सहिसाहसंतेण समं अहम्पिकिंणिग्गआपहा-
अम्मि।अण्णव्विअदीसइ जेणदप्पणेकाविसासुमुही॥अय
मपि नान्यैरनुबध्यते॥१३॥अश्रुनेत्रोद्गतं वारि दुःखशोक
प्रहर्षजम्॥१५३॥तद्रूपेण रसस्यानुबन्धो यथा । उत्पक्ष्म-
णोर्नयनयोरुपरुद्धवृत्तिं बाष्पं कुरु स्थिरतया शिथिलाऽनु-

१ सखिसाहसंतेन सममहमपिकिं निर्गताप्रभाते । अन्यैवदृश्यते येन द-
र्पणे कापिसासुमुखी ।

बन्धम्। अस्मिन्नलक्षितनतोन्नतभूमिभागे मार्गे पदानि खलु ते विषमी भवन्ति। अत्र वाष्पशब्देन लोचनाश्रयमस्रूच्यते। नकण्ठाद्यश्रयो दुःखावेशः यथा। विललाप सगद्गदम्।मुहुर्लग्नः कण्ठे तरलयति वाष्पस्तनतटीमिति॥१४॥ प्रलयस्तीव्रदुःखादेरिन्द्रियास्तमयो मतः ॥१५४॥ तद्रूपेण रसस्य निष्पत्तिर्यथा। तीव्राभिषङ्गप्रभवेन वृत्ति म्मोहेन संस्तम्भयतेन्द्रियाणाम्। अज्ञातभर्तृव्यसना मुहूर्तङ्कृतोपकारेव रतिर्बभूव। अत्र मोहशब्देन मूर्च्छोच्यते। न वक्ष्यमाणलक्षणो मोहः।१५॥स्मृतिः पूर्वानुभूतार्थविषयं ज्ञानमुच्यते ॥१५५॥ तद्रूपेण रसस्यानुबन्धो यथा। इतः प्रत्यादेशात्स्वजनमनुगन्तुं व्यवसिता स्थितातिष्ठेत्युच्चैर्वदति गुरुशिष्ये गुरुसमे। पुनर्दृष्टिम्बाष्पप्रकरकलुषामर्पितवती मयि क्रूरे यत्तत्सविषमिव शल्यन्दहति माम्। अत्र सविशेषा स्मृतिरिच्छया वागारम्भेण चानुबध्यते। निष्पत्त्यादयः पुनरस्या रत्यादिनिष्पत्तिष्वेव द्रष्टव्याः। रत्यादयो हि स्मृतिमूलत्वात्तत्प्रकर्षाऽपकर्षावनुवर्तन्ते॥१६॥उहो वितर्क इत्युक्तः पदार्थेषु यथामति॥१५६॥ तद्रूपेण रसस्य निष्पत्तिर्यथा।चित्ते निवेश्य परिकल्पितसत्त्वयोगाद्रूपोच्चयेन घटिता मनसा कृता नु।स्त्रीरत्नसृष्टिरपरा प्रतिभाति सा मे धातुर्विभुत्वमनुचिन्त्य वपुश्च तस्याः।सोयमसत्यः सत्यो वा स्मृतिज्ञानचिन्तनादिद्वारेण निश्चयान्तो निष्पन्न इत्युच्यते॥१७॥ उत्कण्ठेष्टानवाप्तौ योऽभिलाषः स्यात्तदाप्तये ॥१५७। तद्रूपेण रसनिष्पत्ति-

ह्रासो यथा । यास्यत्यद्य शकुन्तलेति हृदयं संस्पृष्टमुत्कण्ठया । बाष्पस्तम्भितकण्ठवृत्तिवचनं चिन्ताजडं दर्शनम् । वैक्लव्यं मम तावदीदृशमिदं स्नेहादरण्यौकसः पीडयन्ते गृहिणः कथं नु तनयाविश्लेषदुःखैर्नवैः अत्र विभावानुभावव्यभिचारिसंयोगात्प्रीतिरिवोत्कण्ठापि तदनुषङ्गिणी निष्पन्ना उत्तरार्द्धप्रतिपाद्येन तथाविधेनैव विस्मयादिना ऽभिभूयमाना ह्रास इत्युच्यते प्रकर्षश्चास्य ममारण्यौकस इत्यनेन निवार्यते ॥ प्रयत्नपूर्विकार्थेषु स्मृतिश्चिन्तेति कथ्यते॥१५८॥ तद्रूपेण रसस्य प्रकर्षो यथा । चिन्ताणिअदइअसमागमम्मि कअमण्णुआइ मरिऊण । सुण्णं कलहाअन्तीसहीहिं रुण्णाण ओहसिआ[1]॥ अत्र सखीरोदनेन शून्यकलहः शून्यकलहेन साक्षात्कारः साक्षात्कारेण चिन्ता चिन्तया तु मूलभूता रतिः प्रकृष्यते ॥ आत्मप्रकाशनपरा चेष्टा चपलतोच्यते ॥ १५९ ॥ तद्रूपेण रसस्य जन्म यथा । कश्चित्कराभ्यामुपगूढनालमालोलपत्राभिहतद्विरेफम् । राजोभिरन्तः परिवेषबन्धि लीलारविन्दं भ्रमयाञ्चकार ॥ अत्र लीलारविन्दभ्रमणचेष्टया कश्चिदिन्दुमत्यै तिष्ठते ॥ शास्त्रोक्तार्थानुसन्धानादर्थनिर्द्धारणं मतिः ॥ १६० ॥ तद्रूपेण रसस्याऽनुबन्धो यथा । असंशयं क्षत्रपरिग्रहक्षमा यदार्यमस्यामभिलाषि मे मनः । सतां हि संदेहपदेषु वस्तुषु प्रमाणमन्तःकरणस्य वृत्तयः ॥ अत्र पूर्वार्द्धोक्ता-

१ चिन्तानीतदयितसमागमे कृतमन्युना मृता भूत्वा ॥ शून्यं कलहायन्ती सखीभी रुदितान् वाहसिता ॥

र्थनिर्द्धारणरूपा मतिरुत्तरार्द्धेनाऽनुभूयते ॥ गर्वोऽन्येषामवज्ञानमात्मसम्भावनादिभिः ॥ १६१ ॥ तद्रूपेण रसपुष्टिर्यथा । धृतायुधो यावदहन्तावदन्यैः किमायुधैः । यद्वा न सिद्धमस्त्रेण मम तत्केन सेत्स्यति ॥ अत्र कर्णस्यात्मसम्भावनया ऽश्वत्थामन्यवज्ञानम्प्रकृष्यते । अहेतुरनिवर्त्या च स्नेहश्चित्तार्द्रता मता॥६२॥तद्रूपेण रसस्यनिष्पत्तिर्यथा॥अनेन कस्यापि कुलांकुरेण स्पृष्टेषु गात्रेषु सुखम्ममैतत्। कान्निर्वृतिञ्चेतसि तस्य कुर्याघस्यायमङ्गात्कृतिनः प्ररूढः।अत्र दुष्यन्तस्य सत्वदमनदर्शनादुत्पन्नस्तदङ्गस्पर्शसुखादिभिरुद्दीपितः स्पृहामतिवितर्कंत्रागारम्भैः संसृज्यमानः स्नेहोनिष्पद्यते ॥ अभीष्टार्थस्य सम्प्राप्तौस्पृहापर्याप्तता धृतिः॥१६३॥ तद्रूपेण रसप्रकर्षोयथा । नीतो विक्रमबाहुरात्मसमताम्प्राप्तेयमुर्वीतले सारं सागरिका ससागरमहीप्राप्त्येकहेतुः प्रिया । देवीप्रीतिमुपागता च भगिनीलाभाज्जिताःकोसलाः किन्नास्ति त्वयि सत्यमात्यवृषभेयस्मिन्करोमि स्पृहाम् । अत्रवत्सराजस्य सर्वात्मनामनोरथसिद्धयो धृतेः प्रकर्षमावहन्ति ॥ चेतोनिमीलनं व्रीडा न्यङ्गरागस्तवादिभिः॥१६४॥तद्रूपेण रसप्रकर्षात्कोपशोकाभ्यांसङ्करो यथा॥अक्षुद्रारिकृताऽभिमन्युनिधनात्सङ्क्रान्ततीव्रक्रुधः पार्थस्याऽकृतशात्रवप्रतिकृतेरन्तः शुचा मुह्यतः।कीर्णा बाष्पकणैः पतन्ति धनुषि व्रीडाजडा दृष्टयो हा वत्सेतिगिरः स्फुरन्ति न पुनर्निर्यान्तिकण्ठाद्बहिः । अत्रार्जुनस्याऽन्यायेनाऽभिमन्युवधाहुतभू-

तौ दीप्तावेव क्रोधशोकावुद्भूतविप्रतिकारोऽथया तथा-विधयैव व्रीडया सङ्कीर्येते। तथा हि, क्रोधशोकयो रनुभा-वभूता दृष्टयो बाष्पश्च व्रीडाजडा इति विशेषणानि संबध्य-न्ते । अवहित्थन्तु लज्जादेर्हर्षाद्याकारगोपनम् ॥ १६५ ॥ तद्रूपेण रसस्याऽनुबन्धो यथा ॥ एवं वादिनि देवर्षौ पार्श्वे पितुरधोमुखी । लीला कमलपत्राणि गणया-मास सपार्वती । अत्र । प्रणम्य शितिकण्ठाय विबुधास्त-दनन्तरम् । चरणौ रञ्जयन्त्वस्याश्चूडामणिमरीचिभिरित्या देर्मुनिवाक्यादुद्भूतप्रहर्षाकारो गुरुसन्निधौ लज्जितया-लीलाकमलपत्रगणनेन गौर्या गोप्यते। सुखदुःखादिजनि-तो मोहश्चित्तस्य मूढता ॥१६६॥ तद्रूपेण रसस्य निष्पत्तिर्य-था। कान्ते तल्पमुपागते विगलिता नीवीस्वयम्बन्धनाद्वा-सश्च श्लथमेखलागुणधृतङ्किञ्चिन्नितम्बेस्थितम् । एताव-त्सखि वेद्मि साम्प्रतमहन्तस्याङ्गसङ्गे पुनः कोऽसौ कास्मि-रतञ्च किङ्कथमिति स्वल्पापि मे न स्मृतिः ॥ अत्र स्थायि-नीरतिर्मोहनिष्पत्त्या प्रकृष्यते॥ सम्मोहानन्दसम्भेदोम-दिरादिकृतोमदः ॥ १६७ ॥ तद्रूपेण रसस्य निष्पत्तिर्यथा । घूर्णमाननयनं स्खलत्कथं स्वेदबिन्दुमदकारणस्मितम् । आननेन ननु तावदीश्वरश्चक्षुषा चिरमुमामुखम्पपौ॥ अत्र-नयनघूर्णनाकारेण स्मितादयः सम्मोहानन्दसम्भेदा उन्न-यन्तो मदन्निष्पादयन्ति । मनः प्रसादो हर्षः स्यादिष्टावा-प्तिस्तवादिभिः॥१६८॥ तद्रूपेण रसस्य प्रकर्षो यथा॥ जात-स्य ते पितुरपीन्द्रजितो निहन्तुर्वत्सस्य वत्स कति नाम

दिनान्यमूनि। तस्याप्यपत्यमधितिष्ठति वीरधर्मं दिष्टयागतन्दशरथस्य कुलम्प्रतिष्ठाम् । अत्र दशरथसुहृदः सुमन्त्रसारथेः प्रभुकुलप्रतिष्ठामाशंसतस्तत्सूनुमिन्द्रजितो हन्तारंपश्यतो मनोरथावाप्तयाहर्षोनिष्पन्नस्तदपत्येपि वीरधर्ममाचरिष्णौ प्रकृष्टो दिष्ट्येत्यव्ययेन सूच्यते ॥ क्रोधः कृतापराधेषुस्थिरो ऽमर्षत्वमश्नुते॥१६९॥तद्रूपेणरसस्य प्रकर्षोयथा। लाक्षागृहाऽनलविषान्नसभाप्रवेशैः प्राणेषुवित्तनिचयेषु च नः प्रहृत्य।आकृष्टपाण्डववधूपरिधानकेशाः स्वस्था भवन्ति मयि जीवति धार्त्तराष्ट्राः । अत्रभीमसेनस्य धार्त्तराष्ट्रेषुस्वस्था इति नाम्नोप्यसहना लाक्षागृहाद्यपकारजन्मा ऽमर्षः प्रतीयते । असूया ऽन्यगुणर्द्धीनामौद्धत्यादसहिष्णुता॥१७०॥तद्रूपेण रसस्य जन्म यथा । वन्द्यास्ते न विचारणीयचरितास्तिष्ठन्तु हुं वर्त्तते सुन्दस्त्रीनिधनेप्यखण्डयशसो लोके महान्तो हि ते । यानि त्रीण्य कुतोमुखान्यपि [1] पदान्यासन्खरायोधने यद्वा कौशलमिन्द्रसूनुदमने तत्रा ऽप्यभिज्ञो जनः ॥ अत्रयद्यपि सोल्लुण्ठदोषकीर्त्तनादिभिर्जुगुप्सानिष्पद्यते तथापि न तया स्वनिष्पत्तिहेतुरसूया सङ्कीर्त्यते ! ईर्ष्यामाहुः समानेषु मानदानाद्यमर्षणम् ॥१७१॥तद्रूपेण रसस्य प्रकर्षो यथा । हुंणिल्लज्ज समोसरताबिअ अणुणेसु जाइदं एअम् । पाअग्गङ्गुट्ठालत्तएण तिलअं विणिम्मविअम्[2]।

---

१ यज्ञुतंभयाच्च पीत्यपिपाठः ॥

२ हुं निर्लज्ज समपसर तामेवाऽनुनयस्त्वय यादेव इदम् ॥ पादा ग्राङ्गुष्ठालक्तकेन तिलकं विनिर्मितम् ॥

अत्र कस्याश्चित्प्रेयसि सपत्नीम्प्रसादयितुङ्गते तन्मानम-
मृष्यमाणायाः समुत्पन्नेर्ष्या प्रियानुनयादिभिर्भृशायमा-
नलया निष्पन्नाऽलक्तकतिलकानुमेयैस्तत्पादपतनादिभि-
रुद्दीप्ता हुङ्काराक्षेपभर्त्सनप्रतिभेदाभिनार्भूतभ्रूभेदाङ्गताड-
नाङ्गक्षेपस्वेदगद्गदादिभिः संसृज्यमाना प्रकृष्यते॥विषाद-
श्चेतसो ग्लानिरुपायाभावनाशयोः॥१७२॥ तद्रूपेणरस-
स्यप्रकर्षोयथा । व्यर्थं यत्र कपीन्द्रसख्यमपि मे वीर्यं
हरीणां वृथा प्रज्ञा जाम्बवतोपि यत्र न गतिः पुत्रस्य
वायोरपि . मार्गंयत्र न विश्वकर्मतनयः कर्त्तुंनलोपि क्ष-
मः सौमित्रेरपि पत्रिणामविषयस्तत्र प्रिया क्वापि मे।
अत्र सीतासमागमविषये रामस्यदृष्टावदानसुग्रीवस-
ख्यादेरुपायस्याऽभावाद्विषादः प्रकृष्यते॥ सत्वत्यागाद-
नुत्कर्षो वाक्यादेर्दैन्यमुच्यते ॥ १७३ ॥ तद्रूपेण रसस्या
नुबन्धो यथा । अस्मान्साधु विचिन्त्य संयमधनानुच्चैः-
कुलञ्चात्मनस्त्वय्यस्याः कथमप्यबान्धवकृतामभावप्रवृ-
त्तिञ्च ताम् । सामान्यप्रतिपत्तिपूर्वकमियन्दारेषु दृश्या
त्वया भाग्याधीनमतः परन्न खलु तद्वाच्यं वधूबन्धु-
भिः१।।अत्रस्नेहप्रसत्रमपादद्वयोक्तमर्थितादैन्यन्तुरीयपा-
दोपक्षिप्तयाञ्चा दैन्यान्तन्तरेणाऽनुबध्यते ॥ विदुर्वाङ्गगड-
पारुष्यमुग्रतामपकारिषु ॥ १७४ ॥ तद्रूपेण रसस्य प्रक-
र्षोयथा । प्रणयिसखीसलीलपरिहासरसाधिगतैर्ललित-

१ सा दारेषु अन्यप्रतिपत्तिपूर्वकं त्वयाऽऽदृश्या किंतु ममैवेयमित्याग्रहपू-
र्वकं मित्यर्थः अथवा सामान्यप्रतिपत्तिपूर्वकं त्वयातेषुद्रष्टव्या यतो । हि वयंसंयम-
धानाः इति सम्यक्विचार्येत्यर्थः ॥

शिरीषपुष्पहननैरपि ताम्यति यत् । वपुषि वधाय तत्र तव शस्त्रमुपक्षिपतः पततु शिरस्य काण्डयमदण्ड इ-वैष भुजः। अत्र माधवस्यप्रकृष्टापकारिण्यघोरघण्टेविष-येप्रकृष्टमेववाक्यारुष्यन्दण्डपारुष्यञ्च जायते । त्रासश्चि-त्तचमत्कारआकस्मिकभयादिभिः ॥ १७५ ॥ तद्रूपेण-रसस्य जन्मयथा । परिस्फुरन्मीनविघट्टितोरवःसुराङ्ग-नास्त्रासविलोलदृष्टयः । उपाययुः कम्पितपाणिपल्लवाः सखीजनस्यापि विलोकनीयताम् । अत्र लोलदृष्टिता-करावधूननञ्च स्त्रीणां स्वभावभीरुत्वविलासित्वाभ्यामपि भवतीति त्रासाविर्भावेप्यसमर्थमिति नानुबन्धोभवतो-ति ॥ अनिष्टाभ्यागमोत्प्रेक्षां शङ्कामाचक्षते बुधाः ॥१७६॥ तद्रूपेण रसस्य प्रकर्षो यथा । सहसा मासाहिज्जउ पिआगमो तीअविरहक्किसिआए । अच्चन्तपहरिसेण वि-जाअ मुआसामुअव्वे अ अत्र १ ॥ विरहिण्याःकार्श्याति-शयमुद्वीक्ष्यमाणायाःकस्याश्चिद्वयस्यायाःस्नेहातिशयात्प्रे-म पश्यति भयान्यपदे पीति प्रियागमहर्षातिशयभावे ऽ-प्यसहिष्णुतया तन्मरणशङ्काप्रकृष्यते ॥ विरहादेर्मन-स्तापः शरीरातङ्कदो गदः ॥ १७७ ॥ तद्रूपेण रसस्य ज-न्मयथा । स्थितमुरसिविशालम्पद्मिनीपत्रमेतत्कथय-ति न तथा ऽन्तर्मन्मथोत्थामवस्थाम्। अतिशयपरिताप-ग्लापिताभ्यां यथास्यात् स्तनयुगपरिणाहम्मण्डलाभ्या-

---

१ सहसामा श्रावयत प्रियागमं तस्यै विरहक्लेशितायै: ॥ अत्यन्त प्रहर्षेणापि यामृता सामृतैव स्यात् ॥

मब्रवीति ॥ अत्रसागरिकायाः स्तननिहितसरोजिनीदलम्लापनेन वपुःसन्तापो निष्पद्यते॥ बलस्यापचयो ग्लानिराधिव्याधिप्रकर्षभूः ॥ १७८ ॥ तद्रूपेण रसस्यानुबन्धो यथा । किसलयमिवमुक्तम्बन्धनाद्विप्रलूनं हृदयकुसुमशोषी दारुणो दीर्घशोकः । ग्लपयतिपरिपाण्डु क्षाममस्याः शरीरं शरदिज इव घर्मःकेतकीगर्भपत्रम् । अत्र प्रकृष्टशोकानुबन्धिनीग्लानिर्वैवर्ण्यक्षामताभ्यामनुबध्यते ॥ उत्कण्ठाहर्षशोकादेरुन्मादश्चित्तविप्लवः ॥ १७९ ॥ तद्रूपेणारसस्य निष्पत्तिर्यथा । क्वाऽकार्यंशशलक्ष्मणः क्व च कुलम्भूयोपि दृश्येत सा दोषाणामुपशान्तये श्रुतमहो कोपेपि कान्तम्मुखम् । किं वक्ष्यन्त्यपकल्मषाः कृतधियो रेखैव सा ऽन्यादृशी चेतः स्वास्थ्यमुपेहि कः खलु युवा धान्यो ऽधरन्धास्यति ॥ अत्र विरहिणो ययातेरुत्कण्ठादिभिरसत्प्रलापरूप उन्मादो निष्पद्यते ॥ आदरातिशयाच्चेतस्यावेगः सम्भ्रमो मतः ॥ १८० ॥ तद्रूपेणरसस्यसङ्करोयथा । अलमलमतिमात्रं साहसेनाऽमुना ते त्वरितमपिविमुञ्च त्वं लतापाशमेनम् । चलितमिव निरोद्धुञ्जीवितञ्जीवितेशे क्षणमिह मम कण्ठे बाहुपाशन्निधेहि । अत्र रतिजन्मा सम्भ्रमातिशयो रतिजन्मनैव मतिप्रकर्षेण सङ्कीर्यते ॥ मनःशरीरयोः खेदः क्रियातिशयतः श्रमः ॥ १८१ ॥ तद्रूपेण रससङ्करो यथा । स्खलयति वचनंमे संश्रयत्यङ्गमङ्गञ्जनयति मुखचन्द्रोद्भासिनः स्वेदबिन्दून् । मुकुलयति च नेत्रे सर्वथासुभ्रु खेदस्त्वयि विल-

सति तुल्यं वल्लभालोकनेन । अत्र मालत्याः पुष्पावचयजन्माश्रमो माधवावलोकनजा च रतिः स्वेदगद्गदाङ्गसादनयनमुकुलनैस्तुल्यधर्मिणौ मिथः सङ्कीर्येते । चित्तस्य खेदो निर्वेदस्तत्त्वज्ञानोदयादिभिः ॥ १८२ ॥ तद्रूपेण रसस्य शेषो यथा । जरामरणदौर्गत्यव्याधयस्तावदासताम् । मन्ये जन्मैव धीराणामभूयोभूयस्त्रपाकरम् ॥ अत्र मोक्षायोत्साहमानस्य कस्यचिन्निर्वेदागमो गम्यते ॥ क्रियास्वपाटवञ्चाडम्भ्रन्तोत्कण्ठाभयादिभिः ॥ १८३ ॥ तद्रूपेण रसस्यनिष्पत्तिर्यथा । शिथिलशिथिलन्नस्य स्वैरं धनुःशिखरे शिरो नयनसलिलैः कुर्वन्मौर्वीलतामपरामिव । अहह विकलः श्रुत्वा श्रुत्वा घनस्तनितध्वनिङ्किमपि किमपि ध्यायन्नार्यो न याति न तिष्ठति ॥ अत्र विरहिणो रामस्य क्रियास्वपाटवन्निष्पद्यते ॥ क्रियाविद्वेषमालस्यं सुखसंविन्मदादिभिः॥ १८४ ॥ तद्रूपेण रसस्य निष्पतिर्यथा । घरिणिघणत्थणपेल्लणसुहेल्लिपडिअस्स होन्तिपहिअस्स। अवसउणङ्गारअवारविट्ठिदिअसा सुहवेन्ति[1]॥ अत्र रतिसुखानुभवाभिगमिषोरपमगच्छत आलस्यन्निष्पद्यते ॥ निद्राव्यापारवैमुख्यमिन्द्रियाणां श्रमादिभिः॥१८५॥ तद्रूपेण रसस्याऽनुबन्धो यथा[2]। निद्दालसघुम्मिरतंसवलन्तद्धतारआलोआ । कामस्सविदुव्विसहा दिट्ठिणिवा-

१ गृहिणीघनस्तन प्रेरण सुखेति पतितस्य भविष्यत्पथिकस्य । अपशकुनाङ्गारक वार विष्टिदिवसाः सुखयन्ति ॥

२ निद्रालसघूर्णित संवलितार्धतारकालोकाः ॥ कामस्यापि दुर्विसहा दृष्टिनिपाताः मनसि सुख्याः ॥

आ ससिमुहीए॥अत्र रतिश्रमजागरादिजनितनिद्रालस-दृष्टिनिपातास्तारकाघूर्णनाक्षचलनादिभिरनुबध्यन्ते ।
निद्रादिजनितं सुप्तमन्त्राह्येन्द्रियनिमीलनम् ॥ १८६ ॥ तद्रूपेण रसप्रकर्षो यथा॥ओसुअइ दिण्णपडिवक्खवेअणम्पसिढिलेहिंअङ्गेहिम्। णिव्वत्तिअसुरअरसाणुबन्धसुहणिम्भरंसोणूहा ॥१॥ अत्रनिर्भरपदेनैव प्रकर्षः प्रतिपाद्यते ।
निद्रापगमहेतुभ्यः प्रबोधश्चेतनागमः ॥ १८६ ॥ तद्रूपेण रसस्याऽनुबन्धो यथा । प्रत्यग्रोन्मेषजिह्माक्षणमनभिमुखीरत्नदीपप्रभाणामात्मव्यापारगुर्वी जनितजललवाजृम्भणैः साङ्गभङ्गैः । नागाङ्कम्मोक्तुमिच्छोः शयनमुरुफणाचक्रवालोपधानन्निद्राच्छेदातिताम्रा चिरमवतु हरेर्दृष्टिराकेकरा वः । अत्रदृष्टेःप्रत्यग्रोन्मेषजिह्मतादिभिः प्रबोधो नाद्यापिनिष्पद्यतइति प्रतीयते॥ उक्ताभावादिभेदेन तमी रत्यादयो रसाः।अथैतेष्वेव केषाञ्चिद्विशेषानभिदध्महे ॥१८७॥ तत्र। शृङ्गारवीरकरुणा रौद्राद्भुतभयानकाः । बीभत्सहास्यप्रेयांसःशान्तोदान्तोद्धता रसाः ॥१८८॥ रतिर्निसर्गसंसर्गौपम्याध्यात्माभियोगजा ॥
सम्प्रयोगाभिमानोत्था विषयोत्थाच कथ्यते ॥ १६६ ॥
प्रीतिरप्येवमेव स्याद्भत्वस्यां साम्प्रयोगिकी ॥ अभ्यासिकीतु तत्स्थाने तदुदाहृतयोयथा ॥ १६७ ॥ उदाहरणम् ॥
मृतेतिप्रेत्यसङ्गन्तुं ययामेमरणम्मतम् । सैवावन्तीमयाल-

१ आस्वपिति दत्तप्रतिपक्षवेदनं प्रशिथिलैरङ्गैः। निर्वर्तित सुरत रसानुबन्धसुखनिर्भरं स्नुषा ॥

बधा कथमत्रैव जन्मनि ॥ अत्र स्थायिनो विभावानुभा-
वव्यभिचारिसंयोगाद्रसनिष्पत्तिरिति रतिरेव शृङ्गाररू-
पेण निष्पद्यते । अत्रावन्त्या वासवदत्ताया आलम्ब-
नविभावभूतायाः सकाशादुत्पन्नो वत्सेश्वरस्य रतिस्था-
यिभावस्तस्याः पुनर्जीवनादिभिरुद्दीपनविभावैरुद्दी-
प्यमानो मृतेत्यादिना वागारम्भानुभावेनानुमीयमानै-
र्हर्षधृतिप्रभृतिभिः सुखात्मभिर्व्यभिचारिभिः संसृज्यमा-
नः करुणानन्तरसम्भोगशृङ्गाराख्यां लभते १ ॥ अजि-
त्वा सार्णवामुर्वीमनिष्ट्वा विविधैर्मखैः ॥ अदत्वा चार्थ-
मर्थिभ्यो भवेयम्पार्थिवः कथम् ॥ अत्र वसुधाविजया-
देरालम्बनविभावादुत्पन्नः स्थाय्युत्साहभावस्थैर्यधैर्यादि-
भिरुद्दीप्यमानः समुत्पन्नेषु वागारम्भानुमीयमानेषु स्मृ-
तिमतिवितर्कादिषु निष्पन्नो वीररससंज्ञया व्यवह्रीय-
ते ॥ २ ॥ यस्याः कुसुमशय्यापि कोमलाङ्ग्या रुजाकरी ।
सा ऽधिशेते कथन्देवी हुताशनवतीञ्चिताम् ॥ अत्र चा-
लम्बनविभावभूतदेवीमरणादुत्पन्नः शोकस्थायिभावश्चि-
तानिवेशनहुताशनाङ्गज्वालादिभिरुद्दीपनविभावैरुद्दी-
प्यमानो वागारम्भानुमेयैर्निर्वेदग्लानिवैवर्ण्यादिभिर्व्य-
भिचारिभिः संसृज्यमानः करुण इति ज्ञायते ॥ ३ ॥ नि-
गृह्य केशेष्वाकृष्टा कृष्णा येन ममाग्रतः । सो ऽयन्दुःशा-
सनः पापो लब्धः किञ्जीवति क्षणम् ॥ अत्र दुःशासना-
लम्बनविभावाय-क्रुध्यतो भीमसेनस्य पूर्वमुत्पन्नः क्रो-
धस्थायिभावस्तदवाप्तेः स्मर्यमाणसमक्षकृतद्रौपदीनिग्रह-

केशाकर्षणादिभिरुद्दीपनविभावैरुद्दीप्यमानः समुत्पन्नेषु वागारम्भेष्वनुमीयमानेष्वसूयावेगवेपथुश्रमादिषु दुःखात्मकेषु व्यभिचारिषु निष्पद्यमानो रौद्र इति निष्पद्यते ॥४॥ अंशुकानि प्रवालानि पुष्पं हारादि भूषणम् । फलम्मधूनि हर्म्याणि शाखा नन्दनशाखिनाम् ॥ अत्र शाखिनाम्प्रवालपुष्पफलशाखासम्पन्नंनिजं रूपम् । नन्दनशाखिनाम्पुनः प्रवालादिस्थानें ऽशुकहारमधुमन्दिराणि तदेतदाश्चर्यमतश्चैतेभ्य य आलम्बनविभावेभ्यः कस्य चिद्देवभूयङ्गतस्यसमुत्पन्नो विस्मय स्थायिभावस्तदीयावयवदर्शनादिभिरुद्दीपन विभावैरुद्दीप्यमानः समुत्पन्नेषु वागारम्भानुमेयेषु हर्षरोमोद्गमस्वेदगद्गदादिषु व्यभिचारिषु निष्पद्यमानो ऽद्भुत इत्युच्यते ॥ ५ ॥ इदम्मघोनः कुलिशन्धारासन्निहितानलम् । स्मरणं यस्य दैत्यस्त्रीगर्भपाताय कल्पते। अत्र महेन्द्रकुलिशाद्धारासन्निहितानलादालम्बनविभावात्स्मर्यमाणादपि दैत्यस्त्रीणामुत्पन्नो भयस्थायिभावस्तद्विदीर्णदानवमरणस्मरणादिभिरुद्दीपनविभावैरुद्दीप्यमानः स्वगर्भपातादिभिरनुभावैस्तदनुभावैस्तदनुमितैश्च स्वेदस्तम्भवेपथुप्रभृतिभिर्व्यभिचारिभिः संसृज्यमानो भयानकरसरूपेण निष्पन्नः केनचिदाख्यायमानोपि भयानक इत्याख्यायते ॥ ६ ॥ पायम्पायन्नवारीणां शोणितङ्करसम्पुटैः । कौणपाः सह नृत्यन्ति कबन्धैरन्त्रभूषणाः ॥ अत्रालम्बनविभावभूतेभ्यः कौणपेभ्यः कस्य

चिद्रिपुविजयाशंसिनः पुंस उत्पन्नो जुगुप्सास्थायिभावः शिरश्छेदविगलद्रुधिरधारापरिप्लुतप्रनर्त्तितकबन्धकौणपान्त्रभूषणशोणितपानादिभिरुद्दीपनविभावैरुद्दीप्यमानः समुत्पन्नेषु वागारम्भानुमेयेषु भयावेशशङ्कावहित्थादिषु व्यभिचारिदिषु निष्पन्नोबीभत्स इति निगद्यते ॥ ७ ॥ इदमम्लायमानाया लग्नं स्तनतटे तव। छाद्यतामुत्तरीयेण नवंनखपदं सखि ॥ अत्र काञ्चित्सखीम्पूर्वम्भर्त्तरिप्रगृहीतमानां तेनैव नवनखपदाङ्कितस्तनीमालम्बनविभावभूतामुपलभमानायाः कस्याश्चित्सख्या उत्पन्नो हासस्थायिभावस्तदीयमानपरिग्रहस्मरणादिभिरुद्दीपनविभावैरुद्दीप्यमानः समुत्पन्नेषु वागारम्भानुमितेषु शङ्कावहित्थगद्गदादिव्यभिचारिषु निष्पाद्यमानो हास्यशब्देनाभिधीयते ॥ ८ ॥ यदेव रोचते मह्यन्तदेव कुरुतेप्रिया । इति वेत्ति न जानाति यत्प्रियन्तत्करोति सा। अत्र वत्सलप्रकृतेर्धीरतया ललितनायकस्य प्रियानुभावादुत्पन्नः स्नेहस्थायिभावोविषयसौकुमार्यात्मप्रकृत्यादिभिरुद्दीपनविभावैरुद्दीप्यमानः समुपजायमानैर्मोहमतिधृतिस्मृत्यादिभिर्व्यभिचारिभावैरनुभावैश्च प्रशंसादिभिः संसृज्यमानो निष्पन्नः प्रेयानिति प्रतीयते ॥ रतिप्रीत्योरपि चायमेव मूलप्रकृतिरिष्यते ॥ यदित्थमाहुः, । अहेतुःपक्षपातोयस्तस्यनास्तिप्रतिक्रिया। सहि स्नेहात्मकस्तन्तुरन्तर्मर्माणि सीव्यति ॥ ९ ॥ सर्वाः सम्पत्तयस्तस्य सन्तुष्टं यस्य मानस-

म् । उपानद्गूढपादस्य ननु चर्मावृतैव भूः॥ अत्र कस्य-
चिदुपशान्तं प्रकृतेर्धीरप्रशान्तनायकस्य यथोपनतम-
नोनुकूलदारादिसम्पत्तेरालम्बनविभावभूतायाः समुत्प-
न्नोधृतिस्थायिभावो वस्तुतत्त्वालोचनादिभिरुद्दीपनवि
भावैरुद्दीप्यमानः समुपजायमानस्मृतिमात्यादिभिर्व्य-
भिचारिभावैर्वागारम्भादिभिरनुषज्यमानो निष्पन्नः
शान्त इति गीयते॥ अन्ये पुनरस्य शमम्प्रकृतिमाम-
नन्ति । सतु धृतेरेव विशेषो भवति॥ १० ॥ साधारण्या-
न्निरातङ्कः कन्यामन्योपियाऽचते । किम्पुनर्जगताञ्जेता
प्रपौत्रः परमेष्ठिनः ॥ अत्र रामस्योदात्तप्रकृतेर्निसर्गत
एव तत्त्वाभिनिवेशिनीमतिर्नाकृत्यविषये प्रवर्त ते । न च
प्रवृत्तोपरमति । साच सीतेयम्मम स्वीकारयोग्येत्येवं-
रूपेण प्रवृत्ता रावणप्रार्थनाक्षणप्रोत्साहनाभ्यामुद्दीप्य-
माना समुपजायमानचिन्तावितर्कव्रीडाऽवहित्थस्मृत्या-
दिभिः कालोचितोत्तरानुमीयमानैश्च विवेकचातुर्यौदा-
र्यधैर्यादिभिः संसृज्यमानोदात्तरसरूपेण निष्पद्यते॥११॥
अपकर्ता हमस्मीति मा ते मनसि भूद्भयम् । विमुखेषु
नं मे खड्गः प्रहर्त्तुञ्जातु वाञ्छति ॥ अत्र मया ऽस्यापका-
रः कृत इति यत्ते चेतसि भयन्तन्माभूत् । न मम खड्गः
पराङ्मुखेषु कदाचिदपिप्रहर्त्तुमुत्सहत इति सर्वदैव रू-
ढाहङ्कारः प्रतीयते सो ऽयङ्गर्वप्रकृतिरुद्धतो नाम रसः ।
केचित्पुनः । "आस्थामालम्ब्यनीतेषु वशं क्षुद्रेष्वरातिषु । व्यक्तिमायाति महताम्माहात्म्यमनुकम्पया । इत्ये-

अमूर्जस्वीत्युदात्तपक्षे निक्षिपन्तः पूर्वोक्तमेव गर्वप्रकर्षो-दाहरणम् । धृतायुधो यावदहमित्याद्युद्धतनिष्पत्तौव-र्णयन्ति ॥ १२ ॥ रतिविशेषेषु नैसर्गिकी यथा । इयम्म-हेन्द्रप्रभृतीनधिश्रियश्चतुर्दिगीशानवमत्य मानिनी । अ-रूपहार्यम्मदनस्य निग्रहात् पिनाकपाणिम्पतिमाप्तु-मिच्छति । अत्र जन्मान्तर वासनया निसर्गत इयम्भ-वति ॥१३॥ सांसर्गिकीयथा । भित्वा सद्यः किसलयपु-टान्देवदारुद्रुमाणां ये तत्क्षीरस्त्रुतिसुरभयो दक्षिणेन प्रवृत्ताः । आलिङ्गयन्ते गुणवति मया ते तुषाराद्रिवा-ताः पूर्वं स्पृष्टं यदि किल भवेदङ्गमेभिस्तवेति ॥ अत्र शैत्यसौरभादिभिर्विरहिणामुद्वेजनीया अपि वायवः प्रियतमाङ्गसंसर्गसम्भावनया समालिङ्गयन्त इति संस-र्गादियं रतिर्भवति॥१४॥औपमानिकी यथा । अपि जन-कसुतायास्तच्च तच्चानुरूपंस्फुटमिह शिशुयुग्मे नैपुणो-न्नेयमस्ति । ननु पुनरिव तन्मेगोचरीभूतमक्ष्णोरभिन-वशतपत्रग्रीवमास्यम्प्रियायाः ॥ सेयं सीताविषयिणी-रतिस्तदुपमानदर्शनेन रामं रमयते ॥ १५ ॥ आध्यात्मि-कीयथा ॥ कामम्प्रत्यादिष्टं स्मरामि न परिग्रहम्मुने-स्तनयाम् । बलवत्तु दूयमानम्प्रत्याययतीव मे चेतः ॥ अत्र सेयन्दुर्वाससः शापाद्विस्मृतविवाहादिवृत्तान्त-स्य दुष्यन्तस्य शकुन्तलायां रतिरध्यात्मम्भवति ॥ १६ ॥ आभियोगिकीयथा । अलसवलितमुग्धस्निग्धनिष्यन्द-मन्दैरधिकविकसदन्तर्विस्मयस्मैरतारैः । हृदयमशरणा-

रूमे पक्ष्मलाक्ष्याः कटाक्षैरपहृतमपविद्धमपीतमुन्मूलितञ्च। सेयमनुरागातिशयसूचकमालतीकटाक्षाभियोगे माधवस्य रतिरत्रोत्पद्यते ॥ १७ ॥ साम्प्रयोगिकी यथा । उन्नमय्य सकचग्रहमास्यञ्चुम्बति प्रियतमे हठवृत्त्या । हुंहुम्मुञ्च मम मेति च मन्दञ्जल्पितञ्जयति मानधनायाः॥ अत्र तर्जनार्थमोक्षार्थवारणार्थानान्मन्दम्मन्दम्प्रयोगान्मानवत्याः सम्प्रयोगे रत्युत्पत्तिः प्रतीयते ॥ १८ ॥ आभिमानिकी यथा । इयङ्गेहे लक्ष्मीरियममृतवर्त्तिर्नयनयोरसावस्याः स्पर्शोवपुषि बहलश्चन्दनरसः । अयं बाहुः कण्ठे शिशिरमसृणे मौक्तिकसरः किमस्या न प्रेयो यदि परमसह्यस्तु विरहः ॥ अत्र रुचिविशेषो ऽभिमानस्तत एवम्प्राया रतयो भवन्ति ॥ वैषयिकी शब्देषु यथा । विलासमसृणो ल्लसन्मुसललोलदीःकन्दलीपरस्परपरिस्खलद्वलयनिस्वनोद्दन्तुराः । हरन्ति कलहुङ्कृतिप्रसभकम्पितोरस्थलत्रुटद्गमकसंकुलाः कलमकण्डनीगीतयः ॥ २० ॥ स्पर्शे यथा । बध्नन्नङ्गेषु रोमाञ्चं कुर्वन्मनसि निर्वृतिम् । नेत्रेनिमीलयन्नेष प्रियास्पर्शः प्रवर्त्तते ॥ २१ ॥ रूपे यथा । ता राघवन्दृष्टिभिरापिबन्त्यो नार्यो न जग्मुर्विषयान्तराणि।तथा हि शेषेन्द्रियवृत्तिरासां सर्वात्मना चक्षुरिव प्रविष्टा २२ ॥ रसे यथा कस्य नो कुरुते तन्वि पिपासाकुलितम्मनः । अयन्ते विद्रुमच्छायो[1] मरुमार्ग इवाऽधरः ॥ २३ ॥ गन्धे यथा ।

---

१ विगताद्रुमाणांवृक्षाणांछाया।यस्मिन्स:पक्षेविद्रुमच्छाया:प्रवालकान्तिः ॥

रम्भणकम्मणिउणिए माऊरसुरत्तपाडलसुअन्धम्। मुहमारुअम्पिअन्तो धूमाइसिहीणपज्जलइ[1] ॥ प्रीतिविशेषेषु नैसर्गिकी यथा। आलक्ष्य दन्तमुकुलाननिमित्तसारानव्यक्तवर्णरमणीयवचः प्रवृत्तीन्। अङ्कागताः प्रणयिनस्तनयान्वहन्तो धन्यास्तदङ्गरजसा मलिनीभवन्ति। अत्र "यदायदाजायते तदातदापुत्रेषु स्निह्यति पुत्ररूपेण वा जायत इति, जन्मान्तरवासनारूपो निसर्गः सङ्कृत्यर्थे ॥ सांसर्गिकी यथा। विश्वम्भरा भगवती भवतीमसूत राजा प्रजापतिसमो जनकः पिता ते। तेषां वधूस्त्वमसि नन्दिनि पार्थिवानां येषां कुलेषु सविताच गुरुर्वयञ्च ॥ अत्र विश्वम्भरादिसंसर्गात्सीतायांवसिष्ठमिश्राःस्निह्यन्ति ॥ २३ ॥ औपमानिकी यथा। कुवलयदलस्निग्धश्यामः शिखण्डकमण्डनो बटुपरिषदंपुण्यश्रीकः श्रियैव सभाजयन्। पुनरपि शिशुर्भूत्वा वत्सः स मे रघुनन्दनो झटिति कुरुतेदृष्टः को यन्दृशोरमृताञ्जनम्। अत्र रामौपम्याल्लवे जनकः प्रीयते॥२७॥ आध्यात्मिकी यथा। परितस्तम्पृथासूनुः स्नेहेन परितस्तरे। अविज्ञातेऽपि बन्धौहि बलात्प्रह्लादते मनः ॥ अत्राविज्ञातोपि वासवः स्वसूनुमर्जुनन्दृष्टः प्रीणयति।।२८॥ आभियोगिकीयथा। दुःखैकबन्धुरयमृक्षहरीश्वरोमे पौलस्त्य एष समरेषु पुरः प्रहर्त्ता। इत्यादृतेन कथितौ र-

---

१ रम्भनकर्मनिपुणाया मालूरसुरक्तपाटलसुगन्धम् ॥ सुखमारुतं पिबन् धूमायसि ह्विनप्रज्वलसि ॥

घुनन्दनेन व्युत्क्रम्य लक्ष्मणमुभौ भरतो ववन्दे ॥ अत्र सीतान्वेषणादेरभियोगाद्रामस्य सुग्रीवविभीषणयोः प्रीतिरुत्पद्यते ॥ २९ ॥ साम्प्रयोगिकी स्थाने आभ्यासिकी यथा। इति विस्मृतान्यकरणीयमात्मनः सचिवावलम्बितधुरन्नराधिपम्। परिवृद्धरागमनुबद्धसेवया मृगया जहार चतुरेव कामिनी। अत्र "शब्दादिभ्योबहिर्भूता या कर्माभ्यासलक्षणा। प्रीतिः साभ्यासिकी ज्ञेया मृगयादिषु कर्मसु" इति लक्षणङ्घटते ॥ ३० ॥ आभिमानिकी यथा। दत्तेन्द्राभयदक्षिणैर्भगवतो वैवस्वताद्दामनोर्दृप्तानान्दहनाय दीपितनिजक्षात्त्रप्रतापाग्निभिः। आदित्यैर्यदि विग्रहो नृपतिभिर्धन्यम्ममैतत्ततो दीप्तास्त्रस्फुरदुग्रदीधितिभरैर्नीराजितज्यन्धनुः ॥ अत्राभिमतप्रतिद्वन्द्विलाभाल्लवानुपदीकुशस्तुष्यति ॥ ३१ ॥ वैषयिकीषु शब्दे यथा। लावण्यैः क्षणदाविराममधुराः किञ्चिद्विनिद्रालसं श्रोत्रैः सव्रणमुग्धचारणवधूदन्तच्छदावासिनः। पीयन्ते मृदुवक्त्रपीतमरुतः पौराणगीतिक्रमव्यालोलाङ्गुलिरुद्धमुक्तसुषिरश्रेणीधरा वैणवः ॥ ३२ ॥ स्पर्शे यथा। प्रशान्तघर्माभिभवः शनैर्विवान् विलासिनीभ्यः परिमृष्टपङ्कजः। ददौ भुजालम्बमिवात्तशीकरस्तरङ्गमालान्तरगोचरोऽनिलः ॥३३॥ रूपे यथा। अयमभिनवमेघश्यामलोत्तुङ्गसानुर्मदमुदितमयूरीमुक्तविश्रब्धनृत्यः। शकुनिशबलनीलानोकहस्निग्धवर्ष्मा वितरति बृहदश्मा पर्वतः प्रीतिमक्ष्णोः ॥ ३४ ॥ रसे यथा॥

इक्षुदण्डस्य मण्डस्य दध्नः पिष्टघृतस्य च। वाराहस्य च मांसस्य सोऽयङ्कुच्छति फाल्गुनः ॥ ३५॥ गन्धे यथा। कपोलकण्डूः करिभिर्विनेतुं विघट्टितानां सरलद्रुमाणाम्। यत्र स्रुतक्षीरतया प्रसूतः सानूनि गन्धः सुरभीकरोति ॥ ३६॥ उपलक्षणञ्चैतत्। तेनोत्साहस्य युद्धदानदयावीरादयः, क्रोधस्य भीमन्युत्रासादयो, हासस्य स्मितहसितविहसितादयः, प्रसुप्तप्रलयमत्यादीनां स्वप्नमरणशमादयो भेदा जायन्ते ॥ तत्र यद्यपि "अजित्वा सार्णवामुर्वीमि"त्यनेनयुद्धवीरो, "ऽनिष्ट्वा विविधैर्मखैरि"त्यनेनदानवीरो "ऽदत्त्वा चार्थमर्थिभ्य इत्यनेन दयावीरश्चोत्साहरूपेण रसनिष्पत्तौ वर्त्तते तथाप्येकशोप्येतद्रसनिष्पत्तिरस्तीति प्रदर्श्यन्ते॥ तेषु युद्धवीरो यथा। एतां पश्य पुरस्तटीमिह किल क्रीडाकिरातो हरः कोदण्डेन किरीटिना सरभसञ्चूडान्तरे ताडितः। इत्याकर्ण्य कथाद्भुतं हिमनिधावद्रौ सुभद्रापतेर्मन्दम्मन्दमकारि येन निजयोर्दोर्दण्डयोर्मण्डनम्॥ ३७। दानवीरो यथा। दधिक्षीरघृताम्भोधिश्यञ्जनस्पृहणीयया। महादानोत्सवेयस्य हन्त कारायितम्भुवा ॥ ३८॥ दयावीरो यथा। स त्वस्मदीयेन शरीरवृत्तिन्देहेन निर्वर्त्तयितुं यतस्व। दिनावसानोत्सुकबालवत्सा विमुच्यतां धेनुरियम्महर्षेः॥ ३९॥ क्रोधस्य यद्यपिभीकादयो विशेषाश्चतुर्विंशतिः सम्भवन्ति तथापि ललितललिताभयभेदेन रूपेण क्रमेण संवसङ्गृहात्तत्र त्रयः प्रकाराः प्रदर्श्यन्ते। तेषु स्त्रीणां ल-

लिनः कोपाभावो यथा । भ्रूभेदिभिः प्रकम्पोष्ठैर्ललिताङ्गुलितर्जनैः । यत्र कोपैः कृताः स्त्रीणां सम्प्रसादार्थिनः प्रियाः ॥ ४० ॥ प्रियापराधजन्मा दुःखोत्पीडो मन्युर्यथा । धणुओवप्पणवल्लरिविरइअकण्णावअंसदुप्पेछे । वाहगरुइं णिसम्मइ वाहीएबहुमुहे दिट्ठी[1] ॥ नन्वियमीर्ष्या कस्मान्न भवति? । नात्र मानदानामर्षणमात्रविवक्षा । अपि तु तज्जनितो दुःखातिशय इति ॥ ४१ ॥ प्रियादिषु व्याजनिन्दोत्प्रासो यथा॥ पहवन्ति व्विअ पुरिसा महिलाणङ्किं क्खु सुहअ विहिओसि । अणुराअलोल्लिआए को दोसो अपहिजाईए[2] ॥ ४२ ॥ हासस्य यद्यप्युपहासादयो भेदाः सम्भवन्ति तथापि विहसितेन तेषां संग्रहादिति न्यूनाधिकमिति त्रयस्तद्भेदा उदाह्रियन्ते । तत्र षड्हसितं स्मितं यथा । पुष्पं प्रवालोपहितं यदि स्यान्मुक्ताफलं वा स्फुटविद्रुमस्थम् । ततो ऽनुकुर्याद्विशदस्य तस्यास्ताम्रोष्ठपर्यस्तरुचः स्मितस्य ॥ ४३ ॥ दृष्टदशनकान्ति हसितं यथा । तिमिरनिरुद्धभीमरजनीमुखचन्द्रिकया गणपतिताण्डवाभिनयदर्शनदीपिकया । अभिभवसि त्वमद्य शशिनः श्रियमुत्कटया दशनमयूखमञ्जरितया हसितप्रभया ॥ ४४ ॥ तदेव सविशेषं विहसितं यथा । च्युतामिन्दोर्लेखां रतिकलहभग्नञ्च वलयन्द्वयञ्चक्रीकृत्य प्रहसितमुखी शैलतनया । अवोचद्यम्पश्येत्यवतु स शि-

---

१ धनुर्षापर्णवल्लरिविरचितकर्णावतंसदुःप्रेचे । वाष्पगुर्वीं निशाम्यते वाहीकवधूमुखे दृष्टिः ॥ २ ॥ प्रभवन्त्येव पुरुषा महिलानां किं खलु सुभग विहितोसि । अनुराग लुलितायाः को दोषोभिजातः ॥

वः सा च गिरिजा स च क्रीडाचन्द्रोदशनकिरणापूरितत-
नुः ॥ ४५ ॥ सुप्तविशेषः स्वप्नो यथा। जाने कोपपराङ्-
मुखी प्रियतमा स्वप्नेऽद्य दृष्टा मया मा मा संस्पृश पाणि-
नेति रुदती गन्तुं प्रवृत्ता पुरः। नोयावत्परिरभ्य चा-
टुकशतैराश्वासयामि क्षणं भ्रात! स्तावदहं शठेन विधि-
ना निद्रादरिद्रीकृतः ॥ ४६ ॥ मूर्छाविशेषो मरणं यथा॥
क्षणमात्रसखीं सुजातयोस्तनयोस्तामवलोक्य विह्वला।
निमिमील नरेन्द्रसुन्दरी हृतचन्द्रा तमसेव शर्वरी ॥४७॥
मतिविशेषः शमो यथा। यदासीदज्ञानं स्मरतिमिरसं-
स्कारजनितन्तदा दृष्टन्नारीमयमिदमशेषञ्जगदपि। इ-
दानीमस्माकम्पटुतरविवेकाञ्जनजुषां समीभूता दृष्टि-
स्त्रिभुवनमपि ब्रह्म मनुते॥ ४८ ॥ एवमन्ये पि विज्ञेया
रसा भावादिसंश्रयाः॥ विशेषः प्राप्तकालोऽथपरिशे-
षो[१] निगद्यते॥ १७१॥ तत्राश्रयस्त्रिधा। पुमान्स्त्रीतिर्य-
गादयः। तेषु पुमान्यथा। आश्चर्यमुत्पलदृशो वदनाम-
लेन्दुसान्निध्यतो मम मुहुर्जडिमानमेत्य। जात्येनचन्द्रम-
णिनेव महीधरस्य संधार्यत द्रवमयोमनसा विकारः ॥१॥
स्त्री यथा। तेनाथ नाथ दुरुदाहरणातपेन सौम्याऽपि
नाम परुषत्वमभिप्रपन्ना। जज्वाल तीक्ष्णविशदाःसह-
सोद्गिरन्ती वागर्चिषस्तपनकान्तशिलेव सीता॥ २ ॥
तिर्यगादिषु यथा। उत्कूजति श्वसितिमुह्यति याति
तीरन्तीरात्तरुन्तरुतलात्पुनरेव वापीम्। वाप्याव्नरज्य-

१ परिपोषइत्यपिपाठः पुस्तकान्तरे।

ति नचास्ति मृणालखण्डभुक्कः क्षपासु विरहे खलु चक्र-
वाक्याः ॥ ३ ॥ विषयस्त्रिधा । चेतनस्तिर्यगचेतनश्च ।
तेषु चेतनो यथा । इयंसा लोलाक्षी त्रिभुवनललामैकव-
सतिः सचायन्दुष्टात्मा स्वसुरपकृतं येन मम तत् । इ-
तस्तीव्रः कामोगुरुरयमितः क्रोधदहनः कृतोवेषश्चायङ्क-
थमिदमिति भ्राम्यति मनः ॥ १ ॥ तिर्यग्यथा । आया-
ते दयिते मरुस्थलभुवां सञ्चिन्त्य दुर्लङ्घ्यताङ्गेहिन्या परितो-
षबाष्पतरलामासाज्य दृष्टिम्मयि । दत्त्वा पीलुशमीकरी-
रकवलान्स्वेनाञ्चलेनादरादुन्मृष्टङ्करभस्य केसरसटाभा-
राग्रलग्नं रजः ॥ २ ॥ अचेतनो यथा । क्षिप्तम्पुरो न
जगृहे मुहुरिक्षुकाण्डन्नापेक्षतेस्म निकटोपगताङ्करेणुम् ।
सस्मार वारणपतिः परिमीलिताक्षमिच्छाविहारवनवा-
समहोत्सवानाम् ॥ ३ ॥ ज्ञानं त्रिधा दृष्टं श्रुतमनुमा-
नञ्च । तेषु दृष्टं यथा । सरसिजमनुविद्धं शैवलेनापि र-
म्यम्मलिनमपि हिमांशोर्लक्ष्म लक्ष्मीन्तनोति । इयम-
धिकमनोज्ञा वल्कलेनापि तन्वी किमिव हि मधुराणा-
म्मण्डनन्नाकृतीनाम् ॥ १ ॥ श्रुतं यथा । किं रूपं स्फु-
टमेव सा शशिमुखी धत्ते तदत्यद्भुतम्मामुत्साहयितु-
म्परापकरणे चित्तङ्किमस्मत्स्वसुः । इत्यन्तर्विकसद्वितर्क-
विधुरश्चेतस्तथा वर्त्तते स्वल्पोप्येष मम प्रयाति पुरतः
पन्था यथादीर्घताम् ॥ २ ॥ अनुमानं यथा । शान्तमि-
दमाश्रमपदं स्फुरति च बाहुः कुतः फलमिहाऽस्य । अ-
थवा भवितव्यानान्द्वाराणि भवन्ति सर्वत्र ॥ ३ ॥ संस्कार-

स्त्रिधा। आदृतःपटुरभ्यस्तश्च। तत्राश्रयगुणेनादरादुत्पन्नआदृतोयथा। कन्यारत्नमयोनिजन्म भवतामास्ते वयञ्चार्थिनो रत्नं यत्क्वचिदस्ति तत्परिणमत्यस्मासु शक्रादपि। कन्यायाश्च परार्थतैव हि मता तस्याः प्रदानादहम्बन्धुर्वो भविता पुलस्त्यपुलहप्रष्ठाश्च सम्बन्धिनः॥ १॥ विषयगुणे पटुप्रत्ययादुत्पन्नः पटुर्यथा। उत्पत्तिर्देवयजनाद्ब्रह्मवादी नृपः पिता। सुप्रसन्नोज्ज्वला मूर्तिरस्याः स्नेहं करोति मे॥३॥ ज्ञानपौनःपुन्येनाभ्यासप्रत्ययादुत्पन्नोऽभ्यस्तः स यथा। भूयोभूयः सविधनगरीरथ्यया पर्यटन्तन्दृष्ट्वादृष्ट्वा भवनवलभीतुङ्गवातायनस्था। साक्षात्कामन्नवमिव रतिर्मालती माधवं यद्गाढोत्कण्ठालुलितलुलितैरङ्गकैस्ताम्यतीति॥ अत्र यद्यपि विषयगुणात्पटुराश्रयगुणाच्चादृतोपि प्रत्ययः पटुमादृतं संस्कारम्प्रसूयते। तथाप्यभ्यासात्पटीयानादृततमश्च जायमानो ऽभ्यस्त इत्युच्यते॥ १॥ उद्दीपनविभावेषु माल्यवस्त्रविभूषणादयो माल्यादयः॥ तेषुमाल्यंयथा। अशोकनिर्भर्त्सितपद्मरागमाकृष्टहेमद्युति कर्णिकारम्। मुक्ताकलापीकृतसिन्दुवारं वसन्तपुष्पाभरणं वहन्ती।॥ १॥ वस्त्रं यथा। आवर्जिता किञ्चिदिव स्तनाभ्यां वासो वसाना तरुणार्करागम्। सुजातपुष्पस्तबकावनम्रसञ्चारिणी पल्लविनी लतेव॥ २॥ विभूषणं यथा। कण्ठस्य तस्याःस्तनबन्धुरस्य मुक्ताकलापस्य च निस्तुलस्य। अन्योन्यशोभाजननाद्बभूव साधारणो भूषणभूष्यभावः॥ ३॥ ऋतु-

वयोमदादयो ऋत्वादयः । तेषु ऋतुर्यथा । इदमसु-
लभवस्तुप्रार्थनादुर्निवारम्प्रथममपि मनो मे पञ्चबा-
णः क्षिणोति । किमुत मलयवातोन्मूलितापाण्डुपत्त्रैरु-
पवनसहकारैर्दर्शितेष्वङ्कुरेषु ॥ १ ॥ वयो यथा । मामूमु-
हत्खलु भवन्तमनन्यजन्मा मा ते मलीमसविकारघनाम-
तिर्भूत् । इत्यादि नन्विह निरर्थकमेव यस्मात्कामश्च जृ-
म्भितगुणो नवयौवनञ्च ॥ २ ॥ मदो यथा । तत्क्षणंवि-
परिवर्त्तितह्रियोर्नेष्यतोः शयनमिद्धरागयोः । सा बभूव
वशवर्त्तिनी तयोः शूलिनः सुवदना मदस्य च ॥ ३ ॥
चन्दनस्नानधूपादयश्चन्दनादयः ॥ तेषु चन्दनं यथा ।
चन्दनं विषधराश्रयः शशी वारुणी च विषमोदरावुभौ ।
तापयन्ति विरहे किमुच्यते मारयन्ति न यदेतदद्भुतम् ॥१॥
स्नानं यथा । आअम्बलोअणाणं उल्लंसुअ पअडोरु-
जहणाणम् । अवरुण्हमज्जिरीणंकएणकामोवहइचाव-
म्[1] ॥ २ ॥ धूपो यथा । स्नानार्द्रमुक्तेष्वनुधूपवासं विन्य-
स्तसायन्तनमल्लिकेषु । कामो वसन्तात्ययमन्दवीर्यः के-
शेषु लेभे बलमङ्गनानाम् ॥ ३ ॥ चन्द्रोदयोघनध्वनिरुप-
कारस्मरणमित्याद्याश्चन्द्रोदयादयः । तेषु चन्द्रोदयो
यथा । विलिम्पत्येतस्मिन्मलयरजसार्द्रेण महसा दिशां
वक्त्रं चन्द्रे सुकृतमथ तस्या मृगदृशः । दृशोर्बाष्पः पा-
णौ वदनमसवः कण्ठकुहरे हृदि त्वं ह्रीः पृष्टे वचसि च

१ आदम्बलोचनानामुदंशुकप्रकटजघनानाम् । अवरुणमज्जरीणांकृते कामो वहति चापम् ।

गुणा एव भवन्ति ॥१॥ घनध्वनिर्यथा । अज्जमए तेण विणा
अणुभूअ सुहाइं अणिसं सम्भरन्तीए । अहिणवमेहाणं रवो
णिसामिओ वज्झपडहो व्व१ ॥ २ ॥ उपकारस्मरणं यथा ॥
तन्मे मनः क्षिपति यत्सरसप्रहारमालोक्य मामगणितस्ख-
लदुत्तरीया । त्रस्तैकहायनकुरङ्गविलोलदृष्टिराश्लिष्टवत्यमृ-
तसंवलितैरिवाङ्गैः ॥ ३ ॥ अनुभावैस्मरतिर्यथा । खणमे-
त्तंपि ण फिट्टइ अणुदिअहं दिण्णगरुअसन्तावा । पच्छण्ण-
पावसङ्क व्व सामली मज्झ हिअआहि२ ॥१॥ वाञ्छतिर्य-
था । एमेअ अकअउण्णा अप्पत्तमणोरहा विवज्जिस्सम् ।
जणवाओ वि ण जाओ तेण समं हलिअउत्तेण३ ॥१॥ द्विष्टि-
र्यथा ॥ गोत्तक्खलणं सोऊण पिअअमे अज्ज मामि छणदि-
अहे । वज्झमहिसस्स मालव्व मण्डणं से ण पडिहाइ४ ॥२॥
प्रयततेयथा । अनुगच्छ५न्मुनितनयां सहसा विनयेन वा-
रितप्रसरः । स्वस्थानादचलन्नपि गत्वेव पुनः प्रतिनिवृ-
त्तः ॥ ३ ॥ अवैतिर्यथा । चन्दसरिसम्मुहं से सरिसो अम-
अस्स मुहरसो तिस्सा । सकअग्गहरहसुज्जअचुम्बणङ्क-
स्स सरिसं से६ ॥४॥ मन्यतेयथा । परिवट्टन्दिवाणिसं सइ म-
ण्डलिअकुसुमाउहं वअणङ्कम् ॥ विरहम्मि मण्णइ हरी

१ अद्य मया तेनविनाऽनुभूतसुखानि अनिशं स्मरन्त्या । अभिनवमेघानां रवो निशामितो वध्यपटह इव ॥ २ क्षणमात्रमपि न स्फुटति अनुदिवसं दत्तगुरुसंतापा । प्रच्छन्नपापशङ्केव श्यामली अस्मद् हृदयाद्धि ॥ ३ एवमेवाकृतपुण्या अप्राप्तमनोरथा विवत्स्ये । जनवादोऽपि न जातस्तेन समं हलिकपुत्रेण ॥ ४ गोत्रस्खलनंश्रुत्वा प्रियतमे अद्य मामि! उत्सवदिवसे । वध्यमहिषस्यमालेव मण्डनमस्या न प्रतिभाति ॥ ५ अनुयास्यन्नित्यपिपाठो दृश्यते ॥ ६ एतच्छाया ४ परिच्छेदे पृष्ठे २ गता ॥

णहे अणत्थे पडिउत्थिअम्मिअङ्कम्१ ॥ ५ ॥ वक्तिर्यथा ।
आलाओ मा दिज्जउ लोअविरुद्धत्तिणाम काऊण । समुहा-
पडिएक्कोवरिएवि दिट्ठिं पाणंडेइ२ ॥ ६ ॥ चेष्टतेर्यथा । अ-
ज्ज मए गन्तव्वङ्घणान्धआरम्मितस्स सुहअस्स । अज्जा
णिमीलिअच्छी पअ पडिवाडिंघरेकुणइ३ ॥ ७ ॥ सञ्चा-
रिषुस्वेदरोमाञ्चवेपथवो यथा । दिट्ठे जम्पुलइज्जसि र-
हघरसिपिअम्मिजंसमासण्णे । तुहसम्भासणसेओलिर्फं-
सणेकिंविणिज्जिहसि४॥८॥अस्रुर्यथा । णअणब्भन्तरघोल-
न्तवाहभरमन्थराएदिट्ठीए । पुणरुत्तपेच्छणीए वालअकिं-
जुत्तमभणिओसि५ ॥ ९ ॥ हर्षोयथा । सव्वस्सम्मिविदट्ठे
तहविहुहिअअस्स णिव्वुदिच्चेअ । जन्ते णणअरडाहेहत्था-
हत्थिकुंडोगहिओद६॥१०॥ अमर्षोयथा । कत्तोसम्पडइम-
हम्पिअसहिपिअसङ्गमोपओसेवि । जज्जिअइ गहिअकर-
णिअरखिरीचन्दचराडालो७॥११॥ लीलादिषुप्रियजचेष्टा-
नुकृतिर्यथा । जञ्जङ्करेसि जञ्जञ्जम्पसि जञ्जणिअच्छेसि ।
तन्तमणुसिक्खरीएदोहे । दिहग्गोणसम्पडइ८॥१२॥नेत्रभ्रूव-

१ परिवृत्तं दिवानिशं सखि मण्डलितकुसुमायुधमिवानङ्गम् । विरहे मन्यते इ-
रिनखे अनर्थपतितोत्थितं मृगाङ्कम् ॥ २ आलापो मा दीयतां लोकविरुद्ध इ-
ति नाम कृत्वा । संमुखापतिते कोपार्हेऽपि दृष्टिं न पातयति ॥ ३ अद्यमया ग-
न्तव्यं घनान्धकारे ऽपि तस्य सुभगस्य । आर्या निमीलिताक्षी पदपरिपाटीं
गृहे कुरुते ॥ ४ दृष्टे यत्पुलकयसि रहोगृहं प्रिये समासन्ने । तव संभाषणसे-
कार्द्रस्पर्शने किमपि निर्जिह्रीषे ॥ ५ नयनाभ्यन्तरघूर्णद्वाष्पभरमन्थरया दृ-
ष्टया । पुनरुक्तप्रेक्षणीयया बालक किं यन्नभणितो ऽसि ॥ ६ सर्वस्मिन्नपि दग्धे
तथापि खलुनिर्वृतिरेव । यत्ते नगरदाहे हस्ताद्धस्ति कुण्डो गृहीतः ॥ ७ कु-
तः संपततिमां प्रियसखि प्रियसंगमः प्रदोषेपि । यज्जयति गृहीतकरनिकरश्री-
चन्द्रचण्डालः ॥ ८ यद्यत्करोषि यद्यज्जल्पसि यद्यन्नियच्छसि । तत्तदनुशिक्षिताया

क्ष्यकर्मणांविशेषेणलसनंविलासोयथा॥ सभ्रूविलासमथ सोयमितीरयित्वा सप्रत्यभिज्ञमिव मामवलोक्य तस्याः। अन्योन्यभावचतुरेण सखीजनेन मुक्तास्तदा स्मितसुधामधुराः कटाक्षाः॥ १३॥ विभूषणादीनामनादरविन्यासोविच्छित्तिर्यथा। अङ्गानि चन्दनरजःपरिधूसराणि ताम्बूलरागसुभगोऽधरपल्लवश्च॥ अच्छाञ्जने च नयने वसनन्तनीयः कान्तासु भूषणमिदं विभवश्च शेषः॥१४॥ विभूषणादीनामस्थानप्रयोगोविभ्रमोयथा। चकार काचित्सितचन्दनाङ्के काञ्चीकलापं स्तनभारपृष्ठे। प्रियम्प्रति प्रेषितचित्तवृत्तिर्नितम्बबिम्बेच बभार हारम्॥ १५॥ स्मितरुदितहसितादीनांहर्षादेकीकरणङ्किलकिञ्चितंयथा। पाणिपल्लवविधूननमन्तः सीत्कृतानि घनरोमविभेदाः। योषितां रहसि गद्गदवाचामस्त्रतामुपययुर्मदनस्य॥१६॥ इष्टजनकथायान्तद्भावभावनोत्थितविकारोमोट्टायितं यथा। तव सा कथासु परिघट्टयति श्रवणं यदङ्गुलिमुखेन मुहुः। घनतांध्रुवन्नयति तेन भवद्गुणपूगपूरितमतृप्ततया॥ १७॥ केशस्तनाधरादिग्रहणाद्दुःखेपिसुखबुद्धिचेष्टा कुट्टमितं यथा। ह्रीभरादवनतपरिरम्भेरागवानवटुजेध्रुवकृष्य। अर्पितोष्ठदलमाननपद्मं योषितामुकुलिताक्षमथासीत्॥ १८॥ अभीष्टप्राप्तावभिमानगर्वसम्भावनानादरकृतोविकारोबिब्बोकोयथा। नि-

---

दीर्घंदिवसोन संपतति॥

र्विभुज्यदशनच्छदकनोवाचि भर्त्तुरवधीरणापरा । शैलराजतनया समीपगामाललापविजयामहेतुकम् ॥ १९ ॥ सुकुमारतयाकरचरणाङ्गन्यासोललितं यथा । गुरुतरकलनूपुरानुरावं सुललितनर्त्तितवामपादपद्मा । इतरदनतिलोलमादधानापदमथमन्मथमन्थरञ्जगाम ॥ २० ॥ वक्तव्यसमयेऽपि वचसाऽनभिभाष्यक्रियानुष्ठानंविहृतं यथा । पत्युः शिरश्चन्द्रकलामनेन स्पृशेति सख्या परिहासपूर्वम् । सा रञ्जयित्वा चरणौ कृताशीर्माल्येन तां निर्वचनञ्जघान ॥ २१ ॥ बाल्यकौमारयौवनसाधारणोविहारविशेषःक्रीडितं यथा । मन्दाकिनीसैकतवेदिकाभिः सा कन्दुकैः कृत्रिमपुत्रकैश्च । रेमे मुहुर्मध्यगता सखीनां क्रीडारसन्निर्विशतीव बाल्ये ॥ २२ ॥ क्रीडितमेवप्रियतमविषयेकेलिर्यथा । व्यपोहितं लोचनतोमुखानिलैरपारयन्तं किलपुष्पजं रजः । पयोधरेणोरसि काचिदुन्मनाः प्रियञ्जघानोन्नतपीवरस्तनी ॥ २३ ॥ हेलादिषु रागतःसहसाप्रवृत्तिहेतुश्चित्तोल्लासो हेला । साच्छ्रियांयथा । रेहइ पिअपरिरम्भणपसारिअं सुरअमन्दिरद्दारे । हेलाहल हलिअथोरथणहरम्भुअलआजुअलम् १ ॥ २४ ॥ सैव पुरुषे यथा । उत्तिष्ठन्त्या रतान्ते भरमुरगपतौ पाणिनैकेन कृत्वा धृत्वाचान्येन वासो विलुलितकबरीभारमंसे वहन्त्याः । भूयस्त-

१ राजते प्रियपरिरम्भणप्रसारितं सुरतमन्दिरद्वारम् । हेलाहलहलायमान स्तनभरे भुजलतायुगलम् ।

त्कालकान्तिद्विगुणितसुरतप्रीतिना शौरिणा वः शय्यामालिङ्ग्यनीतं वपुरलसलसद्बाहु लक्ष्म्याः पुनातु॥२५॥ हेलैव सवचनविन्यासो हावः। सस्त्रियां यथा। जइ ण छिवसि पुप्पवइं पुरओताकीसवारिओठासि । छित्तोसिचुलुचुलन्तो हिम्पहाविऊणमहहत्थेहिम्[१]॥२६॥सएवपुरुषेयथा। लोओझूरइझूरउवअणिज्जंहोइहोउतं णाम । एहिणिसिज्जसुपासेसुप्फवइणएइमेणिद्दा[२]॥ २७ ॥ आदिग्रहणाद्भावादयोगृह्यन्ते । तेषुभावःस्त्रियांयथा । तावच्चिअरइसमएमहिलाणंविब्भमाविराअन्ति। जाव ण कुवलयदलसच्छहांइमउलेन्तिणअणाइम्[३]॥२८॥व्याजःपुंसोयथा। अलिअपसुत्तविणिमीलिअच्छदेसुहअमज्झओआसम् । गण्डपरिउम्बणापुलइअङ्गणउणोचिराइस्सम्[४] ॥ २९ ॥ विस्रम्भभाषणंस्त्रियांयथा। जाओ सो वि विलक्खोमएविहसिऊणगाढमुवऊढो । पढमोपसरिअस्सणिअसणस्सगण्ठिविमग्गन्तो[५] ॥३०॥ चाटु स्त्रीपुंसयोर्यथा। एक्कम्पहरुव्वाअंहत्थेमुहमारुएणवीअन्तो। सोविहसन्तिएमएगहिओदुवीएणकण्ठम्मि[६] ॥ ३१ ॥ प्रेमाभिसन्धानम्पुंसो-

---

१ यदि न स्पृशसि पुष्पवतीं पुरतस्तत्किमिति वारितस्तिष्ठसि । स्पृष्टोऽसि चञ्चलैर्धावित्वाऽस्माकं हस्तैः ॥ २ लोको निन्दति निन्दतु यच्चनीयं भवति भवतु तन्नाम । एहि निमज्ज पार्श्वे पुष्पवति न एति मे निद्रा ॥ ३ तावदेव रतिसमये महिलानां विभ्रमा विराजन्ते। यावन्न कुवलयदलसच्छायानि मुकुलन्ति नयनानि ॥ ४ अलीकप्रसुप्तविनिमीलिताक्ष देहि सुभग ममावकाशम् । गण्डपरिचुम्बनपुलकिताङ्ग नपुनरपि चिरयिष्ये ॥ ५ जातः सोपि विलक्षो मयापि हसित्वा गाढमुपगूढः । प्रथमापसरितस्य निवसनस्य ग्रन्थिं विमार्गयन् ॥ ६ एकं प्रहारोच्चाटं हस्तं मुखमारुतेनवीजयन् । सोपि हसन्त्या मया गृहीतो द्वितीयेन कण्ठे ॥

यथा। केलीगोत्तक्खलणेवरस्सपप्फुल्लइइन्दिहिन्देइ। ब-हुवासअवासहरेबहुएवाहोल्लिआ दिठ्ठी१॥३२॥परिहासः स्त्रियांयथा॥ अत्त दिअरकिंणपेच्छसि आआसङ्किम्मुहा-पलोएसि। जाआएबाहुमूलम्मिअद्धअन्दाणपडिवाडिम्२ ॥३३॥ कुतूहलम्पुंसोयथा। असमत्तमण्डणंविअ वच्चघरं-सेसकोउहल्लस्स। वोलविअहलहलस्सपुत्तिचित्तेणलग्गिह-सि३॥३४॥ चकितंस्त्रियांयथा। णवलइआपाहरन्तुठ्ठाए तक्अङ्किम्पिहलिअसोण्हाए। जंअज्जविजुवइजणो घ-रेघरेसिक्खिउम्भमइ४॥ ३५॥ हेलाहावश्च भावश्च व्या-जोविस्रम्भभाषणम्॥ चाटुप्रेमाभिसन्धानम्परिहासः कु-तूहलम्॥ १७२॥ चकितञ्चेति निर्दिष्टाश्चेष्टाः काश्चिद्विला-सिनाम्॥ शेषाणां विप्रलम्भादौ रूपमाविर्भविष्यति ॥ १७३॥ तत्रनायकयोः प्रागसङ्गतयोः सङ्गतयोश्च सङ्गत-वियुक्तयोर्वा मिथोदर्शनश्रवणाभ्यामवस्थिताभिमानज-न्मा परस्परानुरागोवाभिलाषिणीयालिङ्गनादीनामनवा-प्तौसतयां समुपजायमानैस्तैस्तैरुत्कण्ठादिभिर्व्यभिचारि भावैर्मनोवाग्बुद्धिशरीरारम्भजन्मभिश्चा ऽनुभावैरनुषक्तः प्राप्तप्राप्यप्रकर्षावस्थो विप्रलम्भशृङ्गाराख्यां लभते॥

१ केलीगोत्रस्खलने वरस्य प्रफुल्लयति खिद्यति। बहुवासकवासगृहेबध्वाबा-ष्पार्द्रिताद्दृष्टिः॥ २ अयि देवर किं न प्रेक्षसे आकाशे किं मुधा विलोकयसि। जायाया बाहुमूले अर्द्ध चन्द्राणां परि पाटीम्॥ ३ असमाप्तमण्डनेव वध्वागृह-मस्य कौतूहलस्य। व्यतिक्रान्तहलहलस्य पुत्रि चित्ते न लगिष्यसि॥ ४ नवल-तिकाप्राकारे तुष्टया यतं किमपि हलिकस्नुषया। यदद्यापि युवतिजनो गृहे-गृहे शिक्षितुंभ्रमति॥

स चतुर्द्धा पूर्वानुरागो मानः प्रवासः करुणश्च । तेषु प्राग सङ्गतयोः पूर्वानुरागः पुरुषप्रकाण्डे यथा। दूरम्मुक्तालतया विससितया विप्रलभ्यमानो मे। हंसइव दर्शिताशो मानसजन्मा त्वया नीतः ॥ अत्र पुण्डरीकस्य माहाश्वेताया-म्प्रागसङ्गतायां समुत्पन्नः सङ्कल्परमणीयोभिलाषस्तद-नाप्तावुक्तप्रकारेण प्रकृष्यमाणस्त्वया मे मानसजन्मा दू-रन्नीतइत्युत्तरकामावस्थया प्रकाश्यते ॥ १ ॥ सएव स्त्रीप्रकाण्डे यथा । दुल्लहजणाणुराओ लज्जा गरुई प-रवसो अप्पा। पिअसहि विसमम्पेम्म मरणं सरणं णव रि एक्कम् १ ॥ अत्रापिप्रागेवदेव सागरिकाया वत्सराजे-ऽनुरागः प्रकृष्यमाणो मरणं शरणमित्युत्तरयैवकामाव-स्थया कथ्यते ॥ २ ॥ सङ्गतयोर्मानः स निर्हेतुर्यथा । अत्थ क्कूरुसणङ्खणपसिज्जणंअलिअवअणणिब्बन्धो । उम्म-च्छुरसन्तावो पुत्तअ पअवीसिणेहस्स२ ॥अत्रप्रेमगतेःस्व-भावकौटिल्याद्धेतुमन्तरेणोपजायमानोनिर्हेतुरुच्यते ॥३॥ सएवसहेतुर्यथा । पडिउत्थिआ ण जम्पइ गहिआ वि-प्फुरइ चुम्बिआ रुसइ । तुण्हिम्भुआ णववहुआ क-आवराहेण दइएण ३ ॥ यद्यप्यालिङ्गनादेर्मैतिनेत्यादि-भिःप्रतिषेधोनविद्यते तथापितदर्थोस्त्येवेतिमानलक्षणं-घटते ॥ ४ ॥ संगतवियुक्तयोःप्रवासःसनवानुरागोयथा ।

१ दुर्लभ जनानुरागो लज्जा गुर्वी परवशआत्मा । प्रियसखि विषमं प्रेम शर-णं मरणं केवलमेकम् ॥ २ अत्र क्षरोषः क्षणं प्रसादो ऽलीकवचननिर्बन्धः । उ-न्मत्सरसंतापः पुत्रक पदवीस्नेहस्य ॥ ३ प्रत्युत्थिता न जल्पति गृहीता विस्फु-चुम्बिता क्रुध्यति । तूष्णीभूता नववधूः कृतापराधेन दयितेन ॥

प्रियमाधवे किमसि मय्यवत्सला ननु सोऽहमेव यमनन्द-
यत्पुरा । अयमागृहीतकमनीयकङ्कणस्तवमूर्त्तिमानिव
महोत्सवःकरः ॥ अत्रविवाहानन्तरमेवमालत्याःकपा-
लकुण्डलयापहारान्माधवमालत्योरयन्नवानुरागःप्रवा-
सउच्यते॥ ५ ॥ सएवप्रौढानुरागोयथा। त्वामालिख्यप्र-
णयकुपितां धातुरागैःशिलायामात्मानंते चरणपतितंया-
वदिच्छामि कर्त्तुम् । अस्रैस्तावन्मुहुरुपचितैर्दृष्टिरा-
लिप्यते मे क्रूरस्तस्मिन्नपि न सहते सङ्गमन्नौकृतान्तः ॥
अत्र प्राचीनप्रणयकोपप्रसादनादिभिरनुरागस्य प्रौढि-
रवगम्यते ॥ ६ ॥ सङ्गतयोरेवान्यतरव्यपायेकरुणः ।
सस्त्रीव्यपायेपुरुषस्ययथा । ध्रुवमस्मि शठःशुचिस्मि-
ते कलितः कैतववत्सलस्त्वया । परलोकमसन्नि-
वृत्तये यदनामन्त्र्यगतासि मामितः ॥ अत्रेन्दु-
मतीव्यपायादजस्यदुःखातिशयःकरुणउच्यते ॥ ७ ॥
सएवपुरुषव्यपायेस्त्रियायथा। हृदये वससीति मत्प्रियं
यदवोचस्तदवैमि कैतवम् । उपचारपदन्नचेदिदन्त्वमन-
ङ्गः कथमक्षता रतिः॥ अत्राऽनङ्गविषयेरतेः शोकप्रकर्षा-
त्करुणइत्याख्यायते॥ ८॥ हीनपात्रादिषु चैतदाभासा
भवति॥ तत्र। हीनपात्रेषुपुंसिप्रेमानुरागो यथा। कअ-
लीगब्भसरिच्छे जरूदट्ठूणहलिअसोण्हाए। उल्लठइणा-
हरञ्जणचदिलस्ससेउल्लिअकरस्स १ ॥ ९ ॥ अत्रैव

१ कदलीगर्भसदृशोरुकं दृष्ट्वा हालिकवधूपायाः। उल्लसन्ति नखरञ्जनकाङ्क्ष-
याः कोदाद्रिं न करस्य ॥

स्त्रियांमानोयथा । पठमघरिणीअसमहन्तुहपिच्छा-
रेदरं कुणन्तम्मि । णवबहुआइसरोससव्वङ्गिअवच्छ-
आमुक्का १ ॥ १० ॥ तिर्यक्षु पक्षिणि प्रवासोयथा । आ-
पृच्छामि व्यथयति मनो दुर्बलावासर श्रीरेह्यालिङ्ग क्षप-
य रजनीमेकिका चक्रवाकि।नान्यासक्तो न खलु कुपितो
नानुरागच्युतो वादैवाधीनः सपदि भवतीमस्वतन्त्रस्त्य-
जामि॥११॥अत्रैव करिणीकरुणोयथा।नान्तर्वर्त्तयति ध्वन
त्सु जलदेष्वामन्द्रमुद्गर्जितन्नासन्नात्सरसः करोति कव-
लानावर्जितैः शैवलैः। दानज्यानिरविषस्ममूकमधुपव्यास-
ङ्गदीनाननोनूनम्प्राणसमावियोगविधुरः। स्तम्बेरमस्ता-
म्यति ॥ १२ ॥ अथसम्भोगः। तत्रनायकयोः प्रागसङ्गत-
योःसङ्गतिवियुक्तयोर्वामिथःसमागमे प्रागुत्पन्नस्तदानी-
न्तनोवारत्याख्यः स्थायिभावोभिलषणीयालिङ्गनादीना-
मवाप्तौ सत्यां समुपजायमानैर्हर्षधृतिस्मृतिमतिप्रभृति-
भिर्व्यभिचारिभावैः संसृज्यमान ऋतूद्यानोपगमनजल-
क्रीडापर्वतोपदेशप्रसाधनगृहमधुपानेन्दूदयादिभिरुद्दी-
प्यमानः सविभ्रमभ्रूकटाक्षविक्षेपालापसम्भ्रमास्मितादि-
भिरनुभावैरभिव्यज्यमान ईप्सितमासादयन्जिहासितं
वा जिहानः प्राप्तप्राप्यप्रकर्षारम्भःसम्भोगशृङ्गाराख्यां-
लभते । स चतुर्द्धा । प्रथमानुरागानन्तरो,मानानन्तरः,प्र-
वासानन्तरः,करुणानन्तरइति । तेषुप्रथमानुरागानन्त-

१ प्रथमगृहिण्यां समये तवपिच्छैरादरं कुर्वन्त्याम् । नवबध्वाईषद्रोषं संवल्य
वत्सा मुक्ता ॥ २ चयः

रोयथा । पाणिग्गहणेच्चिअपव्वइआणाअं सहीहिंसोह-
ग्गम् । पशुवइणाआसुइकंकणम्मिओसारिएदूरम् ॥१॥
मानानन्तरोयथा ॥ उव्वहइदइअगहिआहरोट्ठक्कि
ज्जन्तरोसपडिराअम् । पाणोसरन्तमइरंचसअंवाण
अंमुहंबाल ॥२॥ प्रवासानन्तरोयथा । मङ्गलवल-
अंजीअंवरक्खिअंजपउत्थिअवइआए । पत्तपिअदंस
णूससिअबाहुलइआएतंभिन्नम् ॥ ३ ॥ करुणानन्तरोय-
था । णमुअम्मिमुएविपिएदिट्ठेउणपिअम्मिजिअंती
ए । इअलज्जाअपरिहासोतीएहिअएणसंमाइ ॥४॥ तेऽ
मीचत्वारोपिसंभोगाअनुभिरेवविप्रलम्भैः प्रकर्षमापक्रा-
न्ते । तेषुप्रथमानुरागेणयथा ॥ इन्दुर्यत्रननिन्दयातेनमधुरं
दूतीवचःश्रूयतेनालापा निपतन्तिबाष्पकलुषानोपैतिका
र्श्यंवपुः । स्वाधीनामनुकूलिनींनिजवधूमालिङ्ग्ययत्सु-
प्यतेतत्किं प्रेमगृहाश्रमव्रतमिदंकष्टंसमाचर्यते ॥ ५॥ मानं
नयथा । रइक्कलिहम्मिकुंठीकआओधाराओपेम्मखग्ग
स्स । अणमग्गाइंवसिज्जन्तिमाणसाइंणाइमिहुणाण
॥ ६ ॥ प्रवासेनयथा । शापान्तोमेभुजगशयनादुत्थितेशा
र्ङ्गपाणौमासानेतानगमयचतुरो लोचनेमीलयित्वा । पश्चा
दावांविरहगुणितंतंतमात्माभिलाषंनिर्वेक्ष्यावः परिणत-
शरच्चन्द्रिकासुक्षपासु ॥ ७॥ करुणेनयथा । नमर्त्यलोक-
स्त्रिदिवात्प्रहीयतेम्रियेतनाम्नायदिवल्लभोजनः । निवृत्तमे

१ पाणिग्रहणएव पार्वत्याज्ञातं सखीभिः सौभाग्यम् । पशुपतिना वासुकि कङ्कणे अपसारितेदूरम् । २ उद्वहति दयितगृहीताधरोष्ठोयमाणरोषप्रतिरागम् । पाणोत्सरन्मदिरं चषकमिव निजमुखं बाला ।

वन्निर्दिवप्रयोजनंमृतः सचेज्जीवतएवजीवति ॥ ८ ॥
तिर्यगादिषुचैतदाभासाभवन्ति । तेषुसरीसृपमृगयोर्य-
था । मधुद्विरेफः कुसुमैकपात्रेपपौप्रियांस्वामनुवर्त्तमा-
नः । शृङ्गणसंस्पर्शनिमीलिताक्षींमृगीमकण्डूयतकृष्णा-
सारः ॥ ९ ॥ पशुपक्षिणोर्यथा । ददौसरः पङ्कजरेणुगन्धिग
जायगण्डूषजलंकरेणुः । अर्द्धोपभुक्तेनबिसेनजायांसंभा
वयामासरथाङ्गनामा ॥ १० किन्नरेषुयथा । गीतान्तरेषुश्र
मवारिलेशैरीषत्समुच्छ्वासितपत्रलेखम् । पुष्पासवा-
घूर्णितनेत्रशोभिप्रियामुखंकिंपुरुषश्चुचुम्बे ॥ ११ ॥ तरुषु-
यथा । पर्याप्तपुष्पस्तवकस्तनीभ्यः स्फुरत्प्रवालोष्ठम-
नोहराभ्यः । लतावधूभ्यस्तरवोप्यवापुर्विनम्रशाखाभुज
बन्धनानि ॥ १२ ॥ विप्रलम्भचेष्टासुप्रथमानुरागेस्त्रिया-
यथा । पेच्छइअलद्धलच्छदीहण्णीससईसुण्णअं हसइ । ज-
हजम्पइअप्फुडन्तह से हिअअठ्ठिअंकिम्पि १ ॥ १३ ॥
पुंसोयथा । सो तुह कएण सुन्दरितह च्छीणसुम-
हिअलग्गोहलिअउत्तो । जह से मच्छरिणीअविदोच्चज्ञा-
आइपडिवण्णम् ॥ १४ ॥ मानेस्त्रियायथा । कणुज्जु-
आवराईसाअज्जतएकआवराहेण । जम्भाइआरुक्ख-
पलोअइआइन्दिअहेणसिक्खविआ ॥ १५ ॥ पुं-
सोयथा । अविभाविअ रअणिमुहन्तस्सअसच्चुरिअवि-
मलचन्दुज्जोअम् । जाअंपिआरोहेवड्ढन्ताणुसआम्

१ पश्यति अलब्धलक्ष्यं दीर्घं निश्वसिति शून्यकं हसति । जथा जल्पति अस्फुटं तथास्या हृदयस्थितं किमपि ।

न्नलक्खहिअअम् ॥ १६ ॥ प्रवासेस्त्रियायथा । पिअस-
म्भरणपअोट्टन्तवाहधाराणिआअभीआए । दिज्जवङ्क
ग्गीवाइदीवओपहिअजाअाए ॥ १७ ॥ पुंसोयथा ।
मज्झगपत्थिअस्सेंत्रि गिह्ने थहिअस्स हरइ सन्तावम् ।
हिअअठ्ठिअजामुहमिअङ्कजोह्णाजलप्पवाहे १ ॥१८॥
करुणेस्त्रियायथा । णवरिअपसारिअङ्गीरअभरिउप्प
हपइस्सवेणीबान्धा । पडिआउरसन्दाणिअमहिअल-
चक्कुलइअत्थणीजणअसुआ ॥१९॥ पुंसोयथा । अन्तोहु
न्तं डज्जइजाआसुसोघरेहलिअउत्तो । उक्खित्तणिहाणा-
इवरमिअठ्ठाणाणिपेक्खन्तो २ ॥२०॥ एवमन्यत्रापि ।
करुणवर्जंस्त्रियायथा । सौधादुद्विजते त्यजत्युपवनन्द्वे
ष्टि प्रभामैन्दवीन्द्वारात्त्रस्यति चित्रकेलिसदनेवेषंविषं
मन्यते । आस्तेकेवलमब्जिनीकिसलयप्रस्तारशय्या-
तले सङ्कल्पोपनतत्वदाकृतिरसायत्तेनचित्तेन सा ॥२१॥
स्त्रियाएवप्रथमानुरागवर्जंयथा । तिष्ठ द्वारि भवाङ्गणे
व्रज बहिः सद्मेति वर्त्मेक्षते शालामञ्च तमङ्गमञ्च व-
लभीमञ्चेति वेश्मावचेन्ति । दूतीं सन्दिशसन्दिशेति
बहुशः सन्दिश्य सास्ते तथा तल्पे कल्पमयीवनिर्घृण!
यथानान्तन्निशा गच्छति ॥२२॥ प्रथमानुरागवर्जम्पुं-
सोयथा । रम्यन्द्वेष्टि यथापुराप्रकृतिभिर्नप्रत्यहंसेव्यतेश

१ मध्याह्न प्रस्थितस्यापि ग्रीष्मः पथिकस्यहरति सन्तापम् । हृदयस्थित जायासुखमृगाङ्क ज्योत्स्ना जलप्रवाहः ॥ २ अन्तर्मूर्तिं दह्यते जायाशून्ये गृहे हलिकपुत्रः । उत्खाततनिधानानीवरमनस्थानानि पश्यन् ।

ग्योपान्तविनम्रनैर्विगमयत्युन्निद्र एव क्षपाः । दाक्षिण्येन ददाति वाचमुचितामन्तः पुरेभ्यो यदा गोत्रेषु स्खलितस्तदा भवति च व्रीडाविलक्षश्चिरम् ॥ २३ ॥ पुंस एव प्रवासकरुणे यथा । सीतावेश्म यतो निरीक्ष्य हरति द्रागिङ्गिताकुलामन्योन्यार्पितचक्षुरुच्छ्वसितकरणैः पारावतैर्भूयते । इन्दोर्दूरत एव नश्यति विशत्यन्तर्गृहं दुःखितः प्रच्छाद्याननमञ्चलेन रजनीमुन्मत्तवपं रोदिति ॥ २४ ॥ सम्भोगचेष्टासु पूर्वानुरागानन्तरे चुम्बनं यथा ॥

आअरपणामिओट्ठं अघडिअणासं असङ्घलिअणिडालं ।
वण्णघअलुप्पमुहीए तीए परिउम्बणं भरिमो ॥ १ ॥ २५ ॥ प्रवासानन्तरालिङ्गनं यथा । तावमवणेइ न तहा चन्दनपङ्को वि कामिणिहुआणम् । जह दूसहे गिह्मे अण्णोण्णालिङ्गणसुहेल्ली ॥ २ ॥ २६ ॥ मानानन्तरे चुम्बनं यथा । जह जह से उम्बइ मण्णुभरिआइं णिहुअणं दइओ । अच्छीइं उवरि उवरि तह तह भिण्णाइं विगलन्ति ॥ ३ ॥ २७ ॥ प्रवासानन्तरालिङ्गनं यथा । माणदुमपरुसपवणस्स मामि सव्वङ्गणिव्वुदिकरस्स । उवऊहणस्स भद्दं रइणाडअपुव्वरङ्गस्स ॥ ४ ॥ २८ ॥ प्रवासानन्तरचुम्बनं यथा । केनचिन्मधुरमुल्बणरागं बाष्प

१ आदरप्रणामितोष्ठमघटितन्यासमसंवलितनिटलम् । वर्णघृतलिप्तमुख्यास्तस्याः परिचुम्बनं स्मरामः ॥ २ तापमपनयति न तथा चन्दनपङ्कोऽपि कामिमिथुनानाम् । यथा दुःसहे ग्रीष्मेऽन्योन्यालिङ्गनसुखम् । ३ यथा यथास्य चुम्बति मन्युभरितानि निधुवने दयितः । अक्षीणि उपरि उपरि तथा तथा भिन्नानि विगलन्ति ॥ ४ मानद्रुमपरुषपवनस्य मामि सर्वाङ्गनिर्वृतिकरस्य । उपगूहनस्य भद्रं रतिनाटकपूर्वरङ्गस्य ।

तप्रमधिकं विरहं पु । ओष्ठपल्लवमपास्य मुहूर्त्तं सुभ्रुवः सरसलाक्ष चुचुम्बे ॥ २९ ॥ करुणानन्तरमालिङ्गनं यथा । चन्द्रापीडं सा च जग्राह कण्ठे कण्ठस्थानङ्गीविनष्व प्रपेदे । तेनापूर्वां सामसुल्लासलक्ष्मीमिन्दुस्पृष्टा सिन्धुवेलेव भेजे ॥ ३० ॥ प्रथमरागानन्तरं दशनक्षतं यथा । णार्द्रव साकबोलं अज्ज वि तुह दन्तमण्डलं बाला । उब्भिण्णपुलअपरिवेढपरिगअरेक्खवडवराई १ ॥ ३१ ॥ मादेवमानानन्तरं यथा । पवणुवेल्लिअसाहुलिथएअसुठठिअदन्तमण्डलं जरू । चटु आरअम्माहू पुत्तिज्जण्हासणं कुणसु ॥ ३२ ॥ प्रवासानन्तरं दन्तक्षतादयो यथा । दन्तक्खअं कवोले कअग्गहुव्वेल्लिओ अ धम्मिल्लो । पडिघुम्मिराज दिठ्ठी पिआगमं साहइ बहूए २ ॥ ३३ ॥ प्रथमानुरागानन्तरं नखक्षतं यथा । अज्जाइ णवणहक्खणिरिक्खणे गरुअजोव्वणुत्तुङ्गम् । पडिमागअणिअणअणुप्पलच्चिअं होइ थणवट्टम् ३ ॥ ३४ ॥ अत्रैव पुरुषायितं यथा । दरवेविरोरुजुअलासु मउलिअच्छीसु ललिअचिहुरासु । पुरिसाइरीसु कामो पिआसु सज्जाउहो वसइ ४ ॥ ३५ ॥ सर्वं सर्वत्र यथा । पोढमहिलाण जं सुट्ठु सिक्खिअं तं रए सुहावेइ ५

---

१ आर्द्रमिव सा कपोले अद्यापि तव दन्तमण्डनं बाला । उद्भिन्नपुलका परिवेष्टपरिगतं रक्षति वराकी ॥ २ दन्तक्षतं कपोले कचग्रहोद्वेल्लितो धम्मिल्लः । परिघूर्णिता च दृष्टिः प्रियागमं सूचयति वध्वाः ॥ ३ आर्यायाः नवनखक्षतनिधिरक्षणं गुरुयौवनोत्तुङ्गम् । प्रतिमागतनिजनयनोत्पलचर्चितं भवति स्तनपट्टम् ॥ ४ दरवेपमानोरुयुगलासु मुकुलिताक्षीषु ललितचिकुरासु । पुरुषायितासु कामः प्रियासु सज्जायुधो वसति । ५ प्रौढमहिलानां सुष्ठु शिक्षितं रतं सुखयति । यद्येनाभिशिक्षितं नववधूनां तच्छिरति ददाति ॥

जञ्जेणछसिक्खिअंणवबहूणन्तन्तणिघरइन्देइ ॥ ३६ ॥
विप्रलम्भपरीष्टिष्वभियोगतः प्रेमपरीक्षायथा । हंहोकं-
णुल्लीणाभणामिरेसुह अहकिम्पिमाभ्भूर । णिज्जण
पारद्धीसुकहम्पिपुण्णेहिंलद्धोसि ॥ ३७ ॥ प्रत्यभियोग
तोयथा । गोलाविसमोग्रारच्छलेणअप्पाउरम्मिसेमुक्को ।
अणुअम्पाणिण्होसन्तेणविसागाढमुवऊढा ॥ ३८ ॥ वि
षहणेनयथा । अज्जविसेअजलोल्लम्पच्छाइणलीअहलि-
असोह्णाए । फग्गुच्छणचिक्खिल्लंज्जन्तइदिणन्थणुच्छङ्गे१
३९॥ विमर्शनयथा । तस्रोच्चिअणेत्तिकहाकिअसन्तितहिंत
हिसमथ्थनित । किम्मण्णेमाउच्छाएक्कजुआणोइमोगामो
४०। बहुमानेनयथा । तेणइरणबलआएदिस्सोपहरोइमी
अथणवट्ठे । गामतरुणीहिंअज्जविदिअहम्परिवालि
आभमइ ॥४१॥ श्लाघयायथा । सातइसहत्थदिसम्फगु
च्छणकद्दमन्थणुच्छङ्गे । परिकुविआइवसाहइसलाहरीगा-
मतरुणीणम् ॥ ४२ ॥ इङ्गितेनयथा । जइसोणबल्लहच्चि-
णामग्गहणेगतस्ससहिकीस । होइमुहन्तेरविअरफंसवि
सट्टंव्वतामरसम् ॥४३॥ दूतसम्प्रेषणनयथा । संउल्लि
असव्वङ्गीणामग्गहणेणतस्ससुहअस्स । दूरंअप्पाहेन्तीत
स्सेअघरंगणम्पत्ता ॥ ४४॥ दूतप्रश्नेनयथा । कहणुगआ
कहदिट्ठीकिम्भणिआकिच्चुतेणपडिवअणम् । एअव्वि
अणासमप्पइपुणरुत्तम्भम्पमाणीए ॥ ४५ ॥ लेखविधाने

१ यद्यापि स्वेदजलार्द्रं प्रत्येतिनतथा हलिकस्नुषाया । फाल्गूत्सवकर्दमोयस्य यादत्तस्तनोरसङ्गः ।

नयथा । वेविरिसिसाकरङ्गुलिपरिग्गहक्खलिअलेहणी
मग्गी । सोत्थिच्चिअणसमप्पइपिअसहिलेहम्मिकिंलि
हिमो ॥४६॥ लेखवाचनेनयथा । प्रीत्या स्वस्तिपदं वि
लोकितवती स्थानं स्तुतन्तुष्टया पश्चाज्ज्ञातमनुक्रमेणपु·
रतस्तत्तावकन्नामकम् । तन्व्या सम्मदनिर्भरेण मनसा
तद्वाचयन्त्या मुहुर्नप्राप्तोघनबाष्पपूरितदृशालेखेपि क
पठग्रहः ॥ ४७॥ सम्भोगपरीष्टिषुप्रथमानुरागानन्तरेसा
ध्वसेनपुंसोयथा । लीलाइओणिअसणेरक्खउतंराहिआ
इथणवट्टो । हरिणोपढमसमागमसज्झसवरेहिंवेविरोह·
त्थो ॥४८॥ अत्रैवदोहदंनमुग्धायथा । किङ्किन्देपडि
हासइसहीहिंइअपुच्छिआएमुद्धाए । पढमुल्लुअदोहलि
णीएणवरिदइअङ्गआदिठ्ठी ॥४९॥ अत्रैव प्रगल्भायाः
प्रियवाक्यवर्णनंयथा । हुंहुदेभणसुपुणोणसुअन्तिकरेइका
विक्खेवम् । घरिणोहिअसुहाइम्पइणोकसंभणन्तस्स ॥
५० ॥ मानानन्तरेस्त्रियाः कैतवस्वप्नेयथा । भरिमोसे
सअणपरम्मुहीएविअलन्तमाणपसराए । कइअवसु
त्तुव्वत्तणथणहरप्पेल्लणसुहेल्लिम् ॥ ५१ ॥ स्त्रियाएवस
खीवाक्यस्याक्षेपेणयथा । भिउडीहिम्पलोइस्संणिम्भछि
स्सम्परम्मुहीहोस्सम् । जम्भणहतङ्करिस्संसहिओजइतं
णपेच्छिस्सम् ॥५२॥ तस्याएवैतदनुष्ठानवर्णनेनयथा ।
ग्रन्थिमुद्ग्रथयितुं हृदयेशे वाससः स्पृशति मानध
नायाः । भ्रुयुगेन सपदि प्रतिपेदे रोमभिश्च सममेववि
भेदः ॥ ५३ ॥ प्रवासानन्तरेस्त्रियायथा । अत्थक्काग

यथाकश्चिद्दृष्टशतन्दास्यामीति प्रतिश्रुत्याष्टाभिरप्येकंश
तम्प्रयच्छति नत्वष्टौशतानीति । तद्वत्स्वस्त्रीकत्रियोगा
द्भिरालिङ्गनादीनान्निराकरणम्प्रयथावत्प्रदानस्याद्विसं
वादनमेवोच्यते ॥ ६१ ॥ प्रवासेकालहरणंयथा । एहि
इसोपइत्थोअहअंकुप्पेज्जस्सोअणुणेज्ज । इअफलइ
कस्सविप्पणोरहाणमालापिअअम्मम्मि ॥ अत्रालिङ्ग-
नादीनांप्यक्तैवकालहरणप्रतीतिः ॥६२॥ करुणप्रत्यादा
नंयथा । समसोक्खदुक्खसंबद्धिआणकालेणरूढपेम्मा-
ण । मिहुणाणंमरइजन्तह्णु जिअइइअरम्मुहंहोइ ॥ अत्र
"सुहृदिवप्रकटय्यसुखप्रदः प्रथममेकरसामनुकूलताम् ।
पुनरकाण्डविवर्त्तनदारुणः प्रविशिनष्टि विधिर्मनसो
रुजम् ।,, इत्ययमर्थः सम्बध्यते । तस्यचप्रत्यादानमे-
वार्थोभवति ॥ ६३ ॥ प्रथमानुरागेवञ्चनंविविधंयथा ।
दिट्ठाएजंणदिठ्ठोआलविआएजंणआलत्तो । उवआ
रोजंणकओतंविअअकलिअञ्छेइल्लेहिम् । अत्रक्रीडादि
भिर्दर्शनादिभिर्वञ्चनाभिवैविध्यप्रतीयते ॥ ६४ ॥
मानेविरुद्धंयथा । णमुअन्तिदीहसासेणरुअन्तिणहो
न्तिविरहकिसिआओ । धण्णाओताओजाणम्बहुवल्लह
वल्लहोनतुमम् ॥ अत्रेर्ष्यायितादिभिर्वल्लभालिङ्गनादि
विरुद्धैर्मानवतीवञ्च्यते ॥ ६५ ॥ प्रवासेव्याविद्धंयथा ।
कइआगओपिओअज्जपुत्तिअज्जेणकइदिणाहोन्ति ।
एक्कोएद्दहमेत्तोभणिअम्मोहङ्गआवाला ॥ अत्रएकस्या
पिदिवसस्यबर्षायमाणतयाप्रियालिङ्गनादिवञ्चनयावि

रागशब्देनोच्यते । प्रथमं चोपजायमानत्वाद्यं प्रथमा-
नुराग इति प्रथमतो माने । मान्यते येनेति यथा । पा-
असपडणाणमुद्धे रहसवलाओ डिअग्गिअव्वाण । दंसणमे-
त्तपसिज्जरिचुक्का बहुदाणसोक्खाण ॥ अत्र मान पूजा
यामिति धातोः स्वार्थे णिजन्तात् ण्यिषि घञि च मान इति
रूपम् । स हि प्रेयांसमस्याः पादपतनादिपूजायां प्रयो-
जयति ॥ ७२ ॥ यं प्रियत्वेन मन्यते यथा । कारणगहि
ओ वि मए माणो एमे अ जं समोसरिओ । अत्थक्कफुल्लिअं-
कोल्लतुज्झ तम्मत्थए पडउ ॥ अत्र मन ज्ञान इति धातुः । त
था हि । मानं प्रियत्वेन मन्यमाना तदपहारिणीं कोल्लाय
कापि मानिनी कुप्यति ॥ ७३ ॥ यः प्रेम मनुते यथा । ज-
त्थ ण उज्जागरओ जत्थ ण ईसाविसूरणं माणम् । सब्भा-
वचाडुअं जत्थ णत्थि णेहो तहिं णत्थि ॥ अत्र मनु अवबोध
ने धातुः । माने न हि प्रेमास्ति नास्ति वेति जनो बुध्यते तस्य
च करणभूतस्यापि प्राधान्यादत्र कर्तृत्वोपचारः । तद्य-
था "प्रज्ञा पश्यति नो चक्षुर्दृष्टिः सारस्वती हि से,,ति ॥७४॥
प्रेम मिमीते यथा । ऊ वि ब्भाअसच्छहा तासमे विवहुआण-
णवरमाणक्खलणे । पाअडिअहिअअसारो पेमासङ्करि-
सो पअट्टइ मज्झ ॥ अत्र माङ् माने इति धातोः [ कृत्यल्युटो
बहुलमिति ] कर्तरि ल्युट् । को सौ अनुमान इति भाष्य-
प्रयोगात् । तेन च यद्यपि करणभूते नैवात्मनि त्वक्षिम
पयां चाप्रियप्रेम्णः परिमाणं सत्यभामा प्रत्याययति त-
थापि पूर्ववदिह प्रययकर्तृत्वेनोपचर्यते ॥ ७५ ॥ प्र-

वासं वसन्तइत्युपलक्षणेनात्मानमङ्गनाभूषयन्तियथा ।
साहीणेविपिअअमेपत्तेविक्कणेणमाविडओआप्पा । दु-
क्खिअपउत्थवइअंसअज्झिअंसण्ठवन्तीए ॥ अत्रवस-
आच्छादनइत्यस्यमस्मरतीत्यादिवन्निषेधार्थमपूर्वस्य-
घञिचमन्नासइतिरूपन्निरूप्यते ॥ ७६ ॥ युवानः प्रिया
सन्निधौनवसन्तियथा । विरहाणलोसहिज्जइआसावन्धे
णदुल्लहजणस्स । एक्कग्गामपवासोमाएमरणंविसेसेइ ॥
अत्रदूरस्थयोरिवान्तिकस्थयोरपिसन्निकर्षाभावात्प्रवा
सोभवति ॥ ७७ ॥ उत्कण्ठादिभिश्चेतोवासयतियथा ।
आलोअन्तिदिसाओससन्तजम्भन्तगन्तरोअन्त । मु-
च्छन्तपडन्तहसन्तपहिअकिंतेणपउत्थेण ॥ अत्रोत्क-
ण्ठादिनिर्वासितेचेतसिशून्यावलोकनादयोनुभावाजाय
न्ते ॥ ७८ ॥ प्रमापयतियथा । सञ्जीवणोसहिम्मिवपि-
अस्सरक्खेइअणन्नवावारा । सासूणवब्भदंसणकण्ठा
गअज्जीविअंसोण्हम् ॥ अत्रप्रसादङ्करोतीत्यादिवत्प्र-
मापणोपक्रमोपिप्रमापणमुच्यते ॥७९॥ करुणेकरोतेर-
नुभूतोपादानार्थत्वेकुरुतेमूर्च्छांयथा ॥ विअलिअविओ
अविअअन्तक्खणपम्हट्ठरामभरणाअसम् । जणअ-
तणआएणवरंलद्धम्मुच्छाणिमीलिअच्छीअसुहम् ॥ अ-
त्रसीतायाः पतिशोकप्रकर्षेणभूतामूर्च्छोत्पद्यते ॥ ८० ॥
उच्चारणार्थत्वेकुरुतेविलापंयथा । पुहवीअहोहिहिपई-
बहुपुरिसविसेसचञ्चलाराअसिरी । कहतामहच्चिअइ

ताविलपन्तीदमुच्चरति ॥ ८१ ॥ अत्रस्थापनार्थत्वं कु-
रुतेसाहसेमनोयथा । इयमेत्यपतङ्गवर्त्मना पुनरङ्का-
श्रयणीभवामि ते । चतुरैः सुरकामिनीजनैः प्रिय! या-
वन्नविलुप्यसेदिवि ॥ अत्ररतेः कामशोकेनमरणसा
हसंमनोवस्थाप्यते ॥८२॥ अभ्यञ्जनार्थत्वंकरोतिचित्त-
न्दुःखेनयथा । दलतिहृदयङ्गाढोद्वेगन्द्विधा न तु भि-
द्यते वहतिविकलः कायोमोहन्नमञ्चति चेतनाम् ।
ज्वलतिच तनूमन्तर्दाहः करोति न भस्मसात्प्रहरतिवि
धिर्मर्मच्छेदी न कृन्तति जीवितम् ॥ अत्ररामादेः दुः-
खेनचित्तमभ्यज्यते ॥ ८३ ॥ सम्भोगनिरुक्तिषुप्रथमानु-
रागानन्तरेपालनार्थोयथा । दृष्टाद्दृष्टिमधोददाति कु
रुतेनालापमाभाषिता शय्यायाम्परिवृत्य तिष्ठति ब-
लादालिङ्गिता वेपते । निर्यान्तीषु सखीषु वासभवना-
न्निर्गन्तुमेवेहते जाता वामतयैव सम्प्रति मम प्रीत्यै
नवोढाप्रिया ॥ अत्राप्रागल्भ्यवामताभ्यामननुकूलाया
मपिनवोढायामिच्छानुवृत्यारतिः पाल्यते ॥ ८४ ॥
मानानन्तरेकौटिल्यार्थोयथा । पादेमूर्द्धनि तामुतामु-
पगते कर्णोत्पले चूर्णिते छिन्ने हारलतागुणे करतलेस-
म्पातजातव्रणे । अप्राप्तप्रियताडनव्यतिकराहन्तुम्पुन
श्चेतसा वाञ्छन्ती मुहुरेणशावनयना पर्याकुलं रोदि-
ति ॥ अत्रप्रेम्णः स्वभावकुटिलत्वान्मानवत्याः कचग्र-
हणेनयत्पादताडनादिरूपाः कुटिलाएवजायन्ते ॥ ८५॥
प्रवासानन्तरेअभ्यवहारार्थोयथा । वसिष्ठधेनोरनुया-

यिनन्तमावर्त्तमानं वनिता वनान्तात् । पपौ निमेषा-
लसपक्ष्मपङ्क्तिरुपोषिताभ्यामिव लोचनाभ्याम् ॥ अ-
त्रोत्तरार्द्धे उपोषितस्यान्नोपयोगइवप्रियालोकजन्मापि-
बतेरभ्यवहारःकथ्यते॥८६॥करुणानन्तरेनुभवार्थौयथा।
अणुमरपत्थिआएपत्ताअजीएम्मि पिअम्मि । वेह-
व्वमंडणंकुलबहूअसोहग्गअजाअम् ॥ अत्रयथैयम्मत्प्रा
णभूतैवमस्याअहमपिजीवितमेवेति परयाविस्रम्भजो
रागः पल्लवः पुनः प्रेतयापियत्सङ्गमोमयाभिलषितः सो
यज्जीवन्त्यैवजीवितेश्वरः समासादितइतिविस्रम्भादति
सुखमेवानुभूयते ॥८७॥ अत्रप्रथमानुरागानन्तरंसम्भो
गः संक्षिप्तोयथा । अपेतव्याहारव्युतविविधशिल्पव्य-
तिकरङ्करस्पर्शारम्भे प्रगलितदुकूलान्तशयनम् । मुहुर्ब-
द्धोत्कम्पन्दिशिदिशिमुहुः प्रेरितदृशोरहल्यासुत्रामणोः
क्षणिकमिहतत्सङ्गतमभूत् ॥ अत्रसंक्षेपोन्निगदेनैवव्या-
ख्यायते ॥ ८८॥ सएवमानान्तरेसङ्कीर्णोयथा । अणु-
णिअखणलद्धसुहेपुणोविसम्भरिअमण्णुदूमिअविहलो ।
हिअएमाणवईणंचिरेणपणअगरुओपसम्मइरोसो ॥ अ
त्रावस्थितामर्षप्राचरतिर्व्यलीकस्मरणादिभिःसंकीर्यते ॥
८९ ॥ प्रवासानन्तरेसम्पूर्णोयथा । शापान्तोमे भुज-
गशयनादुत्थितेशार्ङ्गपाणौ मासानेतान् गमय चतुरो-
लोचने मीलयित्वा । पश्चादावां विरहगुणितन्तन्तमा-
त्माभिलाषान्निर्वेक्ष्यावः परिणतशरच्चन्द्रिकासु क्षपासु ॥
अत्रामुनाविरहिवाक्येनापिनिर्वेक्ष्याव इतिभविष्यत्का

लोपाधेः प्रवेशानन्तरं प्यविरुद्धवमानेनतन्नम्मात्माभिला
षमित्यादिनातदानीन्तनभोगस्यसम्पूर्णत्वं वर्ण्यते ॥१०॥
करुणानन्तरेसमृद्धोयथा । तीर्थेतोयव्यतिकरभवेजह्नु-
कन्याशरय्वोर्देहत्यागादमरगणनालेख्यमासाद्यसद्यः ।
पूर्वाकाराधिकचतुरया १ सङ्गतः कान्तयासौलीलागा-
रेष्वरमतपुनर्नन्दनाभ्यन्तरेषु ॥ अत्रोत्तरार्द्धेनेन्दुमत्य-
जयोर्लोकान्तरप्रत्युज्जीवनेनसम्भोगसमृद्धिः प्रतिपा-
द्यते ॥ ११ ॥ प्रथमानुरागानन्तरेसहार्थान्वयोयथा ।
मुहपेच्छओपईसेसाविहुपिअरूअदंसणुम्मइआ । दोवि
कअत्थामुहविअपुरिसमहिलन्तिभण्णन्ति ॥ अत्रपूर्वा-
र्द्धेरञ्जयत्यर्थः । उत्तरार्द्धे राजत्यर्थः । प्रथमानुरागेस-
हसिद्धभावेनसिद्धस्तदनन्तरेपितथैवानुवर्त्तते ॥ १२ ॥
तत्रैवपश्चादर्थान्वयोयथा । अद्यप्रभृत्यवनताङ्गि ! त-
वास्मिदासः क्रीतस्तपोभिरिति वादिनिचन्द्रमौलौ ।
अह्नाय सानियमजंक्लममुत्ससर्ज क्लेशः फलेनहिपुनर्न-
वतांविधत्ते ॥ अत्ररञ्जयत्यर्थः प्रथमानुरागेपुंसिपश्चा
द्भावेनसिद्धस्तदनन्तरेपितथैवानुवर्त्तते ॥ १३ ॥ अत्रै-
वानुरूपार्थान्वयोयथा । शशिनमुपगतेयङ्कौमुदीमेघमु-
क्तञ्जलनिधिमनुरूपञ्जह्नुकन्यावतीर्णा । इतिसमगुणयो-
गप्रीतयस्तत्रपौराः श्रवणकटु नृपाणामेकवाक्यं विव-
व्रुः ॥ अत्रराजत्यर्थः प्रथमानुरागेस्त्रीपुंसयोरप्यानुरू-
प्येणसिद्धस्तदनन्तरेपितथैवानुवर्त्तते ॥ १४ ॥ तत्रैव
गतार्थान्वयोयथा । स्थाने तपोदुश्चरमेतदर्थमपर्णयापे

१ पूर्वाकाराधिकतररुचेतिपुस्तकान्तरे ।

लब्धमाधितम्रम् । या दास्यमप्यस्य लभेत नारी सा स्यात्कृतार्थाकिमुताङ्कशय्या ॥ अत्रपूर्वार्द्धेरञ्जयत्यर्थः प्रथमानुरागेनुगतार्थत्वेनसिद्धस्तथैवानुवर्त्तते । सोयकरणसाधनः प्रत्ययोत्पत्तिपक्षउक्तः ॥ भावसाधनपक्षे तु सर्वत्रसहार्थादिविशिष्टारतिर्दीप्तिर्वानुरागशब्देनोच्यमानातदनन्तरेपिसमाससामर्थ्यादनुवर्त्तते । कः पुनरत्रसमासः । षष्ठीलक्षणस्तत्पुरुषः प्रथमानुरागस्यानन्तरइतिप्रथमानुरागानन्तरइति । कात्रवृत्तिः । अजहत्स्वार्था । नह्यत्रनायकौमिथः समागतावपिप्रथमानुरागमुत्सृजतः । युक्तम्पुनर्यदजहत्स्वार्थपरार्थाभिधानरूपा[१] वृत्तिःस्यात् । अवश्यं ह्यनेनपरस्यार्थमभिदधतास्वार्थ उत्सृष्टव्यः । बाढंयुक्तम् । एवंहिदृश्यतेलोकेभिक्षुकोन द्वितीयाद्भिक्षामासाद्यपूर्वाञ्जहातिसंचयायैव यतते । एवन्तर्हिद्वयोर्द्विवचनमितिद्विवचनम्प्राप्नोति । कस्याविभक्तेः । षष्ठ्याः । नषष्ठी । समर्थोनन्तरः । तर्हिप्रथमायाः । नप्रथमासमर्थः प्रथमानुरागः । सम्बन्धाधिक्यात् । अभिहितः सोर्थोऽत्रान्तर्भूतः प्रातिपदिकार्थः सम्पन्नइतिसामर्थ्यम्भविष्यति । नैवम् । इहप्रथमानुरागानन्तरेइत्यस्मात्समुदायाद्विभक्त्या उत्पत्तव्यन्तेनसमुदायेनएकोर्थः सपिण्डो[२] मृत्पिण्डइवाविभागोत्पन्नपांसूदकविभागोवयवार्थशक्त्यानुगृहीतः पृथग्व्यपदेश्यावयवशक्तिरभिधीयते । तस्मिंश्चसमुदायार्थेएकत्वंसमवेतमतोविद्यमानायामप्यवयवसङ्ख्यायान्तदाश्रयासुबुत्पत्तिर्नभविष्यति ॥९५॥

१ परस्वार्थाभिधानरूपात्र[illegible] । २ एकार्थं पिण्ड इति च

मानानन्तरे पूजार्थान्वयो यथा । नस्पृष्टोपि त्रिदशस-
रिता दूरमीर्ष्यानुबन्धान्नाप्युत्सृष्टो भुजगपतिना लज्जे-
नानिजं याथाः । मानस्यान्ते नयनसलिलैः क्षालितः शै-
लपुत्र्या पत्युर्मौलौ नतियुजि जयत्यात्मनः पादपांसुः ॥
अत्र पादपतनादिपूजा मानसिद्धा तदनन्तरेप्यनुवर्त्तते ॥
१६ ॥ अत्रैव मानस्य प्रतिप्रियत्वाभिमानान्वयो यथा । वि
हायैतन्मानव्यसनमनयोरुच्चकुचयोर्विधेयः प्रेयांस्ते य
दि यमनुल्लङ्घ्यवचसः । सखीभ्यः स्निग्धाभ्यः शि
वमिति निशम्यैव नयनानि वापाम्भोदत्ते नयनसलिलैर्मा
नसुहृदे ॥ अत्र मानस्य प्रतिप्रियत्वाभिमानो मानानन्त-
रेप्यनुवर्त्तते ॥ १७ ॥ अत्रैव प्रेमावरोधार्थान्वयो यथा ।
दूमेतिजे मुहुत्तङ्कुविश्रन्दा सव्वजेपसाअन्ति । तेच्चिअम
हिलाणपिआसे सासामिच्चिअवराआ ॥ अत्रास्याम-
पि प्रेमास्ति न वेति जिज्ञासुः प्रियः प्रियाकुलीगोत्रस्खल-
नादिना दुनोति सा च प्रेमवत्यवश्यमस्मै कुप्यतीति सखोपल-
ब्धप्रेमा न दासवद्दैनाम्प्रवासयति । अथैषात्मनि प्रेमा-
स्तित्वमवबुद्ध्यते । सोयं मानसिद्धोर्थस्तदनन्तरेप्यनु-
वर्त्तते ॥ १८ ॥ तत्रैव प्रेमप्रमापणार्थान्वयो यथा । सुर-
कुसुमेहिं कलुसिअं जुइ तेहिं विअपुणोह्मसाए मि तुमम् ।
तो पेम्मस्स किसोअरि अवराहस्स अ ण मे कअं अणुरूअम् ॥
अत्र रुक्मिण्याः सुरकुसुममञ्जरीदत्तामनु सुरतरुरेव प्रे-
यसा प्रतिपन्नस्तदहमस्याः सहस्रगुणेन प्रियतमेति सत्य
भामा स्वप्रेमाणमिमीते स चायमर्थो मानसिद्धस्तदनन्त-

रेपिसमाससामर्थ्यादनुवर्त्तते। कःपुनरत्रसमासः। षष्ठी तत्पुरुषएव। कावृत्तिः। प्रथमानुरागानन्तरमजहत्स्वार्थैव। युक्तन्तत्रविस्रम्भणादावपि प्रथमानुरागस्याविद्यमानत्वात्। इहतुमाननिवृत्तौमानापगमादयोजायन्ते। अन्वयाद्विशेषणम्भविष्यति। तद्यथा। घृतघटस्तैलघटइति। निषक्तेपि घृतेतैलेवायंघृतघटोऽयन्तैलघटइत्यन्वयात्पूर्वपदार्थोविशेषणम्भवति। भवतितत्रयायया-वतीवार्थमात्राइहापितत्तुल्यमेव। तथाहि। सककअग्गहतंसुणाम्मिआणणापिअइपिअअमविइण्णम्। थोअत्थोअंरोसीमहंवमाणंसिणीमइराम्॥ सकषायैरेववाक्यैर्नायकन्निरस्तुदन्तीशयनीयकृच्छ्रेदितिमानशेषान्वयादुश्यते॥ ९९॥ प्रवासानन्तरेप्रियानवसतइत्यर्थस्यान्वयोयथा। वसनेपरिधूसरेवसानानियमक्षाममनुः कृतैकवेणिः। अतिनिष्करुणस्यदुःखशीलाममदीर्घंविरहव्रतंबिभर्त्ति॥ अत्रदुष्यन्तेनशकुन्तलायाः प्रवासेविभूषणादग्रहणं यदवगतन्तदनन्तरेप्यनुवर्त्तमानप्रेमप्रकर्षायभवति॥१००॥ अत्रैवयुवानः प्रियासन्निधौनवसन्तीत्यर्थस्यान्वयोयथा। समर्थये यत्प्रथमम्प्रियांप्रतिक्षणेन तन्मे परिवर्त्ततेऽन्यथा। अतोविनिद्रे सहसाविलोचने करोमि न स्पर्शविभावितप्रियः॥ अत्रपुरूरवाः प्रवासान्मत्तउर्वशीबुद्ध्यालतादिकंयदासादयतितत्तदन्यथा बभूवतत्तत्संस्काराच्चायं यस्यालतारूपपरिवर्त्तनम्प्रत्येतिसोयम्प्रियासन्निधौयूनामवासः प्रवासः संसि

द्धस्तदनन्तरेऽप्यनुवर्त्तते ॥ १०१ ॥ अत्रैवोत्कण्ठादिभिश्चे-
तोवासयतीत्यर्थस्यान्वयो यथा ॥ अव्वो दुक्करआरअ पु-
णोवि तत्तिं करेसि गमणस्स । अज्जवि ण होन्ति सरला वे-
णीअ तरङ्गिणो चिहुरा ॥ अत्र प्रवासोद्भूतभृशोत्कण्ठादि-
भिश्चित्तवासनाः प्रवासानन्तरेऽपि तस्या नोपशाम्यतीति
वेणिकावर्णनादिना सूच्यते ॥१०२॥ अत्रैव प्रमापयतीत्यर्थ-
स्यान्वयो यथा । त्वद्वियोगोद्भवे चण्डि! मया तमसि म-
ज्जता । दिष्ट्या प्रत्युपलब्धासि चेतनेव गतासुना ॥ अ-
त्रोर्वशीविरहे पुरूरवा उत्तराङ्कामावस्थामापन्नः प्रिया-
प्राप्तौ प्रेत्येव प्रत्युज्जीवितस्तदेवानुसन्धत्ते । सोयम्प्र-
मापणार्थः प्रवाससिद्धस्तदनन्तरेऽपि समासस्सामर्थ्यादनु-
वर्त्तते । कः पुनरत्र समासः । षष्ठीतत्पुरुष एव । का वृत्तिः ।
न तावदनुत्सृष्टस्वार्था । नहि प्रोष्यसमागतयोः प्रवाससम्-
बन्धोऽपि विद्यते । उत्सृष्टस्वार्था तदिह भवतु । युक्तम्पुन-
र्यदुत्सृष्टस्वार्थानामवृत्तिः स्यात् । बाढं युक्तम् । एवं हि
दृश्यते लोके । पुरुषोऽयम्परकर्मणि प्रवर्त्तमानः स्वकर्मोत्सृ-
जति । तद्यथा । तक्षा राजकर्मणि प्रवर्त्तमानस्तक्षकर्मोत्सृ-
जति । नन्वेवं राजपुरुषमानयेत्युक्ते पुरुषमात्रस्यानय-
नम्प्राप्नोति । नैष दोषः । उत्सृजन्नप्यसौ स्वार्थन्नात्य-
न्तामुत्सृजति यः परार्थविरोधी स्वार्थस्तमेवोत्सृजति ।
तद्यथा । तक्षा राजकर्मणि प्रवर्त्तमानस्तक्षकर्मोत्सृजति ।
न तु स्थितविहसितकम्पनादीनि । न चायमर्थः परार्थ-
विरोधी विशेषणन्नाम तस्मान्नोत्सृज्यते ॥१०३॥ करु-

णानन्तरेऽनुभूतप्रादुर्भावान्वयार्थी यथा । जयन्ति जायाश्लिष्टस्य शम्भोरम्भोधिमन्थने । मग्नामृतविषास्वाद-मदमूर्छामनोमुदः ॥ अत्र दाक्षायण्या हैमवतीत्वेन करुणानन्तरत्वं तत्र करुणे दुःखेन मूर्छादयः प्रादुरासन् । इह त्वानन्देन ते प्रादुर्भवन्ति ॥ १०४ ॥ तत्रैवोच्चारणान्वयार्थी यथा । क्राम्यन्ती यदुपेक्षिताखि पुरतः कामो यदग्रे हतः क्लिष्टं यत्तपसा वपुर्यदपि च प्रोक्ता बहुच्छद्मना । तत्सर्वं प्रणतस्य मेऽद्य दयिते दाक्षायणि क्षम्यतामित्युक्त्वा चरणाब्जयोर्विजयते लुण्ठन् शिवायाः शिवः ॥ अत्र करुणावस्थायां प्रियापादाब्जयोर्लुण्ठता शोकेन यो विलापः कृतः स इह प्रकर्षालापत्वेन परिणमति ॥१०५॥ तत्रैव मनोऽवस्थापनान्वयार्थी यथा । अखण्डितं प्रेम लभस्व पत्युरित्युच्यते ताभिरुमा स्म नम्रा । तया तु तस्यार्द्धशरीरलाभादधः कृताः स्निग्धजनाशिषोऽपि ॥ अत्रैव "यदैव पूर्वं ज्वलने शरीरं सा दक्षरोषात्सुदती ससर्ज । ततः प्रभृत्येव विमुक्तसङ्गः पतिः पशूनामपरिग्रहोऽभूत्,, इति करुणावस्थायामतिस्नेहेनापरिग्रहत्वसाहसे यन्मनोवस्थापितं तदिहार्द्धशरीरप्रदानमहासाहसमेत्राऽवतिष्ठते ।।१०६।। तत्रैवाभ्यञ्जनान्वयार्थी यथा । भिन्ने सद्यः समाधावुपरमति परज्योतिषि स्पन्दसंज्ञे संज्ञामापद्यमाने मृदुमनसि मनागुन्मिषत्स्विन्द्रियेषु । व्यापारे पारवश्यं विसृजति मरुति ब्रह्मसब्रह्मचारी त्वा-मार्द्धस्पर्शजन्मा जयति पुररिपोरन्तरानन्दपूरः ॥ अत्र

यत्करुणात्वस्थायामस्मनः शोकप्रकर्षेणाभ्यक्तमासीत्त-
दिह प्रियाश्लेषजन्मना परमानन्देनाभ्यज्यते । सोय-
ङ्करुणधर्मसमन्वयः ॥ तदनन्तरेपि समाससामर्थ्याद्भ-
वति । कः पुनरत्रसमासः । षष्ठीतत्पुरुषएव । कावृत्तिः ।
जहत्स्वार्था । नह्यत्र करुणार्थस्य गन्धोपि । कथन्तर्ह्य-
न्वयः । यथामल्लिकापुटश्चम्पकपुटइति । अत्र निष्की-
र्णास्वपि सुमनस्सु मल्लिकादिवासनावशाद्विशेषणम्भ-
वत्ययम्मल्लिकापुटोऽयञ्चम्पकपुट इति । एवन्निवृत्तेपि
स्वार्थे वासनावशात्करुणोऽनन्तरस्य विशेषणम्भवति ।
अस्तुवा प्रथमानुरागादिष्वपि जहत्स्वार्थैव वृत्तिः । नन्वे
वं राजपुरुषमानयेत्युक्ते पुरुषमात्रस्यानयनंप्राप्नोति ।
नैषदोषः । वृत्तौ समर्थाधिकारः क्रियते । सामर्थ्यञ्च
भेदः, संसर्ग, उत्सर्ग, उभयंवा । तत्र राज्ञ इत्युक्ते सर्वं
स्वंप्रसक्तम् । पुरुष इत्युक्ते सर्वः स्वामी प्रसक्तः ।
इहेदानींराजपुरुषमानयेत्युक्ते राजा पुरुषंनिवर्त्तयत्य
न्येभ्यः स्वामिभ्यः पुरुषोपि राजानमन्येभ्यः । एवम
स्मिन्नुभयतोव्यवच्छिन्ने यदि राजार्थो निवर्त्तते ॥ का
मन्निवर्त्ततान्नजातु क्वचित् पुरुषमात्रस्यानयनंभवि
ष्यति । प्राक्चवृत्तेरकृतार्थस्य निवृत्तौ सामर्थ्याभावा
द्वृत्तिरेव न स्यात् । वृत्तिनिमित्तावनिवृत्तिस्तस्माद
दोषइति । तत्र राज्ञःपुरुष इत्यत्र यदा तावदवधृतपरा
यत्तवृत्तिरयंपुरुषो न स्वतन्त्रस्तदा स्वामिसंसर्गस्या
वगतत्वात् । स्वामिविशेषज्ञानायोपादीयमानो राज

शब्दःस्वाम्यन्तरेभ्यः पुरुषं व्यावर्त्तयति सोयं स्वाम्य न्तरव्यवच्छेदो भेद इत्युच्यते। यदा पुनरवगतपराय त्तभावस्य पुरुषस्य स्वामिसंबन्धद्योतनाय राजशब्दः प्रयुज्यते तदा विशेषसंसर्गस्य शब्दोपादानत्वादनव काशो विशेषान्तरसंपातइत्यशाब्दी स्वाम्यन्तरनिवृ त्तिरवसीयते। यदा त्वर्थान्तरनिवृत्तिस्वात्मसंसर्गश्चा भिसंधायोपसर्जनपदानिप्रयुज्यन्ते। तदा शब्दार्थसाम र्थ्ययोः प्रतिपत्तिनिबन्धनयोरभेदापेक्षायाम्भेदसंसर्गस मुदायः सामर्थ्यंभवति। यथानीलञ्चतदुत्पलञ्चेति नी लोत्पलम्। प्रथमश्चासावनुरागश्चेति प्रथमानुराग इति। प्रथमानुरागानन्तर इत्यादिषु च भेदसामर्थ्यं यथा राज्ञोभृत्य इति यतोनन्तरइत्युक्तेऽवधृनमिदंकस्याप्य- वधेरनन्तरोऽयन्न्स्वतन्त्रइति सर्वोवधिः प्रसक्तः प्रथ- मानुरागस्येत्युक्ते सर्वः संबन्धी प्रसक्तः। इहेदानीं प्रथमानुरागानन्तरइत्युक्ते प्रथमानुरागोनन्तरन्नि- वर्त्तयत्यन्येभ्योऽवधिभ्यः। अनन्तरः प्रथमानुरागन्नि वर्त्तयत्यन्येभ्यः सम्बन्धिभ्यः। तत्र योऽसौ भेदस्तत्सा मर्थ्यन्तन्निमित्ता च वृत्तिः। भेदनिमित्तायाञ्च वृत्तौ स त्यां वृत्त्यभिमुखस्य भेदमुपजनय्योपसर्ज्जनस्य प्रथमा नुरागस्यार्थो निवर्त्तते। यस्यापि प्रधानस्यानन्तर स्यावधिमतोनिवर्त्तते। सोप्यवधिमवच्छिनत्ति। ए वमुभयतो व्यवच्छेदं निर्ज्ञातेऽनन्तरविशेषे समुदाया र्थंचान्यस्मिन्प्रादुर्भवति यदि प्रथमानुरागाद्यर्थोनिवर्त्त

ते । कामन्निवर्त्ततान्न जातु क्वचिदवधिवन्मात्रस्य स प्रत्ययो भविष्यति । ननु चान्वयव्यतिरेकाभ्याञ्शब्दस्या र्थस्त्वन्नोपपद्यते । तथाहि । प्रथमानुरागानन्तरे इत्यु- क्ते कश्चिच्छब्दः श्रूयते प्रथमानुरागेत्यनन्तरेति च प्र तीयमानविभागोऽर्थोऽपि कश्चिदवगम्यते । कन्याविस्र म्भणादिरवधिमत्त्वञ्च । मानानन्तरेइत्युक्ते कश्चिच्छ ब्दभागो हीयते कश्चिदुपजायते कश्चिदन्वयी प्रथमानु रागेतिहीयते मानेत्युपजायते । अनन्तरइत्यन्वयी । अ र्थोऽपि कश्चिद्धीयतेकश्चिदुपजायतेकश्चिदन्वयीकन्यावि- स्रम्भणादिर्हीयते । मानशैथिल्यादिरुपजायते । अव धिमत्त्वमन्वयि तेनमन्यामहेयः शब्दभागो हीयते त- स्यासावर्थो योर्थो हीयते । यउपजायतेतस्यायमर्थो योर्थउपजायते । योन्वयीतस्यासावर्थोयोर्थोन्वयीति । मैवम् । यतोऽनन्यथासिद्धाभ्यामेवान्वयव्यतिरेकाभ्यां शब्दार्थयोः संबन्धावधारणमन्यथा सिद्धौचेमौ । त- थाहि । यत्र वृंहितं हीयते ह्रेषितमुपजायते । रेणुच क्रमन्वयि । तत्रहस्तिनोहीयन्तेअश्वाउपजायन्ते पिपी लिका अन्वयिन्यो न च तावतारेणुचक्रादिपिपीलिकाः कारणं भवति ॥ यत्रवाक्षीरंहीयते दध्युपजायते । पा त्रमन्वयि तत्र माधुर्यं हीयतेऽम्लत्नोपजायते । तृप्ति रन्वयिनी नैतावता पात्रस्य तृप्तिः कार्यंभवति । अ वधृतं हि सामर्थ्यमन्वयव्यतिरेकाभ्यां प्रविभज्यते । यथा लोके बधिरोपि चक्षुष्मानालोकयति । सत्यपि

श्रोत्र उपहृतचक्षुर्नालोकयति रूपमित्यन्वयव्यतिरेकाभ्या मुक्षुः श्रोत्रसन्निधाने रूपालोकनं चक्षुष एवावस्थाप्यते। न श्रोत्रस्य । यस्य केवलस्यार्थोऽवगतः पदार्थान्तरसन्निधानेऽपि तस्य स एव । नहि रसनमसन्निधौ दर्शनस्य मधुरादिव्यञ्जकदर्शनसन्निधौ नीलादिव्यक्तिप्रति सामर्थ्यं लभते प्रथमानुरागशब्दस्य च केवलस्योत्कण्ठादिषु मानशब्दस्य प्यायितादिष्वनन्तरशब्दस्य पुनरव-धिमत्त्वे वसामर्थ्यमवधृतमतस्तेषान्तावानेवार्थोभव ति यः पुनः पदयोरन्योन्योपश्लेषाद्विजृम्भणादिर्मान शैथिल्यादिर्वाविधिमद्विशेषोन्यात्रधिकः प्रतीयतेवाक्यार्थः संभवतीति यदि च यथानपेक्षितावयवार्थावृक्षश्रो-त्रियशङ्कगोपादयः स्वसामर्थ्यं नियतमर्थमाचक्षते तथा सङ्घाता एवैते प्रथमानुरागान्तरादयः । राजपुरुषा-दयश्चानपेक्षितावयवार्थाः यथासामर्थ्यमर्थेषु निवि-शन्ते । ननु चाव्यपदेश्यपूर्वापरविभागाभिन्नार्थाभि-धायिनो वृक्षादयः प्रतीयमानभागभेदानुयाताः स-म्बन्धिपदार्थोपहितभेदं वृत्त्यभिधायिनः पुनरिमे त त्कथमप्रथमानुरागानन्तरादयो वृक्षादिवद्रूढिशब्दा भ वितुमर्हन्ति । तदसत् । रूढिशब्दा यौगिका इति हि विभागोऽभेददर्शनादर्शनाभ्यामभिनिविशतेऽभिनिवि-ष्टबुद्धेः प्रतिपादनोपाय एव । अपथाभिनिविष्टो ह्ययङ्क्रमेण तस्मादपदार्थान्निवर्त्तयितव्यस्ततो स्याप्रत्यभिज्ञायमानप्रकृतयः श्रोत्रियक्षत्रियादयो दृश्यन्ते । नह्यत्र प्र

कृतिरूपमवसीयते। यतः प्रकृत्यर्थावच्छिन्नः प्रत्ययार्थो ऽभिधीयते। ततोऽनवसीयमानावयवविभागारूढयः का श्चिदुपन्यस्यन्ते। यत्रात्यन्तमसम्भवोऽवयवार्थस्य यथा- श्वकर्णोऽश्वस्तैलपायिकामण्डपइति। पुनः कदाचित्सन्नि हितावयवार्था जातिविशेषाभिधायिनः सप्तपर्णकृतमा लादय उदाह्रियन्ते। यतः अपलाशोऽप्यनुद्भिन्नपला- शोऽपि च वनस्पतिः सप्तपर्णान्यस्य पर्वणीति सप्तपर्ण इत्याख्यायते। तथानिष्कीर्णकुसुमस्तवकमारब्धकलि- काजालोऽपि कृतामालानेनेतिकृतमाल इत्यभिधीयते। अथ पञ्चाङ्गुलमिवाश्वकर्णइवपर्णमस्येति उपचरि- तार्था अवयवाजातिवाचिनएवपञ्चाङ्गुलोऽश्वकर्णादयोवर्ण्य न्ते। तेषु हि पञ्चाङ्गुलादिव्यपदेशः प्रोद्भिद्यमानप्रवा- लमालमपियावदनुवर्त्तते। ततः सन्निधीयमानेऽप्यना- श्रीयमाणवृत्तिपदार्थालोहितशालिः गौरखरइत्यादयो निगद्यन्ते। तत्र हि सन्नपि वर्णविशेषः समुदायस्य जा- तिवचनत्वाच्छब्दार्थत्वेननावसीयते। तदेवमयंशक लीकृतवृत्तिपदार्थाभिनिवेशः प्रथमानुरागानन्तरादा- विव राजपुरुषादावप्यवयवाभिनिवेशं शक्यते त्याज- यितुम्। अतएव प्रथमानुरागादीनां विप्रलम्भसम्भो- गादीनाञ्च पारिभाषिकोऽपिसंसर्गः सन्निधीयतइति १०७॥ प्रकीर्णकेषु स्पृहयन्ती व्रतमष्टमीचन्द्रकः स हि चैत्रचतुर्थीतोऽष्टमचतुर्थ्यामुपादीयमानः कामिनीभिर- र्च्यतेयथा। अवसहिअजणो पइणा सलाहमाणेणए-

म्बिरं हसिओ । चन्दोत्ति तुज्झ मुहदिण्णकुसुमञ्जलिविलक्खो ॥१०८॥ यस्यां यवस्तरं शृङ्खला ग्रोलन्ति सा कुन्दचतुर्थी यथा । कुलिआगहवइ धूलाहिसंवफलञ्जवेहिंसविसेसम् । गिहंआणिवारिअसेवगोहणचच्चररच्छेत्तम्मि ॥१०९॥ वसन्तावतारदिवसः सुवसन्तको यथा । छणपिट्ठधूसरत्थणि महुमअन्तम्बच्छिकुवलआहरणे । कण्णकअचूअमञ्जरि पुत्ति तुए मण्डिओ गामो ॥११०॥ यत्र स्त्रियो दोलामारोहन्ति सा आन्दोलनचतुर्थी यथा । अन्दोलणक्खणोठ्ठिआए दिठ्ठे तुमम्मि मुद्धाए । आसङ्किज्जइकाओ करपेल्लणनिच्चला दोला ॥१११॥ एकमेव सुकुसुमनिर्भरं शाल्मलिवृक्षमाश्रित्य सुनिमीलितकादिभिः खेलनाक्रीडा एकशाल्मली यथा । को एक्कोत्ति पलोहु संवलिवलिअम्मिअपरिक्वसइ । हलिअसुअसमुद्दवहू से अजलोल्लेण हत्थेण ॥११२॥ त्रयोदश्यां कामदेवपूजा मदनोत्सवो यथा । गामतरुणीओ हिअअं हरन्ति पोढाणत्थणहरिल्लीओ । मअणम्मि कोसुम्भकञ्चुआ हरणमेत्ताओ ॥११३॥ गन्धोदकपूर्णवंशनाडीशृङ्गकादिभिर्यूनामिप्रयजनाभिषेककर्दमेन क्रीडा उदकक्ष्वेडिका यथा । अह धाविऊण संकामएण स्वच्छिअम्पाडिच्छन्ति । पज्जुमहे तरुणीओ गहवइसुअहत्थसिक्किल्लम् ॥ ११४ ॥ यत्रोत्तमस्त्रियः पादाभिघातेनाशोकं विकास्य तत्कुसुममवतंसयन्ति साशोकोत्तंसिका यथा । उत्तंसिऊण दोहलविअसि असोअमिन्दु-

क्खणाए । विरहिणो णिप्फलकङ्केल्लिकरणसङ्घो समुप्पु
ङ्खिओ॥११५॥यत्राङ्गनाभिश्चूतमञ्जर्यौवतंस्यानंगायत्ताग
त्वेनदायंदायमवतंस्यते सा चूतभञ्जिका यथा। वइञ्जा(?)प
ता णसोहइ रइजोग्गङ्कामिणीणं वच्छम्। कण्णे जाव ण
रइज्जइ कवोलघोणन्तपल्लवसहआरम् ॥११६॥ यत्र यु-
वतयो मदिरागण्डूषदोहदेन बकुलं विकास्य तत्पुष्पा-
ण्यवचिन्वन्ति सा पुष्पावचायिका यथा । पीवरत्थण-
ए सुकेसरदोहलदाणुम्मुहीअणिवलन्तो । तुङ्गसिहरग्गा
पडणस्स्यजमफलम्तन्तए पत्तम् ॥११७॥ यत्र कस्ते प्रियत-
म इति पृच्छद्भिः पलाशादिनवलताभिः प्रियो जनो ह-
न्यते सा चूतलतिका यथा। णवलआपहरंअङ्गे जहिञ्ज
हिम्महइदेअरोदाउम् । रोमञ्चदण्डराई तहिन्तहिन्दी
सइ वहूए ॥११८॥ पञ्चालयनुनयन्तीभूतमातृका यथा ।
विहलइसेयो वच्छन्तम्माअङ्गमवाडणद्धई खलइ । भूअच्छ
णणच्चणमिसुहअमाणम्पुलोएसु॥११९॥वर्षासु कदम्बनी
पहारिद्रकादिकुसुमैः प्रहरणभूतैर्द्विधा दलं विभज्य कामि
नीनां क्रीडाः कदम्बयुद्धानि यथा । सहिआहिम्पिअ-
विसज्जिअकलम्बरआभरिअणिअसरूओ । दीसइ क-
लम्बथवओ व्वथणहरो हलिअसोण्हाए ॥ १२० ॥ प्र-
थमवर्षण प्ररूढनवतृणाङ्कुरासु स्थलीषु शाद्वलमभ्यर्च्य
भुक्तपीतानांकृत्रिमविवाहादिक्रीडानवपत्रिका तत्र च
वरणविधानादौ तेषामेवं विधाः परिहासा भवन्ति
यथा। ता कणहकालहरणन्तुवरन्तमिमविवरंमिवास्स ।

णाव पअडुणहुवआइं होन्ति कुमारीअ अङ्गाइम् ॥१२१॥ अभिनवबिसाङ्कुरोद्भेदाभिरामं सरः समाश्रित्य कामिमिथुनानां क्रीडा बिसखादिका यथा। गेण्हन्ति पिअअमा पिअअमाणवअणा हि बिसलअद्धाइम्। हिअआइं वि कुसुमाउहबाणक्खाणेअरंद्धाइम् ॥ १२२ ॥ शक्रोत्सवदिवसः शक्रार्चा यथा। सच्चं विचअकठ्ठमओ सुरणाहो जे ण हलिअधीआए। हत्थेहि कमलदलकोमलेहि ञ्छित्तो णपल्लविओ ॥१२३॥ आश्विने पौर्णमासी कौमुदी यथा। अहृतइ महत्थविसे कहकहविखलन्तमत्तजणमज्झे। तिण्णायणे पुजाओ विळेवणङ्कमुहीवासो ॥१२४॥ दीपोत्सवो यक्षरात्रिर्यथा। अस्से बिहिहोन्ति छणाणंउणो दीआलिआसरिच्छोदे। जत्थ जहि छक्कमइ पिअवसदीदीअवमिसेण ॥१२५॥ शमीधान्यशूकधान्यानामार्द्राणामेवाग्निपक्वानामभ्यवहारोऽभ्युपखादिका यथा। वाअणग्गिणा करोमि दद्धोत्ति पुणो पुणो च्चिअकहेहिइ। हालिकसुआमलिअच्छुसदोहलापामरजुवाणे ॥१२६॥ प्रथमत एवेक्षुभक्षणं नवेक्षुभक्षिका यथा। दिअरस्स सरअमउअंसूमइलेन देईहत्थेण। पढमं हिअअंवहु आपच्छा गण्डं सदन्तवणम् ॥१२७॥ ग्रीष्मादौ जलशयावगाहनं तोयक्रीडा यथा। पिसुणेन्ति कामिणीण जललुक्कपिआवऊहहासुहेल्लिम्। कण्ठइअकवोलापुलणिच्चलच्छीइ त्रअणाइम् ॥१२८॥ नाट्यादिदर्शनं प्रेक्षा यथा। णच्चिहिइ णडो पेच्छिहिइ जणव ओ भोरओ नायकस्सो विदूसिहिइ। जइरङ्ग-

विहडणअरीगहवइधुआणयवञ्चिहिइ ॥१२९॥ आलिङ्ग-
नादिग्लहादुरोदरादिक्रीडाद्भूतानियथा । आश्लेषेप्रथ-
मक्रमेणविजितेहृष्टाधरस्यार्पणेकेलीद्यूतविधौपणम्प्रिय
तमेकान्तामपुनः पृच्छति । सान्तर्हासनिरुद्धसम्भृतरसो
द्भेदस्फुरद्गण्डयातूष्णींशारिविसारणायनिहितःस्वेदाम्बु
गर्भः करः॥१३०॥ रागोद्दीपनायमाध्वीकादिसेवामधुपानं
यथा । थोआरूढमहुमआखणपल्लट्टावराहदिण्णुल्लावा ।
हसिऊणसण्ठविज्जइपिएणसम्भरिअलज्जिआकाविपि
आ ॥ १३१ ॥ प्रेमप्रकारेषुत्रिप्रियादिभिरप्यविना-
शनीयोनित्योयथा । दिट्ठाकुविआणुणआपिआसह-
स्सजणपेल्लणम्मिविसहिआम् । जस्सणिसग्गइउरेसिरी-
अपेम्मेणलहुअइओअप्पाणो ॥ १३२ ॥ तपश्चरणादि-
जन्मानैमित्तिकोयथा । एयेषसाकस्तुमनर्घरूपतांस-
माधिमास्थायतपोभिरात्मनः । अवाप्यतेवाकथमन्य
थाद्वयन्तथाविधम्प्रेमपतिश्चतादृशः ॥ १३३ ॥ अनि-
र्द्धारितविशेषः सामान्योयथा । कुविआओपसण्णमु-
होओविसमाणीओ । जहगहिआतहहिअअन्वोरेत्ति-
अणिव्वुअम्बाला ॥१३४॥ निर्द्धारितविशेषप्रकारोवि-
शेषवान्यथा । णवित्तहअणालवन्तीहिअअन्दुम्मेइमा-
णिइणीअहिअम् । जहदूरविअम्भिअगरुअरोसमज्झत्थ
भणिषेण ॥१३५॥ इङ्गितादिभिरप्यनवगम्यः प्रच्छन्नोय-
था । दिअहेदिअहेरूसङ्केअअभङ्गवड्ढिआसङ्का । आव
ण्डुरोवणमुहीकलमेणसमङ्कलमगोवी ॥१३६॥ सख्यादि-

भिरवगतः प्रकाशो यथा । जइ होसि ण तस्स पिआ तादी अह
णीसहेहि अङ्गेहि । णवसूअ पिअपंकसमत्तपाडिव्व किं सु-
असि ॥ १३७ ॥ कारणोपाधिकः कृत्रिमो यथा । अह्वं सणे
णपुत्तअ सुठ्ठु विणेहाणुबन्धगहिआइ । हत्थउड पाणि-
आइं विकाल णवा ल्लन्ति पेम्माइम् ॥१३८॥ कारणनिरपेक्षो
ऽकृत्रिमो यथा । जह जह जरापरिणओ होइ पई दुग्गओ वि
रूवो वि । कुलपालिआए तह तह अहिअअरं वल्लहो होइ १३९
जन्मान्तरसंस्कारजनितः सहजो यथा । आणिअपुलओ
भेओ सवन्तिपण अपरिधूसरम्मि विगरुए । पिअ दंसणेप
वढ्ढइ मल्लठ्ठाणे विरुम्मिणी अपहरिसो ॥ १४० ॥ उपचा
रापेक्षप्रकर्ष आहार्यो यथा । घरिणी अकइ अव्वमुहुलप्पि
अम्मि कुणन्तस्मि । अक्कअतथाइं विजाआइं न्हत्ति सिढि-
लिआइं अङ्गाइम् ॥ १४१ ॥ यौवनजो यथा । तम्बमुहक-
आहो आजह थणआ किलेन्ति कुमारीणम् । तह तह लद्धा-
वासो व्व वम्महो हिअअमाविसइ ॥१४२॥ उपचारानपेक्षो
विस्रम्भजो यथा । ण वि तह छेअरआइं हरन्ति पुणरुत्तरा
अरमिआइम् । जह जत्थ व तत्थ व जह व तह व सम्भाव-
रमिआइम् ॥१४३॥ प्रेमपुष्टिषु चक्षुःप्रीतिर्यथा । उत्पत्तिर्दे
वयजनाद्ब्रह्मवादीन्नृपः पिता । सुप्रसन्नोज्ज्वला मूर्ति-
रस्याः स्नेहं करोति मे ॥१४४॥ मनः सङ्गो यथा । एषा मनो
मे प्रसभं शरीरात्पितुः पदं मध्यममुत्पतन्ती । सुराङ्गना-
कर्षति खण्डिताग्रात्सूत्रं मृणालादिव राजहंसी ॥१४५॥
सङ्कल्पोत्पत्तिर्यथा । तम्पुलइ अम्मिप पेच्छइ सलाणि-

उक्काअहइतीअगेण्हइगीत्तम् । ठाइअतस्ससमअणेअण
म्मिपविचिन्तअम्मिसण्णिअहिअए ॥ १४६ ॥ प्रलापोयथा ।
अमअमअगअणसेहररअणीमुहतिलअचन्ददेच्छिवसु ।
छित्तोजेहिंपिपिआममम्मिपतेहिंचिअकरेहिम् ॥ १४७ ॥
जागरोयथा । तुहविरहुज्जागरिओसिविणेविसदेइदंसण
सुहाइ । बाहेणजहाछोअणविलोअणम्मिपसेविहअम् ।१४८॥
कार्श्यंयथा । आइकोवणाविसासूरुआविआगअवई-
एसोहणाए । पाअपडणोणआएदोसुविगलिएसुवलएसु
॥१४९॥ अरतिर्विषयान्तरेयथा । असमत्तोविसमप्पइअ-
परिअग्गहिअलहुओपरगुणालाओ । तस्यपिआपडिव
डाणसमप्पइरसुहाअमत्ताविकहालज्ज ॥ १५० ॥ विस-
र्जनंयथा । अगणिअसेसजुअणावाअवोलीणलेअमज्जा
आ । अहसाअम्मइदिसामुहपसारिअच्छीतुहहकएण ॥१५१
व्याधिर्यथा । असहणतीरइच्छिअपरिवडुन्तुङ्गअगरुअ-
संतावम् । मरणविणोएअविणाविरमावेउविरहदुःखम्
॥१५२॥ उन्मादोयथा । अवलम्बहमांसङ्कह्णइमगलइ
घिआपरिब्भमइ । अत्थक्कगज्जिअउत्तन्तहित्थहिअ-
आपहिअजाआ ॥१५३॥ मूर्च्छायथा । जम्मुच्छिआणअ-
सुओकलम्बगन्धेणतङ्गुणेपडिअम् । इअरहगज्जिअस
होजीएणविणाणज्ञोलिन्तो ॥१५४॥ मरणंयथा । अज्ज-
म्मिपतावएक्कम्मासंवारेहिपिअसहिरुअन्तिम् । पहिऊण
तम्मिगएजहणमरिस्सण्णारोइस्सम् ॥ ताइमाविप्रलम्भज
न्मानोद्वादशापिप्रेमपुष्टिभूमयः सम्भोगेपुस्वानुरूपामे-

वप्रेमप्रकर्षभूमिकामास्कन्दयन्ति ॥१५५॥ नायकेषुकथा व्यापीनायकोयथा । गुरोः शासनमत्येतुन्नशशाकसराघवः । योरावणशिरश्छेदकार्यभारेप्यविक्लवः ॥ १५६ ॥ प्रतिनायकोयथा । जेतारंलोकपालानान्तैमुखैरर्चितेश्वरम् । रामस्तुलितकैलासमरातिम्बहूमन्यत ॥ १५७ ॥ उपनायकोयथा । सहत्वावालिनंवीरन्तत्पदेचिरकाङ्क्षिते । धातोः स्थानइवादेशंसुग्रीवंसन्न्यवेशयत् ॥१५८॥ अनुनायकोयथा । समारुतसुतानीतमहौषधिहृतव्यथः । लङ्कास्त्रीणाम्पुनश्चक्रेविलापाचार्यकंशरैः ॥ १५९॥ कथाव्यापिनीनायिकायथा । तीएसविसेसदूमिअसवत्तिहिअआइणिव्वरणेन्तसिणेहम् । पिअणरुइआइणिमिअंसोहग्गगुणाणअग्गभूमीअपत्तम् ॥१६०॥ प्रतिनायिकायथा । तन्निअसकुसुमदामंहरिणाणिम्महिअसुरहिगन्धामोअम् । अप्पणइआविपदूमिअपणइपि हिअएणरुप्पिणीअविइसम् ॥१६१॥ उपनायिकायथा । देवीस्वीकृतमानसस्यनियतंस्वप्नायमानस्यमेतद्गोत्रग्रहणादियंसुवदनायायात्कथन्नव्यथाम् । इत्थंयन्त्रणयाकथङ्कथमपिक्षीणानिशाजाग्रतोदाक्षिण्योपहतेनसाप्रियतमास्वप्नेपिनासादिता ॥१६२॥ अनुनायिकायथा । श्लाघ्यानांगुणिनान्धुरिस्थितवतिश्रेष्ठान्ववायेत्वयिप्रत्यस्तव्यसनेमहीयसिपरम्प्रीतोस्मिजामातरि । तेनेयम्मदयन्तिकाद्य भवतः प्रीत्यैभवत्प्रेयसेमित्रायप्रथमानुरागघटितास्मस्माभिरुत्सृज्यते ॥ १६३ ॥ आभासेपुनायकाभासोयथा । क

हसमाणिज्जइमअङ्कोइमीअकन्दोट्टदलसरिच्छेहिम् । अ-
च्छीहिंजोणदीसइघणथणहररुद्धपसरेहिम् ॥१६४॥ नायि
काभासोयथा । कृतसीतापरित्यागः सरत्नाकरमेख
लाम् । बुभुजेपृथिवीपालः पृथिवीमेवकेवलाम् ॥१६५॥ उ
भयाभासोयथा । अवजहिअपुव्वदिसेसमयञ्जोण्हाए-
सेविज्जपओसम्मुहे । माअणगिज्जउमारणीवरदिसाहु
तपतिथअम्मिअसिअङ्के ।१६६। तिर्यगाभासोयथा । कोरन्त
पङ्कअमुहिंवम्महणडिअंवसलिलसअणणिसण्ण । अलिअ
इतीरणलिणिवाआइगमेइसहवरिंवक्काओ ।१६७। नायके
षुसर्वगुणसम्पन्नोगादुत्तमः सयथा । रामोयज्जगतोह
विक्रमगुणैर्यातः १ प्रसिद्धिम्परामस्मद्भाग्यविपर्ययाद्यदि
परन्देवोनजानातितम् । वन्दीवैषयशांसिगायतिम-
रुद्यस्यैकबाणाहतिश्रेणीभूतविशालतालविवरोद्गीर्णैः स्व
रैःसप्तभिः ॥१६८॥ पादोनगुणसम्पन्नोगान्मध्यमोयथा ।
किन्नोव्याप्तदिशाम्प्रकम्पितभुवामक्षौहिणीनाम्फलङ्कि
न्द्रोणेनकिमङ्गराजविशिखैरेवंयदिक्लाम्यसि । जीवद्भ्रा-
तृशतस्यमेभुजवनच्छायांसुखामाश्रितात्वन्दुर्योधनके-
सरीन्द्रगृहिणीभङ्गास्पदङ्किन्तव ॥१६९॥ अर्द्धगुणसम्पन्नो
गात्कनिष्ठोयथा । एकस्मिन्शयनेमयानवसुतामालि-
ङ्गनिद्रालसामुल्लिङ्घ्यशयितेनमच्चरणयोः संवाहनव्या-
पृता । पादाग्रेणतिलोत्तमा स्तनतटेसस्नेहमापीडिता
हर्षाद्वैवसमर्पितानिपुलकान्यङ्गानिपिनेमुद्युति ।१७०। सत्त्व
प्रधानः सात्त्विकोयथा । शत्यावक्षसिमग्नयासहमया

मूढेष्वङ्काधिपेनिद्राणेषु चविद्रवत्सु कपिषु प्राप्तावकाशे द्विषि । माभैष्टेतिनिरुन्धतः कपिभयन्तस्योद्भटभ्रू स्थितेर्भं मंच्छेदविसंष्ठुलाक्षरजडावाचस्त्वयानस्मृताः ॥१७१॥ रजः प्रधानोराजसोयथा । सामन्तमौलिमणिरञ्जितशासनाङ्क मेकातपत्रमवनेर्नतथा प्रभुत्वम् । अस्याः सखे ! चरण-योरधिगम्यसम्यगाज्ञाकरत्वमहमद्ययथाकृतार्थः ॥१७२॥ तमःप्रधानस्तामसोयथा । तपोवाशस्त्रंवाव्यपदिशतियः कश्चिदिहवः सदर्पाद्दुद्दामन्द्विषमसहमानक्कुलयतु । अ-रामां निःसीरध्वजदशरथीकृत्यवसुधामलप्स्त्वत्कुल्या मपिपरशुरामः शमयति ॥१७३॥ अनेकजानिः साधारणो यथा । स्नातातिष्ठतिकुन्तलेश्वरसुतावारोङ्गराजस्वसु-र्द्यूतैरात्रिरियञ्जिताकमलयादेवीप्रसाद्याद्य च । इत्य न्तः पुरसुन्दरीः प्रति मयाविज्ञायविज्ञापितेदेवेनाप्र-तिपत्तिमूढमनसाद्वित्राः स्थितन्नाडिकाः ।१७४। अनन्यजा निरसाधारणोयथा । आविवाहसमयाद्गृहेवनेशैश वेतदनुयौवनेपुनः । स्वापहेतुरनुपासितोन्ययारामबा-हुरुपधानमेषते ।१७५।अहंकारप्रधानोधीरोद्धतोयथा । च क्रंवामधुहाक्रान्तगृहिणीदत्ताग्रपञ्चाङ्कलंवज्रं भूधरपक्ष-शोणितसुरापानेनमद्दंवावृथा । शूलंवासुररक्तबिन्दु निचितङ्गृह्णातुशूलायुधोधृष्टद्युम्नमहाकिहन्मिसमरेक श्चित्परित्रायताम् ।१७६। रत्युपचारप्रधानोधीरललितोय था । आघातंविनयन्विरागासिनरेकुध्यन्तुनामेश्वरास्ते नस्वाशयशुद्धिरेवसुकरामायः प्रभूणाम्पुरः । मिथ्यामा

लिनि मन्यसे यदि तदानिरयं मनोवर्त्तिनो ध्यातातामरसा
क्षि ! चित्रफलकेकावात्वदन्यासया ।१७७। उपशमप्रधा
नोधीरप्रशान्तोयथा । कुलममलिनंभद्रामूर्त्तिर्मतिः श्रुति
शालिनी भुजबलमलंस्फीतालक्ष्मीः प्रभुत्वमखण्डित-
म् । प्रकृतिसुभगाह्येतेभावामदस्यचहेतवोव्रजतिपुरुषो
यैरुन्मादन्तएवनवाङ्कुशाः ।१७८। विकत्थोदारकर्माधी-
रोदात्तः सयथा । कपालेजानक्याः करिकलभदन्तद्युति-
मपिस्मरस्मेरङ्गण्डोड्डमरपुलकंवक्त्रकमलम् । मुहुः प-
श्यञ्छृण्वन्रजनिचरसेनाकलकलञ्जटाजूटग्रन्थिन्द्रढयति-
रघूणांपरिवृढः ॥१७९॥ कैतवप्रधानः शठोयथा । दृष्ट्वै
कासनसङ्गतेप्रियतमेपश्चादुपेत्यादरादेकस्यानयनेनिमी
ल्यविहितक्रीडानुबन्धच्छलः । ईषद्वक्रिमकन्धरः सपुल
कः प्रेमोल्लसन्मानसामन्तर्हासलसत्कपोलफलकान्धूर्त्तो
ऽपराञ्चुम्बति ।१८०। कृतापराधोप्यविलक्षोधृष्टोयथा ।
शतंवारानुक्तः प्रियसखि वचोभिः सपरुषैः सहस्रन्नि
र्धूतः पदनिपतितः पार्ष्णिहतिभिः । कियत्कृत्वोबद्धः
पुनरिहनवैर्विभ्रमभ्रुकुटयस्तथापिक्लिश्यन्मांक्षणमपिनधृ-
ष्टोविरमति ।१८१। हृदयङ्गमप्रवृत्तिरनुकूलोयथा । मुञ्च
कोपमनिमित्तकोपने ! सन्ध्ययाप्रणमितोस्मिनान्यया ।
किन्नवेत्सिसहधर्मचारिणश्चक्रवाकसमवृत्तिमात्मनः ।१८२
ओपराधिकप्रवृत्तिर्दक्षिणोयथा । अनेनकल्याणि!मृणाल
कोमलंव्रतेनगात्रंग्लपयस्यकारणम् । प्रसादमाकाङ्क्षति
यस्तवोत्सुकः सकिंत्वयादासजनः प्रसाद्यते ।१८३। नायि

कागुणेषुसर्वगुणसम्पद्योगादुत्तमा यथा । हसिअं
समंसलकोमलाइंवीसंभकोमलं अअणम् । सब्भाव
कोमलपुलाइअअवणभिमो सुमहिलाणम् ।१८४। पादोनगु
णसंपद्योगान्मध्यमा यथा । णिअदाइअदंसणुक्खि
त्तपहिअअस्सोणवव्वसुपहेण । गहवइइत्रहुआदुल्लदृघि
आउराहअइहग्गाम्मे । ।१८५। अर्द्धगुणसंपद्योगादधमा य
था । तक्खिरक्खणाखिरज्जखितक्खिरउअहसखिअलसहिला
ओ । एहेहिंवारवालिहअं सूमइमलंसमुप्पिखिमो ।१८६।
वयः कौशलाभ्यामसम्पूर्णा मुग्धा यथा । सहिआहिअन
स्समाणाथणएलग्गंकुसुम्भपुप्फन्ति । मुद्धबहुआहसिज्ज
इपप्फोडन्तीणहब्बआइम् ।१८७। वयसापरिपूर्णा मुग्धा य
था । पढिअक्खमणुउडेलावसाउडेअण्णअकुम्भे । पुरि
ससअहिअ अ घरिएकीसथणन्तीथणेवहसि ।१८८। वयः
कौशलाभ्यांसंपूर्णा प्रगल्भा यथा । खिम्मत्सठवेइउपइगो
गिम्हावरण्हरमिअस्स । ओल्लक्लन्तडप्फंण्हाणसुअन्ध
चिचउरभारम् ।१८९। यत्नापनेयमाना धीरा यथा । णखिल
हअणालवन्तीहिअअन्दूमेइमाणिणीहिअअम् ॥ अहदू
रेविअम्हिअगरुअरोसमज्झत्थभणिएहिम् ।१९०। अय-
त्नापनेयमानाऽधीरा यथा । अब्बलमिवअमाणपरवंस
हीअएतस्समाणिणिपिअस्स । पुट्ठिपुलउग्गमोतुह
कहेइसमुहट्ठिअंहिअअम् ।१९१। आत्मीया स्वा यथा । घ
रिणीएमहाणसकम्मलग्गमसिमइलेणहत्थेण । छित्त-
तं मुहंहसिज्जइचन्दावत्थद्गअपइण ।१९२। परकीयान्यदी

यायथा । वइविवरणिग्गअदलोएरसोसाहइकलरुणा-
णम् । एत्थघरेहलिअवहूएद्दहमेत्तत्थणीवसइ ।१९३ पा-
णिगृहीताऊढायथा । वलत्तणदुल्लडिआएअज्जअणज्ज
कुअंणंववहूए । णाआमिघरेएआइणित्तिणित्तोपईरु-
ड्डो ।१९४ कुमारीअनूढायथा । कस्सकरोवहुपुण्यफलेकत-
रुणोतुहंणिसम्मिहिइ । थणपरिणाहेचम्महणिहाणा-
कलसेवव्वपारोही ।१९५ प्रथमोढाज्येष्ठायथा । उपण-
अंपढमपिआएरक्खिनकामोविमधुरेहिम् । छेअवरी-
घिणलिउअइअहिणववहुआविलासेहिम् ।१९६ पश्चादू-
ढाकनीयसीयथा । उट्ठुन्तमहारम्भेथणएदट्ठूणमु
द्धवहुआए । ओसिवणकवोलाएणीससियं पढमघरि-
णीए ।१९७ अहङ्कारर्द्धिरुद्धतायथा । अत्तमहिलाप-
सङ्गन्दैदेकुकरेसुअम्हदरअस्स । पुरिसाएक्कन्तरसाणहु
दोसगुणेविआणन्ति ।१९८ गूढमानर्द्धिरुद्धात्तायथा । जा-
णाइजाणावेउंअणुणअविहीणरीअमाणपरिसेसम् ।
रइविक्कमंसिविणआवलम्बणंसाच्चिअपकुणन्ती ॥१९९
निर्वाणमानाशान्तायथा । जइआपिओणदीसइभ-
णहहलाकस्सकीरएमाणो । अहदिउम्मिविमाणोतात-
स्सपिअत्तणङ्कसो ॥२००॥ श्लाघनीयमानाललितायथा ।
हसिएहिंउआलम्भाअच्चुवआरेहिरूसिअदाइ । अंसू
हिम्भण्डाइएसोमसोसुमहिलाणम् ॥ २०१ ॥ अनि-
यतानेकोपभोग्यासामान्यायथा । कहूएघूमक्कुघारेअ-
द्धुत्तणमग्गिणोसमप्पिहिइ । मुहकमलचुम्बणलेहलम्मि

पासठ्ठिएदिश्चरे ॥२०२॥ पत्यन्तरकृप्राप्ता पुनर्भूर्यथा ।
तहसा जाणइ षाम्रालोए पच्छामविणअच्छाउम् । जहपढ
मडिचअसच्चिअलिइमज्झंचरित्तवसीण ॥२०३॥ कलाच
तु:षष्टिविद्गणिका यथा । सच्छन्दरमणदंसणरसवड्ढि-
अगरुअवम्महविलासम् । सुविअड्ढसवेविलआरम्मिअ
क्कोवस्सिडन्तरइ ॥ २०४ ॥ रूपयौवनमात्रोपजीविनी
रूपाजीवा यथा । अयमेव दह्यमानस्मरनिर्गतधूमवर्त्ति-
काकारः । चिकुरभरस्तव सुन्दरि ! कामिजनक्किङ्करीकुरु-
ते ॥ २०५ ॥ कुट्टमितादीनाङ्कर्त्री विलासिनी यथा । सा-
मसमुन्दरीणविब्भममावहइअविणओच्चेअ । धूमच्चिअ
पज्जलिआणवहुमओसुरहिद्दारूण ॥ २०६ ॥ यथोक्त
लक्षणा सुखविह्वला यथा । पच्चूसागअणुरत्ताअवहन्तइ-
लोअलोअणणन्दम् । अण्णत्थखविअसव्वरिणहभूस
णादिणवइणमोदें ॥२०७॥ कलहान्तरिता यथा । अह
सोविलक्खहिअओमएअहव्वाइअगणिअप्पणओ । पर
वज्जणच्चिरीहिन्तुम्हेंहिउवेक्खिओजन्तो ॥ २०८ ॥ वि
प्रलब्धा यथा । अहवालहिन्तहिच्चिअवाणीरवणम्मिचु-
क्कसङ्केओ । तुहदंसणंविअग्गइपब्भट्ठणिहणठाण-
व ॥ २०९ ॥ वासकसज्जा यथा । एहिइपिओत्तिणिमिं
संवजगिगओज्जामिणीअपढममट्ठम् । सेसंसतापयरव्वसा
एवरिसंवओलीणम् ॥ २१० ॥ स्वाधीनपतिका यथा ।
सालोएच्चिअसूरेघरिणीघरसामिअस्सघेत्तूण । णेच्छु-
न्तस्सविपाएधुअइहसन्तीहसन्तस्स ॥ २११ ॥ अभिसा

रिकायथा । गम्मिहिसितस्सपासम्माझूरसुतरुणिवड्-
ढउमिअङ्को । दुद्धंदुद्धुसिमिवचन्दिआएकोपेच्छइमुह-
न्तो ॥ २१२ ॥ प्रोषितभर्तृकायथा । गिम्हेदवग्गिमसि-
मइलिआंइदीसन्तिविंझसिहराइम् । आसउम्पउत्थ-
पइएणहोन्तिणवपाउसब्भाइम् ।२१३ विरहोत्कण्ठिताय-
था । अस्मिन्वर्षम्महेनवर्त्ततइदंयत्कामदेवोत्सवेस्थेय-
म्पुत्रि! निरन्नयातदधुनाकिञ्चिन्मुखेदीयताम् । इत्यु-
क्तेजरतीजनेनकथमप्यध्वन्यवध्वा ततः पर्यस्तेऽहनिक-
ल्पितस्रकवलोधौतस्रधाराम्बुभिः ॥ २१४॥ हीनपात्रेषु-
शकारोयथा । पलिस्खलेलंणवदशाकलाम्रुपावालअ-
शुत्तशद्देणछत्रम् । मंशञ्चखादन्तुहओठ्ठञ्चकाहिचु
कुश्चुकुश्चुक्कुचुक्कुशुकुन्ति ।२१५ ललकोयथा । कम्बलिवा-
णिणएक्कसिकुहम्मलदन्तिधिद्धितुद्धिएमहवेआलसि ।
ललिं सोअरिजग्गिरिक्कुतुमंसहिह्वुर । विट्ठुपोप्फलिणलो-
कीसिणआगसि ॥ २१६ ॥ अमात्यादिरासन्नार्हः पा-
खण्डादिर्वापीठमर्दः । तयोरमात्येषुमाल्यवान्यथा ।
हावत्साः खरदूषणत्रिशिरसोवध्याः स्थ पापस्यमेहा-
हावत्सबिभीषणत्वमपिमेकार्येणहेयः स्थितः । हामद्ध-
त्तलवत्सरावणमहत्यश्यामितेसङ्कटंवत्सेनैकशिहाहता-
सिनचिरंत्रीन्पुत्रकान्द्रक्ष्यसि ॥ २१७ ॥ पाखण्डेषुभै-
रवानन्दोयथा । दंसेमितम्पिपससिणंवसुहावइण्णन्थभे
मितस्सविरद्दस्सगईणहट्ठे । आणेमिजक्खसुरसिद्ध-
गणङ्गणाओतंणात्थिभूयिवलयेमहजंणसज्जम् ॥२१८॥

वैहासिकः क्रीडनकोविश्वास्यश्च विदूषकः ।१९५। यथा । पु
ल्लुक्कं रङ्कस्स मकूरसमं वहन्ति जे सिन्दुवारविडआ मह वल्लह-
हा दे । जंगालितस्स महिसीदहिणं सरिच्छा रच्छन्ति मुद्धवि-
अइल्लपसूणपुञ्जा ॥२१९॥ मान्यः कलत्रवान् भुक्तविभवो
गुणवान्विटः ॥१९६॥ स यथा । शकारं किम्प्रार्थनया प्राणार्-
पणमिषेण वा । अकार्यं वर्जनं मे ब्रूहि किमभीष्टं करोमि ते २२०।
धात्रेयकादिश्चेष्टो यथा । चन्द्रापीडो यस्तज्जातपीडः काद
म्बरीं प्रति । आहिणोत्स्वस्त केयूरः केयूरकमुपस्थितम्
॥२२१॥ पताका तु । स्वात्मोपयोगिन्यन्योपयोगिन्यनुप
योगिनी । पताकेत्यापताकेति प्रकरीति प्रकीर्त्यते ॥१९७॥ ता
सु पताका हनूमान्यथा । दिष्ट्यासौ यन्महाबाहुरञ्जनानन्द
वर्द्धनः । यस्य वीर्येण कृतिनो वयञ्च भुवनानि च ॥२२२॥ आ
पताकाप्रकर्यौ मारीचजटायुषौ यथा ॥ रक्षसा मृगरूपेण
वञ्चयित्वा स राघवौ । जहार सीतां पक्षीन्द्रप्रयासक्षणवि
घ्नितः ॥२२३॥ सहजा पूर्वजागन्तुः सखी हि त्रिविधोच्यते
॥१९८॥ तासु बह्लिकादिः सहजा यथा । उज्ज्वलालोकया
स्निग्धा त्वयात्यक्ता न राजते । मलीमसमुखी वर्तिः प्रदी-
पशिखया यथा ॥ २२४ ॥ कामन्दक्यादिः पूर्वजा यथा ।
तथाभिनयनम्रापि मया मालत्युपायतः । नीता कतिप-
याहोभिः सखी विस्रम्भसेव्यताम् ॥ २२५ ॥ त्रिजटादि
रागन्तुर्यथा । जाणइ सिणेहभणिअक्कमारअआरिसिसे-
णुव्वहुवअणम् । उज्जाणंमि वणिज्जिअ जं सुरहितेल्ल-
आणवेप्पइ कुसुमम् ॥ २२६ ॥ नायकगुणेषु महा-

कुलीनत्वम्पुंसोयथा । वासिष्ठैः सुकृतोद्भवोध्व-
रशतैरस्त्यग्निकुण्डोद्भवोभूपालः परमारइत्यधिपतिः
सप्ताब्धिकाञ्चेर्भुवः । अद्याप्यद्भुतहर्षगद्गदगिरोगाय-
न्तियस्योद्भटंविश्वामित्रजयोर्जितस्यभुजयोर्विस्फूर्जितं
गुर्ज्जराः ॥ २२७ ॥ औदार्यंयथा । दिङ्मातङ्गघटा-
विभक्तचतुराघाटामहीसाध्यतेसिद्धासापिवदन्तएवहि
वयरोमाडिचत: पश्यत । विप्रायप्रतिपाद्यतेकिमपरं
रामायतस्मैनमोयस्मादाविरभूत्कथाद्भुतमिदंयन्नैवचा-
स्तङ्गतम् ॥ २२८ ॥ महाभाग्यंयथा । दोर्निष्पेषवि-
शीर्णवज्रशकल प्रत्युप्ररूढव्रणग्रन्थ्युद्भासिनिभग्नमोघ-
मघवन्मातङ्गदन्तोद्गमे । भर्त्तुर्नन्दनदेवताविरचितस्र-
ग्दामनिभूमेः सुताश्रीरश्रीरिवतस्यवक्षसिजगद्वीरस्य-
विश्राम्यतु ॥ २२९ ॥ कृतज्ञतायथा । कृतककुपितैर्बा
ष्पाम्भोभिः सदैन्यविलोकितैर्वनमसिगतायस्यप्रीत्या
धृतापितथात्वया । नवजलधरश्यामाः पश्यन्दिशोभ
वतींविनाकठिनहृदयोजीवत्येवप्रियेसतवप्रियः ॥२३०॥
रूपसम्पद्यथा । व्यूढोरस्कोवृषस्कन्धः शालप्रांशुर्महा-
भुजः । आत्मकर्मक्षमंदेहंक्षात्रोधर्मइवाश्रितः ॥ २३१ ॥
यौवनसंपद्यथा । महोक्षतांवत्सतरःस्पृशन्निवद्विपेन्द्रभ
वंकलभःश्रयन्निव । रघुःक्रमाद्यौवनभिन्नशैशवः पुपो
षगम्भीरमनोहरंवपुः ॥ २३२ ॥ वैदग्ध्यसम्पद्यथा ।
कोयम्भामिनिभूषणाङ्कितवतेशोणः कथंकुङ्कुमारकू-
र्पासान्तरितः प्रियेविनिमयः पश्यापरंक्वास्तिमे । प-

श्यामीत्यभिधायसान्द्रपुलकौमृद्गननमृडान्याः स्तनौहस्तेनप्रतिनिर्जितेन्दुरवताद्धूतेहसन्वोहरः ॥२३३॥ शीलसम्पद्यथा । कास्त्वंशुभेकस्यपरिग्रहोवाकिंवामदभ्यागमकारणन्ते । आचक्ष्वमत्वावशिनांरघूणाम्मनः परस्त्रीविमुखप्रवृत्ति ॥ २३४॥ सौभाग्यसम्पद्यथा । असौविद्याधारः शिशुरपिविनिर्गत्यभवनादिहायातः सम्प्रत्यविकलशरच्चन्द्रमधुरः । यदालोकस्थानेभवतिपुनरुन्माद्यतरलैः कटाक्षैर्नारीणाङ्कुवलयितवातायनमिव ॥ २३५ ॥ मानिताययथा । यदात्थकामम्भवतासयाच्यतामितिक्षमन्नैतदनल्पचेतसाम् । कथम्प्रसह्याहरणैषिणाम्प्रियाः परानुवृत्त्यामलिनीकृताः श्रियः ॥ २३६ ॥ उदारवाक्यत्वंयथा । ख्याताएवयद्वजगत्सुचरितैवाग्भिः किमाख्यायतेसंयत्तोगवशक्तिरस्तिभवतः सत्यम्मनुष्योभवान् । शस्त्रैरव्यवधीयमानयशसः प्रायोवयन्तेपुत्रेत्प्रायस्तेननुसन्तितेपिगिरयोयैर्वानराः शस्त्रिणः ॥ २३७ ॥ स्थिरानुरागितायथा । ततः कैरप्युक्तेपरिणयविधौकाष्ठमुनिभिः पुराणैरालप्तपितहृदयेनक्षितिभृता । विनावाचकैतत्क्षमभितिनिधायाननमधःपतद्वाष्पाम्भोभिर्निखिलमिवदत्तंप्रतिवचः ॥ २३८॥ नायिकागुणेषुस्त्रियामहाकुलीनतायथा । मानुषीषुकथंवास्यादस्यरूपस्यसम्भवः । नप्रभातरलज्योतिरुदेतिवसुधातलात् ॥ २३९ ॥ औदार्यंयथा । भ्रूभेदेसहसाकृतेपिवदनन्नीतंपराञ्चन्नतामीषन्मामप्रतिभेदकारिहसितन्नोक्तं

वचोनिष्ठुरम् अन्तर्वाष्पजलीकृतम्प्रभुतयाचक्षुर्नविस्फारि तङ्कोपश्चप्रकटीकृतोदयितयामुक्तश्चनप्रश्रयः ॥ २४० ॥ म हाभाग्यंयथा ताश्चारदः कामचरःकदाचित्कन्यांकिलप्रेक्ष्य पितुः समीपे। समादिदेशैकवधूम्भवित्रीम्प्रेम्णाशरीरा र्द्धहरांहरस्य ॥ २४१ ॥ कृतज्ञतायथा । परिससरिस- न्तुहइम कवरससरिसङ्कव्विसाअखइणा । कहआ- चिन्तिज्जम्म हिलासरिसन्नसम्पणइमेमरणम् ॥ २४२ ॥ रूपसम्पद्यथा । आभरणस्याभरणम्प्रसाधनविधेः प्र साधनविशेषः । उपमानस्यापिसखेप्रत्युपमानंवपुस्त- स्याः ॥२४३॥ यौवनसम्पद्यथा। उन्मीलितंतूलिकयेवचि त्रंसूर्यांशुभिर्भिन्नमिवारविन्दम्। बभूवतस्याश्चतुरस्रशो भिवपुर्विभक्तन्नवयौवनेन॥ २४४॥ वैदग्ध्यसम्पद्यथा। एकत्रासनसङ्गतिः परिहृताप्रत्युद्गमाद्दूरतस्ताम्बूला नयनच्छलेनरभसाश्लेषोपिसंविघ्नितः । आलापोपिन- मिश्रितः परिजनंव्यापारयन्त्यान्तिकेकान्तम्प्रत्युपचा रतश्चतुरयाकोपः कृतार्थीकृतः ॥ २४५ ॥ शीलसम्पद्य- था । चतुरघरिणीपिअदंसणाअबालापउत्थवइआअ असइसअण आअणगखण्डिअंशीलम् ॥ २४६ ॥ सौ- भाग्यसम्पद्यथा। सञ्चारिणीदीपशिखेवरात्रौयंयंव्य तीयायपतिंवरासा । नरेन्द्रमार्गाट्टइवप्रपेदेविवर्णभावं ससभूमिपालः ॥२४७॥ मानितायथा। शैलात्मजापिपि तुरुच्छिरसोभिलाषंव्यर्थंसमर्थ्यललितंवपुरात्मनश्च । स- ख्योः समक्षमितिचाधिकजातलज्जाशून्याजगामभवना

भिमुखंकथञ्चित् ॥ २४८ ॥ उदारवाक्यत्वंयथा ।
यथाश्रुतंवेदविदांवर ! त्वयाजनोयमुच्चैः पदलङ्घनोत्सु
कः । तपःकिलेदन्तदवाप्तिसाधनम्मनोरथानामगतिर्नवि
द्यते ॥ २४९ ॥ स्थिरानुरागितायथा । अलंविवादेन
यथाश्रुतन्त्वयातथाविधस्तावदशेषमस्तुसः । ममात्रभा
वैकरसम्मनः स्थिरंनकामवृत्तिर्वचनीयमीक्षते ॥ २५० ॥
पाकभक्तिम्रादावस्वादुन्तेस्वादुमृद्वीकापाकोयथा । प्रा-
क्कामन्दहताकृतः परिभवोयेनाथसन्ध्यानतौसेर्ष्यावेिव
तुचण्डिकाचरणयोस्तंपातयन्तीपतिम् ।कुर्वन्त्याभ्यधिकं
कृतेप्रतिकृतम्मुक्तेनमौलौमुहुर्बाष्पैणाहृतकज्जलेव लि
खितंलक्ष्मेवचन्द्रे यथा ॥२५१॥ आद्यन्तयोःस्वादुनारि
केलीरीतिपाकोयथा । जहइच्छातहरमिअज्जाआपत्तापङ्क
क्खाघूम्मा । घरसामिअस्सअज्जाविसोकोजहछाइम्मइम्
॥२५२॥ आदिमध्यान्तेषुस्वादुस्वादुतरस्वादुतममित्याम्र
पाकंयथा । शापान्तसिप्रतिहतास्मृतिलोपरुक्षेभर्त्तुर्व्यपेत
तमसिप्रभुतातवैव । छायानमूर्छतिमलोपहतप्रसादेशुद्धे
तुदर्पणतलेसुलभावकाशा ॥ २५३ ॥ यन्नापैतिनचाति
शोभतेतन्नीलीरागंयथा । हित्वासीतान्दशमुखरिपुर्नो
पयेमेयदन्यान्तस्याएवप्रतिकृतिसखोयत्क्रतूनाजहार । वृ
त्तान्तेनश्रवणविषयप्रापिनातेनभर्त्तुः सादुर्वारंकथमपि
परित्यागदुःखंविषेहे ॥ २५४ ॥ यदपैतिनचशोभतेचतत्-
कुसुम्भरागंयथा । बहुवल्लहस्सनाहोइवल्लहाकहविपञ्च
दिहिआहाइँ । सकिंछट्टदथम्मगाइ कन्तोमिट्ठच्छुडचबहु-

अत्र ॥ २५५ ॥ यन्नापैत्यतिवशोभतेतन्मञ्जिष्ठारागंय-
था । वेवइ जस्स सविडिग्रन्तलिअम्महइ छल्लग्राइअ-
त्थणग्रलसम् । पेम्मसहइविमुहिअंवाग्रोवासगमणु-
अंत्रामद्दुम् ॥ २५६ ॥ गूढव्यलीकमन्तर्व्याजंयथा । प्र-
त्यग्रोज्झितगोकुलस्यशयनादुत्स्वप्नमूढस्यमेसागोत्रस्ख
लनादपैतुचदिवाराधेतिभीरोरिति । रात्रावस्वपतोदि
वाचविजनेनामेतिचाभ्यस्यताराधाप्रस्मरतः स्मियंरम-
यतः खेदोहरेः पातुवः ॥ २५७ ॥ अगूढव्यलीकंबहि
र्व्याजंयथा । चक्षुर्यस्यतवाननादपगतन्नाभूत्क्वचिन्निर्वृ
तंयेनैषासततन्त्वदेकशयनंवक्षस्थलीकल्पिता । येनोक्ता
सिविनात्वयामनजगच्छून्यंक्षणाज्जायतेसोयन्दम्भधृत
व्रतः प्रियतमः कर्तुं किमभ्युद्यतः ॥२५८॥ अव्यलीकनिर्व्या
जंयथा । किङ्कण्ठेशिथिलीकृतोभुजलतापाशः प्रमादान्म
या निद्राच्छेदविवर्त्तनेष्वभिमुखन्नाद्यासिसंभाषिता । अ
न्यस्त्रीजनसङ्कथालघुरहंस्वप्नेत्वया वीक्षितोदोषम्प
श्यसिकिम्प्रियेपरिजनोपालम्भयोग्येमयि ॥ २५९ ॥ ध-
र्मानुबन्धिधर्मोदर्कंयथा । अथसविषयव्यावृत्तात्मायथा
विधिसूनवेनृपतिककुदन्दत्वायूनेसितातपवारणम् । मु
निवनतरुच्छायान्देव्यातयासहशिश्रियेगलितवयसामि
क्ष्वाकूणामिदंहिकुलव्रतम् ॥२६०॥ अर्थानुबन्ध्यर्थोदर्कंय
था । भूत्वाचिरायचतुरन्तमहीसपत्नीदौष्यन्तिमप्रतिरथ
न्तनयंप्रसूय । तत्सन्निवेशितभरेणसहैवभर्त्रा १ शान्तेक
रिष्यसिपदम्पुनराश्रमेस्मिन् ॥२६१॥ यत्पुनः काममेवानु

बध्नातितरकामोदकं यथा। अद्वैतं सुखदुःखयोरनुगुणं स
र्वास्ववस्थासु यद्विश्रामो हृदयस्य यत्र जरसा यस्मिन्नहार्यो
रसः। कालेनावरणात्ययात्परिणते यत्स्नेहसारे स्थितं भ
द्रन्तस्य सुमानुषस्य कथमप्येकं हि तत्प्रार्थ्यते ॥२६३॥ "ना
नालङ्कारसंसृष्टैः प्रकाराश्च रसोक्तय" इत्युक्तं, तत्रालंका
रसंसृष्टैरित्येव वक्तव्ये नानाग्रहणं गुणरसानामुपसंग्रहा-
र्थम्। तेषामपि हि काव्यशोभाकरत्वेनालङ्कारत्वात्। य
दाह। काव्यशोभाकरान्धर्मानलंकारान्प्रचक्षते। ते चाद्या
पि विकल्प्यन्ते कस्तान्कार्त्स्न्येन वक्ष्यति ॥१८९॥ काश्चिन्मार्ग
विभागार्थमुक्ताः प्रागप्यलंक्रियाः। साधारणमलंकारजा
तमन्यत्प्रदर्श्यते ॥१९१॥ तत्र काव्यशोभाकरानित्यनेन श्ले
षोपमादिवत्तद्गुणरसभावतदाभासप्रशमादीनप्यनुगृह्णा
ति। मार्गविभागकृद्गुणानामलंक्रियोपदेशेन श्ले-
षादीनां गुणत्वमिवालङ्कारत्वमपि ज्ञापयति। श्लेषः प्रसा
दः समता माधुर्यं सुकुमारता। अर्थव्यक्तिरुदारत्वमोजः
कान्तिसमाधयः ॥२००॥ इति वैदर्भमार्गस्य प्राणा दश गुणाः
स्मृताः। तेषां विपर्ययः प्रायो गौडवर्त्मनि लक्ष्यते ॥२०१॥ इति
श्लेषादीनां दशानामेव मार्गप्रतिभाकारितां ब्रुवन् काव्यशो
भाकरत्वेन गुणान्तराणामप्यलङ्कारत्वमुपकल्पयति। स
दाह "कस्तान्कार्त्स्न्येन वक्ष्यती"ति। युक्तमिदमुक्तमयु
क्तमिदमुक्तम्। रसानामलङ्कारतेति तेषां गुणानामिवा
लङ्कारव्यपदेशाभावात्। नायुक्तम्। युक्तोत्कर्षाणामूर्ज
स्विरसवत्प्रेयानामुपदेशेन। तद्यथा। प्रेयः प्रियतराख्या

नं रसवद्रसपेशलम् । ऊर्जस्विरूढाहंकारं युक्तोत्कर्षं च तत् त्रयम् । तत्रोर्जस्विरूढाहङ्कारमित्यनेनात्मविशेषनिष्ठस्योत्कृष्टादृष्टजन्मनोनेकजन्मानुभवसंस्काराहितदृढिम्नः सङ्ग्रामेण सम्पदुत्पातातिशयहेतोरलंकारविशेषस्योपसंग्रहादहङ्काराभिमानशृङ्गारापरनाम्नोरसस्य मानमयविकाररूपेणाभिमानिनाम्मनसि जाग्रतः पराङ्कोटिमुपवर्णयति । रसवद्रसपेशलमित्यनेन विभावानुभावव्यभिचारिसात्त्विकसंयोगाद्रसनिष्पत्तिरिति रत्यादिरूपेणानेकधाविर्भवतोऽभिवर्द्धमानस्य परप्रकर्षगामिनः शृङ्गारस्य मध्यमावस्थां सूचयति । प्रेयतराख्यानमित्यनेन समस्तभावमूर्द्धाभिषिक्तायारतेः परप्रकर्षाधिगमाद् भावनाभिगमे भावरूपतामुल्लङ्घ्य प्रेमरूपेण परिणतायामुपादानाद् भावान्तराणामपि परप्रकर्षाधिगमे रसरूपेण परिणतिरिति ज्ञापयन्नहंकारस्योत्तरां कोटिमुपलक्षयति । सर्वेषामपि हि रत्यादिप्रकर्षाणां रतिप्रियो, रणप्रियः, परिहासप्रियो, ऽमर्षप्रिय इति प्रेमण्येव पर्यवसानम्भवति । युक्तोत्कर्षं च तत् त्रयमित्यनेनायुक्तोत्कर्षाणां त्रयाणामप्यूर्जस्विप्रभृतीनाङ्गुणत्वमेव नालङ्कारत्वमित्यवस्थापयति । तथा हि । और्जित्यम्भाविकम्प्रेय इति गुणेषु भण्यते कुतः पुनरिदमेकदोर्ज्जस्विरसवत्प्रेयसामलङ्कारत्वमुच्यते ॥ भूमनिन्दाप्रशंसासु नित्ययोगेतिशायने । संसर्गेऽस्तिविवक्षायाम्भवन्ति मतुबादयः । यथा गोमान् देशो, वाचालो बटु, र्वाग्ग्मी विपश्चित्, फलिनो वृक्षाः; बलवान् मन्दो, दण्डी,

गोमती,शोणेति । तत्रोर्ज्जस्विरसवतोरलङ्कारत्वविव-
क्षायामतिशायनेवा,भूम्निवामतुबर्थोगः १। गुणत्वविवक्षा
यान्तुप्रशंसानित्ययोगयोरितिद्रष्टव्यम् । नित्योहिकाव्ये
गुणयोगइवरसादियोगः । गुणवतोरसवतश्चनिश्चितेवा-
स्यप्रशंसा। संसर्गस्तुगुणानामवश्यमुपादानेषु निन्दापुन
र्दोषहानेर्नव्रितरति । गुणेषुप्रेयइतिरूपाभेदात्कथमलङ्का
रत्वे तदुत्कर्षप्रतीतिः । यथा। युधिष्टिरः श्रेष्ठतमः कुरू
णामिति । तत्रातिशायिगुणान्तरेणतदवगतिरितिचेत्।
इहापियुक्तोत्कर्षंउचतत्त्रयमितिवाक्यान्तरेणभविष्यति।
नचातिशायिकाः स्वार्थातिरिक्तार्थमपिब्रुवतेअपितुप्रकृ
त्युपात्तमेवप्रकर्षादिकङ्गमयन्ति। स्वार्थिकेषुह्येतेविधीय
न्ते। एवमवस्थापितेगुणरसानामलङ्कारत्वे षट्प्रकारको
रसालङ्कारसंकरः सम्भवति । गुणसंकरो, ऽलंकारसंक-
रो,गुणालंकारसंकरो, रससङ्करो, रसगुणसंकरो, रसा
लङ्कारसंकरश्चेति । नन्वत्रगुणानांसङ्करव्यवहारोनो
पपद्यतेवहुष्वपिगुणेषुगुणवदित्येवव्यपदेशात् । मैवम् ॥
त्रिविधागुणाः ।शब्दगुणा, अर्थगुणा, दोषगुणाश्च ।
तेतुप्रत्येकन्द्विधा। उल्लेखवन्तोनिरुल्लेखाश्च । तत्रशब्दगु
णेषुसमाधिमाधुर्य्यौदार्यगाम्भीर्यादयः सोल्लेखाः। श्ले
षप्रसादसमतासौकुमार्यादयोनिरुल्लेखाः । अर्थगुणेषुप्र
सादरीतिकान्त्यादयः । अर्थव्यक्तिसौक्ष्म्यगाम्भीर्य-
संमितत्वादयोनिरुल्लेखाः। दोषगुणेषुग्राम्यपुनरुक्तापा
र्थान्यार्थादयः। शब्दहीनसंभ्रमापक्रमविसंध्यादयोनिरु

ल्लेखाः। तत्रसजातीयानांसोल्लेखानामेवंविजातीयाना न्तुनिरुल्लेखानामपिसङ्कारव्यवहारः प्रवर्त्तते। सजाती यानांशब्दगुणेषुसमाध्यादीनांयथा। णवपल्लवेसुलोलइ घोलइविलवंसुवलइसिहरेसु। ञ्ञवइपवएसुञ्ञमहावसन्त लच्छीअसोअस्स॥ अत्रान्यधर्माणामन्यत्रारोपणंसमा धिः, पृथक्पदतामाधुर्यं, बन्धविकटत्वमुदारता, ध्वनिम त्ता गाम्भीर्यमिति सजातीयाः सङ्कीर्यन्ते। यतोवसन्तल क्ष्मीरशोकस्येतिपदयोः शब्दध्वनिरपिपरिस्फुरति। य थाकस्यचिदशोकस्यमानिनोङ्गेषुप्रियाङ्गनासविलासवर्त्त तेतथाऽस्येयमिति॥ २६३॥ अन्यार्थगुणेषुश्लेषा दीनांयथा। जनः पुण्यैर्यायाज्जलधिजलभावञ्जलमुच- स्तथावस्थं चैनन्निदधतुशुभे शुक्तिवदने। ततस्तांश्रे- योभिः परिणतिमसौविन्दतुयथारुचिन्तन्वन्पीनस्तनि हृदितवायंविलुठति॥ अत्रसंविधानेसुसूत्रताश्लेषो, ऽर्थस्य प्राकट्यम्प्रसाद, उत्पत्त्यादिक्रियाक्रमोरीति, र्दीप्तरसत्वङ्कान्ति रित्यर्थगुणाः सजातीयाः सङ्कीर्यन्ते ॥ २६४॥ दोषगुणेषुश्रमादीनांयथा। हन्यतेसावरारो- हास्मरेणाकायवैरिणा। हन्यतेचारुसर्वाङ्गीहन्यतेमञ्जु भाषिणी॥ अत्रहन्यतइत्यमङ्गलार्थं, वरारोहेत्यश्लीलार्थं, हन्यतइतिपुनरुक्तं, चारुसर्वाङ्गीत्युक्तौवरारोहेतिव्यर्थम्। तएतेसजातीयाश्चत्वारोपिदोषगुणाः सङ्कीर्यमाणाः क- स्यचिदुन्मत्तभाषिणोऽनुकम्पाद्यतिशयविवक्षायामभ्यनु ज्ञायन्ते। यदाह। अनुकम्पाद्यतिशयोयदिकश्चिद्विवक्ष्य

ते। नदोषः पुनरुक्तादीमत्युतेयमलङ्क्रिया ॥ २०२॥ अ धासजातीयानां शब्दगुणानामर्थगुणानाञ्च सङ्करोय॰ था । कोनाम नोदयतिनास्तमुपैतिकोवालोकोत्तरः पुनरयंसविताजगत्सु । यन्नोदयास्तमयभाजिरुचाब्धिधानेद्वेधाभवत्यहरितिक्षणदेतिकालः ॥ अत्रयावदर्थपदतासम्मितत्वं, सम्यग्बन्धविकटत्वमुदारता, विशेषणगुणयोग उदात्तत्वमिति शब्दगुणा उक्तार्थनिर्वहणं प्रौढि, रर्थप्राकट्यं प्रसादो, रूढाहङ्कारतौर्जित्यमित्यर्थगुणाःसङ्कीर्यन्ते ॥ २६५ ॥ शब्दगुणानांदोषगुणानाञ्चयथा । एह्येहिवत्सरघुनन्दनपूर्णचन्द्रचुम्बामिमूर्द्धनिचिरायपरिष्वजेत्वाम् । आरोप्यवाहृदिदिवानिशमुद्वहामिवन्देथवाचरणपुष्करकद्वयन्ते ॥ अत्रभावतोवाक्प्रतिपत्तिर्भाविकत्वं, प्रसिद्धार्थपदताप्रसादः, प्रियार्थपदोपादानम्प्रेय इति शब्दगुणा एह्येहीति पुनरुक्तं; वत्सेत्युक्त्वात्वत्पादाब्जद्वयंवन्द इतिविरुद्धं, मूर्ध्निचुम्बामिहृदिवहामीत्यादौवन्दइतिक्रियास्वनुपयोगात्, पूर्णचन्द्रेतिदर्शनादिक्रियोपयोगिव्यर्थंचेतिदोषगुणाःपरस्परंसङ्कीर्यन्ते। रसाक्षिप्तचित्तादौहिपुनरुक्तादयोनदुष्यन्ति ॥ २६६ ॥ अर्थगुणानान्दोषगुणानांयथा । किन्द्वारिदैवहतिकेसहकारकेणसंवर्द्धितेनविषपादपएष पापः । अस्मिन्मनागपिविकाशविकारभाजिभीमाभवन्तिमदनज्वरसन्निपाताः ॥ अत्रदीप्तरसत्वङ्कान्ति, र

दैवहतिकेइति, विषपादपोयम्पापइत्यमङ्गलार्थंग्राम्यंकि मनेनसंवर्द्धितेन इत्यश्रमदनज्वरसन्निपाताइत्यत्रचक्र- त्यप्रयोजनादेर्विरहिणो द्रष्टुरित्यादेश्चाध्याहारादसम्पू र्णवाक्यतायामर्थव्यक्तिविपर्ययो,ऽस्मिन्विकाशविकार- भाजीतिविकाशशब्दस्यपुष्प विषयस्यवृक्षेपिप्रयोगेऽवा चकत्वादसमर्थइतिदोषगुणा मिथः सङ्कीर्यन्ते । यतोर साक्षेपात्परिहारलेशोत्थामङ्गलम् । प्रविशपिण्डीं द्वारं भक्षयेतिन्यायात्प्रसिद्धाध्याहारः । वदन्तिमञ्चाः क्रोश- न्तिइतिप्रयोगदर्शनादाधाराधेययोरभेदोपचारश्चविरुद्ध लक्षणादिभिः प्रयुज्यमानोनदोषायेति ॥२६७॥ अथाल- ङ्कारसङ्करः । सयद्यपिव्यक्ताव्यक्तोभयात्मतयातिलतण्डु लकादिभेदैः प्रधानाङ्गभावसमकक्षताभ्यामपुरस्तादुक्तः । तथापितैर्गुणादिसङ्करासाधारणत्वात्सम्प्रतिसाधा- रणः प्रकारउच्यते । सषोढा शब्दालङ्कारसंकरो,ऽर्थालङ्का रसंकर, उभयलंकारसंकरः, शब्दार्थालंकारसंकरः, शब्दो भयालंकारसंकरो,ऽर्थोभयालंकारसंकर इति । तेषुशब्दाल कारसंकरोयथा । हंसालीभयालरलासारासरसासरास सारसरासा । अम्बररमारूढासारासरसासरासुलारस- रासा । अत्रसंस्कृतप्राकृतभाषाश्लेषो गतप्रत्यागतचित्र त्रं, पादावृत्तियमकं, वर्णानुप्रासश्चेतिचत्वारः ॥ २६८ ॥ शब्दालङ्कारसंकरोयथा । वासात्रस्थितताम्रचूडवयसामा यामिभिः कूजितैर्दूरादप्यनुमीयमानवसतिर्ग्रामोयम- ध्वर्गणः । यत्रोद्दीप्रसृगालकूटविसरद्ध्मयान्धनंघूर्णतेस

न्ध्यान्तोल्लसदच्छभल्लपटलच्छायाजटालंतमः । अत्रताम्रचूडजयसांकूजितैरित्यनुमानं, यत्तमोघूर्णतइतिज्ञापकहेतुरुद्दीपनमृगाल १ कण्ठत्रिसरद्रूम्यान्धनमितिसंध्यान्तोल्लसदच्छभल्लपटलच्छायाजटालमिति चकारकहेतुर्जायमानपदार्थस्वरूपाभिधानज्ञातिरित्यर्थालंकाराश्चत्वारोमिथः संकीर्यन्ते ॥ २६९ ॥ उभयालंकारसंकरोयथा । णहुणवरन्दीवसिहासारिच्छञ्चम्पएहिपडिवस्सम् । कज्जलकज्जम्मिकअंउअरिभमन्तेहिंममरेहिम् ॥ अत्रचम्पकादीनाम्प्रदीपशिखाभिराकारकान्तिमुपमाविरहिणीहृदयदाहोद्दमद्योतनार्थक्रियाभ्यांसाम्यंकज्जलपटलानामिवोपरिभ्रमरपटलानांमेलनान्मेलितञ्चम्पकदीपकलिकयोरिवभ्रमरकज्जलपटलयोरौपम्यादिसबन्धात् समुच्चयइत्युभयालंकाराश्चत्वारोमिथःसंकीर्यन्ते ॥२७०॥ शब्दार्थालंकारसंकरोयथा । सर्वाशारुधिदग्धवीरुधिरुषासारद्गुबद्धकुधिक्षामक्ष्मारुहि मन्दमुन्मुधुलिहिस्वच्छन्दकुन्दद्रुहि । शुष्यत्स्रोतसितप्रभूम्निरजसिज्वालायमानाम्भसिज्येष्ठेमासिखरार्कतेजसिकथम्पान्थव्रजञ्जीवसि अत्रावन्तिकारातिः पदमुद्राविभक्तिमुद्राअनुप्रासश्चेतिशब्दालङ्कारा जातिज्ञापककारकहेतू च्चिन्नहेतुश्चेतिअर्थालङ्कारा मिथःसङ्कीर्यन्ते ॥२७१॥ एवमुभयालंकारसङ्करोयथा । स्तोकंस्तोकममूभिरम्बरतलेताराभिरस्तङ्गतङ्कच्छत्यस्तगिरेः शिरस्तदनुचच्छायादरिद्रः शशी । प्रत्यासन्नतरोदयस्यतरणेर्विम्बारुणिम्नाततोमाञ्जिष्ठारसलो-

हिनीदिगपि च प्राचीसमुन्मीलति ॥ अत्र समुन्मीलतीति
विभक्तिमुद्रास्तोकं स्तोकमस्तंगतं गच्छतीत्यादिरनुप्रास-
श्च शब्दालङ्कारा हेतूपमासमाधिरनुक्रमः समुच्चयोक्ति
श्चेति उभयालङ्कारा मिथः सङ्कीर्यन्ते ॥२७२॥ अर्थोभयाल
ङ्कारसंकरो यथा । संवर्त्ते कलविङ्ककण्ठमलिनं कादम्बि
नीकम्बलं चर्चां पारयतीव दर्दुरकुलं कोलाहलैरुन्मदम् ।
गन्धं मुञ्चति सिक्तजालसुरभिं वर्षेण दग्धा स्थली दुर्लक्ष्यो-
ऽपि विभाव्यते कमलिनीहासेन भासा रूपतिः ॥ अत्र जातिर
नुमानं कारकज्ञापकहेतू चेत्यर्थालंकारा, रूपकोपमाहे-
तूपमोत्प्रेक्षोपमा चेति उभयालंकारा मिथःसंकीर्यन्ते । ए
तेन गुणालंकारसंकरोऽपि व्याख्यातः । अतो यद्यपि गुणव
द्यैव वाक्ये संकरयोगस्तथापि क्वचिद्गुणस्य प्राधान्यं क्वचिद
लंकारस्येति प्रधानाङ्गभावेन गुणालंकारयोः संकरव्यवहा
रः प्रवर्त्तते ॥२७३॥ स षोढा । शब्दगुणप्रधानोऽर्थगुणप्रधा
नो, दोषालंकारप्रधानः, शब्दालंकारप्रधानोऽर्थालंकार
प्रधान, उभयालंकारप्रधानश्चेति । तेषु शब्दगुणप्रधानो
यथा । प्राप्तश्रीरेष कस्मात्पुनरपि मयि तं मन्थखेदं विद
ध्यान्निद्रामप्यस्य पूर्वामनलसमनसो नाप्यहं तर्कयामि ।
सेतुं बध्नाति भूयः किमिति च सकलद्वीपनाथानुयातस्त्व-
य्यायाते वितर्कानिति दधत इवाभाति कम्पः पयोधेः ॥
अत्र हेतूत्प्रेक्षाभिधाने त्वय्यायातीत्यादौ पदे विष्णोः स्वरूपा-
ध्यासेन तद्भावापत्तौ समाधेः प्राधान्यमिह प्रतीयते । ननु
चायमर्थस्य प्राकट्यात्प्रसादो र्थगुणः कस्मान्न भवति । प्र

स्मिन्नपि लक्ष्यपदेशेन शब्दशक्तेराधिक्यात् । ननु चास्यार्थ एष इत्यस्येति युष्मन्तदिदमदः कश्चिन्नाविष्णुत्वात्
सकथं वर्णनीयं वस्तु नितरामर्थमभिदध्यात् । उच्यते । सर्व नामत्वेनैषां सर्वार्थत्वात् सर्वनामानि हि सर्वाभिधायी
न्यपि प्रकरणादिगम्यं विशेषमर्थं ब्रुवते । स चेह प्राप्त श्रीरित्यर्थ वमादिभिरतिव्यक्तमेवाभिगम्यत इति ॥२७४॥

अर्थगुणप्रधानो यथा । लक्ष्मीवशीकरणचूर्णसहोदरा-णि त्वत्पादपङ्कजरजांसि चिरं जयन्ति । यानि प्रणाममि-
लितानि नृणां ललाटे लुम्पन्ति दैवलिखितानि दुरक्षराणि ॥
अत्र हेतुवाक्य उभयालंकारप्राधान्येनार्थप्रकटमर्थगुणः प्रतीयते ॥ २७५॥

दोषगुणप्रधानो यथा । येनापवि द्धसलिलस्फुटनागसद्मा देवासुरैरमृतमम्बुनिधिर्ममन्थे । व्यावर्तनैरहिपतेरयमाहिताङ्कः खं व्यालिखन्निव विभाति स मन्दराद्रिः ॥ अत्र व्यावर्तनैरहिपतेरयमा-
हिताङ्क इति ज्ञापकहेतोः खं व्यालिखन्निवेत्युत्प्रेक्षावय-वाच्च देवासुरैरिति नित्य वैराविवक्षायां बहुवचनम् । अ
मृतमम्बुनिधिर्ममन्थ इति द्विकर्मके मुषिमथिप्रभृतीना-मुपसङ्ख्यानमित्यमृतशब्दाद्द्वितीयेति दोषगुणयोः प्रा
धान्यं प्रतीयते । ननु चात्राप्यर्थस्य प्राधान्यं न भवति त-द्विषयस्य ज्ञापकहेतुनापहृतत्वात् । सोऽप्यर्थालंकार एव ।
गुणालंकारयोश्च तुल्यकक्षतायामलंकारः प्रधानं भवति-न गुणः । गुणैर्हि गुणभूतैरेवालंकारा प्रायश्चारभ्यन्ते ।
तद्यथा । अस्पृष्टादोषमात्राभिः समग्रगुणगुम्फिता ।

क्षिपञ्चीस्वरसौभाग्यावैदर्भीरीतिरिष्यते ॥ समस्तात्युत्क
टपदामोजःकान्तिसमन्विताम् । गौडीयांतांविजानन्ति
रीतिंरीतिविचक्षणाः ॥ आश्लिष्टश्लथभावाञ्चपुराण-
च्छायमाश्रिताम् । मधुरांसुकुमाराञ्चपाञ्चालींकवयो
विदुः ॥ माधुर्यमपिवाञ्छन्तः प्रसादञ्चसुमेधसः ।
समासवन्तिभूयांसिनपदानि प्रयुञ्जते ॥ लाटीयावन्त्य
योरीत्योर्मागध्यांचक्कचित्क्कचित् । केचिदोजोभिधि-
त्सन्तः समस्यन्तिबहून्यपि ॥ प्रतीतशब्दं ह्योजस्वीसु
श्लिष्टपदसन्धिता ॥ प्रसादित्वभिधानंचायमकंकृतिनांम
तमिति ॥ माभूदलंकारतुल्यकक्षतयार्थस्यप्राधान्यं गुण-
स्यतुश्लाघ्यविशेषगुणयोगउदात्तत्वमित्यादेः किमितिप्रा
धान्यन्नभवति । दोषगुणानामतीवोल्लेखविधित्वेनप्रधा
न्यात् ॥ यथा । सावामनप्रसिद्धिर्लङ्घितनभसोबलिद्विषो
ऽप्यापि । मत्सरिणःखलुलोकाममर्माण्येवानुबध्नन्ति ॥ दो
षस्ययोगुणीभावः सततोप्यधिकंप्रकाशतइति ॥ २७६ ॥
शब्दालङ्कारप्रधानोयथा । यश्चन्द्रकोटिकरकोरकभार
भाजिबभ्रामबभ्रुणिजटापटलेहरस्य । सद्यः पुनातुहिम
शैलशिलानिकुञ्जटाङ्कारडम्बरविराविसुरापगाम्भः ॥
अत्रार्थप्राकट्यम्प्रसादो, विभवोत्कर्षउदात्तता, मृदुम-
स्फुटोन्मिश्रवर्णानामवैषम्यं समता,बन्धगाढतौजित्य
मित्यादिभ्योगुणेभ्यः प्राधान्येनशब्दालंकारानुप्रासःप्र
तीयते ॥ २७७ ॥ अर्थालंकारप्रधानोयथा । आश्ले
षिणः पृथुरतक्कमपीतशीतमायामिनीर्घनमुदोरजनी-

युंयानः । ऊर्मीरमुंहुरुलनबन्धनसन्धिलोलपादान्त-संवलितलोलपटाः स्वपन्ति ॥ अत्र बन्धविकटत्वमुदारता, श्लाघ्यविशेषणयोग उदात्तता, विभवोत्कर्षऔदार्यं, दीप्तरसत्वंकान्तिरित्यादिभ्योगुणेभ्यः प्राधान्येनजातिरर्थालंकारः प्रतीयते ॥२७८॥ उभयालंकारप्रधानोयथा । अभ्युद्धृतावसुमतीदलितंरिपूरः क्षिप्रक्रमंकवलिताबलिराजलक्ष्मीः । अत्रैकजन्मनिकृतंयदनेनयूनाजन्मत्रयेतदकरोत्पुरुषः पुराणः ॥ अत्रोक्तिपरिपाकः प्रौढि,र्बन्धविकटत्वमुदारता, आशयोत्कर्षउदात्तत्वम्, अर्थप्राकट्यम्प्रसाद इत्यादिभ्योगुणेभ्यः श्लेषोपसर्जनाविशेषोक्तिरुभयालंकारः प्राधान्येनप्रतीयते ॥ २७९ ॥ रससंकरोपिचालंकारसंकरवदेवरसाभावप्रशमानान्तिलतण्डुलादि प्रकारेणसंकरः षट्प्रकारोभवति । तत्रभावानान्तिलतण्डुलप्रकारोयथा । न्यक्कारोहृदिवज्रकीलइवमेतीव्रः परिस्पन्दतेघोरान्धेतमसीवमज्जतिमनः सम्मीलितंलज्जया । शोकस्तार्क्ष्यविपत्तितोदहतिपक्षास्त्येवयस्मिन्क्रियामर्माश्ये वपुनश्छिनत्तिकरुणासीताम्बराकींपूति ॥ अत्रामर्षलज्जाशोकानुकम्पाः समकक्षतयामिथस्तिलतण्डुलवत्संकीर्यमाणारामस्यविरहिणो वागारम्भानुरागोक्तिपरतयाप्रतीयन्ते ॥ २८० ॥ क्षीरनीरप्रकारोयथा । मामोन्नतेस्यसहनेत्यऽतिपीडितेति मध्येवधिक्कृतिरनेकमुखीसखीनाम् । दाक्षिण्यमात्रमसृणेनविचेष्टितेनधूर्त्तस्यतस्यत

गुणानुपरञ्जयन्ति ॥ अत्र सखीपुरोपः प्रियगुणेष्वसूयाक्षीरनीरवन्मिथः संकीर्यमाणौ मानिनीव्यागारम्भपरतयाप्रतीयेते ॥ २८१ ॥ छायादर्शप्रकारो यथा ।

आःसीतेपलिगर्व्वविभ्रमभरप्रान्तभ्रमद्भूयान्ययप्रध्वंसस्मितकान्तिमत्तत्रतदाजातंयदेतन्मुखम् । सम्प्रत्येवहठाद्दैवकुन्तलेकेशीन्नयैतत्कर्षणत्रासोत्तानितलोललोचनपतद्बाष्पप्लुतंरावणः ॥ अत्रकोपाभासेछायादर्शन्यायेनरत्याभासः संकीर्यते ॥ २८२ ॥ नरसिंहवद्यथा ।

किन्द्वारिदैवहतिकेसहकारकेणसंवर्द्धितेन विषपादपएषपापः । अस्मिन्मनागपिविकासविकारभाजिभीमाभवन्तिमदनज्वरसन्निपाताः ॥ अत्रनरसिंहजातावित्र सिंहनरशरीरभागारम्भानुसारेण सखीविषयानुकम्पासहकारविषयाचकुत्सामिथःसङ्कीर्येते । तथाहि । दैवहतिकेशब्देनलब्धायात्रिंयत्युपाधीसर्वंथैवानुकम्प्यमानतायां सहकारसंवर्द्धनंनिबन्धनत्वमेवास्याः कनाद्योत्यते । एवंनाममन्दैवोपहतासियत्सहकार विषपादपंद्वारिसंवर्द्धयसिविषपादपशब्देनलब्धायां सहकारस्यसर्वथैवकुत्सायांविकासकालेकामिनीनामसह्यस्मरज्वरसन्निपातहेतुकत्वमेवास्याः कन्प्रत्ययेनप्रत्याय्यते । तदुक्तं "कुत्सितत्वेनकुत्सात्वान्सम्यग्वापिहिकुत्सितः । स्वशब्दाभिहितेकेनविशिष्टोर्थःप्रतीयते ॥ नत्वसाम्प्रतिकीकुत्साशब्दाभेदेनतीयत । पूज्यतेकुत्सितत्वेपिप्रशस्तत्वेपिकुत्स्यते,, इति । तद्यथा । एकइहजीवलोकेजीवतिरूपा । यः

प्रेममात्रपाशमृगइअनमृगीदृशांपतति ॥२८३॥ पांसूदकप्र
कारोयथा। मागर्वमुद्वहकपोलतले चकास्तिकान्तस्वहस्त
लिखितामममञ्जरीति। अन्यापिकिंनसखिभाजनमीदृशी
नांवैरीनचेद्भवति वेपथुरन्तरायः ॥ अत्रस्वसौभाग्यव
र्णनामृत्पिण्डेपांसूदकयोरिवाविभागमापाद्यमानयोर-
सूयागर्वयोः सङ्करउपपद्यते ॥ २८४॥ चित्रवर्णप्रकारो-
यथा। विरोधोविश्रान्तः प्रसरतिरसोनिर्वृतिघनस्तदौ
द्धत्यंक्वापिव्रजतिविनयः प्रह्वयतिमाम्। झटित्यस्मिन्दृ
ष्टेकिमपिपरवानस्मियदिवामहार्घस्तीर्थानांकिमिहम
हताङ्कोप्यतिशयः॥ अत्रवीरौद्धत्यस्वातन्त्र्यरसानामा
नन्दप्रशमपारवश्यरसैस्तिरस्क्रियमाणानाम्पटवर्णनी-
लादिभिः सितादीनामप्रशमाराध्यदर्शनप्रभावोद्भवेतत्र
स्यविस्मयातिशयप्रशमजन्मनिवागारम्भानुभावोपधा
द्भवेदेतच्चित्रवर्णवत्सङ्कीर्यमाणाःसमुपलभ्यन्ते॥२८५॥
अथकोयंगुणसङ्करः। ननुयदोषहानमिव गुणोपादान
मपिनियमनिवर्त्यम्। अलङ्कारयोगइवरसावियोगोप्यत्र
श्यंविधेयः। कदाचिदलङ्कारयोगोपित्यज्यते। ननुरसाद
द्व्यभिचरितसम्बन्धाविति। अत्रोच्यते। यत्रचित्रवर्णव
न्नरसिंहवत्पांसूदकवदवयवात्रयभिन्यायेनजातिव्यक्ति
न्यायेनवाऽपृथक्प्रयत्ननिर्वर्त्यानांगुणरसानां वाक्ये स
न्निवेशस्तत्रसङ्करव्यवहारोनप्रवर्त्तते । तद्यथा। मधुरं
रसवद्वाचिवस्तुन्यपिरसस्थितिः। येनमाद्यन्तिधीमन्तो
मधुनेवमधुव्रताः ॥ कामंसर्वोप्यलङ्कारोरसमर्थेनिषि

उच्यति । तथाप्यग्राम्यतैवैनम्भारंवहतिभूयसा ॥ शृङ्गा
रएवसर्वेषुपरमह्लादनोरसः । तन्मयद्भाव्यमाश्रित्यमा
धुर्यम्प्रतितिष्ठति ॥ शृङ्गारेविप्रलम्भाख्येकरुणेचप्रकर्षव
त् । माधुर्यमार्द्रतांयातियतस्तत्राधिकम्मनः ॥ रौद्रा
दयोरसादीप्ततालक्ष्यन्तेकार्यवर्त्तिनः । तद्व्यक्तिहेतु
शब्दार्थावोजोधिष्ठायतिष्ठति ॥ समर्पकत्वंकाव्यस्यय
त्तुसर्वरसान्प्रति । सप्रसादेगुणोज्ञेयः सर्वसाधारण
क्रियः ॥ सेयंगुणानांरसारम्भकत्वेसंकराप्रसिद्धिः ।
एवंरसानांगुणारम्भकत्वेपि । तद्यथारूढाहंकारतौर्जि-
त्यंभावतोवाक्प्रवृत्तिर्माधिकत्वं क्रोधादावस्यतीव्रत्वं-
माधुर्य्यमाशयोत्कर्षउदात्तत्वमर्थस्याभीष्टतमताप्रेयोदी
प्तरसत्वंकान्तिरिति । यत्रतुतिलतण्डुलवत्क्षीरनीरव-
च्छायादर्शवत्तुल्यकक्षत्वेनैवगुणरसानांवाक्यैःपृथक्प्र
यत्ननिर्वर्त्त्यानां विनिवेशस्तत्रसङ्करव्यवहारःप्रवर्त्तते
एव । सषोढा । गुणप्रधानो, रसप्रधान, उभयप्रधान,
उभयाप्रधानो,गुणाधिको,रसाधिकइति । तेषुगुणप्रधा
नोयथा । अत्रान्तरेललितहारलतानितम्बसंवाहनस्ख
लितवेगतरङ्गिताङ्गी । देवीव्यपास्यशयनन्धृतमानतन्तु
रन्तः पुरंगतवतीसहसौविदल्लैः ॥ अत्रार्थप्राकट्यौदार्य
योरर्थगतगुणयोः प्राधान्यम्भवति क्रोधयोरितिगुण
प्रधानः ॥ २८६ ॥ रसप्रधानोयथा । अस्मिन्नगृह्णतपि
नाकमृतासलीलमारब्धवेपथुरधीरविलोचनायाः । वि
न्यस्तमङ्गलमहौषधिरीश्वरायाः स्रस्तोरगप्रतिसरेणक-

रेखापाणिः ॥ अत्रश्लाघ्यविशेषणयोगउदात्तत्वं बन्ध
विकटत्वमुदारताअर्थप्राकट्यम्प्रसादो दीप्तरसत्वङ्का
न्तिरितिगुणाः साध्वसविलासानुरागसंगमरसैरतिश
य्यन्तइतिरसप्रधानः ॥२८७॥ उभयप्रधानोयथा । घा
पातमात्ररचितकेसरलीलहस्त्यकिम्बीजमर्पयितुमिच्छसि
बापिकायाम् ॥ कालःकलिर्जगदिदं नकृतज्ञमज्ञेस्थित्वा
हरिष्यतितवैवमुखस्यशोभाम् ॥ अत्रभणितिविशेषउक्तिः
संनिधानेसुसूत्रताश्लेषइति शब्दगुणयोर्लावण्यविला
सवर्णनीयरसयोश्चतुल्यकक्षतयानिर्दिशत्युभयप्रधानः
॥२८८॥ उभयाप्रधानोयथा । अभिनववधूरोषस्वादुःकरी
षतनूनपादसरलजनाश्लेषक्रूरस्तुषारसमीरणः ॥
गलितविभवस्याज्ञेवाद्यद्युतिर्मसृणारवेर्विरहिवनितावक्त्र
क्लैब्यं बिभर्तिनिशाकरः ॥ अत्रस्वादुःक्रूरमसृणक्लैब्य
मित्यन्यधर्माणामन्यत्रारोपणं समाधिरभिनववधूरोषा
दीनाञ्चतुर्णामप्यर्थानांस्वाद्वादीनाञ्चलक्षणादिलक्षिता
नाम्प्राकट्यंप्रसादो ऽभिनववधूरोषस्वादुःकरीषतनून
पादितिविशेषणविशेष्याणामुपक्रमेणानिर्वहणंरीतिःपाद
चतुष्टयेचतुर्णामर्थानांविभज्यसमत्वेननिवेशः सम्मितत्व
मितिचत्वारोगुणाः शृङ्गारश्चरत्यमर्षविषादजुगुप्सा
स्मयारसाः कालाद्यस्थाननिवेदनपरत्वेनप्रतीयन्तइत्युभ
याप्रधानः ॥ २८९ ॥ गुणाधिक्योयथा । अजन्मानिरस्तु
विभूतेरपूरणिर्भवतुसर्वकामानाम् । मायाविषिमासेऽवि
षिमासहिषिपराभवन्यानिनः ॥ अत्रसुप्तिङ्व्युत्पत्तिःसौश

वक्ष्यं वाक्यानामपरिपूर्णत्वमर्थव्यक्तिरर्थस्य प्राकट्यम्प्र
सादोऽभिभूतेरनुत्पत्तौ कामानपूर्यन्तेऽपरिपूर्णकामो याच
ते याचमानस्तदनाप्नुवन्ध्यानिनः सेवन्ते सेवमानास्तुतैः प
रिभूयन्त इत्युत्पत्त्यादिक्रियाक्रमो रीतिरिति गुणाश्चत्वारः।
रसस्तु निर्वेद एवैक इति गुणाधिकः ॥ २९० ॥ रसाधिको
यथा। कमलमनम्भसि कमले च कुवलये तानि कनकलति
कायाम्। सा च सुकुमार सुभगेत्युत्पातपरम्परा केयम् ॥
अत्र कमलमनम्भसि कमले च कुवलये तानि कनकलति
कायामित्यन्यधर्माणामन्यत्रारोपणं समाधिः साच सुकु
मार सुभगेत्युत्पातपरम्परा केयमित्यश्लीलामङ्गलार्थौ दो
षगुणावपि श्लाघ्यविशेषणगुणयोगादुदात्तत्वं विकटब
न्धत्वमुदारतोपक्रमभेदो रीतिरर्थस्य प्राकट्यम्प्रसादोऽनि
ष्ठुरता सौकुमार्यमाभीक्ष्ण्यमला प्रेयो दीप्तरसत्वङ्कान्ति
रिति गुणा दश। रसास्तु रत्युत्कर्षहर्षस्मरदुत्कण्ठावेगवि-
स्मयमतिवितर्कचिन्ताचपलताहासोत्साहस्तम्भगद्गदो-
न्मादव्रीडाऽवहित्थाभयशङ्काविंशतिर्वीगा रम्भानुभवे शृ
ङ्गारिणः प्रिया चाटुकारस्यकस्यचिदप्रतीयन्त इति रसा
धिकः ॥ २९१ ॥ रसालङ्कारसङ्करोऽप्येतेन व्याख्या
तः। रसवन्ति हि वस्तूनि सालङ्काराणि कानिचित्।
एकेनैव प्रयत्नेन निर्वर्त्यन्ते महाकवेः ॥ रसाक्षिप्तत-
या यस्य बन्धः शक्यक्रियो भवेत्। अपृथग्यत्ननिर्वर्त्यः
सोऽलङ्कारः प्रकल्प्यते ॥ रसभावादिविषयविवक्षाविरहे
सति। अलङ्कारनिबन्धो यः स कविभ्यो न रोचते ॥ तत्र र

सालंकारसंकरो द्विधा । रसप्रधानोऽलंकारप्रधानश्च । त
योर्यैनुभवितैश्च वर्ण्यते स रसप्रधानः । तत्र ह्यलंकारवती
वाक्यस्य वागारम्भानुभावत्वं भवति । तत्र रत्तावुपमायाः
संकरो यथा । लीएदं सणसुहएपणअएवलणजंणिओमुह
भिममणहरे । रोसोत्तिहरइहिअअम्मअअम्पङ्कोवमअ-
तद्धुलस्सिनिससो । अत्रोपमातिरस्कारेण भसवतो हरेर्वं-
चसिवागारम्भरूपे रुक्मिणीप्रदत्तपारिजातमञ्जरीविलो
कनप्रभवं सत्यभामायारोपरामणीयकप्राधान्यतः प्रती
यते ॥ २९२ ॥ रतात्रेवविपरीतोपमायथा । यत्त्वन्ने
त्रसमानकान्ति सलिलेमग्नन्तदिन्दीवरम्मेघैरन्तरितः
प्रियेतवमुखच्छायानुकारी शशी । येपिस्वद्गमनानुका
रिगतयस्ते राजहंसागतास्त्वत्सादृश्यविनोदमात्रमपिमे
दैवेन नक्षम्यते ॥ अत्र विरहिणो रामस्य प्रियावयवसा
दृश्यदर्शनेनात्मानं विनोदयत उपायभ्रंशारतिप्रभवा
द्वागारम्भे स्वरूपाभिधानोपक्षीणशक्तिरप्राधान्येनो-
पमा प्रतीयते ॥ २९३ ॥ रतावेवविपर्ययो यथा । किङ्कुरु-
अहणभरोलिभावअकरअलग्गतुलिआए । विहिणोस्व-
त्तङ्गुलिअगाविम्ह रमवंहइसतिवली ॥ अत्र यद्यपि रतिप्रभ
वेभ्यो विस्मयादिभ्यः संशयहेतूत्प्रेक्षोपमाभ्यश्च पर्याया
लंकारः प्राधान्येन प्रतीयते । तथाप्यसौ वागारम्भानुभा
वइति रतावप्यप्राधान्यमेवानुभवति ॥ ९४ ॥ रतावेवस
माधिर्यथा । कृच्छ्रादूरुयुगं व्यतीत्य सुचिरं भ्रान्त्वा नित
म्बस्थले मध्येऽस्यास्त्रिवलीतरङ्गविषमे निष्पन्दतामागता ।

मद्दृष्टिस्तृषितेव सम्प्रति शनैरारुह्य तुङ्गौ स्तनौ साकाङ्-
क्षम्मुहुरीक्षते जलभरप्रस्यन्दिनी लोचने ॥ अत्र वत्स-
राजेन स्वद्वृत्ती प्राणिधर्माः समाधीयमानाः सागरि-
कादर्शनार्थे आगारम्भेन्वङ्गभवन्ति ॥ २९५ ॥ एतावेवार्थ
श्लेषयथा ॥ कपोले पत्त्राली करतलनिरोधेन मृदिता
निपीतो निश्वासैरयममृतहृद्योधररसः । मुहुर्लग्नः क
ण्ठे तरलयति बाष्पस्तनतटीं प्रियो मन्युर्जातस्तव निरनुरो
धेन तु वयम् ॥ अत्र यद्यप्याक्षेपेण वाक्योपसंहारस्तथा
पि प्रियइत्यादिभिः प्रधान्येनाभिधीयमानः श्लेषएव शृ
ङ्गारिणो आगारगमानुभावाङ्गत्वमङ्गीकरोति ॥ २९६ ॥
एतावेव पर्यायोक्तेर्यथा। मुक्ताः कन्धरयावृताः स्तनत-
टेनोत्तुङ्गता कुम्भयोरूरुभ्याम्परिणाहिता क्रमवती हस्त
स्य पद्भ्याङ्गतिः । एतद्वः करिघातिनस्तु कठिनञ्चर्मैव
कोयं हठश्चण्डीति त्रिपुरारिकेलिवचनैरार्यान्वितम्पातु
वः ॥ अत्र भगवतश्चाटूक्तिआगारम्भेदव्याः पर्यायवर्ण-
नाश्लेषभावं लभते ॥ २९७ ॥ यत्र उदासीनेन वर्ण्यते सोल
ङ्कारप्रधानः । सहि रसभावादेः सङ्करप्रकारमभिधित्सुः
स्वभावोक्तिं वक्रोक्तिंवावलम्बते । तत्र स्वभावोक्तिप-
क्षे जातिः । सा विधिमुखेन यथा । थोओउसरत्तरोस-
न्थोअपरिवट्टमानपहरिसम् । होइ अदरपआसंउहअर
साअतविम्भमन्तीअमुहम् ॥ अत्र सत्यभामाया रोष
स्यापसज्जतः प्रहर्षस्य च प्रसर्पतो येऽनुभावा जिह्माव
लोकनमुखप्रसादादयस्त इह संकीर्यमाणाः कविनोभय

रसायसविभ्रममित्यनेन यथावदवस्थिता भवन्तीति विधिमुखेनाभिधीयन्ते ॥ २९८ ॥ जातिरेव निषेधमुखेन यथा। धीरेणमानभङ्गोमाणक्खलणेन गुरुअधीरार म्भो। उल्ललइतुलिजं तेएक्कम्मिविसेधिरन्नलग्गइहिअअम् ॥ अत्र यद्यपि हेतूपन्यासो वर्त्तते तथापि तस्य स्वभावाख्यानपरिकरत्वेनाप्राधान्येन हृदयक्रियास्वरूपमेवहिनिषेधमुखेनाभिधीयते इतीयञ्जातिरेव भवति ॥ २९९ ॥ सैवविधिनिषेधाभ्यां यथा। हेलोदस्तमहीधरस्य तनुतामालोक्य दोष्णोर्हरेर्हस्तेनास तदावलम्बय चरणावारोप्यतत्पादयोः। शैलोद्धारसहायताङ्गिगमिषोरस्पृष्टगोवर्द्धना राधायाः सुचिरञ्जयन्तिगगने बद्धव्यः करभ्रान्तयः ॥ अत्र राधाया प्रेवसि हरौ यथावदवस्थितादभुतवृत्तिस्तेहशङ्कोत्साहा मिथः संकीर्यमाणाभ्या वेगस्मृतिमतिवितर्कादिभिर्व्यभिचारिभावैरालम्बनचरणाक्रमणसहकृतायांकरभ्रान्तौ शरीरारम्भानुभावेप्रतीयमानाअस्पृष्टगोवर्द्धनावन्ध्या इतिनिषेधमुखेनजयन्तीतिविधिमुखेनचाभिधीयन्ते ॥ ३०० ॥ वक्रोक्तिपक्षउपमादय लेषुउपमायथा। चोराभअसलहणम्पुणोपेसअयतिदिव्वीओ। जहिरस्थिअनिहिकलसेथघोक्कइल पूहखणुत्तङ्के। अत्रचौरगतभयानुरागयोः संकरस्वभावोक्तिमभिभूयोत्तराद्धगतमौपम्यकप्राधान्येनप्रतीयते॥३०१॥ उपमैवरसाभाससंकरविषयायथा। एकेनाकंप्रविततरुषापाटलेनास्तसंस्थांपश्यत्यु बल्वासजलतरलेना

परेणात्मकान्तम् । अहनश्छेदे दयितविरहाशङ्किनी चक्रवाकी द्वौ संकीर्णौ रचयति रसौ नर्तकीव प्रगल्भा ॥ अत्र निगदेनैव व्याख्यायते स्पष्टतयैवोपमायाः प्रधानत्वेन प्रतीतिः ॥ ३०२ ॥ रसप्रशमयोरुपमासहोक्तिर्यथा । दृष्टे लोचनवन्मनाङ्मुकुलितम्पार्श्वस्थिते वक्रवन्नम्रीभूतम्बहिरासितम्पुलकवत्स्पर्शं समातन्वति । नीवीबन्धवदागतं शिथिलतामाभाषमाणे ततो मानेनापगतं ह्रियेव सुतनोरङ्घ्रिस्पृशि प्रेयसि ॥ अत्र कस्याश्चित्सखीविख्यातमानसंविधानकोपान्मानवत्याः प्रियसन्दर्शनादालम्बनविभावादुत्पन्नप्रकृष्टरतिप्रभवहर्षस्थायिभावे तत्पार्श्वेऽपि समर्पणादिभिरुद्दीपनविभावैरुद्दीप्य १ मानेषु पुलकादिषु समुत्पद्यमानेषु व्यभिचारिषु नयननिमीलनाधोमुख्यनीवीविस्रंसनादिभिरनुभावैः प्रकर्षारोपणादानन्दरसतामापाद्यमाने स्थायिनि प्रबलविरोधिभावान्सरोदयादेतेभ्य एव कारणेभ्यः प्रतिक्षणमपचीयमानयोर्लज्जारोषयोः प्रशमसङ्करावभिभूय प्राधान्येनोपमासहोक्तिः संकीर्यते २ ॥ ३०३ ॥ श्लेषादलङ्कारसंकरात्तु ३ क्वचिद्वास्तवमपि रसाभाससंकरं कवयो वर्णयन्ति ॥ सरूपकश्लेषेण यथा । राममन्मथशरेण ताडिता दुःसहेन हृदये निशाचरी । गन्धवद्रुधिरचन्दनोक्षिता जीवितेशवसतिं जगाम सा ॥ अत्र बीभत्सो रसः श्लेषरूपकसामर्थ्यादविद्यमानेनापि शृङ्गाररसेन संकीर्ण इव प्रतीयते ॥ ३०४ ॥ श्लेषानुविद्धार्थान्तरन्यासेन यथा । दठ्ठोठठहोग्गासिल-

वाअव्वाओदेत्रिमउलावइलीअणभउन्तोवेवि । सुपओ
हरकुवलअपत्तिलच्छिकहमोनुमाइणगाजणवच्छि ॥ अ
त्रवीरोरसः श्लेषसामर्थ्यादविद्यमानेनापिविप्रम्भशृ-
ङ्गारेणसंकीर्यते ॥३०५॥ श्लेषोपमायथा। क्षिप्तोहस्ताव
लग्नः प्रसभमभिहतो ऽप्याददानोंशुकान्तं गृह्णन्केशेष्व
पास्तश्चरणनिपतितो नेक्षितः सम्भ्रमेण । आलिङ्ग
न्योऽवधूतस्त्रिपुरयुवतिभिः साश्रुनेत्रोत्पलाभिः कामी
वार्द्रापराधः स दहतु दुरितंशाम्भवो वः शराग्निः ॥ अ
त्रकरुणोरसः श्लेषोपमासामर्थ्येनाविद्यमानेनापि वि
प्रलम्भशृङ्गारेणसंकीर्यते ॥ ३०६ ॥ श्लेषव्यतिरेकेणय
था। पद्भ्यामूरुयुगंविभज्यभुजयोर्मध्यन्निपीड्योरसा
पार्श्वेषुप्रसभंप्रहृत्यनखरैर्दन्तैर्विलूयाधरम् । सुप्तान
प्यवबोध्य युष्मदहितान्भूयोपिभुङ्क्ते वने किं कान्ता सु
रतैषिणीनहिनहिव्याघ्रीकरालानना ॥ इहश्लेषसाम
र्थ्यादपारमार्थिकीशृङ्गारप्रतीतिःपारमार्थिके नबीभत्स
रसेनव्यावर्त्तमानात्तद्धर्मिणाम्मिथःसंसर्गवद्बुद्धिमुत्पाद
यति ॥३०७॥ श्लेषरूपेणयथा । अन्त्रैः कल्पितमङ्गलप्र
तिसराःस्त्रीहस्तरक्तोत्पलव्यक्तोत्तंसभृतःपिनह्यसहसाह्न
त्पुण्डरीकस्रजः । एताः शोणितपङ्ककुङ्कुमजुषः सम्भू
यकान्तैः पिबन्त्यस्थिस्नेहसुराः कपालचषकैः प्रीताः
पिशाचाङ्गनाः ॥ अत्रबीभत्सोरसः शब्दसामर्थ्यादाक्षिप्तेन
शृङ्गाराभासेनसङ्कीर्यते ॥३०८॥ समाधिरूपकेणयथा।
शिखण्डेखण्डेदुःशशिदिनकरौकर्णयुगलेगलेतारास्ता-

श्चलमुडुपचक्रञ्चकुचयोः। तडित्काञ्चीसन्ध्यासिचय
ायः कालि तदयन्तवाकल्पः कल्पव्यपरमविधेयो वि
ाते ॥ अत्र भयानको रसः समाधिरूपकादुपकल्पि
कल्परामणीयकाक्षिप्तेन श्रृङ्गाराभासेन संकीर्यमाणः
तुः प्रे योरसाङ्गतांगच्छन्संगच्छते ॥३०१॥ एवमियम
कप्रकारा संसृष्टिर्गुणालंकारसंकरप्रभवाऽभिमन्तव्या।
ापिप्रधानाङ्गभावेनसमकक्षनयाचव्यक्ताव्यक्तोभया
कस्तिलतण्डुलक्षीरजलच्छयादर्शकादयोभेदायथायो
नवगन्तव्याः। तेकिंवक्तव्याः ?। नवक्तव्याः। क-
ननुक्तागम्यन्ते ?। उक्तेष्वेवान्तर्भावात्। तद्यथाऽर्थो
ालंकाराभिधाने"खंवस्त" इति"चर्चाम्पारयती"
विभक्तिमुद्रा,कलविङ्ककण्ठमलिनं कादम्बिनीकम्ब
मितिपदमुद्राचशब्दालङ्कारावपिसङ्कीर्यमाणौप्रतीये-
॥ एवमन्यत्रापि। अङ्गाङ्गिभावावस्थानंसर्वेषांसमक
ना। इत्यलङ्कारसंसृष्टेर्लक्षणीयाद्वयीगतिः ॥२०७। त
ाङ्गाङ्गिभावेनावस्थानंयथा। आक्षिपन्त्यरविन्दानि
ग्धेतवमुखश्रियम्। कोषदण्डसमग्राणिकिमेषामस्ति दु
तरम् ॥ अत्रारविन्दानिमुग्धेतवमुखश्रियमाक्षिपन्ती
पमाकोषदण्डसमग्राणाङ्किमेषामस्तिदुष्करमिति श्ले
ापसर्जनानामर्थान्तरन्यासः। प्रभवन्तिचारविन्दानि
षदण्डसमग्राणि। तेनकिंतेषाञ्चकिंचिदशक्यमस्तिको
दण्डयोर्विजयसाधनत्वात्। एतेनश्लेषस्यसाधनभूता
समर्पकत्वादुपमायास्तुप्रस्तुतसाध्यवस्तुविशेषकत्वा-

दर्थान्तरन्यासमप्रत्ययङ्गभावो विज्ञायते ॥३१०॥ एवैषास
मकक्षतायथा । लिम्पतीवतमोऽङ्गानिवर्षतीवाञ्जनन-
भः । असत्पुरुषसेवेव दृष्टिर्विफलताङ्गता ॥ ननुचा
सम्बन्धःसमत्वात्स्यादिति कथंसर्वेषान्तुल्यकक्षतयास
म्बन्धोत्पत्तिः?। एवंमन्यते । यदोत्प्रेक्षोपमादयोलंका-
राविभावानुभावव्यभिचारिवर्णनापरतयारसादेरङ्ग-
ताम्प्रतिपद्यन्तेतदाभवन्तितेषान्तुल्यकक्षतेति । तत्रलि
म्पतीवतमोऽङ्गानिवर्षतीवाञ्जनन्नभइतिद्वेउत्प्रेक्षे । अ-
सत्पुरुषसेवेवदृष्टिर्विफलतांगतेत्युपमा वर्णनीयस्यत
मसउद्दीपनविभावभूतस्यसमतयैवोत्कर्षापादकत्वेना
ऽङ्गभावमुपगतेति नास्तिलक्षणानुपपत्तिरिति । ननू-
पमाइमास्तित्वोपिकस्मान्नोच्यते? । इवोहिवाक्यान्तरे
षूपमायाएवदृश्यते । नैवम् । उपमानोपमेयशब्दप्रतिप
न्नस्यसादृश्यार्थस्यद्योतनमिवेनक्रियते । नचलिम्पती
त्यादावुपमानमुपमेयंवास्ति । यत्सादृश्यद्योतनायइ-
वः प्रयुज्येत । नचतिङन्तेनोपमानमस्ति । तस्यसाध्या
र्थाभिधायित्वेनासत्त्वार्थत्वात् । तदाह "सिद्धस्यहि
समानार्थमुपमानं विधीयते । तिङन्तार्थस्यसाध्यत्वा
दुपमार्थोनविद्यते"इति । नचोपमायामेवेवशब्दोभवति
तद्यथा । कथमिवैतद्भविष्यति । अस्तुवालिम्पतितमसो
रुपमानोपमेयभावस्तथापितुल्यधर्मोनदृश्यते । यत्तु
पमानोपमेयभावायप्रभवतिकिमन्येनलेपनमेवभवति
नलिम्पतिनाकेनभाव्यन्नहिलेपनंलिम्पेः पृथग्भवि

तुमीष्टे । ननु चेहद्वयंचकास्तिधातुर्लिम्पतिशब्दार्थश्च लेपनम्? । नैवम् । एवंसतिलिम्पतिरिवेतिस्यात् । ननु लिम्पतीवेति । अथ यथाराहोः शिरइतिभेदाभावेप्य वयवावयविभावस्तथेहधर्मधर्मिभावोभविष्यति? नैव म् । उपमानोपमेयभावस्यभेदसादृश्यप्रतिपत्तिनिबन्ध नत्वात् । तदभावेपियस्तन्मनुतेसकथन्नोन्मत्तः स्यात् । तदुक्तम् "सएवधर्मीधर्मीचेत्युन्मत्तोपिनभाषते" इति । अस्तुतर्हितिङ्वाच्यः कर्त्तोपमानमितिचेत् । न्य ग्भूतोसौक्रियापदेइति । कथम्पुनरसौक्रियापदेन्यग्भू तोभवति? । श्रूयताम् । षडर्थास्तिङन्तेनप्रतीयन्ते । क्रिया, काल, उपग्रहः, साधनं, सङ्ख्या, पुरुषश्चेति । तेषुक्रियाकालात्मनेपदपरस्मैपदनिमित्तानि प्रकृतिर भिधत्ते । प्रत्ययः साधनंसङ्ख्याम्पुरुषञ्च । एतेषां तुक्रियार्थत्वात्क्रियाप्रधानम् । कालात्मनेपदनिमि त्तेक्रियाविशेषणत्वेन । सङ्ख्यापुरुषौसाधनविशे षणत्वेनतयोरेवन्यग्भवतः । साधनं पुनः प्रकृतिप्रत्ययौ यत्रसहार्थंब्रूतइतिन्यायात्प्रधानभूतमपिभूतंभव्यायोप दिश्यतइतिन्यायेन क्रियासिद्धावुत्पन्नव्यापारंपरा र्थत्वाद्क्रियायांन्यग्भवति । तेनायङ्कर्त्तास्वक्रिया सिद्धावाकुलः कथमुपमानत्वेनोपमेयत्वेनचान्यदपे क्षितुंक्षमते । एवन्तर्हियोऽङ्गानिलिम्पतितेनक्रियोपल क्षितेनकर्त्रातुल्यंतमइत्यर्थः प्रपत्स्यते? । नैवम् । क्रियो पलक्षितस्यकर्तुरुपमानभूतस्य शब्दन्यायबलादप्रति-

पत्तिः। शब्दो हि मुख्यागौणीलक्षणाभिरर्थप्रकरणादिसम्पादितसाचिव्यादिभिस्तिसृभिरेव वृत्तिभिरर्थविशेषप्रतिपत्तिनिमित्तम्भवति। तद्यथा। गौरित्ययं शब्दो मुख्यया वृत्त्या सास्नादिमन्तमर्थम्प्रतिपादयति स एव तिष्ठन्मूत्रत्वादिगुणसम्पदमपेक्ष्य वाहीकादौ प्रयुज्यमानो गौणीवृत्तिमनुभवति। यदा तु मुख्यया गौण्या वा उपात्तक्रियासिद्धौ साधनभावङ्गन्तुमसमर्थस्तदा लक्षणया स्वार्थाविनाभूतमर्थान्तरं लक्षयति। यथा "गङ्गायाङ्घोषः प्रतिवसती"ति। गङ्गाशब्दो विशिष्टोदकप्रवाहे निरूढाभिधानशक्तिर्घोषकर्तृकायाः प्रतिवसनक्रियाया अधिकरणभावङ्गन्तुमसमर्थः स्वार्थाविनाभूतं यत्तटं लक्षयतीति। नचैतासामिहान्यतमापि वृत्तिः संगच्छते। तथाहि। लिम्पतेः क्रियावचनत्वान्मुख्यानापि क्रियाकर्त्तारः सादृश्येन शुक्तिकादौ रजतादिवत्तद्भावापत्तिः। क्रियागुणानाङ्कर्त्तयसम्भवात्। साक्षादिवप्रयोगाच्चनगौणी। क्रियायाश्च स्वयमेव धर्मरूपत्वात्। बुद्धिः पश्यतीतिवदन्यधर्माणामन्यत्राधिरोपणमुपचार इति न गौणीभेद उपचरितता। इवशब्दस्य चासादृश्येपि दर्शनात्। न लक्ष्येत यदि हीवशब्दः सादृश्यमेव विद्योतयति तदा लिम्पतिक्रियायाः सत्वभूतेन तमसा सादृश्यन्न सम्भवतीति स्वार्थाविनाभूतङ्कर्त्तारमाक्षिपति। नचेह लक्षितलक्षणाविरुद्धलक्षणादयोपि वर्त्तन्ते। यथा प्रियेजने नास्ति पुनरुक्तं, स्वल्पे

रसावपिनदृश्यतएवकालैरिति । नचशब्दान्यविल म्बिनीपदार्थव्युत्पत्तिः प्रेक्षावद्भिराद्रियते । यद्यप्यध्या हारादिभिरिदमपिस्यात्तथापितुल्यधर्मोमार्गणीयस्तद्व देवविप्रतिपत्तेः । नचेन्दुमुखादिवदनभिधीयमानस्यापि तुल्यगुणस्यप्रत्ययोभवतीतिवाच्यम् । यथेन्दुरिवतेवक्त्र मितिकान्तिः प्रतीयते । नतथालिम्पतेर्लेपादन्यदत्रप्रती यते ॥२०८॥ तदुपश्लेषणार्थोयंलिम्पतिर्ध्वान्तकर्तृकः । वर्षणार्थश्चविद्वद्भिरुत्प्रेक्ष्यतइतीक्ष्यताम् ॥ २०९ ॥ मन्ये शङ्के ध्रुवंप्रायोनूनमित्येवमादिभिः । उत्प्रेक्षाव्यज्य- तेशब्दैरिवशब्दोपितादृशः ॥ २१० ॥ ३११ ॥ वाक्यवदे- वप्रबन्धेष्वनौचित्यपरिहारेणगुणालङ्कारसङ्करनिवेशो- भवति । तत्रानौचित्यपरिहारोयथा । मायया कैकेयीदशरथाभ्यांरामः प्रलम्भितोनमातापितृभ्यामि तिनिर्दोषदशरथे, राममेवयोधयन्रामेणवाली नि- हतोनसुग्रीवमितिमहावीरचरिते, रुधिरप्रियराक्षसेन दुःशासनस्य रुधिरंपीतंनभीमसेनेनेतिवेणीसंहारे, दु र्वाससोऽपध्यानाद्दुष्यन्तः शकुन्तलास्वीकारंविसस्मा र नानवस्थितानुरागतयेतिशाकुन्तले, लवणप्रयुक्तरा क्षसाभ्यांवासोपस्करेणतदभिधायसीतापरित्याजिता नकैकेयीमन्थराभ्यामितिच्छलितरामे, किंचदग्धा- यामपिवासवदत्तायांवैरप्रतिचिकीर्षयापद्मावतीमयो द्वावसितेचसमीहितेतयाविनाक्षणमपिनजीवामीत्यवि ज्ञातवासवदत्तासन्निधेर्वत्सराजस्याग्निप्रवेशाध्यवसा-

यः प्रियाहृदयतो व्यलीकशल्यमुत्खानेति तापसव-
त्सराजे, मरीचाक्षः स्वामिकार्यंसाधयामीतिप्रभू
त्त्या निरपराधामपिप्रेयसींहित्वास्वामिकार्यापेक्षयाह
मेनाद्यन्तिदिनानिजीवितोऽननुक्त्तस्वामिकार्यस्तामे
वानुगच्छामीतिशिवगणः शूद्रकनिमित्तम्मायामयींश्चि
ताम्भिप्रयासमक्षम्प्रविवेशसापितत्प्रेमावदातदर्शनाप-
हृतप्रियव्यलीकातद्वियोगकातरातत्रैवात्मानम्प्रतिचिक्षे
पेतिविक्रान्तशूद्रके इति । तदेषदोषहानम् । गुणोपादा
नन्तुसम्यगगुणयोगेनसंविधानेसुसूत्रता ॥३१२॥ अपिच
चतुर्वृत्यङ्गसम्पन्नमितिचतस्रोवृत्तयोभारत्यारभटीकै
शिकीसात्त्वतीचेति । तत्र । यावाक्प्रधानानृपतिप्रयो
ज्यास्त्रीवर्ज्जितासंस्कृतयाथयुक्ता । स्वनामधेयैर्भरतप्र
योज्यासाभारतीनामभवेत्तुवृत्तिः ॥२११॥ यत्रावपातप्लुतल
ङ्घितानिच्छेद्यानिमायाकृतमिन्द्रजालम् । चित्राणियुद्धा
निचतत्रवृत्तिमेतादृशीमारभटिंवदन्ति ॥ २१२ ॥ याश्ल
क्ष्णनेपथ्यविशेषयुक्ता स्त्रीसङ्गता या बहुगीतवृत्ता ।
कामोपभोगप्रचुरोपचारातांकैशिकीं वृत्तिमुदाहरन्ति
॥ २१३ ॥ यासात्त्विकेनात्मगुणेनयुक्तात्यागेनवृत्तेन
समन्विताच । हर्षोत्कटासंहृतशोकभारासासात्त्वतीति
प्रथितेहवृत्तिः ॥२१४॥ आसामङ्गानिषोडश । तेषुप्र
रोचना,प्रस्तावना, वीथी,प्रहसनमितिचत्वारिभार-
त्यङ्गानि । तत्रवक्तर्यर्थप्रशंसापरंवचः प्ररोचना
यथा । जयतिभुवनकारणंस्वयम्भूर्जयतिपुरन्दरनन्द

नो मुरारिः । जयति गिरिसुतानिरुद्धदेहो दुरितभयापहरो हरश्च देवः ॥३१३॥ प्रस्तुतसरूपपादनावसरसूचकं वच. प्रस्तावनायथा रत्नावल्याम् । द्वीपादन्यस्मादपि मध्यादपि जलनिधेर्दिशोऽप्यन्तात् । आनीय झटिति घटयति विधिरभिमतमभिमुखीभूतः ॥ ३१४॥ उद्घात्यकादीनामङ्गानाम्प्रवृत्तिर्वीथी । उद्घात्यकः, कथोद्घातः, प्रयोगातिशयः, प्रवर्त्तको, ऽवलगितमिति तत्रोद्घात्यको यथा । कोऽयमिति जयति शर्वः केन जितस्त्रिलमनङ्गदहनेन । त्रिपुरादिना भगवता बालशशाङ्काङ्कितजटेन ॥३१५॥ कथोद्घातो यथा । साकम्पङ्कजजन्मनासुरपतेरभ्यर्थनायावशादिक्ष्वाकोः शरदिन्दुबिम्बविमलेवंशेवतीर्यस्वयम् । निःशेषात्तपदं त्रयीपथजुषां विद्वेषिणं राक्षसं यः पौलस्त्यमहन्सपातु भवतो रामभिधानो हरिः ॥३१६॥ प्रयोगातिशयो यथा उत्थापितमवतु हरेः क्ष्मामुद्धरतो वराहवपुषोवः । शेषफणारत्नदर्पणसहस्रसक्रान्तबिम्बस्य ॥३१७॥ प्रवर्त्तको यथा । आसादितप्रकटनिर्मलचन्द्रहासः प्राप्तः शरत्समय एव विशुद्धकीर्तिः । उत्खातगाढतमसंघनकालमुग्रो रामो दशास्यमिव सम्भृतबन्धुजीवः ॥३१८॥ अवलगितं यथा । अमुमेव शरत्समयमाश्रित्यागीयत तथा ह्यस्याम् । सत्पक्षा मधुरगिरः प्रसाधिताशा मदोद्धतारम्भाः । निपतन्ति धार्तराष्ट्राः कालवशान्मेदिनीपृष्ठे ॥३१९॥ स्वधर्मविप्रचलितानां

म्नावकवध्वाः सुरतविधौदशतिनाधरन्दन्तैः। मद्दि-
राक्षि! मांसभक्षणमस्मत्समये निषिद्धमिति ॥ ३२० ॥
संक्षिप्तिका,ऽवपातो, वस्तूत्थापनं,संस्फोटइतिचत्वार्या
रभटयङ्गानि। तेषुमाहेन्द्रजालनेपथ्यादिर्वावस्तुसंक्षेपः
संक्षिप्तिकायथा। रक्षसामृगरूपेणवञ्चयित्वासराघ-
वौ। जहारसीताम्पक्षीन्द्रप्रयासक्षणविघ्नितः ॥ ३२१॥
भयादिभिर्विद्रवादिकर्मानुप्रवेशनिर्गमनमवपातोयथा॥
मृगरूपम्परित्यज्य विधायविकटंवपुः। नीयतेरक्षसा
तेनलक्ष्मणोयुधिसंशयम् ॥३२२॥ अविद्रवः सविद्रवोवा
सर्वरसभावसमासोवस्तूत्थापनंयथा। राहोश्चन्द्रकला-
मिवाननचरींदैवात्समासाद्यमेदस्योरस्यक्रुपाणपातवि
षयादाक्किन्दतः प्रेयसीम्। आतङ्काद्विकलन्द्रुतङ्करुणया
विक्षोभितंविस्मयात्क्रोधेनज्वलितम्मुदाविकसितञ्चेतः
कथंवर्त्तताम् ॥ ३२३ ॥ नानास्त्रयुद्धनियुद्धादिभिः
ससंरम्भंसम्प्रहारः संस्फोटोयथा। कृष्टायेनशिरोरुहे
षुपशुनापाञ्चालराजात्मजा येनास्याः परिधानमप्य-
पहृतंराज्ञांगुरूणाम्पुरः। यस्योरःस्थलशोणितासव
महम्पातुम्प्रतिज्ञातवान्सोयम्मद्भुजपञ्जरेनिपतितः
संरक्ष्यताङ्कौरवाः ॥३२४॥ नर्म,नर्मस्फिञ्जो,नर्मस्फोटो,न
र्मगर्भइतिचत्वारिकैशिक्यङ्गानि। तेषुस्थापितश्टङ्गारंव
चो,विचेष्टितं वा सपरिहासन्नर्मयथा। वयंतथानामयथ
स्थकिंवदाम्ययन्त्वकस्माद्विकलः कथान्तरे। कदम्ब-

॥ ३२५ ॥ प्रथमसम्भोगेनवावस्थानंसम्भोगाश्रयवा-
क्यादिनर्मनर्मस्फिजो यथा । प्राप्तासौवृषपर्वणः प्रि
यसुतासङ्केतखण्डेनवेवृष्टिः सेयमनम्बुदामृतमयीगा-
त्राणिमेसिञ्चति । किन्नानासिविनोदयिष्यतिमनः स-
न्तापमेवाद्यमेदुर्वात्येवनिवर्त्तयिष्यतिनभोस्तान्देवया-
नीयदि ॥ ३२६ ॥ आविर्भूताभिलाषानुभावयोरका
ण्डसम्भोगभङ्गोनर्मस्फोटोयथा । इतः परानर्भकहा
र्यशस्त्रान्वैदर्भि ! पश्यानुमता मयासि । एवंविधेनाहव
चेष्टितेन त्वम्प्रार्थ्यसे हस्तगताममैभिः ॥३२७॥ कार्य
हेतोः स्वरूपविज्ञानादिप्रच्छादनन्नर्मगर्भोयथा । छ्यथा
जिनाषाढधरः प्रगल्भवाग्ज्वलन्निवब्रह्ममयेनतेजसा।
विवेशकश्चिज्जटिलस्तपोवनंशरीरबद्धः प्रथमाश्रमोय-
था ॥ ३२८ ॥ उत्थापकः,परिवर्त्तकः,संलापकः,सङ्घा
त्यकइतिचत्वारिसात्त्वत्यङ्गानि । तेषुपरम्परीभूयार्थे
षूत्थापनमुत्थापकोयथा । प्रहरममतुकायम्प्राक्प्र-
हारप्रियोहम्मयितुकृतविघातेकिंविदध्याः परस्मात् ।
झटितिविततवह्न्यङ्गारभास्वत्कुठारप्रविघटितकठोर
स्कन्धबन्धःकबन्धः ॥३२९॥ प्रस्तुतार्थत्यागादन्यार्थभ-
जनम्परिवर्त्तकोयथा । मुनिमभिमुखतां निनीष-
वो याः समुपययुः कमनीयतागुणेन । मदनमुपदधेस
एवताभ्योदुरधिगमाहिगतिः प्रयोजनानाम ॥ ३३० ॥
सदसिनानावाक्यैर्मिथोधिक्षेपः संलापकोयथा । क
थमपिननिषिद्धो दुःखिनाभीरुणावाद्रुपदतनयपाणि-

स्तेनपित्रा ममाद्य । तवभुजबलदर्पाध्मायमानस्य वामः शिरसि चरण एष न्यस्यतेधारयैनम् ॥३३१॥ कार्यमन्त्रानुभावदैवादिभिः संघातभेदः संघात्यकोयथा । अपश्यद्भिरिवेशानंरणान्निववृतेगणैः । मुह्यत्येवंहिकृच्छ्रेषुसम्भ्रमाधिगतम्मनः॥३३२॥चतुर इत्यनेनशास्त्रीय लौकिकव्यवहारवेदिनो नायकस्यधर्मार्थकाममोक्षेषु वैचक्षण्यमुच्यते ॥३३३॥ उदात्त इत्यनेनघाशयविभूत्योराभिजात्ययौवनादीनाञ्चोत्कर्षः प्रकाश्यते ॥३३४॥ चतुर्वर्गफलंकोनप्रबन्धं बान्ध्वीयतीत्यनेनश्रोतृणां रामादिवद्वर्त्तितव्यन्नरावणवदितिविधिनिषेधनिबन्धस्याभीष्टतमत्वमाख्यायते ॥३३५॥ मुखम्प्रतिमुखमित्यादिनातुपञ्चागम्प्रबन्धशरीरमभिधीयते । तदङ्गानिचोपक्षेप परिकरादीनिचतुःषष्टिरपिमुखादिष्वेवान्तर्भवन्ति । यस्तद्वदेवपञ्चवसन्ध्येकमपिवाक्यं प्रबन्धव्यपदेशमासादयति । तद्यथा । "कथमपिकृतप्रत्यासत्तौप्रिये" इति मुखम्, "स्खलितोत्तरे"इतिप्रतिमुखम्„ "विरहकृशयाकृत्वाव्याजम्प्रजल्पितमश्रुतमि"तिगर्भो, "ऽसहनसखीश्रोत्रप्राप्तिप्रसादससम्भ्रमंविवलितदृशे" तिविमर्षः,शून्येगेहेसमुच्छ्वसितन्तदेतिनिर्व्वहणम् । एतेनप्राचीनप्रबन्धार्थैच्येकवाक्योक्तेन प्रबन्धत्वमित्याख्यातम्भवति । तद्यथा । तुरगनिचयव्यग्रानुर्वीभिदःसगराध्वरेकपिलमहसारोषात्प्लुष्टान्पितुःप्रपितामहान् । अगणिततनूपातंतप्त्वातपांसिभगीरथोभगवति!तवस्पृष्टानद्भिश्चि

रादुद्दीघरत् ॥३३६॥ इ[illegible]स्तुतमसंक्षिप्तमित्यनेनवि-
स्तरभीरूणाङ्कथारसवि[illegible]दशङ्किनाऽचचित्तमावर्ज्जयते
॥३३७। अध्यवृत्तमित[illegible]नवृत्तान्तैराश्वासकादिपरिस
माप्तिरितिपरिश्रान्त[illegible] श्रोतारआश्वास्यन्ते स्वगादिस
न्निवेशादिवत्सन्दर्भ[illegible]श्वासादयोत्रिभाव्यन्ते ॥३३८॥
पुरोपवनेत्यादिना[illegible]कालपात्रसम्पदुपवर्णनादाल
म्बनोद्दीपनविभा[illegible] कथ्यन्ते ॥३३९॥ उद्यानसलि-
लक्रीड[illegible]कामिनीनांदिवाचेष्टा, मधुपानं र
तोत्सव[illegible] च रात्रिचेष्टा उच्यन्ते ॥ ३४० ॥
वि[illegible] इत्यनेन चत्वारोपिप्रथमानुरागादयः
[illegible]च्यन्ते ॥३४१॥ विवाहाइत्युपलक्षणेनप्रथमानुरा
[illegible]विवाहान्तो,मानःप्रेमान्तः,प्रवासः प्रसङ्गमान्तः,करु-
णःप्रत्युज्जीवनान्तःप्रबन्धेकर्त्तव्यइत्युपदिश्यते ॥३४२॥
मन्त्रदूतेत्यादिपुरुषाकारायत्तसिद्धिसूचनेना द्यूनतादि
निरासान्नायकस्यसर्वोत्कर्षः प्रकाश्यते ॥३४३॥ नावर्ण
नन्नगर्यादेर्दोषायेत्यादिनानुपुरुषार्थासन्नोपकारका-
रित्वेन शैलर्त्तूद्यानचन्द्रोदयमधुपानरतोत्सवादीनां म
न्त्रदूतप्रयोगाद्यनायकाभ्युदयादीनाञ्चनियमेनप्रयोगः,
शेषाणान्तुप्रबन्धशरीरानुरोधेनेति प्रतिपाद्यते ॥३४४॥
गुणतः प्रागुपन्यस्यनायकन्तेन विद्विषाम् । निराकरणमि
त्यनेनगुणवताभाव्यन्न गुणद्वेषिणेतिज्ञाप्यते ॥३४५॥
वंशवीर्यश्रुतादीनि इत्यादिनापुनराभिजात्यौद्धत्यशौ
टीर्यवीर्यादयएव शत्रोर्वर्णनीया नत्वत्रच्छेदहेतवोन्या-

प्याचरणविनयादयइति प्रत्याप्यते ॥३४६॥ धिनोति नइ त्यनेनत्वयमेवपक्षःश्रेयानितिग्रन्थकारेण स्वाभिप्रायः प्रकाश्यते ॥३४७॥

इतिनिगदितभङ्गरानङ्गसर्वस्वमेतद्
विविधमपि मनोभिर्भावयन्तोस्यखेदम् ॥
तदनुभवसमुत्थानन्दसम्मीलिताक्षाः
परिषदिपरितोषंहन्त सन्तः प्रयान्तु ॥२१५॥
यावन्मूर्ध्नि हिमांशुकन्दलभृति स्वर्वाहिनीधूर्जटे
र्यावद्वक्षसिकौस्तुभस्तबकिते लक्ष्मीर्मुरद्वेषिणः ॥
यावच्चित्तभुवस्त्रिलोकविजयप्रौढंधनुः कौसुमं
भूयात्तावदियं कृतिःकृतधियांकर्णावतंसोत्पलम्
॥ २१६ ॥

इतिश्रीमन्महीमहेन्द्रमहाराजाधिराज
श्रीभोजदेवविरचिते "सरस्वतीकण्ठाभरणा" भिधेऽलंकार
शास्त्रेरसविवेचनोनाम पञ्चमः परिच्छेदः ॥

॥ समाप्तश्चायंग्रन्थः ॥

॥ शुभं भवतु ॥

॥ श्रीमल्लक्ष्मीव्यङ्कटेशाभ्यांनमः ॥

